# विश्वसंस्कृतशताब्दीग्रन्थः

## जम्मूकाश्मीरराज्यभागः




भूमिकालेखकः—
डा० सम्पूर्णानन्दः, राजस्थानराज्यपालः

प्रस्तावनालेखकः—
डा० नरहरिविष्णुगाडगिलः, पूनाविश्वविद्यालयोपकुलपतिः

सम्पादको निदेशकश्च—
डा० मण्डनमिश्रः, आचार्यः, एम्० ए०, पी-एच्० डी०

कार्यवाहकसम्पादकः—
आचार्यः श्रीहनुमत्प्रसादशास्त्री पण्डितमार्तण्डः
(अ० भा० संस्कृतविद्यापीठप्राध्यापकः)

अखिलभारतीयसंस्कृतसाहित्यसम्मेलनम्
दिल्ली
सवत् २०२२



श्रद्धेय श्रीलालबहादुरशास्त्री (भारतप्रधानमन्त्री)
अ० भा० संस्कृतसाहित्यसम्मेलनाध्यक्ष

## समर्पणपत्रम्

अखिलभारतीयसंस्कृतसाहित्यसम्मेलनाध्यक्षाय

भारतप्रशासनप्रधानमन्त्रिणे

**श्रीलालबहादुरशास्त्रिणे**

विश्वसंस्कृतशताब्दीग्रन्थमालाया.

**प्रथममिदं पुष्पं**

सादरभर समर्पयति

श्रावणशुक्लैकादश्याम्
२०२२ विक्रमसंवत्सरे

डा० सम्पूर्णानन्दः
केन्द्रीयसमितेरध्यक्ष

विश्वसंस्कृतशताब्दीग्रन्थयोजनायाः

# केन्द्रीयसमितिः

१. डा० सम्पूर्णानन्दः (राज्यपालो राजस्थानस्य) अध्यक्षः
२. महामहोपाध्यायः श्रीगिरिधरशर्मा चतुर्वेदः (केन्द्रीयप्रधानसम्पादकः)
३. डा० चिन्तामणिद्वारिकानाथदेशमुखः (दिल्लीविश्वविद्यालयोपकुलपतिः)
४. डा० नरहरिविष्णुगाडगिलः (पूनाविश्वविद्यालयोपकुलपतिः)
५. डा० श्रीसुनीतिकुमारचटर्जी (अध्यक्षः-बंगालप्रदेशविधानसभायाः)
६. श्रीसुब्रह्मण्यम् एय्यरः (भू. पू. उपकुलपतिः वाराणसेयसंस्कृतविश्वविद्यालयस्य)
७. डा० पी. वी. काणे महामहोपाध्यायः, राष्ट्रियाचार्यः
८. म. म. डा०उमेशमिश्रः (भू. पू. उपकुलपतिः-दरभंगा-संस्कृतविश्वविद्यालयस्य)
९. डा० वि० राघवन् (मद्रासविश्वविद्यालयसंस्कृतविभागाध्यक्षः)
१०. श्रीसरस्वतीप्रसादचतुर्वेदी (प्रयागविश्वविद्यालयसंस्कृतविभागाध्यक्षः)
११. डा० वासुदेवशरण., अग्रवाल. (भाषाध्यक्षः-हिन्दूविश्वविद्यालयस्य)
१२. श्रीविश्वबन्धुशास्त्री (सञ्चालकः-वैदिकशोधसंस्थानस्य होशियारपुरे)
१३. डा० श्रीडांडेकरः (सञ्चालकः-भारतशोधसंस्थानस्य पुण्यपत्तने)
१४. श्रीपाददामोदरसातवलेकरः (भारतप्रशासनसम्मानितो विद्वान्)
१५. श्रीपट्टाभिरामशास्त्री (प्राध्यापकः-कलकत्ताविश्वविद्यालयस्य)
१६. डा० मङ्गलदेवः (भूतपूर्वोऽध्यक्षः-वाराणसेयसंस्कृतकालेजस्य)
१७. श्री के. माधवकृष्णशर्मा राजस्थानराज्यसंस्कृतशिक्षाविभागसञ्चालकः
१८. श्री के० एस० रामस्वामी शास्त्री (संस्कृतविद्यापीठप्राध्यापकः)
१९. डा० श्रीमण्डनमिश्रः सम्मेलनमहामन्त्री सम्पादको निदेशकश्च
२०. पण्डितमार्तण्डः, आचार्यः श्रीहनुमत्प्रसादशास्त्री—कार्यवाहकसम्पादकः
२१. श्रीअमीरचन्द्रशास्त्री साहित्याचार्यः, सहायकसम्पादकः

जम्बूप्रादेशिकसंस्कृतसाहित्यसम्मेलनान्तः सङ्घटिता

## जम्बूप्रदेशसमितिः

१. डा० वेदकुमारी घई ( संयोजिका, जम्बूराज्यसम्पादिका च ), संस्कृतविभागे प्रधाना जम्बूकाश्मीरविश्वविद्यालयस्य ।

२. श्रीकाकारामशास्त्री, भूतपूर्वाध्यक्षः-श्रीरघुनाथसंस्कृतमहाविद्यालयस्य

३. श्रीजयरामशास्त्री, भू. पू. प्रधानाचार्यः-श्रीरघुनाथसंस्कृतमहाविद्यालयस्य

४. श्रीशिवप्रसादत्रिपाठी, 'अमरेश्वरमहादेवः, परेडग्राउण्ड, जम्बू'

५. श्रीअनन्तरामशास्त्री 'पक्की ढक्की, जम्बू'

६. सुश्रीशकुन्तला सेठ, प्रधानाचार्या-जम्बूविद्यापीठस्य

७. श्रीमती मदनकुमारी, प्राध्यापिका-राजकीयमहिलामहाविद्यालयस्य

८. श्रीरामनाथशास्त्री, अध्यक्षः-श्रीरणवीरसंस्कृतमहापुस्तकालयस्य

९. श्रीविश्वनाथशास्त्री, लक्ष्मीनारायणमन्दिर'निकटस्थ'मस्तगढ़, जम्बू'

१०. श्रीपीताम्बरपारखी, 'पक्की ढक्की, जम्बू'

११. श्रीद्वारिकानाथशास्त्री, प्राध्यापकः-जम्बूस्थायुर्वेदिककालेजस्य

काश्मीरप्रादेशिकसंस्कृतसाहित्यसम्मेलनान्त सङ्घटिता

## काश्मीरप्रदेशसमिति·

※ १. श्रीगङ्गादत्तशास्त्री 'विनोद' (सयोजक,) सस्कृतप्राध्यापक -श्रीनगरस्थराजकीय ए एस कालेजस्य

※ २ श्रीजगद्धरजाडू शास्त्री, एम· ए, भूतपूर्वनिदेशक पुरातत्त्वविभागस्य, अध्यक्ष - महिलामहाविद्यालयस्य

३ डा० शिवनाथशर्मा शास्त्री, डी· ओ· सी·, भूतपूर्वप्रधानपण्डित -जम्मूकाश्मीरानुसन्धानविभागस्य

४ श्रीकाशीनाथदर, एम ए·, हिन्दीसस्कृतविभागाध्यक्ष -श्रीनगरस्थ एस०बी० कालेजस्य

※ ५ श्रीअयूबखान, एम ए·, हिन्दीप्राध्यापक -श्रीनगरस्थकाश्मीरविश्वविद्यालयस्य

६. श्रीसूर्यनारायणद्विवेदी शास्त्री, भूतपूर्वाध्यापक -श्रीरूपादेवीशारदापीठस्य

७ श्रीमुकुन्दरामशास्त्री, सनातनधर्मोपदेशक, आकाशवाण्या गीतापाठकश्च

※ ८. डा० विष्णुदत्तशर्मा, एम ए, पी-एच डी, भूतपूर्वसस्कृतप्राध्यापक -कठूआराजकीयकालेजस्य

९ श्रीबदरीनाथशास्त्री, भूतपूर्वप्रधानपण्डित -राजकीयसस्कृतपाठशालाया

१० श्रीत्रिभुवननाथशास्त्री, सस्कृताध्यापक -श्रीनगरस्थराजकीयविद्यालयस्य

※ ११ श्रीपृथ्वीनाथपुष्प, एम ए, प्राचार्य -पुञ्छस्थराजकीयकालेजस्य

१२. श्रीजियालालकौल, एम· ए, भूतपूर्व सस्कृतप्राध्यापक श्रीनगरस्थ एस बी. कालेजस्य

१३ श्रीमोतीलालपुष्कर शास्त्री, सस्कृताध्यापक -श्रीनगरस्थराजकीयविद्यालयस्य

※ १४ श्रीदीनानाथयक्ष शास्त्री

---

※ एतच्चिह्नाङ्किता महानुभावा काश्मीरराज्यसम्पादकमण्डलस्यापि सदस्या अभूवन् ।

विश्वसंस्कृतशताब्दीग्रन्थे जम्बूकाश्मीरसम्बद्धस्य

## प्रथमभागस्य मूललेखका:

जम्बूवास्तव्या —

१ श्रीकाकारामशास्त्री 'द्वैगर्तिकविद्वद्विवरणावतरणिका' 'अस्य शतकस्य संस्कृत-
विद्वांस' इति लेखयो ।

२ श्रीरामकृष्णशास्त्री 'जम्बूस्थश्रीरणवीरसंस्कृतानुसन्धानविभागीयश्रीरघुनाथ-
संस्कृतमहापुस्तकालयविवरणम्' इति लेखस्य ।

३ श्रीअनन्तरामशास्त्री, 'जम्बूकाश्मीरराजवंशस्य संस्कृतेऽभिरुचि.' इति लेखस्य ।

संशोधनम् :

'४ श्रीजयरामशास्त्री' इत्यस्य स्थानेऽपि '१ श्रीकाकारामशास्त्री' एव मूललेखक इत्यवगन्तव्यम् ।

४. श्रीत्रिभुवननाथशास्त्री 'काश्मीरस्य वृत्तपत्राणा विवरणम्' इति लेखस्य ।

५ श्रीबदरीनाथशास्त्री, बी. ए. 'अस्य शतकस्य संस्कृतविद्वांस' इति लेखस्य ।

६ श्रीचमनलालसप्रू -श्रीरामशंवाश्रम-धर्मार्थट्रस्ट श्रीरूपादेवीशारदापीठ-विद्याधराश्र-
मादीना परिचय, इति लेखस्य

७. श्रीमोतीलालशास्त्री पुष्कर 'स्वयंसेविनीभि. संस्थाभि कृता संस्कृतसेवा'
इति लेखस्य

८. श्रीसत्यपालशास्त्री, एम. ए 'संस्कृतपोषका' इति लेखस्य ।

* ९ श्रीराधाकृष्णजाडू -'अस्मिन् शतके लिखिता संस्कृतग्रन्था' 'शिक्षासंस्थानाम्'
अनुसन्धानशालाना, संस्कृतपुस्तकालयाना, संस्कृतविदुषा,
संस्कृतानुरागिणा च परिचय इति लेखस्य

१० श्रीराधाकृष्णकाव 'काश्मीरस्य कुङ्कुमकस्तूरिकादिजन्मभूमित्वम्, प्राकृतिक
परिचयश्च' इति लेखस्य

---

* जम्बूकाश्मीरशिक्षानिदेशकश्रीमीरुद्दीनमहोदयप्रेरितेनानेन महानुभावेन प्रभूता सामग्री प्राहीयत ।

# भूमिका

राजनीतिकैरन्यैश्च कारणैः संस्कृतमस्मिन् काले स्वोचितं स्थानं प्राप्तुमसमर्थं दृश्यते। मम मते त्वेषा एव भाषा भारतस्य राष्ट्रभाषापदमर्हति। परन्तु दूरे तिष्ठतु राष्ट्रभाषात्वम्, अधुना तस्याः पठनपाठने अपि अवरुद्धगतिके प्रतीयेते। 'थ्री लैङ्ग्वेज् फार्मूला' इति नाम्ना यच्छिक्षासूत्रं प्रशासनेन कैश्चिच्छिक्षाशास्त्रिभिश्च स्तूयते तस्मिन् प्रचालिते सति संस्कृतच्छात्राणां संख्या निश्चयेन अल्पाल्पतरत्वं गमिष्यति।

तथापि न वयं नैराश्येनाभिभूताः। संस्कृतं भारतीयसंस्कृतेः प्रतीकम्। सन्ति भारतीयसंस्कृत्यां कानिचित् सर्वलोकश्रेयस्कराणि शाश्वतानि तत्त्वानि। तैः सह संस्कृतमपि अमरत्वं प्रयास्यति। अद्यापि तस्य वाङ्मयस्य वृद्धिर्भवत्येव, पुस्तकानि लिख्यन्त एव, अद्यापि अहितङ्करीभिः परिस्थितिभिः परित आक्रान्तमपि संस्कृतं स्वौजसो वीर्यस्य च परिचयं लोकेभ्यो ददात्येव।

एनमेव विषयं प्रमाणयितुमुद्दिश्य अखिलभारतीयसंस्कृतसाहित्यसम्मेलनेन विश्व-संस्कृतशताब्दीग्रन्थस्य प्रकाशनमायोजितम्। १६०१ विक्रमसंवत्सराद् आरभ्य २००० विक्रमसंवत्सरं यावत् पृथिव्यां यत्र कुत्रापि संस्कृतस्य या प्रगतिरभवत्, सा सर्वास्मिन् ग्रन्थे प्रकाशिता भविष्यति। सर्वथा प्रशस्योऽयं प्रयास इत्यत्र नास्ति किमपि द्वैमत्यस्थलम्।

ग्रन्थस्य प्रथमः खण्डोऽस्माकं समक्षं वर्तते। अस्य काश्मीरप्रदेशेन सम्बन्धः। काश्मीरात् कार्यारम्भ उचित एव। आसीत् स स्वर्गसपत्नः प्रदेशः, पुराकाले भगवत्याः शारदाया विहारप्राङ्गणम्। तस्या अवस्थायाः संस्कारा नाद्यापि सर्वतो विलुप्ता इत्येतत्तु ग्रन्थस्यावलोकनेन निश्चीयते। ग्रन्थादावामुखरूपेण प्राचीनसाहित्येतिहासस्य संक्षिप्तं विवरणमपि वर्तते। सर्वथा उपादेयेयं रचना। अस्यां मालायां गुम्फिता अन्या अपि कलिका एतादृश्य एव भविष्यन्तीति आशास्महे।

राज्यभवनम्, जयपुरम्
४ वैशाखे २०२२ विक्रमसंवत्सरे

सम्पूर्णानन्दः

# प्रस्तावना

संस्कृतसाहित्यसम्मेलनं विश्वसंस्कृतशताब्दीग्रन्थप्रकाशनयोजनां निरचैपोत्। तामनुसृत्य जम्बूकाश्मीरक्षेत्रे यत्किञ्चन संस्कृतसम्बद्धं कार्यमभूत्, तस्येतिहासोऽयमधुना पूर्तिं गतः प्राकाश्यं च नीयमानोऽस्ति।

विश्वस्य मुख्यासु भाषासु संस्कृतभाषेयम् एकतमा वरीवर्ति। एशियाया मध्यैशियायाश्च सम्प्रति प्रयुज्यमानाः सर्वा अपि भाषाः संस्कृतभाषाया एवोदभवन्। अनया दृष्ट्या संस्कृतभाषायास्तदीयस्येतिहासस्य, तदीयायाः प्रगतेश्च परिज्ञानम् एशियाया भारतस्य च भाषाणां कृते नितान्तमपेक्षितमस्तीति मे मतिः। भारतेऽस्मिन् न शताब्दीभ्यः, अपि तु सहस्राब्दीभ्यः प्राचीनपरिपाट्या संस्कृतभाषाया अध्ययनाध्यापने अभवताम्। ब्रिटिशशासनकालेऽपि संस्कृतभाषा पुरस्कृता समादृता चाभूत्। किन्तु भारतीयजीवनं पाश्चात्यदर्शनानां पाश्चात्यशास्त्राणां चाध्ययने तथा परिणतम्, यथा तस्यान्यतमो भागः संस्कृतभाषाध्ययनादुदासीनतामापन्नः, इयमुदासीनता निरसनीयास्ति।

भारतीयानां भाषाणां प्रगतये संस्कृतभाषाध्ययनं नितान्तमपेक्षितम्, इत्येतदेव समुद्दिश्येदम् अखिलभारतीयसंस्कृतसाहित्यसम्मेलनं प्रायोऽर्धशतकात् प्रयतमानमास्ते। इयं विश्वसंस्कृतशताब्दीग्रन्थयोजनाऽपि तस्यैवोद्देश्यस्य महदङ्गं वरीवर्ति। अहमाशासे यद्—भारतीया जनता, अन्ये विद्वांसश्चास्या योजनायाः स्वागतं व्याहरिष्यन्तीति।

२ वैशाखशुक्ले  
२०२२ विक्रमवत्सरे।

न० वि० गाडगिलः

भारतसर्वकारसम्मानितानां वाचस्पति-साहित्यवाचस्पति-विरुदभाजां
वाराणसेयसंस्कृतविश्वविद्यालयीयसम्मानितप्राध्यापकानां
म० म० श्रीगिरिधरशर्मचतुर्वेदमहाभागानां

# * शुभाशंसा *

सुमहत् प्रमोदस्यायमवसरो यद् अखिलभारतीयसंस्कृतसाहित्यसम्मेलनप्रवर्तितायां विश्वसंस्कृतशताब्दीग्रन्थमालायां भारतमौलिभूतस्य सुरभारत्याः पोषकस्य काश्मीरप्रदेशस्यायं भागः प्रस्तुतो भवति। योजनेयं सुविचार्य विद्वद्भिः प्रवर्तिता शासनाधिकारिभिरनुमोदिता क्षीणतामुपगच्छन्त्या अस्या अमरवाण्याः सञ्जीवनाय कल्पतामिति विद्यतेऽस्माकं समीहा।

क्रमेण समस्तस्यापि भारतस्य विभिन्नप्रदेशानामेवमेव सुसम्बद्धः शतवर्षात्मकः संस्कृतसेवाया इतिहासः समुपस्थापितः संस्कृतसाहित्यसम्मेलनजन्मसाफल्यमाकलयिष्यति। दूरीकृतदुराग्रहा विद्वांसः स्वीकुर्वन्तु ग्रन्थमालामिमामिति सादरं निवेदयामि।

वाराणसी
१ श्रावणकृष्णे २०२२ विक्रमवत्सरे

गिरिधरशर्मा चतुर्वेदः

## सम्पादकीयम्

अखिलभारतीयसंस्कृतसाहित्यसम्मेलनमतीतयाऽर्धशताब्द्या संस्कृतप्रचारप्रसार-क्षेत्रे प्रयत्नाननुतिष्ठति। डाक्तरश्रीराजेन्द्रप्रसादमहानुभावैरिदं 'संस्कृतानुरागिणां संस्कृतकोविदानाञ्च समन्वयात्मको रङ्गमञ्च' इति सञ्ज्ञाप्रदानेन सेवासहस्रानुवादेन चाभिष्टुतम्। डाक्तरश्रीचिन्तामणिद्वारिकानाथदेशमुखेन प्राचीनतरात्कालाद् वैदेशिक-शासनं यावद् विविधान् प्रत्यूहसमूहानुल्लङ्घ्य विराजमानस्य संस्कृतस्य सेवासु सम्मेलनस्यास्य जागरूकतामेतदीयसमग्रजीवनीयशक्तेः प्रत्यक्षप्रमाणतयोपन्यस्येद समादृतम्।

इदमस्य संस्थानस्य सुमहत् सौभाग्यम्, यदिद महामनसा श्रीमदनमोहनमालवी-याना, महामहोपाध्यायश्रीगिरिधरशर्मचतुर्वेदानामन्येषाञ्च तत्सख्यमावहता महता विदुषा, शिक्षाशास्त्रिणां, धर्माचार्याणा, राजनीतिविशेषज्ञानाम्, दरभङ्गाधिपति-श्रीरमेश्वरसिंहश्रीकामेश्वरसिंह-काशीनरेशश्रीविभूतिनारायणसिंहमहाराजानामपरेषामपि तादृशाना राजराजेश्वराणा प्रजाजनानाञ्च समानतयैव सहयोग नेतृत्वञ्चालब्धेति। इय पुनरस्य संस्थानस्य गरिम्णः पराकाष्ठा, यदद्यत्वेऽस्य भारतप्रधानमन्त्री श्रद्धेयः श्रीलालबहादुरशास्त्री सभापतिपदमलङ्कुरुते, अस्यैव महानुभावस्य नेतृत्वे चास्य विविधाः प्रवृत्तय. कृत्स्नेऽपि देशेऽनुदिन प्रसरन्ति, प्रगतिञ्चावहन्ति।

सम्मेलन संस्कृतजगच्च बहोः कालादिह लोके संस्कृतस्य वर्तमाना स्थितिमधि-कृत्य कस्यचनाह्वानस्येव साम्मुख्य कुर्वाते। इत्थ प्रतीयते, यथाऽद्यत्वे योजनाबद्धतया संस्कृतस्य कृते भ्रान्तीना नैराश्यानाञ्च प्रचारः क्रियते। कतिचन पण्डितम्मन्या. संस्कृतभाषा मृतभाषामपि कथयितु दुस्त्सहन्ते। एतादृश्यां स्थितौ संस्कृतसेवकानामिद मुख्यतमं कर्तव्यं प्रतिभाति, यथा तैरस्य पूर्वोक्तस्याऽऽह्वानस्य साम्मुख्य विधातव्यमिति। अनयैव दृशाऽऽदर्शतया प्रथमे प्रयासेऽस्तीतस्य विक्रमशतकस्य संस्कृतसर्वेक्षणमुररी-कर्तु निश्चित्य, निश्चयञ्चैनं क्रियात्मकतया पुरस्कर्तु विश्वसंस्कृतशताब्दीग्रन्थस्य प्रकाशनात्मक. कार्यक्रमो निरधार्यत।

१९६१ खिष्टाब्दीयजनवरीमासस्य प्रथमे दिनाङ्केऽखिलभारतीयसस्कृत-साहित्यसम्मेलनस्य महासमितेर्निर्णयमनुसृत्य शताब्दीग्रन्थप्रकाशनोपयोगिन कार्य-क्रमस्य स्थवीयस्या रूपरेखाया काचन प्रस्तावना प्रश्नावलीरूपेण हिन्दीभाषाया, सस्कृते आङ्ग्लभाषाया च प्राकाश्यत । तदीया चादिमा प्रतिलिपिर्भारतस्य तात्का-लिकराष्ट्पतये द्राक्तरराजेन्द्रप्रसादमहानुभावाय तस्यैव मासस्य षोडशे दिनाङ्के समर्पिताऽभूत् । तेन च महामहिम्नाऽऽशीरुदीरिता—'सन्तोषस्यैष विषयो यद् विश्व-सस्कृतशताब्दीग्रन्थप्रकाशनात्मक शुभ कार्यमपि सम्मेलनेन स्वहस्ते गृहीतम्, अस्य ग्रन्थस्य पूर्त्या सस्कृतभाषायास्तदीयसाहित्यस्य चान्ताराष्ट्रिय चित्र विश्वस्य समक्ष-मुपस्थास्यती'ति ।

उपर्युक्ताया योजनाया विश्वस्य विभिन्नभागेषु समादर समजनि, सुप्रतिष्ठितैश्च भारतीय विद्वद्भिरस्या केन्द्रीयसमितौ सम्मिल्यैतत्पूर्तये वय प्रोत्साहिता । दिष्टया ऽनया योजनया केन्द्रीयसमिते प्रथमाध्यक्षतया सम्मेलनस्य तात्कालिक सभापति सद्गत श्रीबलवन्तनागेशदातार (भारतस्य गृहकार्यमन्त्री) सम्प्राप्त । काकामहोदय श्रीनरहरिविष्णुगाडगिल कार्यवाहकाध्यक्षतया सक्रिय मार्गदर्शनमकारयत् । उभयो महाभागयो प्रयत्नेन देशस्य विभिन्नै राज्यप्रशासनै आसन्नाशीतिसहस्राणि रूप्य-काणि आर्थिकसाहाय्यरूपेण वितीय कार्यमेनद् अग्र सारयितुमस्मन्मार्ग पर्यस्क्रियत । दौर्भाग्यविषयोऽयम् यदस्या योजनाया प्रथमस्तम्भ श्रीदातारमहोदयोऽस्या पूर्तेर-स्मिन् प्रथमप्रयाससाफल्यमये समयेऽस्मासु न विद्यते, किन्त्वेतस्मिन्नैतिहासिकेऽ वसरे तदीयाया स्मृतेर्विशेषेणोद्बोधोऽय खलु स्वाभाविक । वस्तुत स महात्मा योजनाया प्रबलतम प्रेरणोद्गम आसीत् । तत्र तावदह दृढ मन्ये यदस्या योजनाया प्रत्येक प्रयत्नस्य साफल्ये दिवङ्गत स आत्माऽस्मान् आशीर्भिरभिवर्धयिष्यति, अस्या ग्रन्थमालायाश्चैकैक पुष्प तस्य कृतेऽस्माक वास्तविक श्रद्धाञ्जलिर्भविष्यति ।

योजनाया प्रयत्नाना पृष्ठभूमौ सम्मेलनस्य स्वर्गतो महामन्त्री श्रीकेदारनाथ-सारस्वत स्वकीयसाधनामहिम्ना महत्पद भजते । स नून सस्कृतस्य सम्मेलनस्य च कृतेऽजीवत्, तयोरेव च कृतेऽम्रियत । अतोऽस्मिन्नवसरे तत्स्मरण न केवल कृतज्ञता-प्रकाशनोपचारमात्रम् अपि तु सम्मेलनस्य प्रत्येक प्रवृत्ताविवास्या योजनायामपि तदीयत्यागबलमद्यापि तावदस्माभि सह प्रयत्नाननुतिष्ठतीत्यनुभवप्रयोजितमप्य-वगन्तव्यम् । यदि सत्यमेवासौ साम्प्रतमप्यस्मिल्लोकेऽस्थास्यत् तर्हि सम्मेलनस्य विकासमवलोक्यासावपि समवेदिष्यत यथा—'त्यागो वा बलिदान वा कदाचिदपि निष्फलता नावलम्बते' ।

काश्मीरप्रदेशः किल सम्कृतसाहित्यस्य विभिन्नानां धाराणाम् उद्भवस्थलीत्वेन प्रतीत.। वैदिकात्कालादारम्य काव्यकाल यावदुद्भटान् विद्वन्महारथानय प्रासूत। अस्या भूमौ चेय परम्परा साम्प्रतमप्यप्रतिहतप्रसरा प्रचलति, यस्याः प्रत्यक्षतो दर्शन वहूना जनाना पुरस्तान्नोपतिष्ठते। विशेषेणाद्यतन्यामीदृश्या परिस्थितौ तन्नैवोपतिष्ठते। यदा काश्मीरप्रदेशमस्माक सांस्कृतिकशृङ्खलामध्याद् विच्छेत्तु प्रयत्ना· समाद्रियमाणा विद्यन्ते,तदाऽस्य चित्रस्यैकमाभासोपस्थापनमस्माक कामपि राष्ट्रियकर्तव्यपदवीमाटीकते.। एतानि मूलभूतानि तथ्यानि। जम्बूकाश्मीरराज्यप्रशासनेन चास्यै योजनायै राज्यान्तरापेक्षयाऽधिकतमार्थिकसाहाय्य(पञ्चदशसहस्ररूप्यक)प्रदानेन च कृतमस्मत्प्रोत्साहन हेतूकृत्येद निरचीयत यत्सर्वतः प्रथममस्य जम्बूकाश्मीरभाग प्राकाश्यं नीयेतेति। यथा चैतिहासिक्या दृशा काश्मीरप्रदेशो भारतस्याङ्ग विद्यते, तथा सांस्कृतिक्या दृष्ट्यापि सोऽस्माभि. सह पारम्पर्येण सम्बद्धो वर्तते इत्येष विचारोऽपि तस्य प्रथमताया प्रयोजकोऽभूत्।

ग्रन्थस्याय भाग· सर्वाङ्गसम्पन्नता नेतुमस्माभिरध्यवसित.। किन्तु शताब्दीग्रन्थस्य प्रथमप्रयोगतयाऽस्मिन् भागे कासाञ्चिन्न्यूनतानामपि स्थान स्वाभाविकमभूत्। अस्य प्रथमेऽध्याये ग्रन्थगौरवम्, द्वितीये द्विगर्तप्रदेशस्य भौगोलिक वर्णनम्, तृतीये संस्कृतपोषकतया काश्मीरिकराजवशस्य महाराजानामितिवृत्तम्, चतुर्थे सस्कृतसेविनीना सस्थानां, पञ्चम-षष्ठ-सप्तमाष्टमेषु पाण्डुलिपीना साहित्यिककृतीनाञ्च, नवम-दशमैकादशेषु जम्बूस्थाना संस्थाना सस्कृतकोविदानाञ्च, द्वादशे काश्मीरप्रदेशस्य भौगोलिक्याः स्थितेः प्राकृतिकानाञ्च विशेषाणाम्, त्रयोदशे काश्मीरस्थाना सस्कृतसस्थाना काश्मीरप्रशासनकृतानाञ्च सस्कृतसेवानाम्, चतुर्दशे काश्मीरिकसग्रहालयाना पाण्डुलिपीनाञ्च, पञ्चदशषोडशयोः काश्मीरस्थाना सस्कृतसेविनाम्, सप्तदशे च समासतो लद्दाखविभागीयसस्कृतकार्याणा निदर्शन प्रास्तूयत। कृत्स्न चेद निरूपणमधिकाधिकानि प्रामाणिकनि तथ्यानि सूचनानि चानुसृत्य सङ्कलितम्, भूयश्च शोधपूर्णं विधातु प्रयतितम्। तथापि विश्वसिमो वय यदाधुनिकीषु परिस्थितिषु यदुद्देश्यमादायैषा मूलयोजना प्रावर्त्यत, ता निर्वोढु वय क्षमा अभूमेति। योजनाया उद्देश्य तावदस्या वस्तुस्थितेश्चित्रणमभूत्, यत् सस्कृतभाषाया तदीये साहित्ये चेदानीन्तनेऽपि समये साधना प्रचलति, बहवश्च साधकास्तत्प्रवर्तितानि सस्थानानि च साधनमौविध्ययोरभावेऽपि स्वस्वदृष्ट्या सस्कृतवाङ्मय सेवन्ते, सस्कृतभाषा चाद्यापि राष्ट्रस्यास्यैका जीवन्ती भाषा वरीवर्तीति। काश्मीरसदृश प्रदेशमधिकृत्यासन्नपञ्चशताना पृष्ठाना सामग्र्या इद सङ्कलन तावदिद साधयितुमलमेवास्ति यत् सस्कृतभाषायामद्यापि देशस्यास्य जनताया

आस्था श्रद्धा वा जागर्तीति, सस्कृतभाषेय प्रशासनाना प्रजाजनाना च समर्थनं प्रोत्साहन चाधिकरोतीति ।

अस्य ग्रन्थस्याऽऽमुखे काश्मीरप्रदेशस्य सास्कृतिकमहत्त्वकथनम्, प्राचीनाचार्य-वर्णनञ्च प्रस्तुतयास्य भागस्य न केवलमनया (विक्रमस्य विंशया) शताब्द्या अपितु प्राचीनेतिहासेनापि सम्पर्कं प्रकाशयितुमुपक्रमो विहित । मूलतोऽनया शताब्द्या सम्बद्धोऽपि ग्रन्थोऽयं काश्मीरप्रदेशस्य सर्वासा सस्कृतसेवाना कश्चन प्रामाणिक इतिहास इति वक्तु शक्यते ।

अस्य प्रत्येकमध्यायो वस्तुत एकैकस्य शोधप्रबन्धस्य विषयो विद्यते । शोध-पण्डिता अनेन शोधाकाङ्क्षाणा पूर्तिमाशासिष्यन्ते, इतीदमपि लक्ष्यमस्य सम्पादने निहित-मस्ति । परमिदमिह विवरीतुमपेक्ष्यते यथाऽस्य ग्रन्थस्य मूलमुद्देश्य शोधप्रयोजनावधि मर्यादित न विद्यते । तदतिरिक्ता अपि भूयस्यो भावना अस्य पृष्ठभूमौ समुल्लसन्ति । यानि सस्थानानि, ये च युवका सस्कृतसेवासु स्वजीवन यापयन्ति, तेषा प्रोत्साहनमपि ग्रन्थस्यास्य प्रयोजनेषु विशिष्टतामावहति । विशेषतोऽखिलभारतीयसस्कृतसाहित्य-सम्मेलनस्येद प्रमुख कर्तव्य वरीवर्ति यदिद नवनवान् कार्यकर्तॄन्, अभिनवानि च सस्था-नानि सन्नाह्य सस्कृतसेवार्यै ताश्च तानि च प्रणोदयेदिति । इत्थमेव ये सस्कृता-नुरागिण सस्कृतकोविदेभ्योऽपि सस्कृतप्रचारप्रसारकर्मण्यधिकतरा रुचिमावहन्ति, तेषा सेवाना मूल्याङ्कनमपि स्वकीयमेक महत्त्व बिभर्ति । अनया दृष्ट्याऽस्य ग्रन्थस्य क्षेत्र विस्तारमायातम् । त च विस्तार वय स्वोद्देश्यपूर्तेरेक महत्त्वपूर्णमङ्ग मन्यामहे । आशास्महे च यत् केवलशोधदृष्टयो विद्वासोऽमु ग्रन्थमधीयाना अस्माकमिम दृष्टिकोणमपि पुर स्थापयिष्यन्तीति ।

अस्य ग्रन्थस्य प्रस्तुतौ महिष्ठ योग काश्मीरसस्कृतसाहित्यसम्मेलन जम्बूप्रदेश-सस्कृतसाहित्यसम्मेलनञ्चादत्ताम्, अस्माकमनयोरेव प्रादेशिकशाखयोस्तत्त्वावधाने तत्रत्ययो प्रदेशसमित्यो सघटनमभूत् । ययोर्निर्देशने काश्मीरसमितिसयोजक श्रीगङ्गादत्तविनोद, जम्बूसमितिसयोजिका डाक्तरवेदकुमारी (घई) चास्मै विशेषेण प्रायस्यताम् । डाक्तरघईमहोदया तु त्रिचतुरकृत्वोऽस्मिन् सम्बन्धे दिल्लीमपि समम्या गता । उभयो प्रादेशिकशाखयोरध्यक्षाभ्या डाक्तरश्रीजगद्धरजाडूश्रीकाकारामशा-स्त्रिभ्या स्थानीयैश्चान्यैर्विद्वद्भि सक्रिय सहयोगोऽत्र ग्रन्थे वितीर्ण ।

एभिर्विद्वद्भि साकमेव जम्बूकाश्मीरराज्यपालेन महामहिम्ना डाक्तरकर्णसिंह-

महाराजेन, तदीयेन धर्मार्थनिधिपा, श्रीरघुनाथसंस्कृतमहाविद्यालयेन, श्रीरणवीर-संस्कृतपुस्तकालयेन, जम्मूस्थैर्विद्वद्भिः, काश्मीरराज्यप्रशासनिकशिक्षाविभागसञ्चालकेन श्रीनोरुद्दीनेन, डाक्तरश्रीराधाकृष्णकावेन, कतिपयैर्मुस्लिमबन्धुभिरपि पावनेऽस्मिन् कार्ये सस्कन्धबन्धमस्माकं साहाय्यं सम्पादितम्। ततश्चास्मिन् कार्यक्रमपरिपूरणे वयं संघरूपेण प्रायतामहि, अतो वयं साफल्यश्रेयसि भागिनः प्रत्येकं सदस्यं मिथो धन्यं वदामीति मन्ये समुचितं न स्यात्। अस्माकं कृते इतः परोऽपरः प्रसादविषयः कतरः सम्भवति यदस्माकं प्रयत्ना अद्य सफलीभूय मूर्तरूपेण पुरः परिस्फुरन्ति इति।

अस्या महत्या योजनाया कृतेऽनेकेषां विवेकशालिनां विदुषामपेक्षाऽभूत्। तत्रायं सुवर्णसुगन्धसंयोगः समवर्तत यदस्यामपेक्षायां सम्मेलनेनाखिलभारतीय-संस्कृतविद्यापीठं स्थापितम्, विद्यापीठेन च देशस्य उत्तमोत्तमा विद्वांसः प्राचार्यप्राध्या-पकरूपेणोपलब्धाः। सम्मेलनमहासमित्या १९६४खिष्टाब्दीयाप्रैलमासस्य पञ्चविंशे दिनाङ्के प्रस्तावद्वाराऽस्य ग्रन्थस्य सन्नाहार्थं मूलाधिकारोऽखिलभारतीयसंस्कृतविद्या पीठस्य प्रदत्तः, कार्यवाहकसम्पादकपदे च विद्यापीठप्राध्यापक आचार्यः श्रीहनुमत्प्रसाद-शास्त्री विनियोजितः, श्रीशास्त्रिवर्यो जम्मूकाश्मीरभागस्य सम्पादनेऽलं प्रायतत। तदी-यया वैदुष्यशालिन्या लेखन्या प्रौढिमत्या प्राञ्जलया च शैल्याऽस्य ग्रन्थस्य साहित्यिकं रूपं परिकल्पितम्। विद्यापीठस्य साहित्यप्राध्यापक श्रीअमीरचन्द्रशास्त्री चानवरतं कार्येऽस्मिन् शास्त्रिवर्यस्य साहाय्यमकरोत्, १९६५ खिष्टाब्दीयजनवरीमासे च तस्मिन् शास्त्रिवरे तञ्जौरं गते कार्यशेषं परमया कुशलतयाऽपूपुरत्। वस्तुतोऽत्र विद्यापीठे यशो-धन्यवादावनपेक्ष्य कार्यानुष्ठानपरम्परा प्रचलति, अत्रत्यश्च प्रत्येकं कार्यमद्यावधि केवलं सेवाभावेन सामूहिककर्तव्यभावनया च सम्पद्यते, अतो विद्यापीठस्य प्रायः सर्वैरपि कार्य-कर्तृभिरनेकैः प्रकारैर्यो योगोऽस्य पूर्तौ प्रदत्तः, तदर्थं तेषां धन्यवादवितरणं वा कृतज्ञता-प्रकाशनं वा विद्यापीठपरम्परानुरूपं न स्यात्।

श्रीदातारमहोदये दिवङ्गते शताब्दीग्रन्थस्य केन्द्रीयसमित्यै सुयोग्यस्याध्यक्षस्यो-पलब्धिर्दुष्करैवाभूत्। परमेतदस्यै योजनायै वरदानकल्पमभूद् यद् राजस्थानराज्यपालो महामहिमा डाक्तरश्रीसम्पूर्णानन्दमहाभागः केन्द्रीयसमितेरध्यक्षपदमुररीकरोत्, समाभ्य-र्थनया चास्य भागस्य भूमिकामप्यलेखीत्। सम्मेलनस्य सुहृदा श्रीलीलाधरशास्त्रिणा पाण्डेयेन योजनाया अस्याः प्रारम्भे मदीयं साहाय्यमाचरितं तन्निमित्तं स्नेहपूर्वकं मदीयं कर्तव्यं मन्ये। सम्राट्प्रेसनामको मुद्रणालयः, तदधिकारिणः, तत्स्मरणं शास्त्रिणश्चा-स्माकं शाश्वतिकस्नेहभाजनानि विद्यन्ते, अस्माभिः सह तेषां कदाचिदपि व्यापारिणामिव

व्यवहारो नाभूत् । इमं ग्रन्थमपि ते हानिलाभावनवेक्ष्य सुन्दरतमतां नेतुं प्रायतन्त । अस्य ग्रन्थस्य प्रकाशनेन सम्मेलनं प्रति तेषां सेवानां शृङ्खलायां कोऽपि नवः कटको योजितः ।

सम्मेलनस्य योजनायाश्च कृतेऽयं सुवर्णमयः समयो वर्तते, यद् योजनाया अस्य प्रथमप्रयासस्य साफल्यावसरे श्रद्धेयः श्रीलालबहादुरशास्त्री सम्मेलनसभापति-पदं विभूषयति, तस्मै एव च महानुभावायास्या ग्रन्थमालाया इदमादिमं पुष्पं समर्प्यमाणं विद्यते । तस्य नेतृत्वे संस्कृतेन सम्मेलनेन च यदभिनवं जीवनमधिगतम्, तस्यैकं प्रत्यक्षं निदर्शनं शताब्दीग्रन्थस्यायं भागो वरीवर्ति । सम्मेलनपरिवारस्य प्रधानाय तस्मै भागमिमं समर्प्य वस्तुतो वयं सर्वेऽपि कार्यकर्तारः कृतकृत्यतामनुभवामः, विश्वसिमश्च यत् तेन महानुभावेन दीयमानं प्रोत्साहनमवलम्ब्य ग्रन्थस्य भागान्तराणां प्रकाशने भूयसी प्रगतिः सेत्स्यति इति शम् ।

गुरुपूर्णिमा २०२२ वि० डा० मण्डनमिश्रः

# आमुखम्

अथास्मिन् विंशशतकशताब्दीग्रन्थे विश्वस्मिन्नपि विश्वे विश्रुतस्य विंशत्या शताब्द्या सञ्जातं संस्कृतसम्बद्धं कार्यजातमुपवर्णनीयम्, तत्तु कतमस्माद् देशाद् उपक्रमणीयमित्याकाङ्क्षायाम् ऋग्यजुःसामाथर्वणां चतुर्णामपि वेदानाम्, शिल्पधनुर्गन्धर्वायुर्वेदानां चतुर्णामप्युपवेदानाम्, शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्यौतिषाणां षण्णामपि वेदाङ्गानाम्, साङ्ख्ययोगन्यायवैशेषिकमीमांसावेदान्तानां षण्णामपि वैदिकदर्शनानाम्, जैनबौद्धचार्वाकाणां त्रयाणामप्यवैदिकदर्शनानाम्, उपपुराणसहितानामष्टादशानामपि पुराणानाम्, परिक्रियापुराकल्पभेदेन द्विधा भिन्नस्येतिहासस्य निदर्शनभूतयो रामायणमहाभारतयोः, मनुकौटिल्यवात्स्यायनद्वैपायनादिविरचितानां धर्मार्थकाममोक्षशास्त्राणाम्, भरतभामहादिपरिक्लृप्तानां नाट्यसाहित्यसम्बद्धशास्त्राणाम्, भासकालिदासादिकृतानां नाटककाव्यादीनामन्येषामपि चतुष्षष्टिकलादिबोधकानां नानाग्रन्थानां स्वरूपेण सागरवदियत्तया ईदृक्तया चानवधारणीयस्य कृत्स्नस्यापि संस्कृतवाङ्मयस्य जन्मभूमितया भारतवर्षमेव प्राथम्येन पुरः स्फुरितम्।

ततश्चात्र भारतवर्षेऽपि कतमः प्रदेशोऽग्रासनदानसम्मानेन सम्भावनीय इति जिज्ञासायां जम्बूकाश्मीरप्रदेश एव सर्वेभ्यः पूर्वं समक्षमुपस्थितः। सोऽयं खलु—

'मानवा मौलिता वर्ण्या देवाश्चरणतः पुनः।'

इति कविन्यायानुसारेण भूतलस्य भारतस्य च मानवोचिततया मौलतयोचितया मौलितो वर्णनक्रमया शैल्यापि भारतमौलिभूतेऽस्मिन् संस्कृतनिवृत्तवर्णनेऽग्रिमतामेवार्हति। अयं हि प्रदेशः प्राचीनतमत्वेन, प्रथितेन महत्त्वेन, तीर्थमयत्वेन, शारदादेशत्वेन, चतुर्दशविद्यास्थानानां पीठत्वेन, संस्कृतप्रियत्वेन, शैवसिद्धान्तानामुद्गमभूमित्वेन, आचार्याणां जन्मभूत्वेन, आश्चर्याणां निधानत्वेन, शारदाख्यलिपिमत्त्वेन तेन तेन चान्येन विशेषेण सम्माननीयो दर्शनीयः श्लाघनीयो रक्षणीयश्च भारतीयानां सर्वेषामपि प्रदेशानाम्। तत्र—

### काश्मीरस्य प्राचीनतमत्वम्

काश्मीरशब्दार्थविचारेण, पुराणेतिहासोल्लेखेन, शास्त्रप्रामाण्येन मण्डलनिर्माणेन प्राचीनमन्दिरध्वंसावशेषैश्च काश्मीरस्य प्राचीनतमत्वं शक्यतेऽवधारयितुम्। तद्यथा—

## (१) काश्मीरशब्दार्थः

कश्मीरशब्दव्युत्पत्तिमेवमाहुर्वैयाकरणाः—'कश्मीरः' इत्यत्र 'कशेर्मुट् च' (उ०४।३०) इत्यौणादिकसूत्रेण 'कश्' धातोः 'ईरन्' प्रत्यये 'मुट्' इत्यागमे च कृते 'कश्मीर'-शब्दः सिध्यति। 'कश्मीरश्च देशविशेषः'—इति 'त्रिकाण्डशेषः'। 'कश्' धातुश्च सौत्रः प्रकाशार्थः। तथा च—कशति = प्रकाशते विविधविद्यासदाचारशासनसमृद्ध्यादिभिरिति 'कश्मीरः'। कश्मीर एव 'काश्मीरः', प्रज्ञादित्वात् स्वार्थेऽण्। काश्मीरिके 'नीलमत-पुराणे' तु निरुक्तप्रक्रिययाऽन्यथैव शब्दव्युत्पादनम्। तथा हि तत्र बृहदश्व उवाच—

'कः प्रजापतिरुद्दिष्टः कश्यपश्च प्रजापतिः।
तेनासौ निर्मितो देशः कश्मीराख्यो भविष्यति ॥२६१॥

कं वारि हरिणा यस्माद् देशादस्मादपाकृतम्।
कश्मीराख्यं ततो ह्यस्य नाम लोके भविष्यति' ॥२६२॥ इति।

श्लोकयोरनयोर्द्वेधा निरुक्तिरुपलभ्यते 'कश्मीर'शब्दस्य—(१) केन = कश्यपेन प्रजापतिना निर्मितोऽयं देशः 'कश्मीर' इत्येका, (२) कम् = जलमस्माद् देशाद् हरिणा दूरे कृत तस्मात् 'कश्मीर' इत्यपरा।

केचित्तु कल्पयन्ति—

कश्यपप्रजापतेस्तपोभूमिरयं देशः, अत्रैव च प्रसिद्ध मिहिरमन्दिरं (मार्तण्ड-मन्दिर) स्थापितमभूद्—इति 'कश्यप-मिहिरयोः' उभयोर्नाम्नोः संयुक्तयोरपभ्रंश-रूपोऽयं 'कश्मीर' शब्द इति।

अन्ये तु जल्पन्ति—

'शाहमीर'नाम्ना मुहम्मदमतावलम्बिना वैदेशिकेन शासकेनेदंप्रथमतयाऽधि-कृतत्वेन देशोऽयं 'काश्मीर' इति प्रासिध्यद् इति। तत्र शास्त्रीये व्युत्पत्तिनिरुक्ती एव साधीयस्यौ, अन्तिमा तु कल्पनामात्रमिति न सा विश्वसनीया।

कतिपये तु—

'कश्मलमीरयति—इति कश्मीरः' इत्यपि व्युत्पत्तिमाहुः, साधयन्ति च पृषोदरा-दित्वात् तद्रूपम्।

## (२) पुराणेतिहासोल्लेखः

अतिप्राचीनः खल्वयं 'काश्मीर'शब्दः, रामायण-महाभारतादिषु प्राचीनग्रन्थेष्वपि तस्य प्रयोगदर्शनात् । तथा हि—'काश्मीरे कपिलेश्वर.' इत्येव कस्यचिज्ज्योतिर्लिङ्गस्य स्मरणमुपलभ्यते । वाल्मीकीये रामायणे सीताया अन्वेषणप्रसङ्गे वानरान् प्रत्याज्ञा—

'काश्मीरमण्डलं सर्वं शमीपीलुवनानि च ।
पुराणि च सशैलानि विचिन्वन्तु वनौकसः ॥' इति (रा० ४।४३।२२) ।

महाभारतेऽपि—

'काश्मीरा. सिन्धुसौवीरा गान्धारा दर्शकास्तथा ।'इति (म० भा० ६।६।५३) ।

## ३-शास्त्रप्रामाण्यम्

काश्मीरे प्रवहन्ती 'वितस्ता' नाम नदी वेदकालादेव प्रसिद्धयति । अतश्च देशोऽसौ वेदकाले न परिज्ञातोऽभूदिति को वक्तुं प्रसहेत ? श्रीमतः कल्हणस्य राजतरङ्गिणीलेखेन नु प्रतीयते यदयं जलप्रलयसमये मत्स्यावतारादनन्तरमेव प्रादुरभूदिति । तथा हि—

'पुरा सतीसर. कल्पारम्भात् प्रभृति भूरभूत् ।
कुक्षौ हिमाद्रेरर्णोभिः पूर्णा मन्वन्तराणि षट् ॥
अथ वैवस्वतीयेऽस्मिन् प्राप्ते मन्वन्तरे सुरान् ।
द्रुहिणोपेन्द्ररुद्रादीनवतार्य प्रजासृजा ॥
कश्यपेन तदन्तःस्य घातयित्वा जलोद्भवम् ।
निर्ममे तत्सरो भूयः काश्मीर इति मण्डलम् ॥
उद्वर्तस्तनिःष्यन्ददण्डकुण्डातपत्रिणा ।
यस्सर्वनागाधीशेन नीलेन परिपाल्यते ॥' इति
(राजतरङ्गिणी १।२५-२८) ।

## (४) काश्मीरमण्डलपरिमाणम्

षष्टिग्रामसहस्राणि षष्टिग्रामशतानि च ।
षष्टिग्रामास्तथा ग्रामा ह्येतत्काश्मीरमण्डलम् ॥इति॥

१. विरोविप्रप्रस्थितेन (विरनागप्रस्थितेन, 'विरीनाग' इति प्रसिद्धेन) नीलनागेन—इत्यर्थः-इति स्टीन ।

यद्यप्येतच्छ्लोकोक्तास्त्रिषष्ट्यधिकषष्टिसहस्रषट्शतं (६०६६३) ग्रामा नेदानीं काश्मीरे कयाचिदपि गवेषणापूर्णया गणनया लभ्येरन्, तथापि बहुकालान्तरेणासंख्यैर्विप्लवैर्विप्लुते तस्मिन्मण्डले प्रत्येकवारं विध्वसिते क्व तेषां ग्रामाणां स्थितिः साक्षात्क्रियेत ? । अन्यत्रान्यविधमपि परिमाणं काश्मीरस्योपलभ्यते, यथा—

शारदामठमारभ्य [1]कुङ्कुमाद्रितटान्तगः ।
तावत्कश्मीरदेशः स्यात् पञ्चाशद्योजनात्मकः ॥ इति (शब्दकल्पद्रुमे) ।

योजनं चतुःक्रोशपरिमाणं भवतीति एतदुक्त्यनुसारेण, द्विशतं क्रोशाः, चतुःशतमीलानि च काश्मीरपरिमाणमुक्तं भवति । तदेतदुपपद्यते, संभाव्यमानत्वात् । वस्तुतस्तु—परिमाणप्रख्यापका ग्रन्था नैकस्मिन्नेव काले समभूवन्, तस्माद् येन ग्रन्थकारेण स्वसमये काश्मीरस्य यावत्परिमाणमनुभूतं तावदेव तेन विलिखितम् ।

### (५) प्राचीनानि मन्दिराणि ध्वंसावशेषाश्च

तुषारमयशैलशिखरावेष्टितेऽस्मिन् काश्मीरप्रदेशे बहूनि प्राचीनानि वास्तूनि वस्तूनि च दर्शनीयानि सन्ति । कश्मीरमण्डलस्य हिन्दूभूपालैरपरैरपि धनपात्रैर्धार्मिकैः प्रजाजनैर्नानास्थानेषु सहस्रातिसहस्रदेवमूर्तिसंवलितानि मन्दिराणि प्रतिष्ठापितान्यासन् । कालवशात्कलिकालवशाच्च तेषु सुबहूनि विनष्टानि । तथाप्यवशिष्टानामपि संख्या भूयस्येव वर्तते । अद्यापि श्रीनगर-पाण्ड्रतनावन्तिपुर-तख्तसुलेमान-पामपुरपत्तन-लेदरा काकपुर-वराहमूल-यमपुर-भवानीयर-वर्णकोटरी-भौमज-पायच-मार्तण्ड-लतापुर-मानसबल-नारायणताल-फतेहगढ-तेवन-द्रुवनमा-कङ्कातान्तिक-नौसेहरोरीकान्तर्वर्तिदिमन-खुनमःसु सुबहूनि प्राचीनानि देवमन्दिराणि भग्नाभग्नावस्थायां स्थितानि सन्ति, येषां शिल्पनैपुण्यं द्रष्टृजनं विस्मयाम्बुधौ मज्जयति, चमत्करोति च तच्चेतांसि । हिमानीगह्वरमध्ये जलोपरि पाषाणमयं देवालयं दृष्ट्वा कश्चिदद्भुतरस आविर्भवति, निर्मातारं च धन्यातिधन्यं वक्तुं मनोऽप्युत्सुकीभवति । भारतीयानां प्राचीनशिल्पविद्याया अनवद्यः परिचयोऽद्यापि काश्मीरेषु यथेष्टं प्राप्यते ।

अगत्यानि प्राचीनानि देवस्थानानि पुण्यतीर्थतया विश्रुतानि सन्ति । हिमस्तोमान् खण्डयित्वा संख्यातीता यात्रिणस्तेषां तीर्थानां दर्शनार्थं गच्छन्ति । काश्मीरस्य नैकेषु तीर्थेषु नूनमद्याप्यद्भुततमा नैसर्गिकाश्च केचन तादृशा व्यापाराः सङ्घटन्ते, यानवलोक्य जगत्स्रष्टुरलौकिको महिमा हृदयङ्गमो भवति । यद्यपि भारतवर्षस्यान्ये-

१. अत्र कुङ्कुमाद्रिः सम्प्रति 'कष्टवार' इति प्रसिध्यति ।



श्रीक्षीरभवानीमन्दिरम्



श्रीमार्तण्डमन्दिरं भग्नावस्थम्



श्रीशङ्कराचार्यमन्दिरम्



काश्मीरे निशातोद्यानम्

ष्वपि तीर्थेषु तादृशा केचन व्यापारा सघटन्त, तथापि तेषु केपाञ्चित्कृत्रिमत्वमपि केचन साधयन्ति । काश्मीरिकेषु तीर्थेषु जाताना त्वीदृशा नैसर्गिकाणा व्यापाराणा कृत्रिमत्व मनसापि न शक्यत आशङ्कितुम् । अत्र त्रिचतुराणि कीर्तयाम —

## अमरनाथ

भगवतो भूतभावनस्य देवाधिदेवस्य यदिह स्वयम्भु तुषारलिङ्गमस्ति, तदेव 'अमरनाथ इति 'अमरेश्वर इति वा व्यपदिश्यते । प्रतिवर्षं श्रावण्या पूर्णिमायामिह नानादेशागता यात्रिणो भगवद्दर्शन लभन्ते । काश्मीरात्प्राच्या दिश्यय भगवान् विराजते । अस्मादुत्तरस्या 'त्रिम्बित'प्रदेशो विद्यते । अत्रत्या पर्वतमाला भृशमुन्नतानता वर्तते, यस्या उच्छ्राय पञ्चदशषोडशसहस्रपादमित स्यात् । शीतकाले, ग्रीष्मकाले वा द्वादशस्वपि मासेषु परितो हिममेव केवलमत्र दरीदृश्यते । पन्था दुर्गमस्तृणाङ्कुरशून्यो निर्जीवश्च विद्यते । सहस्रश पाषाणखण्डा हिमशिलाश्चासन्नपतनास्तिष्ठन्ति । चलतो यात्रिणस्तारस्वरस्य पादाघातस्य च चमत्कारेणापि सर्वा शिलास्तस्यैव शिरस्यापतिष्यन्ति । श्रावणभाद्रयोर्दिवानिश वृष्टिरपि प्रचलति, कदाचिच्च तुषारपातोऽपि भवति । एतावतीषु विघ्नबाधासु विद्यमानास्वपि प्रायो द्विसहस्रसख्याका यात्रिण प्रतिवर्षमेनत् स्वयम्भु लिङ्ग द्रष्टुममरनाथमायान्ति ।

तत्र प्रथमममरेश्वरगुहा लभ्यते । अस्या प्रवेशपथ प्रायो द्वात्रिंशद्धस्तमितोऽस्ति । गुहाया प्रविशता पूर्व पञ्चाशद्धस्तमित सरल पन्था अवाप्यते । तत किञ्चिद् दक्षिण परिक्रम्य प्राय षोडशहस्तान् यावद् अग्रे स्त्रियत । गुहायामतिशीत बाधते, उपरिष्टान्निरन्तर टपटपेति जल च्यवते । भगवतो महादेवस्य स्वयम्भु तुषारलिङ्गमत्रैव स्फटिकनिर्मल चमत्करोति । आनुमानिका कल्पयन्ति—चन्द्रस्येवास्य लिङ्गस्यापि सम्भवतो वृद्धिक्षयौ भवत इति । पूर्णिमाया महादेवस्य पूर्णैव मूर्तिर्दृष्टिपथमायाति । तत प्रतिपदमारभ्यैकैका कला क्षीयते । अमावास्याया तुषारलिङ्गस्य किमपि चिह्न नावशिष्यते, सर्वेऽप्यवयवा अदृश्या भवन्ति । पुनश्च शुक्लपक्षस्य प्रतिपदीद लिङ्ग प्रतिदिनमेकैककलाक्रमेण वर्धितुमारभते । स्थानमिद निर्जनतयातिभयावह विद्यते । द्वादशमासानिह कश्चिदपि पुरुष स्थातु न प्रभवति । योगिषु सन्यासिषु च विरला केचित् त्रिचतुरान् मासानिह वासेनातिवाहयन्ति । त एवान्यान् कथयन्ति यद्—'अमरनाथस्यापि निशानाथस्य वृद्धिक्षयाभ्या सहैव वृद्धिक्षयौ जायेते' इति ।

---

१ तिब्बतस्येद सस्कृत नाम सूर्यसहितायाा' लभ्यत । तिसृभिर्भूभि = भारत-नेपाल-चीनभूमिभिरितम् = सीमात्वेनाधिगतम्—इति च तद्व्युत्पत्ति सभाव्यत ।

महाराजो गुलाबसिंहोऽत्र रात्रिमेकां न्यवात्सीत् । अनुश्रूयते यद् 'भगवान् महादेवस्तस्य सर्परूपेणात्मानं दर्शयित्वाऽन्तर्धानमुपगत' इति । इदमपि प्रोच्यते यद्— 'इदं स्वयम्भु लिङ्गं कदाचित् पारावतरूपमपि धारयति' इति । किन्त्वेष प्रवादः केषाञ्चिद् दाम्भिकानां चेष्टाभिरिदानीमपारमार्थिकीकृतः । अमरनाथमन्दिरे देवदेव्यन्तराणा वृषभस्य च पाषाणमय्यो मूर्तयोऽपि विराजन्ते ।

## पुराणाधिष्ठानम्

द्वितीयं तीर्थं 'पाण्डृतन'-'पाँद्रेठन्' इत्यादिभिर्नामभिर्विश्रुतं विद्यते । एतानि च नामानि 'पुराणाधिष्ठान'-'पादाधिष्ठान' प्रभृतीनां प्राचीनानां संस्कृतनाम्नामपभ्रंशरूपाणीति प्रतीयते । कह्लणकृत राजतरङ्गिण्याम्—

विष्णुः पुराणाधिष्ठाने मेरुवर्धनमन्त्रिणा ।
श्रीमेरुवर्धनस्वामिनामा येन व्यधीयत ।

इत्यादाविदं तीर्थं 'पुराणाधिष्ठान' नाम्ना संस्तुतम् । पौराणिकगाथासु लौकिककथासु चानुश्रूयते यद्—'धावन्ती भगवतीमनुसरन् भगवान् शङ्कर इहैव भगवत्याः पादन्यासाङ्कमवालोकयत् ।' इतीदं 'पादाधिष्ठान'मिति व्यपदेष्टुमपि योग्यं भवति । पूर्वं कदाचिदत्र काश्मीराणां राजधान्यपि बभूव । सम्राड् अशोकस्तदा काश्मीरान् शशास । अत्र तत्प्रतिष्ठापित एकस्मिन् मन्दिरे भगवतो बुद्धदेवस्य दन्तः सुरक्षितोऽभवत् । अनन्तरं काश्मीराधीश्वरेणाभिमन्युनाग्निसंयोगं कारयित्वा दग्धमेतन्नगरम् । तस्मिन्नग्नौ दग्धा देवालया अपि भस्मसादभवन् । केचिदैतिहासिका मन्यन्ते यत्-त्रयोदशोत्तरनवशततमे (९१३) खिष्टाब्दे केनचित् पार्थेन राज्ञा नगरमिदमावासितम्, अभिमन्युना यन्नगरमुद्वासितं तत्पुराणाधिष्ठानस्य (पाण्ड्रतनस्य) पार्श्वत एवासीत् । यदा च शहाबुद्दीनसिकन्दरोऽत्र समुदपतत्, तदा तेनापि नगरमिदमुद्वासित नाभूत् । अत्र तीर्थेऽशीतिहस्तमितायाम चतुष्कोणं शिवकुण्डनामकं सर एकं विद्यते । अमरनाथं गच्छन्तो यात्रिणोऽत्रैव कुण्डे स्नान्ति । अत्र नगरेऽद्यापि बहूनां देवालयानामट्टालिकानां च भग्नावशेषा विराजन्ते ।'

## पद्मपुरम्

तृतीयं तीर्थस्थानं 'पदिनापुर' 'पाम्पुर'प्रभृतिभिर्नामभिर्व्यपदिश्यते । इमानि नामानि 'पद्मपुर' नाम्नोऽपभ्रंशरूपाणि । इदं नगरं पद्मनामकेन केनचिद् भूपतिना स्थापितमभूत् । अद्यत्वे त्वत्र स्थले स्थले महतां महत्तराणां स्तम्भानाम्, अट्टालिकानां च भग्नावशेषा एव दृष्टिपथमायान्ति ।

### युवरुरु

पद्मपुरात्परं 'यब्रुरु' नामकं तीर्थमस्ति। युवानो रुरवो (मृगविशेषाः) यस्मिं-स्तद् 'युवरुरु' इत्यनया व्युत्पत्त्याऽस्य प्राचीनं नाम 'युवरुरु' इति प्रतिभाति। अत्र तीर्थे भगवतः शङ्करस्य प्रतीकमेकं शिवलिङ्गं विराजते। अमरनाथयात्रिण इह स्नान-माचरन्ति, ततोऽग्रे सरन्ति।

### अवन्तिपुरम्

युवरुरुणोऽनन्तरम् अवन्तिपुर'मस्ति। महाराजेनावन्तिवर्मणा प्रतिष्ठापितमिदम्। अनुश्रूयते यद्-अयम् अवन्तिवर्मा महादेववरदानाज्जलोपर्यपि पद्भ्यां चलितु शशाक। एकदा महति जलप्लावने काश्मीरा मग्ना, परं तद्वरदानबलादवन्तिवर्मा सर्वथा स्वस्थ एव तस्थौ, न मम्लौ, न जग्लौ। अस्मिन्नवन्तिपुरेऽद्यापि भूयसां देवालयादीनां भग्नावशेषाः पतिताः सन्ति।

### वागहमुः

अवन्तिपुरात्परं 'वागहमु'नामक उत्स. प्राप्यते। ततश्च चक्रधरादीनि द्वादश तीर्थानि सन्ति। सर्वेषामनन्तरं पञ्चतरङ्गिणीनामकं तीर्थं विराजते। अस्य स्रोतसः पञ्चशाखाः सन्तीत्यसौ पञ्चतरङ्गिणीत्युच्यते। अत्र यात्रिणः स्नान्ति। स्नात्वा च कार्पासादिमयानि वस्त्राण्युज्झित्वा भूर्जपत्रमयानि वस्त्राणि परिदधति। केचिद् अर्धनग्ना एवोल्लासेन जयजयेति जोघुष्यमाणा अग्रे सरन्ति। इयं पञ्चतरङ्गिणी देवाद् अमरे-श्वराद् एकक्रोशव्यवहितास्ति। यात्रिणो भोजनादिसामग्रीमत्रैव रक्षन्ति।

### काश्मीरमहत्त्वम्

श्रीकल्हणो राजतरङ्गिण्यां परया-भक्त्या काश्मीरमहत्त्वमुद्गायति, तद्यथा—

'गुहोन्मुखी नागमुखापीतभूरिपया रुचिम्।
गौरी यत्र वितस्तात्वं याताऽप्युज्झति नोचिताम्[1]॥

---

(१) गुहोन्मुखी = कुमारकार्तिकेयसम्मुखी, अन्यत्र—कन्दरामुखी च, नागमुखा-पीतभूरिपयाः—नागमुखेन = गजाननेन गणेशेनापीत भूरि पयः = दुग्धं यस्याः सा, अन्यत्र-नागाना मुखैरापीतं भूरि पयः = जल यस्याः सा, गौरी = पार्वती, वितस्तात्वं = वितस्ता 'झेलम' इति ख्याता नदी, तत्त्व याताऽपि, उचितां = चिराभ्यस्तां, ('उच समवाये' इति धातो रूपम्) रुचिम् = इच्छाम्, नोज्झति = न त्यजति। गौरीत्वोचितां रुचि = गुहोन्मुखत्वादिरूपामिच्छां वितस्तात्वेऽपि न त्यजति, तदवस्थायामपि श्लेषेण तत्करणावगमात्, अथ च रुचि = सेकादीच्छा न त्यजति—इत्यर्थः।

शङ्खपद्ममुखैर्नागैर्नानारत्नावभासिभिः ।
नगरं धनदस्येव निधिभिर्यन्निषेव्यते ॥

यत्तार्क्ष्यभीत्या प्राप्तानां नागानां गुप्तये ध्रुवम् ।
प्रसारितभुजं पृष्ठे शैलप्राकारलीलया ॥

भुक्तिमुक्तिफलप्राप्तिः काष्ठरूपमुमापतिम्[१] ।
पापसूदनतीर्थान्तर्यत्र संस्पृशतां भवेत् ॥

सन्ध्यादेवी जलं यस्मिन् धत्ते निःसलिले गिरौ[२] ।
दर्शनं पुण्यपापानामन्वयव्यतिरेकयोः ॥

स्वयंभूर्यत्र हुतभुग् भुवो गर्भात्समुन्मिषन् ।
जुह्वतां प्रतिगृह्णाति ज्वालाभुजवनैर्हविः[३] ॥

देवीभेडगिरेः[४] शृङ्गे गङ्गोद्भेदशुचौ स्वयम् ।
सरोऽन्तर्दृश्यते यत्र हंसरूपा सरस्वती ॥

नन्दिक्षेत्रे[५] हरावासप्रासादे द्युचरार्पिताः ।
अद्यापि यत्र व्यज्यन्ते पूजाचन्दनबिन्दवः ॥

आलोक्य शारदां[६] देवीं यत्र सम्प्राप्यते क्षणात् ।
तरङ्गिणी मधुमती वाणी च कविसेविता ॥

× × ×

विजीयते पुण्यबलैर्बलैर्यत्तु न शस्त्रिणाम् ।
परलोकात्ततो भीतिर्यस्मिन्निवसतां परम् ॥

---

(१) अयम् 'उमापतिः' 'कपटेश्वर' इति ख्याते स्थाने, कोटेहिरग्रामे कोटहाडाख्यविषये च वर्तते ।

(२) भृङ्गनागविषये देवलग्रामसमीपस्थले । गिरौ = 'नीलगिर' इति प्रसिद्धे ।

(३) कमराज(क्रमराज्याख्ये) विषये 'स्वैस्' इति प्रसिद्धः ।

(४) 'नडाभाड्' इति प्रसिद्धा हंसवागीश्वरी ।

(५) मरनामग्रामे ।

(६) श्रीघंसे 'हरेल' इति प्रसिद्धे स्थाने दरद्देशाभ्यर्णवर्त्तिनि ।

सोष्मस्नानगृहाः शीते स्वस्थतीरास्पदा रये ।
यादोविरहिता यत्र निम्नगा निरुपद्रवाः ॥
असन्तापार्हतां जानन् यत्र पित्रा[१] विनिर्मिते ।
गौरवादिव तिग्मांशुर्धत्ते ग्रीष्मेऽप्यतीव्रताम् ॥
विद्यावेश्मानि तुङ्गानि, कुङ्कुमं, सहिमं पयः ।
द्राक्षेति यत्र सामान्यमस्ति त्रिदिवदुर्लभम्[२] ॥
त्रिलोक्यां रत्नसूः श्लाघ्या, तस्यां धनपतेर्हरित् ।
तत्र गौरीगुरुः शैलो, यत्तस्मिन्नपि मण्डलम्[३] ॥

इति (रा० त० १।२९-४३)

## काश्मीराणां तीर्थमयत्वम्

चिराद् यवनैर्बलेन धर्माद् विभ्रश्याधिकांशतो म्लेच्छीकृतानामार्याणां शाश्वतिकावासभूमावत्र काश्मीरदेशे देवायतनमन्दिरादीनां धूलिमात्कारेण, तीर्थादिपुण्यस्थलानां स्वरूपविलोपेन, सर्वेषां सांस्कृतिकभावाना नामादिपरिवर्त्तनेन चापरिचीयमाने चाताद्दशीव सम्प्रति प्रतीयमानेऽपि देशे तत्र कल्हणस्य समये त्वासीदेव किमप्यद्भुत गौरवं स्वरूपसौन्दर्यं च, यद्धि स एव कल्हणो राजतरङ्गिण्यामित्थं व्यावर्णयामास—

चक्रभृद्विजयेशादिकेशवेशानभूषिते ।
तिलांशोऽपि न यत्रास्ति पृथ्व्यास्तीर्थैर्वहिष्कृतः ॥ इति (रा० त० १।३८)

अत्र—चक्रभृत् केशवः='चक्रधर' इति प्रसिद्धः, विजयेशः ईशानः='विज्यभ्राडो' इति प्रसिद्धः। काश्मीराणां कल्हणकृतराजतरङ्गिणीवर्णिता सेयं पावनी स्थितिर्यस्मिन् समये समदृश्यत, सोऽयं समयः कल्हणेनैव वर्ण्यते, यथा—

---

(१) पित्रा=तिग्मांशोर्जनकेन कश्यपेन ।

(२) अयमस्याशयः—तुङ्गानि=अत्युच्चान्यभ्रलिहानि विद्यालयभवनानि, कुङ्कुमम्=विपुलतया केसरोत्पत्ति, सहिम=भीष्मग्रीष्मेऽपि हिममिश्रित सुशीतल पयः=जलम्, द्राक्षा=वाहुल्येन द्राक्षाफलोत्पत्तिः—इत्येतद् द्रव्यजात त्रिदिवे=स्वर्गेऽपि दुर्लभं सद् यत्र=काश्मीरमण्डले सामान्यमस्ति, सर्वजनोपभोग्य सुलभमिति यावत् । इह काश्मीरेषु विद्यादिकमनुपममत्युत्कृष्ट चास्ति इति यावत् ।

(३) अत्र मण्डलम्=काश्मीरमण्डलं प्रवृत्तत्वात् ।

लौकिकेऽब्दे चतुर्विंशे शककालस्य साम्प्रतम् ।
सप्तत्याऽभ्यधिकं यातं सहस्रं परिवत्सराः ॥ इति (रा० त० १।५२)

श्लोकेऽस्मिन् 'साम्प्रतम्' इति पदस्य 'अद्य', 'अस्मिन् वर्तमाने समये', 'एतर्हि' इत्येवमर्थः । कालश्चासौ काश्मीरिकजयसिंहमहाराजशासनसंभुक्तः, यदन्ता 'राजतरङ्गिणी' कह्लणो निर्ममे । तथा च तस्योपसंहारश्लोकौ—

सुतः सुस्सलभूभर्तुः सम्प्रत्यप्रतिमक्षमः ।
नन्दयन्मेदिनीमास्ते जयसिंहो महीपतिः ॥

गोदावरी सरिदिवोत्तुमुलैस्तरङ्गैर्वक्त्रैः स्फुटं सपदि सप्तभिरापतन्ती ।
श्रीकान्तिराजविपुलाभिजनाब्धिमध्यं विश्रान्तये विशति राजतरङ्गिणीयम् ॥
इति (रा० त० ३४४८,६)

कह्लणात्पूर्वमपि महाभारतहरिवंशादिषु काश्मीरिकाणां तीर्थानां वर्णनमुपलभ्यते, यथा—

(१) काश्मीरेष्वेव नागस्य भवनं तक्षकस्य च ।
'वितस्ता'ख्यमिति ख्यातं सर्वपापप्रमोचनम् ॥
तत्र स्नात्वा नरो नूनं वाजपेयमवाप्नुयात् ।
सर्वपापविशुद्धात्मा गच्छेच्च परमां गतिम् ॥ (महा० वन० ८२।९०-९१)

(२) जम्बूमार्गं समाविश्य देवर्षिपितृसेवितम् ।
अश्वमेधमवाप्नोति सर्वकामसमन्वितः ॥ (महा० वन० ४०।८२)

(३) काश्मीरराजो गोनर्दो दरदाधिपतिर्नृप ।
दुर्योधनादयश्चैव धार्तराष्ट्रा महाबलाः ॥
एते चान्ये च राजानो बलवन्तो महारथाः ।
समन्वयुर्जरासन्धं विद्विषन्तो जनार्दनम् ॥ (हरिवंशपुराणे ९१, ९६ अध्याययोः, महाभारते सभा० २७।१७।१६, नीलमतपुराणे च ।)

श्लोकेष्वेषु द्वितीयोद्धरणदर्शनेन प्रतीयते यत्—महाभारतकाले 'जम्बू'नगरस्यापि पवित्रतीर्थमयत्वं विश्रुतमासीत् । नाम तु तदीयं 'जम्बूमार्ग' इत्यासीत् । एवं हि प्रतीयते तन्नाम्ना यत्—'जम्बूद्वीपे भरतखण्डे' इत्यादिसङ्कल्पे प्राङ्मेरु(पामीर)-स्थानां जम्बूनां क्षेत्रं गन्तुमयमेव मार्गः कदाचिदाश्रितोऽभूदिति । अपि च 'यास्कीय-

निरुक्तव्याख्यायां तत्र तत्राध्यायपरिसमाप्तौ "इति श्रीजम्बूमार्गाश्रमवासिनो भगवद्-दुर्गाचार्यस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ" इत्युल्लेखेनापि 'जम्बू' इत्यस्य नाम 'जम्बूमार्ग' इत्यपि प्रागासीदिति सिध्यति। ये तु 'जम्बूमार्ग' क्वचित्प्रान्तान्तरे प्रतिपिपादयिषन्ति, तै. प्रमाण किञ्चिन्मृग्यम्।

**काश्मीरिवया वितस्तायाः सर्वातिशायि तीर्थत्वम्।**

काश्मीरेषु तीर्थान्यनेकानि तद्भुव पावयन्ति। तत्र वितस्तायाः ('झेलम' इति ख्यातायाः) नद्या महत्त्वमप्युत्कृष्ट वर्तते। प्रसिद्धचत्यत्र कश्चन श्लोक.—

पृथिव्या यानि तीर्थानि तानि काश्मीरमण्डले।
काश्मीरे यानि तीर्थानि तानि वैतस्तिके जले॥ इति।

वितस्ता चासौ यद्यपि सिन्धुना नदेन सह सगत्याधुना पश्चिम पाकिस्तानीकृत भारतखण्ड प्रविष्टा तत्रत्यसमुद्रे लीनाऽर्य्यजनतायाः शङ्कनीयेव सवृत्ता, तथाऽपि भारतीयभागे प्रवहमाना तु वहत्येव किमपि श्रद्धापूत गौरवम्। अपि च—'इम मे गङ्गे यमुने०' इत्यादिषु ऋक्ष्वपि सेय वितस्ता कीर्त्तिता इति परमपवित्रा।

**काश्मीरः शारदादेशः**

अनादेः कालादसौ काश्मीरः 'शारदादेश.', 'सरस्वतीदेशो' वा प्रसिद्धयति। यज्ञोपवीतग्रहणादनन्तर भारतस्येतरभागस्थाः केचन द्विजातिबालका समुपस्थिते वेदारम्भावसरे स्वपित्रादीन् प्रति 'वाराणसीं गच्छामि' इतिवत् 'काश्मीरान् गच्छामि' इत्युदीर्य विद्याग्रहणाय तत्र यान्ति स्म। अनन्तर तु दैवाधीनतया यवनशासनविदूषित म्लेच्छबहुलता गत च त देश वीक्ष्य सोऽय शास्त्रीय समुदाचार प्रतिरुद्धोऽभूत्। पद्धतिषु चापि परिवर्त्तनं विधाय ततः प्रभृति 'काश्मीरान् गच्छामि' इति वाक्य व्यपानीयत, 'वाराणसीं गच्छामि' इत्येव तु वाक्य लिखित विलोक्यते, व्यवहारपथमायाति च तदेव। परन्तु कासुचित् पद्धतिष्वधुनाऽपि पूर्ववाक्यमेव यथावस्थितमुपलभ्यते। पूर्वकाले काश्मीरेषु विद्याध्ययनार्थं भारतस्य विभिन्नप्रान्तेभ्यो विदेशेभ्यश्च ये छात्रा. समागच्छन्ति स्म, तदर्थं सर्वविधसौविध्यसम्पन्नानि, नानाविद्याध्यापकाचार्यादिमहितानि चात्युच्चानि विद्यालयभवनानि सुलभान्यासन्, यानि परिगणितकाश्मीरिकदृश्यवस्तुषु इदम्प्रथमतया कीर्त्तनीयान्यभूवन्। तथा च—

विद्यावेश्मानि तुङ्गानि, कुङ्कुमं सहिम पयः।
द्राक्षेति यत्र सामान्यमस्ति त्रिदिवदुर्लभम्॥

इति राजतरङ्गिण्या (१-४२) स्थित श्लोक समुदाहृत एव पूर्वम्। पुरायुगे 'पथ्यास्वस्ति'—पदोपेता दैवी भाषा शिक्षितुमिहोत्तरापथ एवागच्छन्ति स्मेति वेदशास्त्रादवगच्छाम। आम्नायते हि कौषीतकीयाना श्रुतौ—'अथाब्रवीत् पथ्यास्वस्ति-'अहमेकां दिश प्रज्ञास्यामि' इति। सोदीचीं दिश प्राजानात्। वाग् वै पथ्यास्वस्ति'। तस्मादुदीच्यां दिशि प्रज्ञाततरा वागुद्यते। उदञ्च उ एव यन्ति वाचं शिक्षितुम्। यो वा तत आगच्छति, तस्य वा शुश्रूषन्ते। इति ह स्माह—एषा हि वाचो दिक् प्रज्ञाता' इति। शाङ्खायनब्राह्मणे विनायकभट्टकृते तद्व्याख्यानेऽप्येवमेवोल्लेखः।

### काश्मीरे वैदिकोपाख्यानसम्बन्धः

(क) 'पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्ध स्वस्तये' इत्यादिमन्त्रेषु ये कथानका सूच्यन्ते, तेषां काश्मीरिकप्राच्यपर्वतीयस्थलप्रचरितैरेव कथानकैं सह सम्बन्धोऽस्ति इति नैकेषां विदुषां मतम्।

(ख) 'ऐतरेयब्राह्मणे' उत्तरकुरूणां यद् देवक्षेत्रत्वमाख्यायते, तदपि काश्मीरदेशेनैव सह सम्बद्धमस्ति इति केचन मन्यन्ते।

### ब्राह्मणविशेषाणां काश्मीरान्निर्गमः

'गौड'ब्राह्मणाः पूर्वकाले कदाचित् काश्मीरादेव निर्गत्य स्थानान्तराणि शिश्रियु इति 'ब्राह्मणोत्पत्तिमार्त्तण्ड'ग्रन्थलेखात् प्रतीयते। गौडब्राह्मणाश्चेमेऽधुना पञ्चनदराज्यस्य रोहतक-हिसारमण्डलयो, राजस्थाने, उत्तरप्रदेशे, क्वचिदन्यत्रापि च प्रतिवसन्ति।

### न केवलमार्याणाम्, आर्यधर्मेतरेषामपि संस्कृतप्रेम

एम्० ए० स्टीनो नाम आङ्ग्लविद्वान्, लिखति यत्—काश्मीरेषु क्वचित् क्वचिन्मुसलमानानां 'कब्र'नामकश्मशानचत्वरिकास्वपि संस्कृतभाषया लिखिता शिलालेखा प्राप्यन्ते' इति। तदेतद् 'आर्क्योलोजी'विभागीयाधिकारिभिरपि स्वयं प्रत्यक्षीकृत्य प्रमाण्यते। काश्मीरेषु कदाचित्'गृहे गृहे सम्यपुरन्ध्रिवर्गा व्यवाहरन् संस्कृतभाषणेन'इति महाकविर्बिल्हणो लिखति।

कल्हणकृतराजतरङ्गिण्यां जयापीड-शङ्करवर्म-यद्गु यशस्करप्रभृतीनां केषाञ्चिद् भूपतीनां भारतीयसंस्कृतिविमुखतया पतितानामपि संस्कृतज्ञान-प्रमादिप्रभावात्

पुनरभ्युदय. समजायतेति वर्णित वर्तते । अवन्तिवर्म-जयापीड-प्रवरसेन-मातृगुप्तादीनां तु राज्ञामपि सता ·संस्कृतविदुषा संस्कृतानुरागिणा च भूयांसि वृत्तानि राजतरङ्गिण्यादावुपलभ्यन्ते । तत्रावन्तिवर्मविषये—

मुक्ताकण. शिवस्वामी कविरानन्दवर्धन ।
प्रथा रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मण. ॥

इत्यनेन श्लोकेन तस्य विद्वज्जनाश्रयदायकत्वमुपवर्णितम् । जयापीडविषयेऽपि—

उत्पत्तिभूमौ देशेऽस्मिन् दूरदूरतिरोहिता ।
कश्यपेन वितस्तेव तेन विद्याऽवतारिता ॥

इत्यादिना जयापीडकृत तिरोहितविद्याया. पुनरुद्धरणम्, मनोरथादीना कवीना च सम्माननमाश्रयदान च प्रदर्शितम् । प्रवरसेनविरचित 'सेतुबन्धमहाकाव्यम्' मातृगुप्तकृतानि सुभाषितादीनि च प्रायो विदन्त्येव विद्वास. ।

मुस्लिमशासनकालेऽपि शाहमीरादष्टम शासकः 'जिनउल्अब्दीन'नामा विद्यासु, कलासु, कवितासु च भृशमन्वरज्यत् । असौ संस्कृतवाङ्मयेऽपि काञ्चित्प्रीतिमधान्नवेति गवेषणीयम् । शाहमीराद् दशमस्य हुसनखानस्य तु संस्कृतसाहित्ये सङ्गीतशास्त्रे च परमाऽभिरुचिरासीदिति हिन्दीविश्वकोषादेर्विज्ञायते । तस्मादेकमिशस्तु शासक. शेखफरीदसंज्ञको ब्राह्मणाश्वकवशीयाश्च कराद्विमुक्तवान्, पूजितवांश्च तानित्यपि तत्र सूच्यते, ब्राह्मणपूजकत्वेनास्य संस्कृतप्रियत्वमपि कैश्चिदनुमीयते ।

### काश्मीरमण्डलं चतुर्दशविद्यानां पीठम्

'काश्मीर चतुर्दशविद्याना पीठम्' इति महाकवि श्रीहर्षो वक्ति । तथा हि—'काश्मीरैर्महिते चतुर्दशतयी विद्यां विदद्भिर्महा०' इति[1] । तस्य शारदादेशत्व तु प्रागेवोक्तम् ।

### शैवसिद्धान्तानामुद्गमभूमि

शैवसिद्धान्तानाम्, शैववेदान्तस्य, वीरशैवमतस्य चेत्यादीना नानामतानामुद्गमस्थान काश्मीरदेश एव । इह नवम्या शताब्द्यामाचार्येण 'वसुगुप्तेन' यदा 'स्पन्दकारिका'ग्रन्थो व्यरचि, तदा तदाधारेणैवानन्तर देशे शैवमतप्रचारोऽजनि । एतस्याः 'स्पन्दकारिकाया' विवरण 'जम्बूप्रविभागीयग्रन्थपरिचय'प्रसङ्गेन प्राग् दत्तमेव । 'स्पन्दकारिकाया' 'स्पन्दसर्वस्वम्' नाम काचिट्टीकाऽपि प्रसिद्ध्यति । शैवमतस्यापरा शाखा 'प्रत्यभिज्ञादर्शनम्' इति प्रसिद्धाऽस्ति । साऽपि काश्मीरेष्वेव

१. नै० न० १६।१३१) ।

इति राजतरङ्गिण्या (१-४२) स्थित श्लोक समुदाहृत एव पूर्वम् । पुरायुगे 'पथ्यास्वस्ति'–पदोपेता दैवी भाषा शिक्षितुमिहोत्तरापथ एवागच्छन्ति स्मेति वेद-शास्त्रादवगच्छाम । आम्नायते हि कौषीतकीयाना श्रुतौ––'अथाब्रवीत् पथ्यास्वस्ति-'अहमेकां दिशं प्रज्ञास्यामि' इति । सोदीचीं दिश प्राजानात् । वाग् वै पथ्यास्वस्ति । तस्मादुदीच्या दिशि प्रज्ञाततरा वागुद्यते । उदञ्च उ एव यन्ति वाचं शिक्षितुम् । यो वा तत आगच्छति, तस्य वा शुश्रूषन्ते । इति ह स्माह––एषा हि वाचो दिक् प्रज्ञाता' इति । शाङ्खायनब्राह्मणे विनायकभट्टकृते तद्व्याख्यानेऽप्येवमेवोल्लेखः ।

### काश्मीरे वैदिकोपाख्यानसम्बन्धः

(क) 'पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्ध स्वस्तये इत्यादि-मन्त्रेषु ये कथानका. सूच्यन्ते, तेषां काश्मीरिकप्राच्यपर्वतीयस्थलप्रचरितैरेव कथानकै सह सम्बन्धोऽस्ति इति नैकेषा विदुषा मतम् ।

(ख) 'ऐतरेयब्राह्मणे' उत्तरकुरूणा यद् देवक्षेत्रत्वमाख्यायते, तदपि काश्मीर-देशेनैव सह सम्बद्धमस्ति इति केचन मन्यन्ते ।

### ब्राह्मणविशेषाणां काश्मीरान्निर्गम

'गौड'ब्राह्मणाः पूर्वकाले कदाचित् काश्मीरादेव निर्गत्य स्थानान्तराणि शिश्रियु इति 'ब्राह्मणोत्पत्तिमार्त्तण्ड'ग्रन्थलेखात् प्रतीयते । गौडब्राह्मणाश्चेमेऽधुना पञ्चनदराज्यस्य रोहतक-हिसारमण्डलयो , राजस्थाने, उत्तरप्रदेशे, क्वचिदन्यत्रापि च प्रतिवसन्ति ।

### न केवलमार्याणाम्, आर्यधर्मेतरेषामपि सस्कृतप्रेम

एम्० ए० स्टीनो नाम आङ्ग्लविद्वान् लिखति यत्––काश्मीरेषु क्वचित् क्वचिन्मुसलमानाना 'कब्र'नामकश्मशानचत्वरिकास्वपि संस्कृतभाषया लिखिता शिलालेखा प्राप्यन्ते' इति । नदेतद् 'आर्कियोलोजी'विभागीयाधिकारिभिरपि स्वय प्रत्यक्षीकृत्य प्रमाण्यते । काश्मीरेषु कदाचित्'गृहे गृहे सभ्यपुरन्ध्रिवर्गा व्यवाहरन् संस्कृतभाषणेन'इति महाकविविह्लणो लिखति ।

कह्लणकृतराजतरङ्गिण्या जयापीड-शङ्करवर्म-पङ्गु यशस्करप्रभृतीना केषाञ्चिद् भूपतीना भारतीयसंस्कृतिविमुखतया पतितानामपि संस्कृतज्ञान-प्रेमादिप्रभावात्

भागान्तरेष्वपि च नामग्राहं यथोपलब्धि च तेषां विवरणानि प्रस्तोष्यन्ते । विद्वत्परिचयावलोकनेन च ज्ञायते यथा द्वित्रानवाग्भवान् ग्रन्थान् विहाय सर्वे साहित्यग्रन्थाः काश्मीरिकैराचार्यैरेव निर्माय सर्वस्मै जगते वितीर्णाः । साहित्ये—१ भामहस्य 'अलङ्कारवाद:', २. वामनस्य 'रीतिवादः', ३ आनन्दवर्धनस्य 'ध्वनिवादः', ४. कुन्तकस्य 'वक्रोक्तिवाद:', ५ महिमभट्टस्य 'अनुमानवाद,' ६ अभिनवगुप्तपादमम्मटभट्टयोः 'व्यक्तिवादः', ७ क्षेमेन्द्रस्य 'औचित्यवाद.'—इत्यादयो मननशीलाना मनीषिणा 'वादाः' मतानि वा काश्मीरेष्वेव जन्म लेभिरे, यैर्हि निखिल जगत् प्रभावित वर्तते । पुराणेष्वपि—सप्तम्या शताब्द्या नीलमुनिना रचित 'नीलमतपुराण' नाम सुप्रसिद्ध ऐतिहासिको ग्रन्थः काश्मीरिकप्रतिभाफलमेव । महाकविना रत्नाकरेणापि काश्मीरेतिहासविषये किमपि पुराण लिखितमासीत्, यद् हि श्रीरणवीरसिंहशासनसमये काश्मीरेषु लब्धप्रतिष्ठस्य प० रामचन्द्रगाडरूमनीषिण स्वोपज्ञव्याख्यापूर्तैरनेकैर्ग्रन्थै सह तद्भवनेऽग्निना दग्धं भस्मसादभूत् । इतिहासे-११४८ खिष्टाब्दसमुद्भूत, तिथिवारमाससवत्सराद्युल्लेखैर्नास्तिकानामपि प्रत्ययभू, कल्हणमहाकविनिर्मितो 'राजतरङ्गिणी' नामैतिहासिको ग्रन्थ काश्मीरिकविद्वत्प्रतिभाप्रसूत एव, यो हि 'भारतीया इतिहासलेखनं जानन्त्येव न हि' इतीदृश दुर्मुखानां मुखेराणामाक्षेप निरस्यन्, निमुद्रयश्च तन्मुखविवराणि समुज्ज्वलयति भारतीयैतिहासिकाना मुखानि । जोनराज-प्राज्यभट्ट-श्रीवर-शुकादीना 'राजतरङ्गिण्यो'ऽपि पूर्वोक्तराजतरङ्गिणीप्रतिपूरिकास्तच्छेषभूता एव । काव्येषु—काश्मीरिकमहाकविश्रीहर्षविरचित, चिन्तामणिमन्त्रचिन्तनफलम्, शृङ्गारभङ्ग्या चारु, निसर्गोज्ज्वलमर्गम्, कविकुलादृष्टाध्वपान्थ, शृङ्गारामृतशीतगु, स्वादूत्पादभृत्, शरदिजज्योत्स्नाच्छसूक्ति, कृतेतररसस्वादु, चतुर्दशतयी विद्यां विदद्भिः काश्मीरैर्मण्डितम्, अन्याक्षुण्णरसप्रमेयभणिति, भैमीभर्तृचरित्रवर्णनमय, भव्य, नव्य, 'नैषधीयचरित' नाम महाकाव्यमद्यापि भुवनत्रये तुलां न बिभर्त्ति । व्याकरणे—पाणिनीयाष्टाध्यायीसूत्राणां 'काशिका' नाम्न्याष्टीकाया कर्तारौ महावैयाकरणौ वामनजयादित्यौ क्षीरस्वामी च, 'चान्द्रव्याकरण'निर्माता चन्द्रगोमी चेत्यादय आचार्या काश्मीरभूभूषणभूता एव व्यलसन् । किमधिकेन, काश्मीराणामादिराजो गोनन्द क्वचिद् (हरिवशपुराणादिषु) 'गोनर्द' इत्यपि विश्रुत, तदीयो देशोऽप्ययं 'गोनर्द' इत्युच्यते । तत्र—"गोनर्दीयस्त्वाह-'अतिभरः' इति भवितव्यम्, सन्निपातपरिभाषया" इत्यादिभिर्वचोभिराम्नात 'गोनर्दीय' कृत्याग्रः

(१) मत्स्यपुराणस्य, मार्कण्डेयपुराणस्य च 'भावप्रदीप'नामकटीकायाः, वामनपुराणस्य टीकायाश्च कर्ता भट्टश्रीरामचन्द्रपण्डितः, लिङ्गपुराणस्य भावार्थदर्दीपिकाटीकायाः कर्ता श्रीदयारामपण्डितश्च इहैव बभूवतुः ।

जन्म लेभे। शाखाद्वयविभक्तंतच्छैवमतप्रतिपादकाष्टीकाटिप्पण्यादियुता अनेके ग्रन्थाः सवत्र देशविदेशेषु प्रसिद्धिं प्राप्ता विदुषां दृष्टिगोचरतामायान्त्येव। काश्मीरिक शैवदर्शनमेव 'त्रिकदर्शनम्' इत्युच्यते। तत् 'त्रिकदर्शनम्' अस्य देशस्य विशिष्टा दार्शनिकी सम्पत्ति। एतद्दर्शनविषये काश्मीरराज्यस्थानुसन्धानविभागेन नैकानि पुस्तकानि प्रकाशितानि। प्रवृत्तिनिवृत्तिमार्गद्वयपोषक त्रिकशासन ज्ञान-योग-भक्त्या-ख्यसाधनात्रयसमर्थक सच्छिवाद्वैतमुपदिशति। समुपलब्धेषु काश्मीरिकत्रिकदर्शनसम्बद्धेषु ग्रन्थेषु तात्कालिकाना बौद्धादिशास्त्राभिमताना नेतिवाद-पलायनवादोच्छेदवादादीना विविधदार्शनिकधाराणा खण्डनमपि यत्र तत्रोपलभ्यते।

शिव, शक्ति, नरश्चेति त्रयाणा तत्त्वाना समूह एव 'त्रिकम्' इत्यभिधीयते। एकमेव शिवतत्त्व स्वकीयया स्वातन्त्र्यशक्त्या त्रिविध भवति। अस्मिन् दर्शने परम-सत्तारूप शिवो ज्ञानक्रियालक्षण, अत एव जगतो निमित्तोपादानादिकारणत्वा-ज्जगन्निर्माता, विश्वमयो विश्वोत्तीर्णश्च स्वीकृत। 'चिति स्वतन्त्रा विश्वसिद्धिहेतु', सा 'स्वभित्तौ विश्वमुन्मीलयति' इत्यादिभि सूत्रै प्रतिपादित तस्य स्वातन्त्र्यमेव जग-न्निर्माणकारणम्। वेदान्तसम्मतस्य चिद्रूपस्य ब्रह्मणो न जगत्कर्तृत्वम्। तद्दर्शने मायैव ससारजननी। सा च न ब्रह्मणो भिन्ना नाप्यभिन्ना, न सती, नाप्यसती, अपि तु अनिर्वचनीयस्वभावा। इदमेव तद्दर्शनाद् अस्य 'त्रिक'दर्शनस्य वैशिष्ट्यम्।

त्रिकरहस्याभिधायक साहित्य त्रिषु विभागेषु विभक्तम्। तत्र—(१) 'आगम'-नामक. प्रथमो भागो वेदादिवद् अपौरुषेय। अत एव केचन विद्वासस्तदागमशास्त्र शिवशक्तिकर्तृकमभिदधति। (२) द्वितीयो भाग 'स्पन्द' इत्युच्यते। 'स्पदि किञ्चि-च्चलने' धातो 'स्पन्द' शब्द सिध्यति। तस्य स्पन्दस्य महिमानमेव द्वितीयो भागो वर्णयति। स्पन्दनाख्या शिवस्य परमा शक्तिरेव परम तत्त्वम्— इति स्पन्दमतप्रवर्त्तका 'वल्लट'प्रभृतय स्वीकुर्वन्ति। तया शक्त्यैव ससारस्योन्मीलननिमीलने विधीयेते। (३) तृतीयो भाग 'प्रत्यभिज्ञा' नामक। भागोऽसौ त्रिकदर्शनस्य ज्ञानपक्ष विवृणोति। प्रत्यभिज्ञा'नाम विस्मृतस्य पदार्थस्य पुनर्ज्ञानम्, नष्टस्य वस्तुन उपलब्धिर्वा। स्वस्वा-तन्त्र्यशक्त्यपरनामिकया स्वात्ममायया तदावरणमलोपहतात्मन शिवस्यैव 'जीव'सज्ञा त्रिकदर्शनसिद्धा ते। मलापनयनेन विशुद्धात्मन शिवस्य स्वचित्क्रियारूपस्य स्वस्व-भावस्य स्मरण ज्ञान वैव प्रत्यभिज्ञानम्।

### आचार्याणां क्रमो वा जन्मभू

काश्मीरप्रविभागीयप्रान्तपरिचयप्रसङ्गेनैतानेकेषामाचार्याणा नामानि कीर्तितानि।

भागान्तरेष्वपि च नामग्राहं यथोपलब्धि च तेषां विवरणानि प्रस्तोष्यन्ते । विद्वत्परिचयावलोकनेन च ज्ञायते यथा द्वित्रानर्वाग्भवान् ग्रन्थान् विहाय सर्वे साहित्यग्रन्थाः काश्मीरिकैराचार्यैरेव निर्माय सर्वस्मै जगते वितीर्णाः। साहित्ये—१ भामहस्य 'अलङ्कारवादः',२.वामनस्य 'रीतिवादः', ३ आनन्दवर्धनस्य 'ध्वनिवादः', ४. कुन्तकस्य'वक्रोक्तिवादः', ५. महिमभट्टस्य'अनुमानवादः,' ६. अभिनवगुप्तपादमम्मटभट्टयोः 'व्यक्तिवादः', ७. क्षेमेन्द्रस्य 'औचित्यवादः'—इत्यादयो मननशीलाना मनीषिणा 'वादाः' मतानि वा काश्मीरेष्वेव जन्म लेभिरे, यैर्हि निखिल जगत् प्रभावित वर्तते । पुराणेष्वपि—सप्तम्यां शताब्द्यां नीलमुनिना रचितं 'नीलमतपुराणं' नाम सुप्रसिद्ध ऐतिहासिको ग्रन्थ. काश्मीरिकप्रतिभाफलमेव । महाकविना रत्नाकरेणापि काश्मीरेतिहासविषये किमपि पुराणं लिखितमासीत्, यद् हि श्रीरणवीरसिंहशासनसमये काश्मीरेषु लब्धप्रतिष्ठस्य प० रामचन्द्रगाडरूमनीषिण. स्वोपज्ञव्याख्यायुतैरनेकैर्ग्रन्थैः सह तद्भवनेऽग्निना दग्धे भस्मसादभूत् । इतिहासे–११४८ खिस्ताब्दसमुद्भूत , तिथिवारमाससवत्सराद्युल्लेखैर्नास्तिकानामपि प्रत्ययभू., कल्हणमहाकविनिर्मितो 'राजतरङ्गिणी' नामैतिहासिको ग्रन्थ. काश्मीरिकविद्वत्प्रतिभाप्रसूत एव, यो हि 'भारतीया इतिहासलेखनं जानन्त्येव न हि' इतीदृश दुर्मुखाना मुहेराणामाक्षेप निरस्यन्, विमुद्रयश्च तन्मुखविवराणि समुज्ज्वलयति भारतीयैतिहासिकाना मुखानि । जोनराज-प्राज्यभट्ट-श्रीवर-शुकादीना 'राजतरङ्गिण्यो'-ऽपि पूर्वोक्तराजतरङ्गिणीप्रतिपूरिकास्तच्छेषभूता एव । काव्येषु—काश्मीरिकमहाकविश्रीहर्षविरचित, चिन्तामणिमन्त्रचिन्तनफलम्, शृङ्गारभङ्ग्या चारु, निसर्गोज्ज्वलसर्गम्, कविकुलादृष्टाध्वपान्थ, शृङ्गारामृतशीतगु, स्वादूत्पादभृत्, शरदिजज्योत्स्नाच्छसूक्ति, क्रूरेतररसस्वादु, चतुर्दशतयी विद्या विदद्भिः काश्मीरैर्महितम्, अन्याक्षुण्णरसप्रमेयभणिति, भैमीभर्तृचरित्रवर्णनमय, भव्य, नव्य, 'नैषधीयचरितं' नाम महाकाव्यमद्यापि भुवनत्रये तुला न बिभर्त्ति । व्याकरणे—पाणिनीयाष्टाध्यायीसूत्राणा 'काशिका' नाम्न्याष्टीकायाः कर्तारो महावैयाकरणौ वामनजयादित्यौ क्षीरस्वामी च, 'चान्द्रव्याकरण'निर्माता चन्द्रगोमी चेत्याद्याचार्या काश्मीरभूभूषणभूता एव व्यलसन् । किमधिकेन, काश्मीराणामादिराजो गोनन्द. क्वचिद् (हरिवंशपुराणादिषु) 'गोनर्दः' इत्यपि विश्रुतः, तदीयो देशोऽप्यय 'गोनर्द.' इत्युच्यते । ततश्च—"गोनर्दीयस्त्वाह-'अतिजरैः' इति भवितव्यम्, सन्निपातपरिभाषया'' इत्यादिभिर्वचोभिरास्मान 'गोनर्दीय' ब्रुवाणः

(१) मत्स्यपुराणस्य, मार्कण्डेयपुराणस्य च 'भावप्रदीप'नामकटीकायाः, वामनपुराणस्य टीकायाश्च कर्त्ता भट्टश्रीरामचन्द्रपण्डितः, लिङ्गपुराणस्य भावार्थसङ्केतटीकाया कर्त्ता श्रीदशरामपण्डितश्च इहैव बभूवतुः ।

पाणिनीयव्याकरणमहाभाष्यकार भगवान् पतञ्जलिरपि काश्मीरिक एव सम्भाव्यते। तस्मान्नेदमत्युक्तिपूर्णं यत्—काश्मीरदेशोऽभिनवशास्त्रनिर्मातॄणामाचार्याणा, पण्डितप्रकाण्डाना, महाकवीनाम्, इतिहासपुराणादिरचयितॄणामार्षमानवाना च लीलाभूमिरिति नात्र स्तोकोऽपि शङ्कापङ्कस्पर्श । केषाञ्चित्तु काश्मीरिकतया विदिताना प्राचीनाना विदुषा परिचय प्राप्तावसरतयह वितन्यतेऽकारादिक्रमेण—

अभिनन्द

असौ दशमशतकस्य प्रारम्भेऽभूत्। जयन्तनामा विद्वानमुष्य पिता विख्यात । कादम्बरीकथासारनामक चास्य पुस्तक प्रसिद्धम्। एतेन रामचरित नाम काव्यमपि विरचितम्

अभिनवगुप्त

अमुष्याविर्भावकाल एकादशशतकस्यादिपाद । पितुर्नाम शुक्ल, म तुश्च विमला। अमुष्याचार्या भट्टेन्दुराजभट्टतौतप्रभृतय पञ्चासन्। ग्रन्था अपि 'ध्वन्यालोकलोचनम्' 'भरतनाट्यशास्त्रव्याख्या' 'अभिनवभारती इत्यादयो बहव सन्ति।

अरुणादित्य

असौ वर्षादित्यस्य पुत्र शैवदर्शनस्योपदेष्टा।

अल्लट

राजानकजयानकसूनुरसौ रत्नाकरकविप्रणीतस्य 'हरविजय'नाम्ना महाकाव्यस्य 'विषमपदोद्योत'नामक टिप्पणमलेखीत्। किञ्च 'काव्यप्रकाश'ग्रन्थस्य शेषाशमसावल्लट एव पूरितवानिति प्रसिद्धि ।

आद्यनाथ

असावासीन्महाविद्वानिति श्रूयते। अमुष्याविर्भावकालो नाद्यापि ज्ञात । अमुना 'अनुत्तरप्रकाशपञ्चाशिका' नामको ग्रन्थो निर्मित ।

आनन्द

असावरुणादित्यस्य पुत्र, उत्पलदेवस्य गुरा सोमानन्दस्य पिता, अद्वैतशैवदर्शनस्योपदेष्टा चासीत्।

आनन्दकवि

अमुनैव कविना 'काव्यप्रकाशस्य' निदर्शना नाम्नी व्याख्या कृता। शैवश्चासा-

वानन्दकविरेव 'श्रीकण्ठ' नाम्ना दक्षिणस्थमहापाठशालास्थहस्तलिखितपुस्तकानुक्रमणिकायामुल्लिखित इति भट्टवामनो मन्यते।

आनन्दवर्धनः

असौ महानुभावो नवमशतकस्य तृतीयपादे जातः। अमुष्याश्रयश्च अवन्तिवर्मदेवो राजा, पिता च नोणोपाध्यायः। अमुष्य ग्रन्था ध्वन्यालोकः, विषमबाणलीला, देवीशतकमित्यादयः।

उत्पलदेवः

असौ नवमशतके वर्तमान आसीत्। अमुना हि 'शिवस्तोत्रावली' निर्मिता।

उद्भटः

अष्टमशतकस्यान्ते नवमशतकस्यादौ चामुष्य जन्मकालः। जयापीडनरेशस्य सभापण्डितोऽयमासीत्। अमुना विरचिता ग्रन्थाः—उद्भटालङ्कारः, भामहविवरणम्, कुमारसम्भवप्रभृतयः सन्ति।

उव्वटः

असावुव्वट एव क्वचिद् 'औवट' इति क्वचिच्च 'उवट' इति नाम्नापि ख्यायते। अमुष्य पितुर्नाम 'वज्रट' इत्यासीत्। मम्मटस्य भ्राताऽसाविति सुधासागरकारस्य भीमसेनस्य मतम्, किन्तु नेदं सर्वसम्मतम्, यतो हि मम्मटस्तावद् जैयटपुत्रत्वेन वर्ण्यते। अपि चामुना उव्वटेन 'यजुर्वेदसंहितायाम्' उव्वटभाष्यं लिखितं तच्च गुर्जरप्रदेशे (आनन्दपुरे) वसता, किंवा उज्जयिन्यां वसतेति सन्देहः उभययाप्युल्लेखसद्भावात्, अस्मादपि हेतोर्मम्मटस्यामुना सह सम्बन्धः सन्दिग्ध एवास्त्यधुनापि।

कल्लटः

असौ वसुगुप्तशिष्यः खिष्टाष्टमशताब्द्यामासीत्। शैवदर्शनस्य प्रसिद्धपण्डितस्यामुष्य 'स्पन्दकारिका' 'स्पन्दनिर्णय'प्रभृतयो ग्रन्थाः स्पन्दसिद्धान्तपरिज्ञानाय प्रामाणिकाः सन्ति।

कह्लणः

असौ महाकविराढ्यकब्राह्मणवरो जन्म लेभे। अमुष्य पिता 'चम्पकश्चण्यको' वा काश्मीराधिपतेर्हर्षस्य प्रधानामात्य आसीत्। शैवो हि कह्लणो बहुश्रुतः 'राजतरङ्गिणी' नामकं ग्रन्थं व्यरचयत्।

**कुन्तकः**

असावेकादशशतकप्रारम्भे समुदभूत्। अस्य 'वक्रोक्तिजीवित'नामके ग्रन्थे चत्वार उन्मेषाः सन्ति, यत्र वक्रोक्ते. प्रभेदाना साङ्गोपाङ्गं वर्णनं कृतमस्ति।

**केशवकाश्मीरिकभट्टाचार्यः**

असौ महानुभावः अलाउद्दीनखिलजीशासनसमये १३२० खिष्टाब्दे आसीत्। समुद्भूतश्चासौ श्रीनिम्बार्काचार्यकुलपरम्परायामेव। श्रीगागलभट्टाचार्यतो वैष्णवी दीक्षां गृहीत्वा भारतभ्रमणार्थमप्यसौ समुद्यतोऽभवत्। 'वेदान्तकौस्तुभप्रभा' नाम्नी व्याख्यापि ब्रह्मसूत्रग्रन्थस्यामुना कृता।

**कैयटः**

अमुष्य समयो वैक्रम द्वादशशतकम्। असौ जैयटपुत्र इति स स्वयमेव स्वरचिते महाभाष्यप्रदीपे 'कैयटो जैयटात्मजः' इति स्पष्ट प्रोक्तवान्।

**क्षीरस्वामी**

असावेकादशशतकस्यादिचरणेऽभूत्। अनेन विरचिता ग्रन्थाः—अभिनवराघवनाटकम्, अमरकोशव्याख्याप्रभृतयो बहवो वर्तन्ते।

**क्षेमराजः**

असौ हि महामहेश्वराचार्यस्याभिनवगुप्तपादस्य शिष्य आसीत्। अभिनवगुप्तपादस्य समयश्चैकादशशतकस्य प्रारम्भ एवेति मन्यते, तस्मादसावपि तदानीमेव जात इति निर्णीयते।

**क्षेमेन्द्रः**

एकादशशतकस्य मध्यभागेऽसावासीत्। अमुष्य पितामहनाम 'सिन्धुः, पिता च प्रकाशेन्द्रः। अनन्ताख्यस्य नृपस्यासौ राजपण्डितः, अभिनवगुप्तस्य शिष्यश्चासौ। कविकण्ठाभरणादयो बहवोऽमुष्य ग्रन्थाः विद्यन्ते।

**गुणाढ्यः**

असौ गोदावर्यास्तीरे प्रतिष्ठानगरे जातः। सम्मानितश्च सातवाहनराजेनेति प्रसिद्धिः। भूतभाषामयी बृहत्कथाऽप्यनेन गुणाढ्येन रचिता। सातवाहनसमकालिकतयाप्रथमशतकेऽसावासीदिति मन्यते।

**गोरक्षनाथ**

असौ नाथपथप्रवर्तकस्य श्रीमत्स्येन्द्रनाथयोगिनः शिष्य आसीत् 'अमरौघशासनम्' इति पुस्तकमपि निर्मितवान् ।

**जगद्धर**

१३५० खिष्टाब्दे काश्मीरप्रदेशस्य पद्मपुराख्यग्रामे जनिमसौ लेभे । अमुष्य पितुर्नाम रत्नधर । जगद्धरेण 'बालबोधिनी नाम्नी कातन्त्रवृत्तिरेका रचिता । किं च स्तुतिकुसुमाञ्जलि'नामकः स्तोत्रग्रन्थोऽप्यमुष्य प्रसिद्ध ।

**जयद्रथ**

असौ खलु खिष्टीयत्रयोदशशतकस्यारम्भे समुत्पन्नः । अमुष्य भ्राता जयरथनामाऽऽसीत् । अमुना 'हरचरितचिन्तामणि'नामकं महाकाव्यं रचितम् ।

**जयन्तभट्ट**

असौ मनीषी काश्मीरनरपतेर्मुक्तापीडस्य मन्त्रिण श्रीशक्तिस्वामिनः प्रपौत्र, श्रीचन्द्रपण्डितस्य पुत्र आसीत् । मुक्तापीडस्य समयः ७१० खिष्टाब्दादारभ्य ७६० खिष्टाब्दपर्यन्त इति मन्यते । अतो वंशक्रमगणनया ८५० खिष्टाब्दस्य मध्य एवासौ जयन्तभट्ट आसीदिति समवगम्यते ।

**जयरथ**

शृङ्गारकवेरात्मजेनामुना 'अलङ्कारसर्वस्व' ग्रन्थस्य 'विमर्शिनी'नाम्नी व्याख्या कृता । किं च 'हरचरितचिन्तामणि'काव्यमपि सुग्रथितम् । त्रयोदशशतकस्य प्रथमपादेऽसावभूत् । अमुष्य पिता राजमन्त्री, तस्य च नाम शृङ्गाररथ इत्यासीत् ।

**जयादित्य**

असौ महापण्डितः खिष्टसप्तमशताब्दयां बभूव । अनेन वामनस्य सहयोगेन पाणिनीयव्याकरणसूत्रवृत्तिः 'काशिका'नाम्नी विरचिता ।

**त्र्यम्बकादित्य**

असौ मुनेर्दुर्वाससो मानस पुत्र अद्वैत-शैवदर्शनस्योपदेष्टा ।

**दृढबल**

असौ कपिलबलस्य पुत्र आसीत् । जातश्च खिष्टचतुर्थशताब्दयाम् । अमुना चरकसंहिताया अल्पस्थानं प्रतिपूरितम् ।

**नागार्जुनः**

असौ बौद्धाचार्यः काश्मीरमध्युष्य शैवदर्शनं चाधीत्य 'नाग' इति नाम्ना-प्रसिद्धोऽभूत् । अमुना 'चित्तसन्तोषत्रिंशिका' नामको ग्रन्थोऽपि रचित. ।

**नायकः (भट्टनायकः)**

असावानन्दवर्धनाचार्यादर्वाचीनोऽभिनवगुप्तपादाचार्यात्तु प्राचीन आसीत् । आनन्दवर्धनस्य समयः ८५५-८८४ खिष्टाब्दमितः, अभिनवगुप्तस्य च ९९३-१०१५ खिष्टाब्दमितः, तस्माद् द्वयोर्मध्यभवो नायकः भट्टनायकः, नायकभट्टो वेति प्रतीयते । अमुना 'हृदयदर्पणो' नाम ग्रन्थो निर्मितः ।

**नारायणकण्ठः**

भट्टनारायणनाम्नापि प्रसिद्धोऽसौ खिष्टाष्टमशताब्द्यां समुत्पन्नः । असौ 'स्तव-चिन्तामणि' नामकं ग्रन्थं रचितवान्, यस्मिन् शिवमाहात्म्य संवर्णितमस्ति ।

**पतञ्जलिः**

असौ महामुनिर्गोनर्ददेशीयो गोणिकापुत्रो वैक्रमाब्दाच्छनवर्षाणि पूर्वमेव पाणिनि-सूत्राणां महाभाष्यमरचयत् ।

**पुण्यानन्दाचार्यः**

'कामकलाविलास' नामकस्य ग्रन्थस्य रचयिताऽसौ ।

**प्रतीहारेन्दुराजः**

अमुना भट्टमुकुलाख्यगुरोरधीतम् । 'उद्भटालंकारसारसंग्रहलघुवृत्ति'-नामको ग्रन्थश्च रचितः । असौ खिष्टाब्दाद् दशमशतकस्य पूर्वार्धे समुद्भूत इति मन्यन्त ऐतिहासिकाः ।

**भट्टभीमः**

अमुना 'रावणार्जुनीयकाव्यम्' निबद्धमासीत् । यस्य प्रकाशनं मोहमयीस्थे निर्णयसागरमुद्रणालये सम्पन्नम् ।

**भरतमुनिः**

महामुनिरसौ पाश्चात्यसिद्धान्तेन खिष्टद्वितीयशताब्द्यां वर्तमानो नाट्यशास्त्र-मरचयत् ।

भर्तृमेण्ठः

'मेण्ठ' इति नाम्नापि प्रसिद्धोऽसौ खिष्टाब्दपञ्चमशतके काश्मीरभुवमलङ्करोति-स्म । 'हयग्रीववध'नामकं काव्यममुष्य महत्वपूर्णो ग्रन्थः ।

भल्लटः

कविरसौ 'भल्लटशतकम्' नाम काव्यं रचितवान् ।

भामहः

अमुष्य समय. सप्तमशतकस्यादिपादः । पितुर्नाम राकिलगोमी । काव्यालंकारः, वररुचिकृत-प्राकृतप्रकाशवृत्तिरिति द्वौ चास्य ग्रन्थौ प्रसिद्धौ ।

मङ्खकः

खिष्टस्य द्वादशशताब्द्यामसावासीत् । मङ्खकः 'मङ्ख' इति नामन्यामपि ख्याति-रस्याभूत् । अमुना विरचितं 'श्रीकण्ठचरित'नामकं महाकाव्यमतीव प्रसिद्धम् ।

मम्मटः

खिष्टाब्दीयैकादशशतकस्योत्तरार्धभागेऽमुष्य जनिः । पितुर्नाम जय्यटः, भ्रातरौ च उव्वटकैयटौ । अस्य ग्रन्थावपि काव्यप्रकाशशब्दव्यापारपरिचयनामानावतिप्रसिद्धौ ।

महिमभट्टः

असौ श्रीधैर्यस्य पुत्रः, श्यामलस्य शिष्यः, भीमस्य पिता, क्षेमयोगमाजानां पिता-महो न्यायाचार्यो 'व्यक्तिविवेक'नामकग्रन्थरत्नप्रणेता खिष्टाब्ददशमशतके बभूव ।

मुकुलभट्टः

असौ भट्टकल्लटस्य पुत्र' 'अभिधावृत्तिमातृका'नामकग्रन्थप्रणेता । उद्भटा-लङ्कारसारसग्रहवृत्तिकर्तुः प्रतीहारेन्दुराजस्य चासौ गुरुः ।

रत्नाकरः

असौ खिष्टाब्दनवमशतकवर्ती कविपुङ्गवोऽमृतभानोः पुत्रो 'हरविजयनामक' संस्कृतमहाकाव्यस्य प्रणेता प्रथम बालबृहस्पत्युपाधिकं चिप्पटजयादित्यनामानं राजानं पश्चाच्च सम्राजमवन्तिवर्माणमाश्रितः ।

रुद्रटः

असौ शतानन्दापरनामा भट्टवामकस्य सूनुः 'रुद्रटालङ्कार' इति नाम्ना काव्यालङ्कार' इति नाम्ना वा प्रसिद्धस्य ग्रन्थस्य रचयिता दशमशतकस्य पूर्वभागे बभूव केचित्तु नवमशताब्द्यां बभूवेति वदन्ति ।

भट्टलोल्लटः

असौ मीमांसाचार्यो भरतमुनिप्रणीतस्य न्यायसूत्रस्य व्याख्याकार इति मम्मटप्रणीतकाव्यप्रकाशग्रन्थतो ज्ञायते ।

भट्टवामदेवः

असौ खिष्टैकादशशताब्द्यां समुद्भूतो योगराजशिष्यो जन्ममरणविचारनामकग्रन्थस्य प्रणेता चाऽऽसीत् ।

रुय्यकः

द्वादशशतकस्य पूर्वार्द्धेऽसौ जातः । अमुष्य पितुर्नाम तिलक इत्यासीत् । अस्य ग्रन्थाश्च अलङ्कारसर्वस्वमित्यादयः ।

वर्षादित्यः

असौ सङ्गमादित्यस्य पुत्रः शैवदर्शनस्योपदेष्टा ।

वामनः

अमुष्य समयोऽष्टमशतकस्यावसाने नवमशतकस्य चाऽऽरम्भ आसीदिति कथयन्ति विद्वांसः । जयापीडनामा नरेशश्चामुष्याश्रयदाताऽऽसीत् । अमुनाऽ'लङ्कारसूत्रं' नाम पुस्तकं विरचितम् ।

विह्लणः

असौ त्रिभुवनमल्लदेव-विद्यापति-काश्मीरिकभट्टाद्युपनामचणो विलक्षणकाव्यविच्छित्तिप्रकाशनप्रवणः श्रीनगर-क्रोशत्रयदूरवर्ति 'खोनमुख'नामकग्रामवासिनो 'मुक्तिकलश'स्य प्रपौत्रो राजकलशस्य पौत्रो नागदेवीज्येष्ठकलशयोः पुत्रो वेदाद्यखिलशास्त्राण्यधीत्य भारतस्य प्रायः प्रतिप्रसिद्धस्थानं गत्वा स्वपाण्डित्यं प्रकाश्य कल्याणनगरे चालुक्यवंशोद्भवस्य षष्ठविक्रमादित्यस्य सभां यावज्जीवं समभूषयदित्यमुष्य समयः खिष्टैकादशशतकोत्तरभागो निश्चीयते । निम्नलिखिता ग्रन्था अमुना रचिताः । १. विक्रमाङ्कदेवचरितं महाकाव्यम् । २. कर्णसुन्दरी । ३. विह्लणकाव्यम् ।

**शिलाभट्टारिका**

असौ शिलानाम्नाऽपि प्रसिद्धा भारतविख्याता कवयित्री बभूव। एतदीयाः 'यः कौमारहर' इत्यादयः केचन श्लोका आचार्यमम्मटभट्टस्य काव्यप्रकाशे समुद्धृता विलोक्यन्ते।

**शिवस्वामी**

असौ महाकविः ख्रिष्टाब्दनवमशतके लब्धजन्मा, अवन्तिवर्मणः सभापण्डित आसीत्। शैवमतावलम्बी सन्नप्यसौ चन्द्रमित्रनामकस्य बौद्धसंन्यासिन आग्रहेण दक्षिणदेशीयलीलावतीनगरीशासकं 'कप्फन'माश्रित्य 'कप्फनाभ्युदय'नामकं बौद्धकाव्यं रचितवान्।

**श्रीशङ्कुकः**

असौ न्यायाचार्यो भारतनाट्यसूत्रव्याख्याताऽऽसीदिति मम्मटस्य काव्यप्रकाशग्रन्थाद् बुद्ध्यते। अमुना नवम्यां शताब्द्यां मम्मटस्योत्पलस्य च युद्धेन सम्बद्धं भुवनाभ्युदयनामकमेकं काव्यं रचितमासीदिति कल्हणः प्राह।

**श्रीहर्षः**

असौ महाकविः ख्रिष्टाब्दद्वादशशतकोत्तरार्धभागे मामल्लदेवी-श्रीहीराभ्यामजनि। कान्यकुब्जदेशनृपतेर्जयचन्द्रस्याऽऽश्रितश्चासीत्। भारतीसिद्धेनामुना कविना निम्नलिखिता ग्रन्था विरचिताः—

१. नैषधीयचरितं महाकाव्यम्। २. स्थैर्यविचारणप्रकरणम्।
३. विजयप्रशस्तिः। ४. खण्डनखण्डखाद्यम्।
५. गौडोर्वीशकुलप्रशस्तिः। ६. अर्णववर्णनम्।
७. छिन्दप्रशस्तिः। ८. शिवशक्तिसिद्धिः ९. नवसाहसाङ्कचरितम्।

**सद्योज्योतिः**

असौ ख्रिष्टाष्टमशताब्दीतः पूर्वमेवाभवत्। अमुना 'नरेश्वरपरीक्षा'नामाको ग्रन्थो रचितः।

**सोमदेवः**

असौ महापण्डितो रामसूनुः कथासरित्सागरमहाग्रन्थप्रणेता ख्रिष्टैकादशशताब्द्यां बभूव।

न्यागमनात्प्रागपि प्रतिष्ठितमासीदिति जनश्रुत्या समागतविद्वज्जनचरितचर्यया चाधिगम्यते । सरस्वतीरहस्योपनिषदि—

नमस्ते शारदे ! देवि ! काश्मीरदेशवासिनि ! ।
त्वामहं प्रार्थये नित्यं विद्यादानं च देहि मे ।।

इत्ययमुल्लेखः काश्मीरस्य शारदादेव्यधिष्ठितत्वमुपनिषत्कालतोऽपि प्राचीनं व्यञ्जयति । संस्कृतभाषायाः पण्डितप्रकाण्डैः, पुराणेतिहासादिसाहित्यसमृद्धिवृद्धिपरायणैरार्यमानवैरेष एव देशः स्वकीयेन दिव्येन जन्मना भव्येन च कर्मणा कृतार्थीकृतः, अत एव दाक्षिणात्याः संस्कृतभाषाम् 'उत्तरभाषा'पदेन व्यपदिशन्ति । इत्थं श्रीनगरोपकण्ठे एव गोपाद्रौ सर्वज्ञपीठस्यास्तित्वं नानाप्रमाणैर्निर्धारितमस्ति । तद्यथा मुस्लिमशासका अस्य सर्वज्ञपीठतया प्रतिष्ठां प्रवर्धमानामवेक्ष्य गिरिमिमं 'तख्तएसुलेमान' नाम्ना व्यपदिशन्तः सन्ति । इदं सर्वज्ञपीठं क्वचिदन्यत्र प्रदेशेऽभूदिति स्वार्थान्धानां केषाञ्चित् प्रलपितमात्रम् । वर्तमानैः पश्चिमाम्नायशङ्कराचार्यैर्जगद्गुरुश्रीमदभिनवसच्चिदानन्दतीर्थपादैर्द्वारकाशारदापीठाधीश्वरैः सर्वज्ञपीठतयैवात्र १९६२ खिष्टाब्दीयाप्रैलमासस्य विंशयां तारिकायां काश्मीरस्थशङ्कराचार्यस्थलस्योपरिस्थितमन्दिरस्य सन्निधौ श्रीमद्-आदिशङ्कराचार्यभगवन्मूर्तेः प्राणप्रतिष्ठा व्यधायि । एवम्भूतोऽयमुत्तमोत्तमो देशः सनातनकालाद् विद्यमानोऽस्ति, वेदिष्यते चाऽऽचन्द्रार्कम् । अद्य तु समयविपर्ययेण प्रदेशस्यास्य स्थितिः शोचनीयेव वर्तते, अस्य नन्दनवनस्य मालाकारः क्वचन सुप्तो वा लुप्तो वेति न विज्ञायते ।

### आर्याणां सनातनावासः

अनादेः कालात् काश्मीरदेश आर्याणाम् (हिन्दूनाम्) एव सनातनावासो विश्रुत आसीत् । अनार्याणामिह नामापि न श्रूयते स्म । परन्तु कल्हणकृतराजतरङ्गिणीतो ज्ञायते यत्—तुरुष्कादयः केचन वैदेशिका विधर्माणो दरदादिप्रान्तेषु प्राङ्निविष्टा इहापि शनैः शनैः प्रविविशुः । तत्र हुष्क-जुष्क-कनिष्कास्त्रयो भ्रातरो राजानोऽप्यभूवन् । परन्तु न ते विधर्माण एवावातिष्ठन्त, प्रत्युत काश्मीरेषु तत्कालं प्रायः सनातनधर्मसमतया प्रचारितं बौद्धमतं स्वीकृत्य तन्मतस्य प्रबलाः पोषकाः प्रचारकाश्चसंवृत्ताः । वैदेशिकस्वमतस्थिता अपि केचनातिशयनिष्ठया राज्ञामङ्गरक्षकेषु सैन्येषु च प्रविश्य सेवां चक्रुः । शनैः शनैर्हस्तपादं द्रढयत्सु तेषु राज्ञि 'उद्यानदेवे' स्वर्गते तदीयां पत्नी 'कोटादेवीं' सपुत्रां मौहम्मदः 'शाहमीरो' नामामात्योऽमात्यान्तरैः सह षड्यन्त्रेण



सोनामर्गशिखराणि



पहलगाम-स्थानम्



त्रिशूलसंनतुङ्गतानुकारीणि त्रीणि शृङ्गाणि

**सोमशम्भुः**

असौ 'कर्मकाण्डक्रमावली' नामकग्रन्थस्य प्रणेता वैक्रमे द्वादशशतके बभूव ।

**सोमानन्दः**

असौ काश्मीरिकत्रिकदर्शनान्तर्गतप्रत्यभिज्ञामतप्रवर्तकः ख्रिष्टनवमशताब्द्यां बभूव । अमुना निम्नलिखिता ग्रन्था विरचिताः—

१. शिवदृष्टिः । २. परात्रिंशिका-तात्पर्यदीपिका । ३. शाक्तविज्ञानम् ।

**सोमेन्द्रः**

असौ ९९० ख्रिष्टाब्दभवस्य महाकवेः क्षेमेन्द्रस्य तनयः स्वपितृनिर्मिताया अवदानकल्पलताया भूमिकालेखेन प्रसिद्धिं गत आसीत् ।

**सङ्गमादित्यः**

असौ अज्ञातनामधेयस्य त्र्यम्बकपुत्रस्य कस्यचन सिद्धस्यौरसः पुत्रः शैवदर्शनस्योपदेष्टा ।

**भट्टारहरिश्चन्द्रः**

असौ महाकविरायुर्वेदपण्डितो 'धर्माभ्युदय'नामकस्य महाकाव्यस्य रचयिता चरकसंहितायाष्टीकाकारः प्रशस्तगद्यलेखकश्च ख्रिष्टाब्दपञ्चमशतके बभूव ।

**हेलाराजः**

असौ महावैयाकरणोऽपि सर्वशास्त्रेष्वविहतगतिर्विशेषतो दार्शनिको भर्तृहरिरचितवाक्यपदीयग्रन्थस्य टीकाकारो नैष्ठिकब्रह्मचारी कल्हणादपि पूर्वं तस्योपजीव्यः, इतिहासलेखकोऽविद्यत ।

### काश्मीरिकाः प्राचीना राजानोऽपि विद्वांसः

अद्भुतं काश्मीरमहत्त्वम् । अभूवन् सर्वत्र भारते विद्यावित्ताः, संस्कृतिभक्ताः, संस्कृतभाषापोषकाः, धर्मधुरीणाश्च राजानः, परन्तु स्वयं विद्वांसो ग्रन्थकाराश्च राजानो विरलेष्वेव प्रदेशेषु विरला एव च स्युः । काश्मीरेषु तु राजानः स्वयमपि ग्रन्थकारा अभूवन् । तद्यथा—

१. अवन्तिवर्मा—काश्मीरेषु ८५५-८८३ ख्रिष्टाब्दसमये 'अवन्तिवर्मा' नाम

राजा स्वयं विद्वांश्च विदुषामाश्रयश्चाभूत् । तस्य राज्ये सुप्रसिद्धा विद्वांस आसन्निति ते पूर्वं श्लोकेनोक्ताः ।

२. जयापीडः—विच्छिन्नस्य व्याकरणमहाभाष्यस्य पुनः प्रचारको जयापीडः काश्मीरेषु ७७२-८१३ खिष्टाब्दसमयेऽतीव विद्याव्यसनी नृपोऽभूत्, यद्राज्ये महान्तः कवयो बभूवुः ।

एते सुप्रसिद्धाः विद्वांसः कवयश्च तदाश्रिता आसन्—(१) क्षीरस्वामी राज्ञो व्याकरणाध्यापकः । (२) थक्कियः—विद्वान् शुकदत्तमन्त्रिणो भक्तशालाध्यक्षः । (३) भट्टोद्भटः—राजसभापतिः, प्रत्यहं दीनारलक्षकृतवेतनः । (४) दामोदरगुप्तः—कुट्टनीमतग्रन्थकारः । कवयश्चैते श्लोकेन कीर्तिताः—

मनोरथः शङ्खदत्तश्चटकः सन्धिमास्तथा ।
बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ॥ इति (रा०त०४।४९७)

३. प्रवरसेनः—अनेन कश्मीरनरेशेन 'सेतुबन्धमहाकाव्यम्' रचितमासीत् यथोच्यते—कीर्तिः प्रवरसेनस्य प्रयाता कुमुदोज्ज्वला ।
सागरस्य परं पारं कपिसेनेव सेतुना ॥

४. मातृगुप्तः—गुप्तयुगे काश्मीरेषु 'मातृगुप्तो' नाम राजाऽभूत् । तस्मिन् "यस्मिन् द्वयं श्रीश्च सरस्वती च" इत्युक्तिः पूर्णतया परिनितिष्ठति । यद्यपि तस्य कापि कृतिर्नाधुनोपलभ्यते, तथापि सुभाषितसूक्त्यादिग्रन्थेषु तस्य प्रकीर्णाः श्लोका लभ्यन्त एव । तेन नाट्यशास्त्रे कश्चिद् ग्रन्थो रचित इत्यपि श्रुतिपरम्पराऽस्ति । भर्तृमेण्ठस्तस्यैव राजकविरासीत् । केचिदमु कालिदासं कल्पयन्ति तत्तु मुधैव ।

अन्येऽप्यनेके राजानो विद्वांसो विदुषामाश्रयभूताश्चाभूवन् अतिशयप्रसिद्धास्त्विह संक्षिप्योक्ताः ।

## आश्चर्याणां निधानभूः

काश्मीरेषु अमृतकुण्डादयो लोकोत्तराश्चमत्कारा अवाङ्मनसगोचरा एव विद्यन्ते । सुरम्या सूर्यगुहा श्रीनगरात् पञ्चविंशतिमीलान्तरे वर्तते । काश्मीरिकेण पण्डित-प्रकाण्डेन कल्हणेन स्वकीये राजतरङ्गिणीसंज्ञकेतिहासग्रन्थे पुण्यतीर्थस्यास्यापि महिमा वर्णितः । महाभारतेऽपि भगवता कृष्णद्वैपायनेन कृत्स्नस्यापि काश्मीरस्य तीर्थात्मना क्षेत्रात्मना च परिचयो दत्तः । शारदापीठं च काश्मीरे शङ्कराचार्यभगवत्पादानाम-

निहत्य स्वयं यदा शासकोऽभूत्, तदाप्रभृत्येव काश्मीरेषु मुस्लिमाना शासनं प्रारभ्यत, चिरमतिष्ठच्च ।

## काश्मीरिकी शारदालिपिः

सम्राजोऽशोकस्यान्येषा च शिलालेखेषु प्रयुक्ता 'ब्राह्मीलिपि.' कालान्तरे नैकहस्तगतत्वाद्, देशस्य नैकेषु भागेषु प्रयुक्तत्वाच्च विभिन्नै रूपैर्विकसिताऽभूत् । गुप्तसाम्राज्यकाले (तृतीयायाः खिष्टशताब्द्या आरभ्य सप्तमशताब्दीपर्यन्त) ब्राह्म्या लिपेर्द्वे रूपे भारते वर्षे प्रचलिते आस्ताम्, ये आधुनिकै शिलालेखादिवेदिभि. **'पौर्वी ब्राह्मी लिपिः', 'पश्चिमा ब्राह्मी लिपि.'** इति नामभ्या व्यपदिश्येते । परन्तु, बहूना विदुषामत्र वैमत्यमपि वर्त्तते ।

गुप्तकालिक्याः पश्चिमाया ब्राह्म्या लिपेरेव काश्मीरेषु 'शारदालिपि'रूपेण, *'टुक्वारी'लिपिरूपेण, वर्तमान'डोगरी'लिपिरूपेण च विकास समजनि । तत्र 'डोगरी'*-लिपि पूर्वं 'लण्डा'नाम्नाऽपि ख्याताऽभूत् । ब्राह्म्या लिपे 'शारदा'लिपिरूपेण विकास सभवत. खिष्टस्याष्टमशताब्द्या सजात । काश्मीरेषु लब्धाना पाण्डुलिपीना विवरणेन तु ज्ञायते यद्-अस्याः प्रयोग. काश्मीरेषु प्राय सहस्रवर्षपर्यन्तमभूत् । खिष्टस्याष्टमशताब्द्या आरभ्याष्टादशशताब्दीपर्यन्त लब्धा शारदालिप्या लिखिता काश्मीरिक्य पाण्डुलिपय इममेव काल स्पृशन्ति ।

लिपेरस्याः प्रचारो भारतस्योत्तरपश्चिमेषु भागेषु (काश्मीरेषु पञ्चनदेषु च) समभवत् । अष्टमशताब्द्या लिखितेभ्या राज्ञो मेरुवर्मणो लेखेभ्यस्तु ज्ञायते यत्–तस्मिन् समये पञ्चनददेशे **'कुटिला'**ख्याया लिपे प्रचलनमासीदिति । तदनन्तर तत एव **'शारदा'**लिपिर्विकसिता बभूवेति । तस्योपलब्धेषु लेखेषु **'चम्बा'**राज्ये **'सहाहा'**स्थानस्थिता प्रशस्ति. प्राचीनतमा वर्तते, या हि दशम्या शताब्द्या अनुमीयते । तस्या लिपेरेव वर्तमाना काश्मीरिकी, **'टुक्वारी'** (टाकरी) च लिपी विकसिते । पञ्चनदलिपेर्गुरुमुख्या अप्यधिकान्यक्षराणि तत एव विकसितान्यभूवन् ।

शारदालिपेरक्षराणा हिन्द्यक्षरयुताना चित्रमेकमिह प्रकाश्यते, यत्साहाय्येनान्वेषका शारदालिप्यङ्किताना पुस्तकाना लाभे तद्वाचन-सम्पादनादिषु काठिन्य नासादयेयु , लिप्यन्तरेभ्यस्तद्विवेक च कुर्युरिति ।

ॐ अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः

क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण

त थ द ध न प फ ब भ म य र ल व श ष स ह

क्ष त्र ज्ञ ण ष्ट, क्त श्च न्त प्र श्न त्र त्क म्र ह्र क्र

आ इ ई उ ऊ ए ऐ ओ औ ग्र ग्र

क का कि की कु कू के कै को कौ कं कः

१ २ ३ ४ ५ ६ ७ ८ ९ १०

इत्थमत्र जम्बूकाश्मीरप्रदेशस्य प्राचीनतमत्वम्, तीर्थमयत्वं तथाविधं चान्य-विशिष्टत्वमवगत्य शिष्टविशिष्टा विज्ञा विज्ञातवन्त एवेदम्प्रथमताया औचित्यम्। अत्र ग्रन्थे जम्बूकाश्मीरप्रदेशाधिपतीनां संस्कृतसेविनीनां च तत्प्रचालितानां संस्थानां परिचयदानं युगपदेवोपक्रान्तम्, काश्मीरसम्बन्धिन्यास्तु सामग्र्याः सामग्र्येणानु-पलम्भात्तदुपक्रान्तं निर्वोढुं नापारयाम। जम्बूप्रदेशस्थानां काश्मीरप्रदेशस्थानां च विदुषां परिचयप्रदानमपि यौगपद्येन सम्पादयितुं न प्राभवाम तत एव हेतोः। अतोऽत्र प्रथमे भागे दुर्गरप्रदेशवर्णनादारभ्य जम्बूप्रदेशस्थावशिष्टविशिष्टविद्वत्परिचयान्तं प्राधा-न्येन जम्बूप्रदेशसम्बद्धम्, काश्मीरप्रदेशवर्णनादारभ्य च जम्बूकाश्मीरप्रदेशादन्यत्र जातानां विदुषां परिचयान्तं प्राधान्येन काश्मीरप्रदेशसम्बद्धमितिवृत्तं (संस्कृतशताब्दी-तिहासं) सङ्कलय्य सम्पादितं निरीक्षिष्यन्ते विचक्षणाः।

- प्रदेशस्य प्राकृतिकं भौगोलिकमैतिहासिकं च परिचयं वितीर्य संस्कृतपोपकाणां राजादीनां, तत्संचालितानां संस्थानां, तत्संगृहीतानां प्रकाशिताप्रकाशितपाण्डुलिपि रूपाणां ग्रन्थानां, तद्ग्रन्थसम्पादनलेखनादितत्पराणामन्येषां च विदुषां यथाक्रममिह परिचयो वितीर्णः। आमुखे तु काश्मीरप्रदेशस्याचार्याणां कवीनां च जन्मभूमित्वं प्रदर्शयद्भिरस्माभिर्विक्रमस्यैकोनविंश्याः शताब्द्याः पूर्वमपि भूयस्या संख्यया तत्र जातानां विदुषां परिचयोऽप्यतिसंक्षिप्योल्लिखितः। विस्तृतस्तु संस्कृतेतिहासेभ्यः शक्यत एवोपलब्धुम्, इति नेहोपन्यस्तः। अथेह काश्मीरप्रदेशस्य वैशिष्ट्यानां प्रदर्शने तत्रत्यायाः शारदालिपेर्वर्णमालाऽपि मुद्रापिता, तदाश्रयेण क्वचिदपि तल्लिपि-लिखितस्य पुस्तकादेरुपलम्भे सति विद्वांसो लिपिमेतां परिचिन्वन्तस्तत्पुस्तकस्थं सारं संग्रहीतुं प्रभवेयुरिति।

अखिलभारतीय-संस्कृतसाहित्य-सम्मेलनस्य महामन्त्रिणा, अखिलभारतीय संस्कृतविद्यापीठस्य निदेशकेन, विश्वसंस्कृतशताब्दीग्रन्थस्य सम्पादकेन च तत्रभवता डाक्टरश्रीमण्डनमिश्रशास्त्रिणा अस्य ग्रन्थस्य सामग्रीसंग्रहाय स्वयं जम्बूकाश्मीरप्रदेशं गत्वा तत्रत्यान् विदुषो जागरयित्वा, प्रादेशिकसमितीं संघटय्य च भूयः प्रयतितम्। प्राप्तायाः सामग्र्याः सन्निवेशनिर्देशादिविधावपि समये समये महानुभावेनानेन निर्देश-प्रदानेन भृशमुपकृताः स्मः। अथेमं महानुभावं धन्यवादेन सम्भावयन्तोऽन्तःसङ्कोचमिव कञ्चिदनुभवामः, आत्मा हि तथा सम्भावितः स्यादिति।

विश्वसंस्कृतशताब्दीग्रन्थस्यास्य जम्बूकाश्मीरसम्बद्धस्य सम्पादनेऽखिलभारतीय संस्कृतसाहित्यसम्मेलनसञ्चालितस्य संस्कृतविद्यापीठस्य शासननिकायेन, जम्बूकाश्मीर-प्रदेशसंस्कृतसाहित्यसम्मेलनान्तर्गतविभागीयविश्वसंस्कृतशताब्दीग्रन्थसमितेश्च सदस्य-समुदायेन यद्यन्महार्घं साहाय्यं सम्पादितं तस्य कृते स निकायः स च समुदायो धन्यवादैः सम्भावितोऽस्मन्निदेशकैर्डाक्टरश्रीमण्डनमिश्रशास्त्रिभिः प्रस्तवानायाम्। विश्वसंस्कृतशताब्दीग्रन्थसम्पादकमण्डलमपि तत्रैव चर्चितं कृतज्ञताप्रकाशनेन चार्चित तैरेव महानुभावैः। यैश्च जम्बूकाश्मीरप्रदेशस्थैर्लब्धप्रतिष्ठैः संस्थासमाश्रयेण व्यक्तिग-तोपाश्रयेण वाऽत्र सहयोगो वितीर्णस्तदाभारप्रदर्शनमपि तैरेव सम्पादितम्।

अथात्र संस्कृतविद्यापीठे प्राध्यापकादिरूपेण कार्यं निर्वहन्तः सर्वेऽपि विद्वांसः सामयिकपरामर्शादिदानेनैतद्ग्रन्थसम्पादनेऽस्माकं भूयांसं सहयोगं कृतवन्तः। तेष्वपि जम्बूकाश्मीरप्रदेशाद् हिन्दीभाषायाम् आङ्ग्लभाषायां च प्राप्तायाः सामग्र्याः संस्कृता-

नुवादे स्थले स्थले यैर्विद्वद्भिर्योगदानं कृतम्, ते कथं नाम शक्यन्ते विस्मर्तुम्। तत्राङ्ग्लभाषामयानां लेखानामनुवादे साहित्याचार्य-एम० ए० इत्याद्युपाधिभृतः श्रीश्रीधरवशिष्ठस्य, हिन्दीभाषामयस्य चानुवादे न्यायव्याकरणसाहित्याचार्यस्य श्रीरामेश्वरमिश्रस्य हार्दिकान् धन्यावादानुदीरयामः। प्रारम्भिकसामग्रीसङ्कलनकर्तुस्तत्परिष्कर्तुश्च सुधाकरोपनाम्नः श्रीमदनशर्मणोऽपि कृते कृतज्ञतां प्रकाशयामः। आसन्नसमापने चात्र ग्रन्थे न्यायव्याकरणसाहित्याचार्येण झोपाह्वेन श्रीमणिनाथशास्त्रिणा साहित्यव्याकरणाचार्यश्रीरामाधीनचक्रवर्तिना चाऽनुवादकर्मणि यत्साहाय्यं सम्पादितम्, तत्रानयोर्विदुषोरप्याभारं प्रदर्शयामः।

प्रार्थयामश्च सहृदयान् पाठकान् यदेवविधस्येतिहाससम्पादनकर्मणः संस्कृतवाङ्मय इदम्प्रथमतया यदस्य कर्मणोऽप्यरीरिचाम, यद्वेह न्यूनमकार्ष्म तत्क्षमाधना अनवदधतो ग्राह्यग्रहणेनाऽनुगृह्णन्त्वस्मान् इति।

अखिलभारतीयसंस्कृतविद्यापीठम्, दिल्ली
वसन्तपञ्चमी २०२१

हनुमत्प्रसादशास्त्री
अमीरचन्द्रशास्त्री

# विश्वसंस्कृतशताब्दीग्रन्थे
## जम्बूकाश्मीरसम्बद्धस्य प्रथमभागस्य
## विषय-सूची




| क्रमसंख्या | विषयः | पृष्ठसंख्या |
|---|---|---|
| १. | मङ्गलम्, ग्रन्थोपक्रमः संस्कृतमहत्त्वं च | १ |
| २. | दुर्गरः (डोगरा) प्रदेशः | ३ |
| | ग्रामाग्रहारनगरादिकम् | ६ |
| | सामन्तराजनगर्यो जम्बू-राजधानी च | ७ |
| ३. | अभिनवराजतरङ्गिणी संस्कृतपोपकाश्च | ६ |
| | दुर्गरनरेशानां वंशमेरुः | १० |
| | रणजीतदेवः | १२ |
| | व्रजराजदेवः, सम्पूर्णदेवः, जीतसिंहः | १३ |
| | गुलाबसिंहः | १४ |
| | रणवीरसिंहः | २२ |
| | प्रतापसिंहः | २७ |
| | हरिसिंहः | २६ |
| | कर्णसिंहः | ३१ |
| ४. | जम्बूकाश्मीरप्रदेशस्थाः संस्कृतसंस्थाः | ३६ |
| | (१) काश्मीरराजवंशस्य संस्कृतेऽभिरुचिः | ३७ |
| | (२) उत्तरवाहिन्यांश्रीगदाधरसंस्कृतपाठशाला | ४० |
| | पाठशालीयाध्ययनाध्यापनवेला | ४३ |
| | नियमाः | ४४ |
| | पारितोषिकवितरणम् | ४७ |
| | प्रधानाध्यापकाः | ४८ |
| | (३) श्रीरघुनाथसंस्कृतपाठशाला | ५२ |
| | श्रीरघुनाथसंस्कृतमहाविद्यालयस्य समुद्देश्यम् | ५४ |
| | श्रीरघुनाथसंस्कृतमहाविद्यालयस्य पुस्तकालयः | ५५ |

| क्रमसंख्या | विषयः | पृष्ठसंख्या |
|---|---|---|
| | शिक्षापद्धतिः | ५६ |
| | वर्तमानकालिकी शिक्षापद्धतिः, छात्रावासः | ५७ |
| | वार्षिकोत्सवः, साम्प्रतिकी व्यवस्था | ५८ |
| | प्रमुखाध्यापकपरम्परा | ५६ |
| | श्रीजगदीश्वरशास्त्रिणा समकालिका विद्वांस | ६० |
| | श्रीत्रियाः | ६२ |
| | श्रीबालकृष्णशास्त्रिणां समसामयिका विद्वांसः | ६५ |
| | श्रीपरशुरामशास्त्रिणा समकालिकाध्यापकाः | ६६ |
| | अध्यापकानामुपाधयो वेतनस्तरोऽध्यापनकालश्च | ७२ |
| | विशिष्टाः स्नातका | ७५ |
| | जीवतां केषाञ्चिन्नामादिनिर्देशः | ७७ |
| (४) | जम्बूकाश्मीरविश्वविद्यालयः | ८१ |
| | स्नातकोत्तरसंस्कृतश्रेणीविभागः, अध्याप्यविषयाः | ८२ |
| (५) | श्रीरणवीरसंस्कृतानुसन्धानविभागीयपुस्तकालयः | ८३ |
| | श्रीरघुनाथमन्दिरे कार्यारम्भेतिहासः | ,, |
| | परिचयः, पूर्वसंस्थापना | ८६ |
| | विस्तारयोजना, संग्रहकार्यम् | ८७ |
| | लिपिकार्यम्, अन्वेषणकार्यम्, संग्रहकार्यम् | ८८ |
| | नवसम्पादनकार्यम् | ८६ |
| | बृहत्सूचीपत्रनिर्माणम्, पूर्वस्थानम् | ६० |
| | स्थानपरिवर्तनम्, सुधारकार्यम्, नवप्रोत्साहनम् | ६१ |
| | स्वाध्यायकार्यम्, कर्मचारिणः | ६२ |
| | पुस्तकविवरणम्, मुद्रितग्रन्थाः | ६३ |
| (६) | श्रीरणवीरहाईस्कूलस्था संस्कृतपाठशाला, प्रधानाचार्याः | ६४. |
| | छात्राणा साहाय्यसम्पादकः श्रीविनायकमिश्रः | ६६ |
| (७) | धर्मार्थविभागः, (८) वर्तमाना धर्मार्थपरिषद् | १०० |
| (६) | राजकीयविभागद्वारा संचालिता पाठशाला | १०२ |
| | संस्कृतपाठशाला पुरमण्डलस्था | ,, |
| (१०) | रणवीरसंस्कृतपाठशाला | १०५ |

| क्रमसख्या | विषय: | पृष्ठ संख्या |
|---|---|---|
| ११. | श्रीविद्याधरशैवाश्रमनिधिपा: | १०६ |
| १२, | श्रीरूपादेवीशारदापीठम् | १०८ |
| १३. | श्रीरामशैवाश्रम: | १११ |
| १४. | पाणिनीयार्यसंस्कृतमहाविद्यालय: | ११४ |
| १५. | आर्यसंस्कृतकन्यापाठशाला | ११५ |
| १६. | सस्कृतमहिलाविद्यापीठम् | ११५ |
| १७. | काश्मीरसंस्कृतसाहित्यसम्मेलनम् | ११७ |
| १८ | संस्कृतसाहित्यपरिषद् | १२० |
| १९. | संस्कृतभाषाप्रचारसमिति: | १२० |
| २०. | संस्कृतविश्वपरिषद्, उपसहार: | १२१ |
| ५ | साहित्यनिर्माणगवेषणादय: | १२३ |
| १. | अमुद्रिताना ग्रन्थाना सूची | १२३ |
| | सूचीनिर्दिष्टाना ग्रन्थाना परिचय: | १२४ |
| २. | सग्रहीतलिपिकृतप्रकाशितग्रन्थानां सूची | १३३ |
| | सूचीनिर्दिष्टाना ग्रन्थाना परिचय: | १३५ |
| ३ | विविधग्रन्थमालासु प्रकाशिताना ग्रन्थानां सूची | १५६ |
| | मुद्रितग्रन्थाना परिचय | १५७ |
| ४. | श्रीरणवीरसस्कृतानुसन्धानपुस्तकालयस्थाना पाण्डुलिपीना सूची | १६० |
| | सूचीक्रमानुगत: पाण्डुलिपीना परिचय· | १६९ |
| ५. | अत्र स्थिता सन्दर्शनार्हा ग्रन्था: (सूची) | १७९ |
| ६ | भूर्जपत्रलिखितग्रन्थावली (शारदालिपि:) (सूची) | १७९ |
| | सन्दर्शनार्हग्रन्थाना परिचय | १८० |
| | भूर्जपत्रलिखितग्रन्थावलिपरिचय: | १८२ |
| ७. | पुन: सस्कारार्हा ग्रन्था. (सूची) | १८४ |
| ८. | दानार्थं मुद्रापिता ग्रन्था: (सूची) | १८४ |
| ९. | रणवीरसंस्कृतानुसन्धानपुस्तकालयस्यावशिष्ट: परिचय: | १८८ |
| १०. | भाषान्तरेणानूदितानां काश्मीरिकग्रन्थानां सूची | १९२ |
| ११. | एतेषां परिचय. | १९३ |
| ६. | संस्कृतपत्रपत्रिका: | १९७ |
| ७. | जम्मूप्रदेशे लब्धजनुषां विदुषां नामावली | १९८ |

१ तेषां परिचयः १६६
२. जम्बूप्रदेशे विहितसंस्कृतकार्यकलापानां विदुषां सूची २२६
अमीषां परिचयः २३१
३. जम्बूकाश्मीरप्रदेशादन्यत्र जातानां भारतीयानां पाश्चात्यानां च विदुषां सूची ३१३
एषां परिचयः ३१४
५. जम्बूजन्मनामवशिष्टानां विशिष्टविदुषां परिचयः ३१७
८. काश्मीरप्रदेशः ३२३
१.२. भौगोलिकी स्थितिः, वर्तमानसीमा ३२६
३.४.५. प्रदेशविभागः, भूमिभागः पर्वतमालाः ३२७
६.७.८. मार्गः क्षेत्राणि च, नद्यः ३२८
९. सेतवः ३२९
१०.११. प्रणालाः, ह्रदाः ३३०
१२.१३.१४. उत्साः, खनिजानि, पशुपक्षिणः ३३१
१५ १६. कृषिरुद्भिदश्च ३३२
१७.१८. कुङ्कुमक्षेत्रम्, कस्तूरिकाविशेषभूमिः ३३३
१९. ऋतुपरिवर्तनम् ३३४
२०. जलवायवः, ३३६
२१. नौकाः ३३७
२२.२३. अधिवासिनः, परिच्छदः ३३८
२४. आचारव्यवहारौ ३३९
२५.२६. शिल्पम्, भाषा ३४०
२७.२८. शिक्षा, धर्मः ३४१
९ काश्मीरप्रदेशे संस्कृतपोषका राजानः प्रजाजनाश्च ३४१
१० काश्मीरस्था राजकीया अर्धराजकीया नगरपालिकासम्बद्धाः स्वतन्त्रा वा संस्कृतपाठशालाः (सूची) ३४३
प्राप्तपरिचयानां पाठशालाना संक्षिप्त विवरणम् ३४५
११. काश्मीरराज्यसर्वकारेण कृताः संस्कृतसेवाः ३५०
जम्बूकाश्मीरराज्यस्य शिक्षाविभागस्य निदेशकः श्रीनीरुद्दीनमहोदयः ३५१
१२. आङ्गलविद्यालयमहाविद्यालयेषु संस्कृतशिक्षा ३५२
१३. प्रतापपुस्तकालयस्तदीयः सङ्ग्रहालयश्च ३५२

१४. काश्मीरप्रदेशे श्रीनगरस्थशोधसंस्थाने स्थितानामप्रकाशितानां ग्रन्थाना
१. परिचय: ३५३
२. काश्मीरप्रदेशे विंशया वैक्रमशताब्द्यां लिखितानां ग्रन्थानां परिचय: ३५६
३. महाराज श्रीरणवीरसिंहसमयान्महाराजश्रीहरिसिंहसमय याव-
त्संगृहीता: पाण्डुलिपय: ३५८
४. काश्मीरानुसन्धानसंस्थाने सुरक्षितानां पालीभाषामयीना
पाण्डुलिपीना सूची ३७१
१५. काश्मीरिकाणा संस्कृतकोविदानां सूची ३७२
१. तेषा परिचय: ३७३
२. अवशिष्टा विशिष्टा विद्वास. ४२६
३ अन्येऽपि केचन विद्वास: ४३२
४. काश्मीरे सस्कृतमेवां कृतवता भारतीयाना वैदेशिकानां च विदुषा सूची ४३३
अमीषां परिचय ४३४
१६. लद्दाखप्रविभाग: ४३६
१७. जम्बूकाश्मीरभागस्य नामानुक्रमणिका ४४१
१८ विश्वसस्कृतशताब्दीग्रन्थयोजनाया अनुक्रमणिका ४८६
१ प्रस्तावना ४६०
२ राज्यसमितय: ४६१
३ अखिलभारतीयसस्कृतसाहित्यसम्मेलनम् ४६२
४ विश्वसस्कृतशताब्दीग्रन्थप्रश्नावली ४६३
५ सम्मेलनस्य सभापतय. ५०७
६. अ भा स. साहित्यसम्मेलनस्य वर्तमाना कार्यसमिति ५०८

# ग्रन्थोपक्रमात्पूर्वभागस्य विषयसूची

१. समर्पणपत्रम् 'श्रीलालबहादुर शास्त्रिणे' सम्मेलनाध्यक्षाय
२. विश्वसंस्कृतशताब्दीग्रन्थयोजनायाः केन्द्रीयसमितिः
३. जम्बूप्रादेशिकसंस्कृतसाहित्यसम्मेलनान्तःसङ्घटिता जम्बूप्रदेशसमितिः
काश्मीरप्रदेशसमितिः
४. अस्य प्रथमभागस्य मूललेखकाः
५. भूमिका श्रीसम्पूर्णानन्दलिखिता
६. प्रस्तावना श्रीनरहरिविष्णुगाडगिलकृता
७. शुभाशंसा श्रीगिरिधरशर्मचतुर्वेदविहिता
८. सम्पादकीयम् डा० मण्डनमिश्रशास्त्रिलिखितम्
९. आमुखम् श्रीहनुमत्प्रसादशास्त्रिणा. श्रीअमीरचन्द्रशास्त्रिणा चोपनिबद्धम्

श्री

# विश्वसंस्कृतशताब्दीग्रन्थे

## जम्बूकाश्मीरराज्यसम्बद्धः

## प्रथमो भागः



### मङ्गलम्

या विश्व व्याप्य तस्योद्भवविभवभवाभावसर्गेष्वनन्याऽ-
प्यन्यान्यन्यानि रूपाण्यविकृतपरमानन्दचिद् दर्शयन्ती ।
अव्यक्ताप्यात्मभक्तोद्धृतिपरमतया व्यक्ततामाप्य केन्द्रे
काश्मीरे राजमाना सकरुणहृगसौ शारदा श्रेयसेऽस्तु ॥१॥

### ग्रन्थोपक्रम. संस्कृतमहत्त्वं च

देवासुरदैत्यदानवराक्षसाद्यखिलदेवयोनिनिर्विशेषसमादृतम्, निखिलमानवमङ्गलप्रदम्, सनातनजैनबौद्धचार्वाकदैशिकवैदेशिकसकलवैदिकावैदिकमतमतान्तरानुयायिजनमनोमोदक सस्कृत हि सुसस्कृतानामार्याणा जीवनसर्वस्वम्, सर्वादिजगद्गुरोर्ब्रह्मणो मुखेभ्य स्वय प्रवृत्ता वाक्, देवाना सर्वव्यवहारप्रसूर्दिव्या चामोघा च गी , वेदोपवेदब्राह्मणारण्यकोपनिषत्स्मृतिपुराणोपपुराणशिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्योतिष–न्यायवैशेषिकसाख्ययोगमीमासावेदान्तादिसर्वदर्शन–कोपकाव्यनाटकाख्यानकाख्यायिकालङ्कारचतुःषष्टिकलासङ्गीतचतुर्वर्गगजगवाश्वपुरुषलक्षणचिकित्साग्रन्थेतिहासाङ्गसूत्रजातकभाष्यवार्तिकव्याख्याद्यखिलवाङ्मयजन्मभू , निखिलविश्वभाषाऽऽदिजननी, मानवजीवनस्यादिमध्यावसानेषु सदा समपेक्षिता वाणी ।

अथवा सस्कृतभाषाया वय कान् गुणान् गायाम ? गायन्तोऽपि च कथ तेषा पारमासादयाम ? इय हि भाषाऽस्मासु भारतीयत्व जागरयति, भारतीयेष्वेकता सञ्चारयति, न केवल भारतीया. प्रादेशिकीरेव, यावद् वैदेशिकीरपि भाषाः परि-

स्करोति, मानवमात्रस्य मस्तिष्क सस्करोति, तत्र ज्ञानविज्ञानप्रभा प्रसारयति, सद्हृदये सर्वदाऽऽनन्दसन्दोहमारोहयति, सत्पथप्रवृत्ति जनयति, सद्गुणगौरव प्रकटयति, विश्वबन्धुता विस्तारयति, सर्वभूतेष्वेकत्व प्रदर्शयति, सर्वत शान्ति सस्थापयति, त्याग, तप, सन्तोष, सेवा च शिक्षयति, विश्वकल्याणभावनामुद्भावयति, पञ्चशीलपरिशीलनमाविर्भावयति, ज्ञानविज्ञानयो समन्वयमातनोति, भुक्ति मुक्ति चाविरोधेनोद्वेलयति, धर्मार्थकाममोक्षाश्चतुरोऽपि पुरुषार्थान् साध्यतया समुपस्थापयति, ऐहिकमामुष्मिक चेत्युभयविधमप्युत्कर्ष सम्पादयति, कर्मणि, ज्ञाने, भक्तौ च सममनुयुनक्ति, सत्य, शिव, सुन्दर तत्किमपि तत्त्व सन्निधापयति, वाचि लालित्य सिञ्चति, माधुर्यधाराभि कर्णौ कृतार्थयति, विश्वस्यापि विश्वस्य चेतश्चमत्करोति, पूर्वेषामपि पूर्वजाना यशश्च सस्मारयति। किं बहुना, इय कल्पलतेव न किं किं न साधयति ?

एषा च भारते समुद्भूतापि गङ्गेव सर्वत्र जेगीयते, सर्वानेव च पावयति। भारते वैदिका अवैदिकाश्चेत्युभयेऽपि सम्प्रदाया स्वस्वविचारपरिपाटीप्रबन्धेषु भाषान्तराणि स्वीकुर्वाणा अपि यद्यत् स्यास्नुता, स्पष्टता, मान्यता च निनीषन्ति, तत्तदस्यामेव भाषाया प्रतिनिबध्नन्ति। स्वस्वाभिमत च मत सर्वजनसवेद्यता नेतु जैना, बौद्धा अपीमामेव भाषा पुरा सश्रयन्ते। चार्वाका लोकायताश्चापि स्वस्वदर्शनान्यस्यामेव भाषाया प्रबध्नन्ति। यावद् बहिरपि भारताद् दूरदूरतरेषु देशेषु सस्कृतसाहित्य सर्वतोऽप्रतिहतप्रसर प्रविशति। वेदेषु, दर्शनेषु, पुराणेषु, काव्येषु, तथाविधेषु चान्येषु विषयेषु पाश्चात्यैर्विद्वद्भि कृता गवेषणास्तेषा सस्कृतभाषाभिरुचे प्रबलानि प्रमाणानि सन्ति।

यस्मिन् कस्मिश्चिद्देशे, यस्या कस्याञ्चिच्च जातौ जातेन येन केनापि मानवेन सस्कृतभाषाया अध्ययनाध्यापनादिना, सम्पादनप्रकाशनादिना वा सेवा सम्पादिता, स सर्वोऽपि मानवोऽस्माक माननीय, श्लाघनीयश्चास्ति। तथाप्यनादिकालात्प्रवृत्ताया अस्या सस्कृतभाषाया सार्वकालिक सेवाविधेरितिहासश्चतुराननादपि चतुरतरेण केनचन कविना कोविदेन वा न सम्पादयितु शक्यते इति गतामेव शताब्दीमाश्रित्याय ग्रन्थ सन्दृभ्यते। तत्रापि कालो यथा निरवधि, पृथिव्यपि तथा विपुलेति पृथिव्या भारत वर्ष, भारते वर्षे च तदीयमुत्तमाङ्ग जम्बूसमेत काश्मीरमेवावालम्ब्याय समुपक्रम। समस्तस्याप्यस्य देशस्य प्रदेशोऽय मौलिभूतोऽप्यद्यावधैर्नैरैरुत्थापिताभिर्विपद्भिरभिभूयमानोऽस्तीत्यस्मै स्वस्तये, एन प्रति भारताभिजन-जन-भावनाजागरणाय चेत्र एवाय शुभारम्भ। क्रमशस्तु कृत्स्नाया अपि सुरसरस्वतीसेवापरिपूतमृत्स्नाया भुवोऽस्या शताब्द्या सस्कृतोपहार्याणा कार्याणा तत्कार्यकराणा चाय विशद इतिहास प्रस्तूयमान एवास्ति।

## दुर्गरः (डोगरा) प्रदेशः

अस्ति खलूत्तरभारते हिमालयमूलमधिश्रित., पार्वतीपरमेश्वरयोः परिणयभूमि पावनीञ्च तद्‌गिर्युपत्यकां पुनरक्तपावनी प्रकुर्वाण., रामणीयकहृतहृदया, गगनचुम्बिनी पर्वतमाला परितो बिभ्राणः, सुरम्यप्रासादोद्यानवापीकूपतडागगिरिनिर्झरनदीनदकुल्यादिप्रचुर., मजलसुजलसुभगभूभागसौभाग्यभाव,प्राकृतिकानेकविधवनलतापादपादिपङ्क्तिभिः परितो वृत., हरितसस्यकेदाराकीर्णः, नानारामाभिरामकुसुमपरिमलबहुलः, उभयपार्श्वारोपितसुघनमहीरुहच्छायाशान्तशीतलविपुलविशालराजमार्गः, सकलभूतलजनपदशिर.शेखरीभूत., भारतभूभामिनीमूर्धकुन्तलायितः, प्रतिगृहं नित्यनैमित्तिकाग्निहोत्रानन्तधूमराजिभिर्व्याप्तनभस्तलतया दिवापि सर्वममातमोमयमिव सजनयन्, मानवधर्मोद्धारधौरेयाणा, सकलप्राणिप्राणत्राणैकबद्धपरिकराणा, मज्जनप्रतिकूलदुर्जनकुलोन्मूलनानुकूलव्यापारव्यासक्तबाहुदण्डाना, भारतीयसत्सस्कृतिसंरक्षणदक्षिणाना, मदाचारसद्विचारसद्व्यवहारपरायणाना, स्वगेहिनीतोऽन्यशरीरमात्र मातृवत्पश्यता, भगवत. श्रीरामचन्द्रस्य नीत्यादिगुणाननुसरता, सूर्यवंशीयक्षत्रियाणा भुजबलेन चिर परिपालित, पौरुषपराक्रमाद्यशेषगुणगणपरिपूतसौजन्यधन्यराजन्यकुलकलित., सुघटितसन्धिबन्धबन्धुरसुगौरशरीरार्यजनशाश्वतनिवासविभासित., लोकोत्तरलावण्यवतीभिर्दर्शनमात्रधर्षितदुर्भावभावुकजनशिरोऽभिवन्द्यमानाभि, उर्वशीमेनकातिलोत्तमाद्यनेकदेवाङ्गनारूपप्रतिरूपिकाभिरपि सीतासावित्र्याद्यादर्शमहिलामणीनामादर्श दर्शयन्तीभि, सौष्ठवसौन्दर्यमौग्ध्यसौहार्दमरसमधुरमन्दभाषणपरिमितमेध्यपूताशनपान-सात्त्विकमरलमृदुलविमलवसनरत्नखचितस्वल्पसौवर्णभूषणपरिधान-विनयप्रौढ्यादिसहजनारीगुणपरिष्कृताभिरपि स्वसतीत्वप्रभावेण लम्पटानामपि स्वान्तेषु कुवासना परिहृत्य मातृदुहितृभगिनीभावनया सदाचारसद्विचारान् जनयन्तीभि., साध्वीभि प्रमदाभिर्मातृभूमितया सम्पूजित., स्वाभिमानवता समरविजयिना शरणागतशरण्याना वीराणा, धर्मेश्वरपरलोकादिनिष्ठावता निगमागमाम्बुधे पर पार यियासूनां विदुषाञ्च समानाभिजनतया सम सभाजनीय., तपःस्थलमिव तपस्विनाम्, विहाराङ्गणमिव भगवत्या वैष्णव्या., सभाभवनमिव वर्णाश्रमधर्माणाम्, अत्युन्नततया हिमगिरिरिवालङ्घनीय', गहनगम्भीरतया च सिन्धुरिवानतिक्रमणीय, मुनिरिव परिष्कृतसर्वभूतवैरः, अध्युषितनरोऽपि विराजितनिर्जरो 'दुर्गरो' (डोगरा) नाम जनपद ।

यत्र तापीगनद्युचन्द्रभागेरावतीवितस्तादिनदीनामनुतटमार्गोना सहस्रशो द्विजन्मानः सन्ध्यामुपासमाना दरीदृश्यन्ते स्म । यत्र सततो गिरिगह्वरेषु समनियमानस्यन्दन्तः,

बद्धसिद्धासना., प्रत्याहृतेन्द्रिया , त्रिविधप्राणायामनिरुद्धमानसा , धारणाध्यानैकताना , सबीजनिर्बीजसमाधिस्था , करामलकवदखिल भुवनतल पश्यन्त ,युक्तयुञ्जानभेदद्वयभिन्ना योगिन समुपलभ्यन्ते स्म । यस्मिन् सत्यवादिन , सत्यसन्धा , प्रतिश्रुतप्रतिपालका , आतिथेया , साधुसेवका , ब्रह्मण्या , गोभ्यो हिता , सयमिन , स्वदारनिरता , वदान्या , देशभक्ता , परोपकारिण , स्वतन्त्रा अपि सदनुशासनाधीना , प्रजाजना समवात्सु ।

तपोवनाश्रम इवानेककोटिहोमधूमध्वजै परिदह्यमानकलिकालकिल्बिषे यस्मिन् स्वय भगवती वैष्णवी रत्नाकरसागरस्यातिरमणीया तटभुव परिहाय पितृस्नेह च विगणय्य परमपावन मणिगिरिशिखरमारुह्य कृतावस्थाना समन्तत पश्यन्तीवाऽऽक्रमणोन्मुखेष्वपि महती भीर्ति जनयति, किमुताक्रमणकारिष्वरिपु !

यस्मिन् वर्णाश्रमधर्मेस्थिरबुद्धयोऽपि परस्पर सहोदरा इव, एकदेहावयवा इव च सम्मिलिता , स्वस्वधर्मनिरता अपि देशस्वातन्त्र्यसरक्षणैकधर्म्माण , आकारव्यवहारभिन्ना अपि अन्योन्यमभिन्नहृदया , मनोवाक्कायकर्मस्वेकरूपा , मानवधर्मपालनव्यसनिन , कामक्रोधादिभि षड्भिररिभिरस्पृष्टा , ईर्ष्याऽसूयानुचितानुरागादिभिरनाघ्राता , अर्थवैषम्यमतभेदादिसकीर्णभावानभिभूता गृहिण समभूवन् ।

यो हि दुर्गरप्रदेश प्रारम्भतोऽद्यावधि न वैदेशिकैराक्रान्त , न विधर्मिभि परिभूत , नात्याचारिभि पददलित , न च स्वार्थिभिरपहृत । हिंसाभावशून्यपारस्परिकमिश्रभावपरिपूर्णप्राणिवर्गे यस्मिन् दुर्गरप्रदेशे सिंहमृगावपि सम्भूय तडागतटे पयोऽपिबताम् । सत्त्वोद्रेककरे शमप्रधाने यस्मिन् मानवधर्मप्रधानेषु मानवेषु परस्पर विरोधस्य परैराक्रमणस्य च सम्भावनापि गगनकुसुमायिता, किमुत तत्कारिता !

दुर्गरवासिना स्वातन्त्र्य न केवल भूभागसरक्षणेनैवाभवत्, अपि तु प्राचीनार्यसस्कृतिसभ्यताधर्माणामनुपालनपूर्वक मानवधर्माचरणेनैव परिपूर्णतामयासीत् । प्राणिमात्रे ब्रह्मस्वरूपत्व, तत्प्रतिबिम्बत्व, तत्पुत्रनिभत्व वा समनुभूय सर्वजीवसेवैव मानवधर्म , अयमेव च सनातनो धर्म । यदुक्तम्—

**सेवैव सर्वजीवानामीश्वरार्चनमुत्तमम् ।**
**अय सनातनो धर्मो यतो ब्रह्ममयं जगत् ॥** इति ।

अय च सर्वजीवसेवारूपो धर्मो देशसेवयैव सर्वाङ्गीण समाचरितो भवतीति दुर्गरवासिना सुविदितमेवासीत् ।

यत्र सन्निहितेषु पर्वतेषु जातानामोषधीना सौरभेण सुवासिता शीतलजला 'चन्द्रभागा' नवलानि कृषिफलान्युपचिनोति, प्रबलजवा च 'इरावती' प्रचुराणि प्रशस्यानि

शस्यानि वितनोति, शतापीमय च 'तापीद्वयं' विविधानि धन्यानि धान्यानि सफलयति, समतलप्रवहणशीलानां स्रोतसामुद्घ 'उद्घच'श्च स्वादुतमानि अन्नानि भूय. सरसयति । यत्र च तापीमिलनसत्वरा 'झर्झरा' गिरिनिर्गतानेकनिर्झरतया स्वकीयं नामान्वर्थयति, शिवनिदेशवशाच्च गिरिजैवोररीकृतनदीवेषा 'देविका'सती मज्जज्जनदुष्कृतकलुषीकृतानि तीर्थानि पवित्रयति, विषमस्थलारोहावरोहतुच्छीकृतोऽपि 'पुञ्च्छ'श्च यत्र मुनिजनानां तपःसमुचितानि शुचीन्युच्चावचानि स्थानानि प्रकल्पयति ।

यत्र चान्या अपि वृष्टिजललाभधन्याः क्षुद्रा अपि दूरीकृतदेशदारिद्र्या 'गिरिणद्यो' वहन्ति, याः किल बहुविधैर्विधिभिस्तटस्थमपि लोकमुपकुर्वन्ति । आसां हि रंहसा तडिदुत्पाद्यते, तच्चालिताभिर्जलचक्रिकाभिश्च गोधूमादीन्यन्नानि पिष्यन्ते, तीर्थेषु च स्नानध्यानादिना लोकैरात्मा कृतार्थ्यते ।

यस्य च जनपदस्य सरसाया पानीयधाराया स्नाय स्नाय, ता च पाय पाय प्रजाजनो विनापि प्रसाधनं कामपि कमनीया कान्तिमाकलयति । यस्य च सततशीतलेनापि नित्यानुकूलेन जलेन वातेन च जना वक्त्रेषु सरागा., गात्रेषु नीरोगाः,हृत्सु च निरुद्वेगाः क्रियन्ते । यस्य च 'शिरोहि-माणिक्या'भिध्याहाराभ्यामगाधनीरधाराभ्यामपि जानुदघ्नप्रसाराभ्या कासाराभ्या काप्यनुपमा सुषमा परिकल्प्यते । यस्य च मिथ.सामर्षाभ्या 'पार्थ-बभ्रुवाहना'भ्यामुद्गीर्णं मुदु.सह दुर्वचोगर निमित्तीकृत्य 'दुर्गर' इति नाम ख्यातिमागतमिति केषाचिदैतिहासिकाना विश्वास. ।

यत्रातिहिमस्य महिमवतो 'गौरीकुण्डस्य' दर्शनेनैव सिस्नासूना देहा दुरितसन्दोहाश्च वेपन्ते, लब्धवर्णस्य 'गोकर्णा'र्णसश्च स्पर्शनेनैव सन्मति सद्गतिश्चाधिगम्येते, सुलभमेवस्य 'शुद्धिमहादेवस्य' स्मरणेनैव भुक्तिलिप्सा मुक्तिप्रपित्सा च परिपूर्येते, दुरितनिरामायाः 'कर्मनाशायाश्च' जललवकणिकामात्रपानेनापि ज्ञानविज्ञानवैराग्याणि सिद्ध्यन्ति ।

यत्र च पादाम्बुसेकपरिपावितत्रिशिखगिरिदर्याः, परमसुन्दर्या 'दुर्गाकुमार्या' ध्यानेनापि कलुषनिकरा निराक्रियन्ते, अनन्तशक्ते. पादुकयाङ्कितशिलस्य शैलस्य वन्दनेनापि महानानन्द उपह्रियते, 'आदिकुमारिका''हनुमद्गढ''भैरवोपत्यका'दीनामप्युच्चैस्थितानामुपलम्भेनैव गुरुगिरिलङ्घनश्रमोऽपि विस्मर्यते । घनान्धकारकन्दरान्तर्गृहाया अपि प्रदीपगतज्योति प्रकाशमानविग्रहाया., 'श्रीधर'शाक्तशिरोमणिसंसाधिताया अद्यापि तद्वशज 'कौल'जनाराधिताया 'वैष्णव्या' देव्या. प्रणिपातेनापि प्रणतजनमानस मोमुद्यतेतराम् । यत्र च 'नागानन्दीय'मितिवृत्तमिवानुसृत्य स्थापिताया 'जीमूतवाहन'-प्रतिमाया. सन्निधावेव शीतोष्णनीर-'नौहतापी'-नदीद्वयोद्गमतां गतस्य कुण्डस्य सन्निधानमात्रेण ग्रीष्मेऽपि कम्पन्तेऽन्तर्विविदूर्णा वपूंषि ।

यत्र च 'तापीदेविके' मिथो मिलित्वा 'चन्द्रभागा'मालिङ्गन्त्यौ नूतनां त्रिवेणीं परिकल्पयतः, स्मारयतश्च पतिगृहं यान्त्याः शकुन्तलाया अनसूयाप्रियंवदाभ्यां परिष्वक्तायाः। यत्र खलु 'अखनूर'नगरादनतिदूरे विचरत्पञ्चानने कानने पक्वेष्टकचितसोपानभागस्य तडागस्योपकण्ठतः स्वयं व्यक्तानां लघुलघुतरलघुतमानां शिवलिङ्गप्रतिमानामुपर्यारचितं सुन्दरं मन्दिरं सिद्धपीठायते। यत्र चोद्धचप्रवाहपार्श्वस्थपर्वतमस्तकस्थं 'सुकराला'ख्यकालीनिकेतनं सद्य एव दर्शकजनमनोरथान् पूरयति। यत्र च 'बलपुरा'म्यन्तरे वज्रलेपमन्तरेणैव गुर्विष्टिकानिचितो महामहिमालयः शिवालयो निजैकेष्टिकापतनेन सूचयति दुर्गरप्रदेशे जनिष्यमाणमुत्पातम्।

अनत्येषु वनेषु 'सुन्दरवनी', पर्वतेषु 'कालाकोट', कन्दरासु च 'शिवकन्दरा' सौन्दर्येण, सदुपयोगितया, विशालतया च व्यस्तसमस्ततया प्रतीतिगोचरा, प्रसिद्धिविषया दर्शनीयतास्पदानि चेति कथं नाम विस्मृतिमावहेयुः।

## ग्रामाग्रहारनगरादिकम्

अत्र च प्रदेशे 'वसन्तर'सरित्परिसरे साम्बेन शिवेन कृताधिवासतया 'साम्बा'ख्यां प्राप्ता, रङ्गविप्रुट्कारैश्चाधिष्ठिततया 'रङ्गविप्रुष्मती'(छींटावालाशहर) इत्यभिधां लब्धवती काचिदपरापि परा पुरी वरीवर्ति। अस्याः पुर्याश्चर्मकारैरुपनद्धा उपानहोऽतिमनोहरतया ख्यातिकर्यो भवन्त्यस्याः। अस्यां नगर्यां सनातनधर्ममास्थिताः प्रजाः पितृभक्तानामादर्शतामुपयान्ति। नर्ममार्मिकाश्चात्रत्या जनाः शिष्टमपि विशिष्टं हास्यं प्रवर्तयन्ति। तपस्विभिर्ब्राह्मणैः, मनस्विभिः क्षत्रियैः, यशस्विभिर्वैश्यैः तरस्विभिश्च शूद्रैरध्यासितेयं पुरी गुणानुरूपैः कर्मभिः कर्मानुरूपैर्वा गुणैर्विस्मापयति लोकान्।

अत्रैव प्रदेशे नृपनीतिनिपुणेन, राज्यसञ्चालनचतुरेण, निजजनगणवृद्धिकामेन, सकलगुणगणाभिरामेण, राजसिंहेन श्रीरणवीरसिंहेन समतलायां भुवि स्वनाम्ना 'श्रीरणवीरसिंहपुरा'नामकं नगरमधिवासितमभूत्। अस्य नगरस्य नेदीयसी भूमिरुर्वरतया प्रचुरान् धान्यराशीनुत्पादयतीति कृषकजनसुखकाम्यया किलेदं नगरं व्यापारकेन्द्रतां नेतुमत्यन्तं विकासं लम्भितमभूत्।

इत्थमेव चन्द्रभागातीरादनतिदूरं कविजनवर्णितशोभापूरं किञ्चिद् 'अखनूर' नाम पुरमपि पर्वतमूर्धनि प्रतिष्ठितमस्ति। व्यापारक्षेत्रे नगरमिदम् 'आज्यराज्य'मिति व्यपदिश्यते स्म। अद्यापीतः पार्वतं घृतं परितो यानैर्विस्तृतिं प्राप्नोति। अत्रत्याः सर्पिःसिक्ताश्च सोहालाः स्वस्वादुतया सर्वतो विश्रुताः।



वितस्तामुभयत श्रीनगरम्





शालिमारोद्यानम्



'डल' नाम्नी सरसी

यत्र च 'तापीदेविके' मिथो मिलित्वा 'चन्द्रभागा'मालिङ्गन्त्यौ नूतनां त्रिवेणीं परिकल्पयतः, स्मारयतश्च पतिगृहं यान्त्याः शकुन्तलाया अनसूयाप्रियंवदाभ्यां परिष्वक्तायाः। यत्र खलु 'अखनूर'नगरादनतिदूरे विचरत्पंचानने कानने पक्वेष्टकचितसोपानभागस्य तडागस्योपकण्ठतः स्वयं व्यक्तानां लघुलघुतरलघुतमानां शिवलिङ्गप्रतिमानामुपर्यपरिचितं सुन्दरं मन्दिरं सिद्धपीठायते। यत्र चोद्धचप्रवाहपार्श्वस्यपर्वतमस्तकस्थं 'सुकराला'ख्यकालीनिकेतनं सद्य एव दर्शकजनमनोरथान् पूरयति। यत्र च 'बलपुरा'भ्यन्तरे वज्रलेपमन्तरैव गुर्विष्टिकानिचितो महामहिमालयः शिवालयो निर्जकेष्टिकापतनेन सूचयति दुर्गरप्रदेशे जनिष्यमाणमुत्पातम्।

अत्रत्येषु वनेषु 'सुन्दरवनो', पर्वतेषु 'कालाकोट.', कन्दरासु च 'शिवकन्दरा' सौन्दर्येण, सदुपयोगितया, विशालतया च व्यस्तसमस्ततया प्रतीतिगोचराः, प्रसिद्धिविषया दर्शनीयतास्पदानि चेति कथं नाम विस्मृतिमावहेयुः।

## ग्रामाग्रहारनगरादिकम्

अत्र च प्रदेशे 'वसन्तर'सरित्परिसरे साम्बेन शिवेन कृताधिवासतया 'साम्बा'ख्या प्राप्ता, रङ्गविप्रुट्कारैश्चाधिष्ठिततया 'रङ्गविप्रुष्मती'(छींटावालाशहर) इत्यभिधां लब्धवती काचिदपरापि परा पुरी वरीवर्ति। अस्याः पुर्याश्चर्मकारैरुपनद्धा उपानहोऽतिमनोहरतया ख्यातिकर्यो भवन्त्यस्याः। अस्या नगर्यां सनातनधर्ममास्थिता. प्रजा. पितृभक्तानामादर्शतामुपयान्ति। नर्ममार्मिकाश्चात्रत्या जना. शिष्टमपि विशिष्ट हास्य प्रवर्तयन्ति। तपस्विभिर्ब्राह्मणै., मनस्विभिः क्षत्रियैः, यशस्विभिर्वैश्यैः तरस्विभिश्च शूद्रैरध्यासितेय पुरी गुणानुरूपैं कर्मभि. कर्मानुरूपैर्वा गुणैर्विस्मापयति लोकान्।

अत्रैव प्रदेशे नृपनीतिनिपुणेन, राज्यसचालनचतुरेण, निजजनगणवृद्धिकामेन, सकलगुणगणाभिरामेण, राजसिंहेन श्रीरणवीरसिंहेन समतलायां भुवि स्वनाम्ना 'श्रीरणवीरसिंहपुरा'नामक नगरमधिवासितमभूत्। अस्य नगरस्य नेदीयसी भूमिरुर्वरतया प्रचुरान् धान्यराशीनुत्पादयतीति कृषकजनसुखकाम्यया किलेद नगर व्यापारकेन्द्रता नेतुमत्यन्त विकासं लम्भितमभूत्।

इत्थमेव चन्द्रभागातीरादनतिदूर कविजनवर्णितशोभापूरं किञ्चिद् 'अखनूर' नाम पुरमपि पर्वतमूर्धनि प्रतिष्ठितमस्ति। व्यापारक्षेत्रे नगरमिदम् 'आज्यराज्य'मिति व्यपदिश्यते स्म। अद्यापीतः पार्वतं घृत परितो मार्गैर्विस्तृतिं प्राप्नोति। अत्रत्याः सर्पि.सिक्ताश्च सौहाला स्वस्वादुतया सर्वतो विश्रुता.।



वितस्तामुभयत श्रीनगरम्



शालिमारोद्यानम्



'डल' नाम्नी सरसी

अत्रैव प्रदेशे कदाचित् पाण्डवा गुप्तमवात्सुरिति तावदद्यापि चन्द्रभागातटे स्थिता 'पाण्डवगुहा' प्रमाणयति । 'उद्धमपुर' नाम नगर देविकातीरस्थिततया तन्नीर-स्नानपानपावितञ्जनान् उ(शिव)धाम गमयति । शैलप्राकारमध्यग च 'रामपुर' पश्यतामेव जनाना मनो नयने च स्वरामणीयकेन रमयति । तापीतीरगा पर्वतशिखर-स्था काचन 'चनैनी' नाम लघ्वी पुरी वर्वति । ततश्च 'कुद्धबाटोत'नामनी पथिक-जनविश्रमदे पत्तने स्त । ये अतिक्रम्य काननस्यापणस्य च समन्वितया श्रियाऽनुगत चन्द्रभागाभिगत 'रामवन' नाम पुर नयनगोचरो भवति, अत्र पुरे पुरुषा दुर्गराभिजन-जनाकृतिसस्कृतिभापावेपभूपिता प्रतीयन्ते, फलानि तु तावत् काश्मीरजान्येव तान्यनुकुर्वन्ति ।

अत्रैव सङ्कपचत्वरा, सच्छायतरुवरुथा, रमणीयापणवीथिका 'कठूहा'नाम नगरी न गरीयस्यपि गेयगुणगणैव । अत्रैव वीराग्रण्या श्रीहीरासिंहेन राज्ञा स्वनाम्नैव स्थापित दुर्गं 'हीरानगर'मिति ख्यातिमागतम् । इरावतीतीरस्थगिरिशिखराध्युपिता 'विश्वस्थली' नाम नगर्येव सम्प्रति 'बिसौली' इत्यपभ्रंशव्यपदेश भजमानास्ति । इत-राण्यपि प्रचुराणि पुराण्युपपुराणि चात्र दुर्गरे प्रदेशे विराजन्ते ।

इत्थमय प्रदेशो नानानद्यद्रिकन्दरपुरद्रुमसरोऽरण्योत्सवस्थानदेवीदेवनृनागभूपाद्भुत-चरितचर्याचर्चया स्वकीया वरदराजता प्रतिवेदयति । अय च क्वचिद् ग्रामघाप-पत्तनगोष्ठनगरनिकरै परिपूर्णो बीजगर्णैर्दाडिमीफलवत् प्रतिभाति । क्वचिच्च वर्ण-साम्येन धाराधरे धराधरस्य, धराधरे च धाराधरस्य भ्रान्तिमुत्पादयति । क्वचिच्चेदमीया वाप्यो ग्रीष्मे शीत, शीते चोष्ण, मधुर, पावन, पाचन च जल वहन्त्यो गृहदास्य इव प्रतीयन्ते ।

## सामन्तराजनगर्यो जम्मू-राजधानी च

अत्र किल दुर्गरप्रदेशे पुरा यथासमय तापीतीरस्थिता 'राजौरी' (राजपुरी), चन्द्रभागाकूलगा 'रियासी' (राजाऽऽसिता), पुलस्त्यापुलिनस्था च 'पुञ्च्छ' (पुलस्त्योञ्छ)-पुरी सामन्तराजनगर्योऽभवन् । ता एता अद्यापि पापाणकाष्ठोर्णालोहादिनिर्मितैरधिगता-नल्पमाना, वणिग्भिरभिनोभमाना परिलसन्ति । एतासु नभ स्पृ शि दुर्गाणि प्रतिष्ठित-हरिहरदुर्गेन्दिराणि मन्दिराणि, प्रचलद्विघानानि च तपायज्ञदानानि राज्ञा प्रजा-जनाना च वीरता, भक्तता, वदान्यता च प्रमापयन्ति ।

अथ सुचिरात्त्वेतद् ग्रमध्यमध्यासिता, तापीकूलानुकूलावस्थाना, सत्ताभिराम-पुरीलनामभूता, वैमानिकपथप्रत्यूहजनकै रभ्रङ्कषै प्रासादैर्वैरोचनस्वर्भूवर्भू शोभना

पू'र्जम्बू'रेवास्यैका राजधानी। यस्या राज्ञा कीर्तिस्तम्भायमानानि स्वर्गसोपानानीव परमोत्तुङ्गानि सुवर्णशृङ्गाणि देवमन्दिराणि विभ्राजन्ते। यत्र च स्वर्गभोगैरपि नून-मक्षय्याणि पुण्यानि भोक्तु मनुजा स्वर्गादवरोहन्ति, तापीस्नानमात्रलब्धज्योति-ष्टोमादियज्ञमहाफलाश्च पुरुषायुष जीवित्वा पुन स्वर्गमारोहन्ति।

यत्र च स्वमहिममन्दीकृतमन्दरे श्रीरघुनाथमन्दिरे यथास्थानप्रतिष्ठापिताखिल-सुरगणपरिवेष्टितो भगवान् जानकीजानिर्वैदिकतान्त्रिकाभ्या विधिभ्यामन्वह परिपूज्यते।

यत्र च वेदवेदाङ्गादिविविधविद्याध्ययनाध्यापनप्रतिध्वनितदिगन्तराल, शुल्क विनैव विनेयेभ्यो वितीर्णवस्त्रावासान्नभोजनग्रन्थादिच्छात्रोपयोगिसामग्रीको, निखिल-निगमागमपुराणशास्त्रविचारवैशारद्यानवद्ययशोजुषा विदुषा वृन्देन विवर्धितश्रीक सस्कृतमहाविद्यालय सुचिराद् विद्योतते। यत्र च राजप्रासाद, 'पीरखोह'स्य कन्दराविशेष, चन्द्रशीतला चान्द्रभागेयी कुल्या, उपवनपरिवृतो महाविद्यालय, करतलसमसमतला च सेनानिवेशभूमिरित्येकैक परमदर्शनीयतया मिथ स्पर्धन्ते। यत्र चान्यान्यपि बाहुदुर्ग-शीतलामन्दिर-तापीसेतु-रघुनाथापण-नानौषधनिर्माणयन्त्रशाला-कौशेयोत्पादनकौशलादीनि विचित्राणि दृश्यानि सन्ति। यत्र च सौन्दर्यौदार्यशौर्य-धैर्यप्रभृतिभिर्गु णै प्रथमगणनीया धनपतयो ज्ञानपतयश्च बाहुल्येन वसन्ति। यत्र च मध्यवित्तो मध्यविद्योऽपि वा जन प्रायेण निवसति, न तु कश्चनापि नि स्वो वा, निरक्षरो वा। सस्यादिव प्रशस्यादस्मान्नगरात्कुशकाशोपमा हि कृशकृपणा जनाश्चतुरै कृषकैरिव नृपैरुत्खायेतस्ततो विकीर्णा।

किं बहुना? अद्यास्मिन् कवलितसकलप्राच्यकलाकलापे विकराले कलिकाले समस्तेऽपि दुर्गरप्रदेशे काश्मीरराज्ये च सस्कृतसाहित्य सिपठिषूणा कृते जम्बूपदाभिधेया राजधानीयमेकमात्रमेवास्पदम्। अन्यत्रा ऋषिसन्ताना अपि हन्त! सम्प्रति पाश्चात्यशिक्षा-दीक्षास्वेव रमन्ते। स्वतन्त्रेऽपि देशे परदेशभाषैव जोघुष्यमाणास्तीति नून विस्मयावह खेदावह चैतत्। न खलु विदितमद्यतनाना जनाना सस्कृतभाषाया सर्वभाषाजननीत्वम्, पुण्यत्वम्, गुण्यत्वम्, विज्ञानपरिपूर्णत्व च। अस्या सुरगिरो नरविशेषापरिकल्पितत्वान् न सम्भावनीय साम्प्रदायिकत्वम्, नापि नरजातिविशेषसम्बद्धत्वम्, अपि त्वस्या शुद्धत्व सततप्रबुद्धत्व च निध्याय सदैव वृद्धये प्रयतनीय प्रतिमानवेन।



# अभिनवराजतरङ्गिणी

## संस्कृतपोषकाश्च



वज्राद् वज्रकृत भय विरमति, श्री पद्मरागाद् भवेद्,
नानाकारमपि प्रशाम्यति विष गारुत्मतादश्मन ।
एकैक क्रियते प्रभावनियमात् कर्मेति रत्नै पर
पुरत्नै पुनरप्रमेयमहिमोन्नद्धैर्न किं साध्यते ।।१।।

अम्भोजानि घनाघनव्यवहितोऽप्युल्लाघयत्यशुमान्
दूरस्थोऽपि पयोधरोऽतिशिशिरस्पर्श करोत्यातपम् ।
शक्ति काऽप्यपरिक्षतास्ति महता स्वैर दविष्ठान्यहो !
यन्माहात्म्यवशेन यान्ति घटना कार्याणि निर्यन्त्रणाम् ।।२।।
(कह्लणस्य)

   

म्लेच्छाच्छादितपार्श्वपृष्ठमुखभूरप्युग्रतेजा महा-
वीरो योऽखिलदुर्जनान् व्यनमयत् खड्गाग्रधाराबलात् ।
य स्वप्नेऽप्यनुभूय शात्रवगणाश्चक्रन्दुरायादिति
काश्मीरानुदधीधरद् य उदय ताँल्लम्भयन् सर्वत ।।३।।

धन्या सस्कृतसस्कृति समभवद् य सेवक प्राप्य सा,
विद्यास्ता प्रचकाशिरे पुनरपि प्राज्ञस्य यस्य क्षितौ ।
यस्मिन् रक्षितरि प्रमोदमभजन् सर्वेऽपि, सर्वोदयो
लक्ष्य यस्य, गुलाबसिंहनृपतेस्तस्यैष कीर्त्ते क्रम ।।४।।

याऽभूच्छ्रीरणवीरसिंहसमये काश्मीरदेशोन्नति-
र्या तद्वशधरे प्रतापनृपतौ, याऽऽसीद् हरौ तत्सुते ।
राज्येऽभून्नवभावभावितजने या कर्णसिंहे स्थिति
सा सा सस्कृतमेव केवलमवालम्ब्यात्र सस्तूयते ।।५।।
(सम्पादकस्य)



## ❀ दुर्गरनरेशानां वंशमेरुः ❀




❀एतच्चिह्नचिह्निता राजा भ्रात्रादिकुले जाता राजभिर्दत्तकपुत्रतया परिगृहीतास्तद्वंशविस्तारका राज्याधिकारशालिनश्च बभूवुरिति ज्ञेयम् ।

उक्तं दुर्गर(डोगरा)प्रदेशमाहात्म्यम्, उक्ताश्च तत्प्रदेशसामन्तराजधान्य., प्रधाना चारम्भादद्यावधि शत्रुकृतस्वातन्त्र्यापहारनिर्जयपराभवाद्यप्रतिभू 'जम्बू'र्नाम राजधानी। तत्र 'डोगरा' शब्दस्य संस्कृतं रूपं 'दुर्गर' इति प्रागुक्तमेव। आधुनिकास्तु 'त्रिगर्त'-शब्दमनुकृत्य 'द्विगर्त'शब्दमपि प्रयुञ्जते। शिरोऽहिसरोवरं (सिरोहिसर), माणिक्य-सरोवरं (माणसर) चात्र द्वौ गर्तौ मत्वा तावत्र 'द्विगर्त'शब्दप्रवृत्तौ निमित्तीकुर्वन्ति। 'डुग्गर' शब्दमपि केचिदिच्छन्ति। एवं वैमत्ये 'चम्बा'राज्योपलम्ये दशमशतकीये ताम्रपत्रे 'दुर्गर'जातेरुल्लेखेन, तन्निवासभूतस्य देशस्यापि 'दुर्गर' इति नाम्नः साधु-त्वेऽपि, आधुनिकानां रुच्यनुसारमेवापरेऽपि शब्दा इह यथावसरं प्रयोक्ष्यन्ते।

'जम्बू'स्तु राजधानी भवन्त्यपि प्राचीने भारते देशत्वेन परिगण्यते स्म। महाभारतादिषु ग्रन्थेषु देशस्यामुष्य नाम 'जम्बूमार्ग' इति लभ्यते, तीर्थवच्चासौ समादृतो दृश्यते।

यथा—

"जम्बूमार्गं समाविश्य देवर्षिपितृसेवितम्।
अश्वमेधमवाप्नोति सर्वकामसमन्वितः॥
(महा० व० ८२।४०) इति।

महर्षियास्कनिर्मितनिरुक्तस्य सुप्रसिद्धो व्याख्याता श्रीदुर्गाचार्यः "इति श्रीजम्बू-मार्गाश्रमवासिनो भगवद्दुर्गाचार्यस्य कृतौ" इत्यादिरूपेण देशममु 'जम्बूमार्ग'नाम्नैव तत्र तत्र स्मरति। वाल्मीकीये रामायणेऽपि सीतान्वेषणाय वानरानादिशन् सुग्रीवः काश्मीरान् जम्बूमार्गं चाप्यन्वेष्टु समादिशति। अन्यत्रापीदृशानि प्रमाणानि सन्ति सुलभानि। आस्तां तत्। सर्वथा विपरिवर्त्तिते जगति प्राचीनभावान्वेषणे श्रद्धीय-मानेऽपि स्वसमयप्रसिद्धिरपि समाद्रियत एवेति 'जम्बूमार्ग'मधुना दुर्गरद्विगर्त्तादिशब्दै-स्तद्राजधानी तु 'जम्बू'शब्देन व्यवहराम.।

अथ चानाद्यविच्छिन्नपारम्पर्यैकमागतसनातनधर्मरक्षकाणामपि सर्वधर्मसमभावभावि-तान्त करणानां, देशसेवासमासक्तानां, राष्ट्रस्वातन्त्र्यपरमभक्तानां, मानवधर्मप्रतिपादक-संस्कृतसाहित्यप्रचारप्रसारबद्धपरिकराणां, सकलप्राणिकष्टापहराणां, वाङ्मनःकाय-परिपूतानां, कामजैर्दशभि. क्रोधजैश्चाष्टभिर्व्यसनैरनभिभूतानां, विद्वन्मानसहंसानां, सूर्यवंशावतंसानां, स्वप्रभावप्रभावितनिखिलसागरम्बराणां दोर्गराणां, शौर्यवीर्यधैर्य-गाम्भीर्योदार्यादिक्षत्रियोचिताशेषगुणगणमहितानां, प्रसरत्प्रतापोज्ज्वलकीर्तिमहितानां, धन्यानां, निर्जितानेकजन्यानां, राजन्यानां परम्परा परामार्हन्तीमधिमन्त्रा प्रस्तूयते।

तत्राय क्रम —ब्रह्मण सकाशान्मरीचि, मरीचे कश्यप, स च दक्षप्रजापते कन्या देवहूतिं परिणीय तस्या देवसूर्णोपनामक सूर्यनामान पुत्र जनयामास । तत एव प्रावर्तताय महान् सौरो वंश (सूर्यवंश), यस्मादजायन्त लोकोत्तरगुणान्विता, स्वाहार-विहारवसनभूषणादिषु साधारणा अपि परोपकारप्रजारञ्जनादिष्वसाधारणा, महान्तो महान्तो राजान । एव क्रमेणानवरत प्रवर्तमानेऽस्मिन् सूर्यवंशे परम्परया दशरथाभिधो नृप समुदपद्यत । स चाजनयद् राम–लक्ष्मण–भरत–शत्रुघ्नान् चतुर्युगस्तम्भानिव चतुर पुत्रान् । तेषु रामस्याऽभूता कुशलवौ द्वौ सुतौ । तयो कुशस्य प्रववृधे वंश साकेत एव । तद्वंशेऽग्निगर्भोऽग्निवर्णश्चेति द्वौ राजानौ समभवताम् । तयोरग्निगर्भ कदाचित् त्रिगर्तेषु गत । तत्रत्यो नृपस्तस्मै स्वदुहितरमदात् । स च ता परिणीय तदा-सक्तस्तत्रैव तस्थौ । त्रैगर्ता राजानस्तद्वंशीया एव । अग्निगर्भस्य वायुश्रवो दिलीपश्चेति द्वौ सुतौ समास्ताम् । तयोर्दिलीपस्य वंशे क्रमेण जम्बूलोचनबाहुलोचनौ राजानौ समुदपद्येताम् । तयोर्जम्बूलोचनो त्रिगर्तदेशाधीश्वरोऽभूत् । स एवेद जम्बूनगरम् अवीवसत् । तन्नाम्नैव इद नगर 'जम्बू (जम्मू)' इति नाम्ना ख्यातमभवत् । तस्माद् जम्बूलोचनात् पर क्रमेण मालदेव, मालदेवात् कर्पूरदेव, कर्पूरदेवात् संग्रामदेव., तस्माद् ध्रुव इव ध्रुवसन्धो ध्रुवदेवोऽजायत । ध्रुवदेवस्य सागरा इव दुराधर्षा रणजीतदेव, सूरतदेव, घसन्तदेव, घनसारदेव इति चत्वार पुत्रा समभूवन् ।

## रणजीतदेव

महाराजगुलाबसिंहस्य प्रपितामहो य सूरतदेव, तस्य ज्येष्ठ सहोदर श्रीरणजीत-देव शून्यशरर्षीन्दुमितात् (१७५०) ख्रिष्टाब्दादारभ्य भूवस्वृषीन्दुमित(१७८१) ख्रिष्टाब्दपर्यन्त सकौशल त्रिगर्तभुव शशास । अस्य राज्ये सर्वे प्रजाजना विद्यया बुद्ध्या वित्तवयोभ्या च वर्धमाना परस्पर सौहार्देन वर्तमाना निर्भया सन्त पर मुमुदिरे । किञ्च कुल्लू–भूटान–बिसहर–जालन्धर–त्रिगर्त–( काङ्गडा )–सुखेत–मण्डी–कलहूरा-धिपतयोऽस्य शौर्यादिगुणाकृष्टा प्रत्यब्द नियत वार्षिकोपायनमस्मै प्रददु ।

तस्येद प्रशस्तिपद्यम्–

> तत्राद्यो रणजीतदेवधरणीभृद् येन नीता वशे
> कुल्लूभोटबुसेहराधिपतयो जालन्धरेशाश्च ये ।
> ये त्रैगर्तसुखेतभूमिपतयो मण्डीशलूरेश्वरा
> प्रत्यब्द प्रददु प्रियाय नियत यद् वार्षिकोपायनम् ॥ इति ।

भूवसुमुनीन्दुमिते (१७८१) ख्रिष्टाब्दे स्वीयां प्रजां करुणनीरनिधौ निमज्ज्य रण-जीतदेवो वीरगतिं गत ।

## व्रजराजदेव

श्रीरणजीतदेवादनन्तर तदात्मजो व्रजराजदेवो द्विगर्तराज्यसिंहासनमधिरूढ । असौ नासीद् राजनीतिनिष्णातोऽतोऽमुष्य शासनशैली प्रजाभ्यो नारोचिष्ट । पारस्परिकाभियोगाना, कलहाना, विवादाना च परम्परा सजातास्य राज्ये । राज्य शत्रुभिराक्रान्तम् । किमधिकेन ? दैवदुर्विपाकाद्धतोऽसौ शत्रुभि सग्रामे । तत्सम्बन्धिनस्तस्य शव जम्बूनगरमानिन्यु । तस्य राज्ञी चम्बपाला स्वपतेश्चितामारुह्य तेन सहैव स्वात्मान भस्मसादकार्षीत् । पातिव्रत्येन च स्वसतीत्वस्य यशो लेभे ।

## सम्पूर्णदेव

व्रजराजदेवस्य मृत्युसमये तत्पुत्र सम्पूर्णदेव केवलमेकवर्षदेशीय एवासीत् । तमेकवर्षवयस्क सम्पूर्णदेव राज्येऽभिषिच्य मोटासिंह (सम्पूर्णदवपितामहस्य रणजीतदेवस्य भ्रातु सूरतदेवस्य तनुज ) तस्य सम्पूर्णदेवस्य प्रातिनिध्यमकार्षीत् । सम्पूर्णदेवो दशवर्षाणि केवल नाममात्रेण राज्य कृत्वा स्वायुष एकादशे हायने इद भौतिक शरीर विहाय लोकान्तरमगात् ।

## जीतसिंह

तदानी जम्बूराज्याऽधिकारिषु रणजीतदेवस्य य कनिष्ठपुत्रो दलेलदेव, तस्य पुत्र जीतसिंह (व्रजराजदेवस्य भ्रातृव्य) विहाय नान्य कश्चित् सन्निकृष्टाऽधिकार्यासीत् । अतस्तत्सम्बन्धिनस्त (जीतसिंह ) जम्बूराज्येऽभिषेचयाचक्रु । जीतसिंहस्य राजनीतेरनभिज्ञत्वात्, चिररोगित्वात् स्वभावतो मन्दबुद्धित्वाच्च मेधाविनी तत्पत्नी बन्दराली सर्वं राज्यभार स्वस्यामाधाय सम्बन्धिना साहाय्येन यथाशक्ति राज्यकार्यमकार्षीत् । पर जम्बूराज्यस्योच्चपदाधिकारिणे स्वश्वशुरदलीलदेवस्य घातुकाय मोटासिंहाय स्वभावतोऽद्रुह्यत्, त स्वपदात् प्रच्यावयितु च प्रायतत । तेन गुलाबसिंहात् पूर्वं जम्बूराज्यस्य सर्व प्रबन्धो व्यच्छिद्यत । सत्यपि राजनि प्रजास्वराजकतैवाऽभूत् । सङ्घर्षदावदह्यमान राष्ट्र तिलश शीर्णं, प्रमत्ताधिकारिभि पीड्यमाना प्रजा इतरेषा शरण ययु । एवमियद् विस्तृत द्विगर्तराज्य बहुषु क्षुद्रराज्येषु विभक्तम् । तषा क्षुद्रराज्याना राज्ञा पारस्परिकैर्युद्धैर्द्विगर्ता पर कृच्छ्रमापन्ना ।

अथ द्विगर्तप्रदेश प्रारम्भत एव दशभक्तान्, दृढप्रतिज्ञान् सत्यवादिन, स्वाभिमानिन, गुणग्रहिलान्, निर्भीकान्, दीनोद्धारकान्, दयनीयषु दयालून्, निष्ठुरनिर्दयपशुवृत्तिशत्रूणा मानमर्दकान्, लोकापचिकीर्षयैव राज्यभारस्य वोढॄन् सकललोकहृदयानन्ददायिन, परमसयमिन, साधुसेवकान्, दुर्जनदौर्जन्यापहन्तॄन्, सकल-

जीवलोकस्य समुद्धरणायैव बद्धैकपरिकरान्, जगद्विजयिनो, वीरान्, तथा सकल-शास्त्रार्थसारपारदृश्वन, शान्तान्, विनीतान्, भवसागरात् सकलजीवलोकोद्दिधीर्षयेव तपसि स्थितान्, योगिन, सकलविद्यास्थाननिष्णातान्, काव्यकलाकलननिपुणान्, कर्मकाण्डिनो, लोकोत्तरप्रतिभावतो विदुषो जनयतीति नाविदितमितिहासविदा विदुषाम्, पर रणजीतदेवानन्तर वीराणामालस्येन, स्वार्थान्धतया, पारस्परिकसङ्घर्षेण च, वेदविदुषामौदासीन्येन, उपदेष्टृणा शिक्षकाणा, पुरोहिताना च स्वकर्तव्यपरित्यागेन, प्रजाना दैवदुर्विपाकेन वा पराऽराजकता सम्बभूवास्मिन् प्रदेशे। पर दूयमानमानसा प्रजाजना जगज्जननीमपि द्विगर्तेष्वौरसेष्विव पर स्निह्यन्ती (यस्या अनुग्रहेणाद्यावधि कश्चिद् वैदेशिक, वैधर्मिको वाऽस्य प्रदेशस्य शासको नाभवत्, यस्या उपासका, भक्ता, वीरा एतद्देशपराजिहीर्षया समागतानाक्रमणकारिणो मूलकच्छेद च्छिन्नग्रीवानकार्षु ) ता द्विगर्तमातर त्रिकूटनिलया, भगवती वैष्णवी शरण ययु ।

## गुलाबसिंह

एव किलाख्यायते यद्—रणजीतदेवस्य कनिष्ठभ्रातु सूरतदेवस्य प्रपौत्र किशोरसिहस्तु विशेषरूपेण भगवती प्रत्यह षोडशोपचारै सम्पूज्य, तत्प्रतिमासविधे कञ्चित् काल प्रत्यह ध्यानपरायणीभूय पुनरपि स्वदेशाभ्युदय प्रार्थयामास। किशोरसिहस्य धर्मपत्नी ततोऽप्यधिक देशहितैषिणी पत्या सार्द्धमुपासनायामासीना निमीलितलोचना कपोलयोरश्रुबिन्दूनुद्वहन्ती गद्गदेन वचसा प्रत्यह मातरमवादीत्—

शरण प्रतिपन्ना त्वा प्रजा दुर्जनपीडिताम् ।<br>
रक्ष त्व वैष्णवि ! मात ! वीरमुत्पाद्य कञ्चन ।। इति ।

एव कदाचित् क्षीणभूयिष्ठाया रात्रौ चतुर्थयामे वैष्णवीप्रतिमासविधे स्थण्डिलशायिनी महादेवीनामधेया किशोरसिहस्य धर्मपत्नी स्वप्न सिंहवाहिनी, चतुर्भुजा, सर्वायुधोपेताम्, अनन्तालङ्कारभूषिता, प्रसन्नवदना, मातर वैष्णवीमद्राक्षीत्। दर्शनसमकालमेव च स्वप्न एव सहसोत्थाय रुदती चरणयो पपात। देवी च ता समुत्थाप्य तन्मूर्धान करेण स्पृशन्ती समवादीत्—"वत्से ! जानामि त्वा सर्वजीवहितैषिणी, विशेषेण स्वदेशत्राणाय प्राणानपि उपेक्षमाणामहम्। प्रीतास्मि ते परया, भक्त्या लोकोपचिकीर्षया चानया। परमह त्वत्तोऽन्या वीरजा वीरजाया वीरप्रसू नास्मिन् द्विगर्तदेशे पश्यामि यामपीदानीम्, या द्विगर्तभूभारधारणक्षम, तेजसा राशि, वीर स्वस्या धार-

## महाराज श्रीगुलाबसिंह



जन्म १८४६ विक्रमाब्दे, राज्याप्ति १८७६ विक्रमाब्दे, स्वर्गमनम् १९१५ विक्रमाब्दे

येदिति । अतो ब्रवीमि कतिपयमासानन्तरमेव भारताङ्गभूततिब्बतलद्दाखादिदेशाना शत्रुभिरपहृत्य स्वायत्तीकरणाज्जन्य भारताननकलङ्कपङ्क स्वीयशौर्यसलिलेन प्रक्षाल्य, तदाननस्य पुनरुज्ज्वलीकरणसमर्थं, वीरशिरोमणि, कमपि लोकोत्तर जनयिष्यसि पुत्रम्" इत्युक्त्वा देवी तत्रैव तिरोबभूव । प्रातरुत्थाय महादेवी सर्वं स्वप्नवृत्तान्त प्रीतेन मनसा भर्तार श्रावयामास । सोऽपि त श्रुत्वा परमानन्दनिमग्न इवानन्दगद्‌गदेन स्वरेण समवादीत्—"प्रिये ! सिद्ध न समीहितम्, प्रीता जगन्माता वैष्णवी, भविष्यति निष्कण्टक द्विगर्तराज्यम्, समुत्पत्स्यते तव गर्भाद् वैष्णव्या एव पुनो वीररसेन त्रिभुवनपावनक्षम कश्चिद् वीरशिरोमणिर्महापुरुष ।

ततो गच्छति काले बभार गर्भमसूत च यथासमय सर्वलक्षणोपेत नन्दवेदवस्विन्दुसमिते (१८४९) वैक्रमाब्दे कार्तिकशुक्लपञ्चम्या सुतम् । तदानीमेव किशोरसिंहस्य परमसम्मत, फलिते गणिते च ज्योतिषे दर्शितप्रभाव, ज्यौतिषस्य त्रयाणा स्कन्धाना पारदृश्वा, सकलजनपूजितोऽतीतानागतवर्तमानवेदी तात्कालिकराजवशस्य गुरु, दिवाकरो नाम, ग्रहगतिगणक, ज्योतिर्वित् समुपसृत्य सादमानमानस समवादीत्—"किशोरसिंह ! शृणु अवधानदानेन, न खलु चक्रवर्तिन विहाय मूलव्यतिपातादिसर्वदोषाभिषङ्गरहिते शुभे समये शुभस्थानस्थितेषु सर्वेषु ग्रहेषु ईदृशि लग्ने कश्चिदपरो भजति जन्म । यस्मिन्नद्य ते सुतोऽभिजात" इति ।

एव च स्थलकमल किशोरसिंहस्य हस्ते निधाय—"दिष्ट्या वर्धसे पुत्रजन्मना ! सर्वोऽय भक्तवत्सलाया भगवत्या वैष्णव्या प्रसाद । स्वल्पेनैव कालेनायमपनेष्यति द्विगर्तराजस्य दु खजालम् । सीमान्तशत्रुभिरपहृतान् तिब्बत-लद्दाखादिप्रदेशानाहृत्य पुनरुद्धरिष्यति भारतभुवम् । कुशासकशासनच्छुरिकया शीर्णस्वातन्त्र्य, पङ्कनिमग्न, द्विगर्तराष्ट्र भूय सुशासनसुधया प्रक्षाल्य स्वातन्त्र्यस्नेहसूत्रेण सम्मेलयिष्यति । यथैतत् स्थलकमलसौरभ प्राङ्गणे व्याप्त, तथैवास्य शौर्ययश सौरभ भारते सर्वत्र व्याप्स्यतीत्याशीराशिभिरनुगृह्णतेऽस्मै कुलक्रमागतदिवाकरदैवज्ञाय कृतसाष्टाङ्गप्रणाम किशोरसिंहस्तात्कालिकगृहपरिस्थित्यनुरूप सपादरूप्यक दक्षिणा प्रददौ । गृहीतदक्षिणो दिवाकरदैवज्ञ कृतस्मित सहर्षमवादीत् "किशोरसिंह साम्प्रतमिय भूयसी दक्षिणा । परमस्मिन् सिंहो (गुलाबसिंह) भविष्यति द्विगर्तसम्राजि सपादलक्षमपि दक्षिणा न भूयसी मस्यामह' इत्यभिधाय गृहान् प्रत्यावर्तत दिवाकरदैवज्ञ । जन्मनो द्वादशेऽह्नि स्थलकमलनाम्ना 'गुलाबसिंह' इति सिंहोर्नामधेयमकार्षीत् किशोरसिंह । ततो रसनन्दमुनीन्दुमिते (१७९६) ख्रिष्टाब्दे किशोरसिंहस्य द्वितीय सुतो ध्यानसिंह, तत-

श्चन्द्रशून्यवस्विन्दुमिते (१८०१) ख्रिष्टाब्दे तृतीय सुत सुचेतसिंहश्च जन्म लेभे। तयोर्ध्यानसिंह पञ्चनदसम्राज श्रीरणजीतसिंहस्य महामात्य समभूत्। सुचेतसिंहश्च स्वशौर्यादिगुणै पञ्चनदकेसरिण श्रीरणजीतसिंहस्य सेनापतिपदमध्यतिष्ठत्। तदानी सर्वत्र राष्ट्रेऽध्ययनाध्यापनप्रबन्धाभावेऽपि किशोरसिंहस्य पिता (जोरावरसिंह) स्वपौत्र श्रीगुलाबसिंह स्वसविधे समानीय कुलपण्डितात् प्रान्तीयभाषा संस्कृत चाध्यापिपत्। स्वय च त धनुर्वेद युद्धविधा चाशिशिक्षत्, यस्या किल जोरावरसिंह सिद्धहस्तोऽभवत्। कदाचित् कस्यचित् सम्बन्धिनो विवाहप्रसङ्गेन पित्रा किशोरसिंहेन सह शिरोहि-(सरुईसर)सरोऽगच्छत्। तत्तीरे कश्चित् प्रमदासनामधेयो विरक्त (वैरागी) अमरनाथयात्रातो व्यावर्तमान सरसो रामणीयकेन हृतहृदय पर्णकुटीर निर्माय सन्धुक्षितधूमध्वजोऽतिष्ठत्। श्रीगुलाबसिंह सव्यस्कन्धधृततूणीरोऽपसव्यारोपितधनुष्को वीरवेशेन महात्मान विरक्त (वैरागिण) द्रष्टु जगाम। विरक्त (वैरागी) प्रेमदासो दृष्ट्वैव तमप्राक्षीत् "वत्स! कोऽसि, कुतस्त्योऽसि?" इति। "अह राजपुत्रोऽस्मि जम्बूनगरवास्तव्य" इति गुलाबसिंह समुदतरत्। "किं त्व राज्ञस्तनुजोऽसि?" इति साधु पुनराह। "भगवन्! नाह राजतनय, पर राजसम्बन्धिष्वन्यतमोऽवश्यमस्मि" इति च गुलाबसिंहोऽब्रवोचत्। कृतस्मित साधु पुनरवादीत्—"वीरपुत्रो वीरजातिरहमस्मि इति कथ न ब्रवीषि? पर सशरेण धनुषा निर्दोषप्राणिहनन न शोभते ते। वीरा शत्रून् अभियान्ति युद्धेषु। गच्छ, कस्यचिद् राज्ञ सेनाया सैनिको भूत्वा स्ववीरतागुणानाविष्कुरु। त्व महापुरुषोऽसि, कस्यचिद् भूभागस्याधिपतिर्भविष्यसीति ते भालविशालरेखाभिरनुमीयते। विमुञ्च मामरण्यप्राणिना पक्षिणा च हिंसाम्" इति। गुलाबसिंह प्रत्यावृत्य साधूक्त सर्व स्वपित्रे किशोरसिंहायाऽचकथत्। किशोरसिंहोऽपि साधुमुपेत्याब्रवीत्—"भगवन्! किं सत्यमेव ममात्मजो गुलाबसिंहो महापुरुषलक्षणैरुपेतो महापुरुषत्व लप्स्यते, शौर्यादिगुणैश्च द्विगर्तदेश समुद्धरिष्यति? भक्तवत्सला भगवती वैष्णवी अपि स्वप्नेऽस्य मातरमेवमाह" इति। "कोऽह भगवत्या वैष्णव्या पुरस्तात्? सा तु सकलजगदुदयस्थितिलयैकहेतुभूता सर्वा स्वकृति करामलकवत् पश्यति। अतीतानागते तु तस्या वर्तमान इवासाते। अहन्तु तत्प्रेरणयैवमवादिषम्। परमेन लवपुरे, काबुलेषु, काश्मीरेषु वावश्य प्रेषय, येनास्यान्तर्हिता शौर्यादयो गुणा समाविर्भूयोद्बुध्येरन्" इति प्रेमदास साधुरवादीत्। प्रेमदासो विरक्त (वैरागी) कानिचिद्दिनानि शिरोहि-(सरुईसर)सरसि उषित्वा तत कदाचित् सूति(सूई)नाम्नि ग्रामे समागत्य स्वकृतपर्णकुटीरेऽतिष्ठत्। साधुभक्तो गुलाबसिंहस्तत्रापि बहुधा गाम गाम प्रेमदासममेवत। मनसि नमध्यात्मगुरुममन्यत। सोऽष्ट कदाचिदसनूरनगर गच्छन् मार्गे गुरुदर्शन कृत्वैव गमिष्या-

मीति कृतमतिर्गुरुदर्शनार्थं ग्राममगच्छत्। गुरोश्चरणयो कृतसाष्टागप्रणामो गृहीताशीराशि, गुरोरादेशेनाशनपानादिक विधाय, तदुपदेशामृतपान कुर्वाणो निशि गुरुचरणयोरेवाऽशयिष्ट।

प्रेमदास प्रातरुत्थाय, शौचस्नानसन्ध्यावन्दनदेवपूजादिक विधाय, समाधिमन्दिराद् वहिरागत्य च शयान त गुलावसिंह पादस्पर्शेनाद्बोधयन्—"उत्तिष्ठ भो ! प्राच्या समुदितो भगवान् भास्कर, अवसीदति तवाभिप्रेतस्थानगमनवेलेति" समवोचत्। गुरुपादस्पर्शेनोद्बुद्धो गुलावसिंहो "गुरुपादा ! बह्वनिष्ट सम्पन्न, यदह गुरुपादैरुद्बोधित। अहमास स्वप्ने द्विगर्तभूपति सवृत्त। शिरसि किरीट निधाय वीरवेशो हिमालयाधित्यकाया स्थितो लक्षश सैनिकान् समादिशमासम्। काश्मीरान् पराजित्य पाकिस्तान-कोहला-पुनाल-यासीन्-भूटान्-सिक्कम-लद्दाख-अस्कर्दू-कर्गल-गिलगित-सोनामर्ग-लूनलखपर्वत-स्यागादिदेशान् स्वायत्तीकृत्य भारतीयसीमा काबुल-गान्धार-खुरासान्-रूस-कम्बोज-चीनादिदेशै सह समबध्नाम्" इति। तत् समाकर्ण्य कृतस्मितो महात्मा प्रेमदास सहर्षमाह—"गुलावसिंह ! यत्त्वया स्वप्ने दृष्ट तत् सर्वं पुरस्कृतमिव जानीहि। त्वत्कृते कृतप्रयत्नोऽहमपीद सर्वं समाधौ साक्षादकार्षम्। अहन्तु तव शरीरसन्नाह सार्वभौमोचित विशाल भाल च समवलोक्य प्रागेवेद सर्वमज्ञासिषम्। परमिदानी तव स्वप्ने मम समाधौ च सर्वं भावि प्रत्यक्षायितम्। साम्प्रतमितो दूर देशान्तर गत्वा भाग्य परीक्षस्व। यावत् कामपि महती पदवी नाप्स्यसि, तावन्ममाभिमुख नायास्यसीति प्रतिजानीहि। स्वल्पेनैव कालेन सेत्स्यति ते समीहित ममाशीर्भि" इति। गुलावसिंहोऽपि गुरुचरणयो साष्टाग प्रणम्य गृहीताशीर्नाथ प्राचनदसनूर प्रति।

वसुशून्यदिगीशेन्दुमित (१८०८) ख्रिष्टाब्दे द्विगर्तराज्यस्याभ्यन्तरीयदुर्दशा वर्णाकर्णिकयाऽऽकर्ण्य पञ्चनदकेसरी महाराज श्रीरणजीतसिंहो हुकमासिंहचमनीनामधेय सेनापतिमादिदेश—'सर्वं द्विगर्तराज्य विजित्य पञ्चनदराज्ये सम्मेल्यताम्' इति। आदेश समुपलभ्य हुकमासिंहसेनापतेरधिकारस्थं सैनिकं परितो जम्बूनगर समाक्रान्तम्। द्वैगर्तिकवीराणा सिक्खसैनिकै सार्द्धं तुमुल युद्धमभूत्। परमनन्तसिक्खसैनिकसमक्षे द्विगर्तवीरा अधिककाल स्थातु न प्राभूवन्। तान् युद्धाद् व्यावर्तमानान्निरीक्ष्य वीरवेशोऽश्वारूढो दक्षिणकरगृहीतनग्नखड्ग षोडशवर्षदेशीयो लोहितोष्णीष कश्चिद् युवा—"भो भो वीरा ! युद्धात् पलायन न वीराणा कर्तव्यम्, पलाय्य पत्नीभ्य. कथ मुख दर्शयिष्यथ ? नासा व्यङ्ग्योक्ती कथ सहिष्यध्वे ? आगच्छत क्षण युध्यध्वम्। भविष्यत्यत्र पौरुषपरीक्षणम्, अय समयो दशसेवाया। अन्यथा गहेशूरता-

मवाप्स्यथ यूयम्" इत्येव वदन् गिरिनदीवेग इव शत्रुसेनासु प्रविशन्नुभयपक्षीयैं सैनिकैर्दृष्ट । केवल मोटासिंहेन परिचित्य "गुलाबसिंह ! कुतो भवान् ?" इत्यभिहितम् । "केवल युद्धदिदृक्षया समागतोऽस्मि" इति गुलाबसिंहोऽवदत् । क्षणेन चासौ सहस्रश शत्रुसैनिकाना शिरासि कवन्धच्छिन्नान्यकार्षीत् । अशरणाश्शत्रुसैनिका पलाय्य क्व गता इति न केनापि अज्ञायि । युद्धस्थल सर्वं रिक्तीभूतम् । "जित गुलाबसिंहेन" इति वार्ता सर्वत्र द्विगर्तेषु क्षणेन व्याप्ता ।

डस्काप्रदेश विजित्य शालिवाहननगरम् (स्यालकोटम्) आगतस्य श्रीरणजीतसिंहस्य पुरस्तात् सेनापतिर्मिश्र **श्रीदीवानचन्द्रो** गुलाबसिंहस्य शौर्यं, दृढता, धीरता, गम्भीरता, लोकोत्तर पराक्रम, युद्धकौशल चास्तौत् । तत किञ्चित्कालानन्तर सेनापतिर्**निहालसिंहो**ऽपि महाराजश्रीरणजीतसिंह गुलाबसिंहस्य गुणान् अशिश्रवत्, यैं प्रभावितो महाराजश्रीरणजीतसिंहो मोटासिंहमलेखीत्— "भवान् गुलाबसिंह मदीयसभाया सद्य समुपस्थापयतु" इति । **मोटासिंहात्** सर्वमवगत्य गुलाबसिंहस्य पिता **श्रीकिशोरसिंहो दौलूशाहनाम्नो** धनिन सकाशात् किञ्चिद्धनमेकमश्व च ऋणरूपेणादाय गुलाबसिंह तदनुज चतुर्दशवर्षदेशीय **ध्यानसिंह** च महाराजश्रीरणजीतसिंहस्य सभाया प्राहिणोत् ।

महाराजश्रीरणजीतसिंहो दर्शनसमकालमेव पञ्चसप्तत्यधिकशतद्वयरूप्यकाणि मासिकमस्य वेतन स्थिरीकृत्य कस्यचित् सेनाखण्डस्य सञ्चालकपदमेनमध्यतिष्ठिपत् । गुलाबसिंहगुणैं प्रीतो महाराज श्रीरणजीतसिंह षष्टिरूप्यकाणि **ध्यानसिंहस्य** मासिक वेतन निर्णीतवान् । गुलाबसिंहगुणानुरागेण तस्य कनीयास भ्रातर **सुचेतसिंह** तत्पितर किशोरसिंहमपि समाहूय स्वसभाया नियुक्तवान् । **गुलाबसिंह-ध्यानसिंह-सुचेतसिंहेषु** त्रिषु पुत्रवदस्निह्यत् स महाराज । कतिपयैरेवाहोभिस्त्रयोऽपि भ्रातर श्रीरणजीतसिंहस्य सभाया सम्मानिता अभूवन् । पर तेषु गुलाबसिंह स्वीयैं शौर्यौदार्यसौजन्यन्यायनैपुण्यादिभिर्गुणैं सर्वान् राजपरिषद सदस्यान् पञ्चनदकेसरिण श्रीरणजीतसिंह च तथाऽऽवर्जितवान् यथाऽय प्रसादस्य, मानस्य, प्रेम्ण, विश्रम्भस्य, सम्पद, शासनस्य, नर्मण, प्रभावस्याधिकाराणा च परा कोटिमारोपित पञ्चनदकेसरिणा श्रीरणजीतसिंहेन । क्रमेणासौ सेनाया सेनानीपदमध्यतिष्ठत् । युद्धेषु सहस्रश सम्मुखागतान्, अतिदुर्दान्तान् दुराधर्षतमान्, प्रजाविद्वेषिणो रिपून् व्यद्रावयत् । हिराक-कम्बोज-(काबुल)-गान्धार-(कन्धार)-समरकन्दप्रभृतिदेशवास्तव्या स्वप्नेऽपि "समागतो गुलाबसिंह, पलायध्व पलायध्वम्" इति विलेपु । तदिदमस्ति

**गुलाबसिंहस्य** प्रशस्तिपद्यत्रयम्—

आसीद् यश्च **गुलाबसिंहनृ**पतिर्भूमण्डलाखण्डलो
भूयो येन विनिर्जिताऽखिलधरा याऽऽसीन्निजा प्रागित ।
दुर्गं पर्वतमार्गमाशु सुगम कृत्वाभियानैरसौ
लद्दाखादिसमस्तपार्श्वविपयाधीशान् जिगायोद्धतान् ॥१॥
देशा रूसवनायुपारसमहाचीनावचीनादिका
याकिस्तानकुनालसिक्कमखुरासान्कोहलास्कर्दुका ।
गान्धारा. सतुरुष्कभोटगिलगिरस्याग्यारकन्दाद्रय ,
तस्मिन् मन्त्रयति प्रकम्पमभजन्नस्माच्च जीयादिति ।
य सन्नद्धमभीरुमुद्धृतमहाखड्ग विलोक्याग्रतो
दत्त्वा पृष्ठमपाद्रवन् महदपि म्लेच्छाधिपाना बलम् ।
प्रोचे यश्च पिशोरखैह्वररणे त काबल काबलम्,
मन्ये तेन तदादि तत्पुरमपि ख्यात क्षितौ काबलम् ॥

असौ पुरुपव्याघ्रो, महाराजो गुलाबसिंह उपर्युक्तान् समस्तानपि देशान् विजित्य महाराजाय पञ्चनदकेसरिणे श्रीरणजीतसिंहाय समार्पिपत् । एवमादिभि. गुणै. कार्यैश्च परमप्रीतो महाराजरणजीतसिंहो गुलाबसिंहस्य स्तुतिभि शौर्यवर्णनैश्च पुनरुक्ति नामन्यत । आनन्दगद्गदीभूतश्चैकमपि वाक्य वार वारमुच्चारयन् नासौ विरराम ।

गुलाबसिंहस्य तादृश शौर्यमतिमानव युद्धकौशल, सकलजनमनोरञ्जनी-मनुशासनशैलीमुचितोचितनिग्रहानुग्रहविधायिनी सूक्ष्मातिसूक्ष्मविपयविवेचिका राज-नीतिं, परा स्वामिभक्तिं, प्राणानप्यनपेक्ष्यमाणान्, दयनीयेपु दया, विद्वत्सु मान, किम्बहुना, महाराजोचितानखिलानपि गुणान् समालोक्य सम्यक् परीक्ष्य च **चन्द्रभागा**-तीरस्थे 'अखनूर'नाम्नि नगरे सपरिवार **गुलाबसिंहं** समाहूय तत्र शोभमानस्य घनच्छायस्य 'पुत्रजीव'नामकस्य वृक्षस्याधस्तात् नेत्राश्विवसुवसुमतीमिते (१८२२) खिष्टाब्दे जूनमासस्य पोडश्या १६ तारिकाया प्रातरेव महाराज **श्रीरणजीतसिंहः** स्व-दक्षिणहस्ताङ्गुष्ठेनोपरिष्टादधोमुख राज्याभिषेकतिलक महाराजश्रीगुलाबसिंहस्या-कार्षीत् । तदानी तत्र सर्वेऽपि राजान , सामन्ता , मन्त्रिण , प्रान्तीयसभ्याश्च समुपस्थिता आसन् । तेष्वन्यतमेनोत्थायाभिहितम्—"देव ! किञ्चिद् विवक्षुरस्मि, यदि स्यादा-देशः श्रीमताम्, अपराधश्च न मन्येत श्रीमद्भिः." इति । "आम् ब्रूहि, शृणुम." इत्याह

श्रीरणजीतसिंह । "अधस्तादूर्ध्वं विधिस्तिलकस्य, श्रीमद्भिस्तूपरिष्टादधोमुखो व्यधायीति किमत्र रहस्यम्" इति सप्रश्रयमवादीत् प्राश्निक । "मया राज्यवृक्षस्य बीजमधस्ताद् भूमावुप्त येनाय राज्यवृक्षो दृढ स्थिरमूलश्च सन् चिराय पत्रित, पुष्पित फलितश्च भवेद्" इत्याह पञ्चनदकेसरी ।

तत प्रभृति शौर्येण, नीतिनैपुण्येन, सामादिभिरुपायै, बुद्धिविभवेन वा पूर्वपश्चिमोत्तरदिग्भागेषु दूरदूरतर विद्यमानान् **लद्दाख-तिब्बत-अरनास-चिलास-ऊडीपुनाल-स्याग-भद्रवाह-किस्तवाड-भिम्बर-राजौरी-हमीरपुर-पुञ्छादिप्रदेशान्** तत्काल केवल प्रजापीडनपरान् निर्जित्य भारतीयराज्यसीमा **रूस-चीन-अफगानिस्तान-नेपाल-भूटानदेशै** सहामीमिलन् महाराजो गुलाबसिंह । भारताङ्गभूता अपीमे तिब्बतादयो देशा भारताद् विच्छिन्ना इति महता कालिम्ना लिप्तानि भारतीयाना मुखानि महाराजश्रीगुलाबसिंह स्वीयशौर्यसलिलेन प्रक्षाल्य पुनरुज्ज्वलीकृतवान् । एभिरन्यैश्च कारणै भारतवर्ष महाराजगुलाबसिंहस्य चिराय ऋणमावहति, कृतज्ञता च प्रकाशयति, उपकृति च मन्यते ।

असौ महाराज**श्रीगुलाबसिंहो** न केवल शूरो, नीतिज्ञ, प्रजारक्षकशासक एवासीत्, अपि तु मनोविज्ञानमर्मज्ञतया सर्वोत्तमसुधारक, परमधार्मिकोऽपि तत्सदृशो नान्य कश्चित् तदानीमासीत् । अत सोऽज्ञासीदिद यत्—"प्रजासयमसाधन यथा धर्मज्ञान धर्माचरण च विद्यते, न तथा दण्ड उपायान्तर वा । धर्मो हि बुद्धि पुष्णाति, विवेक वर्धयति, विद्या विज्ञान च सम्पादयति, बुद्धिपोषकतया पापानि प्रतिबध्नाति च । सति तस्मिन् धर्मे न तानि समुत्पद्यन्ते । यतो हि पापस्य सूक्ष्मबीजमशुद्धे मनस्येव प्राक् प्ररोहति । मन शुद्धिस्तु सत्येन । यदुक्त मनुना–

"मन सत्येन शुद्धचति" इति ।

सत्यानृतयोर्निर्णयस्तु धर्माधिवासितबुद्धिविद्याभ्यामेव भवितुमर्हति । ततो यत्र धर्मस्तत्र पापोद्भव एव न भवति । पर धर्मविहीन राज्यशासन प्रजाना मानसिकविचारान् पवितु न प्रभवति । तत् (धर्मविहीन शासनम्) केवल शरीरकृतपापानि पश्यति, शरीरमेव दण्डेन युनक्ति च, पर पापाऽऽकरस्य मनसो मालिन्येऽकिञ्चित्कर तादृश राज्यशासनम् । सत्यपि तस्मिन् (धर्मविहीने राज्यशासने) प्रजा दु खैर्न विमुच्यन्ते, स्वातन्त्र्येण किमपि सम्पादयितु न प्रभवन्ति च । अधिकारिपूत्कोच प्रवर्धते । व्यापारिषु व्यावहारिकयशुद्धि (ब्लैक) एधते । तरुणेपूच्छृङ्खलता सम्भवति । ते नारीणा सतीत्वमवमन्यन्ते, स्वैरित्व चाऽनुमोदयन्ति । यदा देशनगरनिगमजनपदाधिकारिणो धर्म-

मुत्सृज्याऽधर्मे प्रवर्तन्ते, तदाश्रितोपाश्रिता पौरजानपदा व्यवहारोपजीविनश्चापि स्वाधिकारिण प्रसादयितुताननुसरन्तस्तमधर्मं वर्धयन्ति, सर्वा प्रजामधर्मे प्रवर्तयन्ति च । तत प्रवृद्धलोभरोपमोहाभिमाना प्रजाजना दुर्वलानवमन्यन्ते, सज्जनान् निन्दन्ति, विदुपो द्विपन्ति, कुलदारान् प्रतारयन्ति, गुरुवृद्धसिद्धर्पिपूज्याना सदुपदेशान् न शृण्वन्ति, सदुपदेष्टॄनवमन्यन्ते, स्वार्थाभिहृता स्वजनानपि घ्नन्ति, परानभिक्रामन्ति परैर्वाभिक्रम्यन्ते, तेन सर्वं राष्ट्र ध्वसमायाति । यस्माद् धर्म एव राज्ञामपि शासक, नेतृणामपि नेता, शिक्षकाणामपि शिक्षकश्च । तदुक्त वृहदारण्यकोपनिपदि—

"तदेतत् क्षत्रस्य क्षत्र यद्धर्मस्तस्माद् धर्मात् पर नास्ति" इति ।

पर धर्मज्ञानन्तु विद्ययैव भवितुमर्हति । वेदा, दर्शनानि, स्मृतय, पुराणादीनि च विद्येत्युच्यन्ते । तानि संस्कृतभाषयैव प्रतिपाद्यन्ते । अत सस्कृतभापा तत्प्रतिपादितवेदादिशास्त्राणि चाध्यापयितु प्रतिग्राम प्रतिनगर चैकैका पाठशाला कारयित्वा तासु वैतनिकान् विदुपोऽध्यापकान् प्रायुङ्क्त महाराज श्रीगुलावसिंह । पिपठिपून् छात्राश्च पाठशालासु विद्यालयेपु च प्रवेश्य, तेपा भोजन-वसन-निवासादिप्रवन्धमप्यकार्पीत् । श्रीरघुनाथमन्दिरप्रतिष्ठानन्तर तत्रैव संस्कृतस्य महाविद्यालय सस्थाप्य तत्र सर्वशास्त्राणा सारपारवेदिन श्रीगोकुलचन्द्रशास्त्रिण सर्वतन्त्रस्वतन्त्रान् प्रमुखाध्यापकपदमध्यतिष्ठिपत् । तत्सहचरान् दौगरानन्याश्च भारतस्य स्थानास्त्यानादाहूतान् काश्चिदेकैकशास्त्रसम्राजो विदुप तत्तच्छास्त्राध्यापकपदमध्यतिष्ठिपत् । पुरमण्डलं, देविकां चैतत्तीर्थद्वय सम्मेल्य काशीविधित्सया गण्डकीनर्मदाभ्या शालग्रामशिला समानीय, तीर्थद्वयतीरे सर्वत्र सुन्दराणि मन्दिराणि निर्माप्य, तेपु शिवप्रतिमाना शालग्रामशिलाना च स्थापन विधाय, विदुपो ब्राह्मणानर्चयितु प्रायुङ्क्त । गृहस्थोचितसर्वसम्पद्भिश्च तान् समतोपयत् ।

तदस्त्यत्र प्रशस्तिपद्यत्रयम्—

गण्डक्या नर्मदायाश्च गयाया अपि ता शिला ।
आनीय देविकादेवी सर्वदेवमयी कृता ॥१॥
उद्धृत केवल वेदो हयग्रीवेण नापरम् ।
उद्धारयति विद्वद्भि सोपवेदागमानयम् ॥२॥
काशीब्रह्मसर प्रयागमथुरा वृन्दावनस्वर्धुनी-
माहात्म्य समवर्धयत्समधिकैर्यं स्नानदानादिभि ।
रत्नाढ्यैर्वलयाङ्गुलीयमुकुटै केयूरयुक्कुण्डलै
कौशेयैश्च सभाजयन् द्विजवरान् य सर्वयाऽतोपयत् ॥३॥ इति ।

## रणवीरसिंहः

वार्धक्ये महाराजश्रीगुलाबसिंहः सर्वं राज्यभारं स्वात्मजे **रणवीरसिंहे** निधाय स्वयं विरक्तो दाशरथिं भजन् काश्मीरेष्वेकान्तं सेवमानो विदुषां सङ्गमशिश्रियत्। तदुच्यते—

य सम्भाव्य धराधुरं निजधिया वोढुं समर्थं निजं
पुत्रं श्रीरणवीरसिंहमखिलप्रेमास्पदं सद्गुणैः।
तस्मिन्नात्मसमे निधाय सकलां राज्यश्रियं सन्मना
दध्यौ श्रीरघुनाथमत्र कथयँल्लोके निजात्मज्ञताम्॥

काश्मीरप्रान्ते अष्टम्याः ख्रिष्टशताब्द्या आरभ्य द्वादशशताब्दीं यावत् संस्कृतसाहित्यस्य नितरां समुन्नतिरभूत्। अस्मिन् कालेऽभिनवगुप्त-क्षेमेन्द्र-जोनराज-मम्मट-कल्हण-बिल्हण-लल्लेश्वर-उद्भटादयोऽनेके विद्वांसो भारतभूमेः शीर्षस्थानं भूस्वर्गं काश्मीरप्रदेशमलञ्चक्रुः। तैर्विद्वद्भिः संस्कृतवाङ्मयस्य भाण्डागारं स्वनिर्मितैरनेकैर्ग्रन्थरत्नैः सततं सवर्द्धितं। तस्मिन् काले शैवदर्शनस्य सर्वाधिकानि ग्रन्थरत्नानि निर्मितानि, परं खेदविषयोऽयं यदियं परम्पराग्रिमासु शताब्दीषु लुप्तप्राया जाता। १८५७ ख्रिष्टाब्दे यदा विद्वत्प्रियो वैदिकसनातनधर्मोद्धारको धीमान् **रणवीरसिंहो** जम्बू-काश्मीरराज्यसिंहासनेऽभिषिक्तस्तदा पुनर्जम्बूप्रान्तेन सह काश्मीरप्रान्तेऽपि गीर्वाणवाण्या भाग्योदयो जातः। किं बहुना, श्रीमान् रणवीरसिंहमहाराजोऽसौ सुरभारत्या स्वकीयः पुत्र इवास्यां भूम्यां तस्याः धर्मस्य चोद्धारायैवावतरितवान् इति प्रतीयते स्म।

अमुना महाराजेन राज्यारोहणानन्तरमेवानेकेषां देवालयानां, विद्यालयानां, पुस्तकालयानां, मुद्रणालयानां च स्थापना कृता, स्वराज्यादन्यान्यस्थानेभ्यश्च विद्वांसोऽत्राहूताः, एषु कार्येषु च वैतनिका अवैतनिका वा ते नियोजिताः। सर्वत्र राज्ये धर्माचरणस्य विद्यापठनस्य च चर्चा प्रारब्धा। स प्रजासु सर्वत्र शान्तिम्, उल्लासं च स्थापितवान्। सत्यमेव यत्—"यतो धर्मस्ततो जयः" इति, "यथा राजा तथा प्रजा" इति च।

अमुष्य धर्मप्रियस्य राज्ञो जन्म १८२६ ख्रिष्टाब्दे जम्बूप्रान्तस्य **'रामगढ'**-नाम्नि नगरेऽभूत्। बाल्यकाले तस्य पालन-पोषणशिक्षादीनां समुचिता व्यवस्थाऽऽसीत्। तत आरभ्यैवास्य स्वधर्मपालने महती रुचिरुदभूत्। अतीव तीक्ष्ण-

महाराज श्रीरणवीरसिंह



जन्म १८८६ विक्रमाब्दे, राज्यप्राप्ति १९१४ विक्रमाब्दे, स्वर्गगमनम् १९४२ विक्रमाब्दे

बुद्धित्वादमुनात्यल्पेनैव समयेन सर्वा विद्या सुगमतयाऽभ्यस्ता । युद्धविद्याया चाप्यमुना पूर्णतया निपुणता प्राप्ता । अत एवासौ स्वपित्रा गुलाबसिंहेन समये-समये युद्धाय प्रेष्यते स्म । काश्मीरप्रान्ते सिखराज्यपालेन शेख-अमीमेन सह योद्धु यदा गुलाबसिंहेन सेना प्रेषिता, तदाऽसावेव जम्बूसेनाया अधिपतिरासीत् । एव गिलगितप्रान्तयुद्धेष्वपि रणवीरसिंह एव सेनापतिरूपेण प्रेषित आसीत् ।

तात्कालिकप्रथानुसारेणास्य विवाहश्चतुर्दशवर्षायुष्येव १७४३ खिष्टाब्दे विजयसिंहनृपते शिवानामधेयया पुत्र्या सह बभूव ।

१८५६ खिष्टाब्दे यदा श्रीगुलाबसिंहो रुग्णो जातस्तदास्यास्थायिरूपेण फरवरीमासस्य प्रथमाया तारिकाया राज्यारोहण सम्पन्नम् ।

१८५७ खिष्टाब्दे यदा भारते प्रथम स्वतन्त्रतासग्राम प्रारब्धस्तदासौ पितुराज्ञया दीवानहरिश्चन्द्रेण सह महती सेना गृहीत्वा देहली गतवान् ।

तस्मिन् वर्षे, यदामुष्य पितुर्मृत्युरभूत्तदा राज्याभिषेके जातेऽसौ महाराजो घोषित ।

राज्यारोहणानन्तरमेवासौ स्वपूर्वार्जितसस्कारैर्विद्याधर्मप्रजासु स्वानुराग प्रदर्शयितुमारब्धवान् । तत्समकालमेव जम्मू-काश्मीरराज्येऽन्याभिर्भाषाभि सह सस्कृतवाङ्मयस्यापि प्रतिष्ठा दिनाद्दिन परिवर्द्धितुमारब्धा । सूर्यवशीयत्वात् स्वपूर्वजरामादिवत् पुनर्भूलोके धार्मिकमर्यादा स्थापयितु प्रयतितवानसौ । स्वराज्य च धर्मस्य केन्द्रमिति घोषितवान् । तेन राज्ये बहुत्र अनेकेषा देवालयाना निर्माण कारितम् । तेषु जम्बूनगरस्य श्रीरघुनाथमन्दिरमतीव प्रसिद्ध वर्तते । अष्टादशमन्दिरेषु श्रीरघुनाथस्य देवालयो विशालतम । तस्यैव पृष्ठभागे महाराजरणवीरसिंहेन सस्कृतमहाविद्यालय सस्थापित, यत्रानेकेषा विषयाणामध्यापन क्रियते । एवमेवामुना श्रीनगरेऽपि सस्कृतमहाविद्यालय सस्थापित । अनयोरुभयो सुयोग्या विद्वासो नियोजिता । तेषु चानेके भारतस्यान्यान्यप्रान्तेभ्य आहूता समुचितेन वेतनेन सम्मानिताश्च । अनयोश्छात्रा अपि भारतस्यान्यान्यप्रान्तेभ्य आगत्य विद्यामध्येतुमारब्धवन्त ।

छात्राणा कृते भोजन-निवास-वस्त्रादीना व्यवस्था महाराजेन सस्थापितधर्मार्थविभागेन निजकोषात् क्रियते स्म । श्रीनगरस्थे महाविद्यालये एतादृशी व्यवस्थासीत् । उभयोर्विद्यालययो पठिता विद्वास सर्वत्र भारते महाराजस्य यश पताका दोधूयन्ते स्म ।

महाराज स्वयमेव मध्ये मध्ये विद्यालययोर्निरीक्षण करोति स्म । छात्राणा परीक्षासमये तु सर्वदैवागत्य, तेषा च निरीक्षण कृत्वा स्वयमपि प्रश्नान् पृच्छति स्म । उत्तीर्णच्छात्रेभ्यो योग्यच्छात्रेभ्यश्च छात्रवृत्ति पारितोषिक चापि वितरति स्म । विशेषच्छात्रवृत्ति प्रदाय योग्यच्छात्रानयमुच्चशिक्षार्थं वाराणसीमपि प्रेषितवान् ।

१८५७ ख्रिष्टाब्दे यदा प्रसिद्धो योरोपीयो विद्वान् डा० व्हूलर श्रीनगरे संस्कृतपाण्डुलिपीनामनुसन्धानार्थं गतवान्, तदासौ महाराजस्तमपि श्रीनगरस्थ संस्कृतविद्यालय दर्शितवान् ।

एवमेवामुना जम्बूप्रान्तान्तर्गते पुरमण्डलनाम्नि तीर्थे बहवो देवालया, उत्तरवाहिन्या देवालया संस्कृतमहाविद्यालयाश्च संस्थापिता । जम्बूनगरेऽन्यत्रापि च देवालया संस्थापिता । एषु च श्रीरणवीरेश्वरमहादेवस्य मन्दिरमतीव प्रसिद्ध सुन्दर च वरीवर्ति । श्रीनगरस्थे गदाधरमन्दिरेऽपि प्रसिद्धि सौन्दर्यं चातितमा विराजेते । महाराजेन हरिद्वार-वाराणसी-गयायोध्यादिषु तीर्थेषु धर्मप्रचाराय यात्रिणा सौकर्याय च स्वधर्मार्थविभागस्य शाखा संस्थाप्य स्वकीयधर्मप्रियताया परिचयो दत्त । राज्यान्तर्वर्तितीर्थेष्वपि महाराजाज्ञया तीर्थयात्रिणा सौकर्याय यात्रावसरे विशेष प्रबन्धो विधीयते स्म ।

असौ महाराजो धर्मसम्बन्धिशङ्कासमाधानाय समये समये विदुषा सभा कृत्वा स्वसमक्षे निर्णय कारयति स्म । तासु गोष्ठीषु विभिन्नाना शास्त्रीयविषयाणा चर्चापि क्रियते स्म । तासु सभासु राजकीयविद्यालयाना विद्वास, राजसभापण्डिता, भारतस्यान्यान्यभागेभ्यश्चामन्त्रिता विद्यावारिधय समुपतिष्ठन्ते स्म ।

गोधनस्याभिवृद्धयेऽपि महाराजेन विशिष्टा रुचि प्रदर्श्य स्थाने स्थाने गोशाला संस्थापिता । यत्र तत्र धर्मशालाश्चापि निर्मापिता ।

तस्यातीव महत्त्वपूर्णं कार्यं संस्कृतपाण्डुलिपीना संग्रह, तासा प्रकाशन पुस्तकालयस्य स्थापन च मन्यते । तदुपरिष्टाद् विस्तरेण वक्ष्यते ।

महाराजेन सर्वप्रथम जम्बू-काश्मीरराज्यस्यैव विद्वास आमन्त्रिता, ते च प्रश्रयप्रदानेन सम्मानिता । ततश्चान्ये वाराणस्या, वङ्गप्रदेशात्, जयपुरादिप्रदेशेभ्यश्च पण्डितवर्गा ससम्मानमामन्त्रिता स्वसभाया सभाजिताश्च । तेभ्यश्च केचित् स्वसभायामेव प्रतिष्ठापिता, अन्ये जम्बूनगरे नवनिर्मितविद्याविलासमुद्रणालये मुद्रणसम्पादन-लेखनादिकार्याणा सम्पन्नतायै नियुक्ता । अपरे च श्रीरघुनाथमन्दिरस्य पुरत

संस्थापिते श्रीरणवीरपुस्तकालये कार्यभारसमर्पणेन सभाजिता । एवं तत्र तत्र कार्येषु नियुक्ता विद्वांसः स्व-स्वकार्याणि पूर्णपरिश्रमेण, मनोयोगेन च चक्रुः ।

महाराजश्रीरणवीरसिंहसदृशो विद्यानुरागी, संस्कृतप्रचारार्थं सर्वस्वमप्यर्पयिता तदानीं सर्वस्मिन् भारतेऽपि कश्चिन्नाभवत्, किमुत दुर्गरेषु । तस्यापि कतिचित् प्रशस्तिपद्यानि समुदाह्रियन्ते—

येनात्मीयकुलप्रधानधरणीपालाप्तराज्याधिका,
राज्यश्री समुपार्जिता, प्रतिदिनं वृद्धिश्च तस्याः कृता ।
आपूर्वापरदक्षिणोत्तरपयोराशिभ्य उद्भाविता,
सर्वत्र क्षितिपेषु कुन्दधवला श्लाघ्या निजा कीर्तयः ॥१॥

प्रातः प्रत्यहमीश्वरार्चनविधिं दानं च कृत्वाऽऽदराद्
आमध्याह्नविधेयराज्यरचनाऽभिज्ञात्मगोष्ठ्युत्सवः ।
मध्याह्नोत्तरमप्युदारधिषणः स्थित्वा समाजेऽन्वहं,
योऽपश्यत्प्रतिसायमात्मपृतनाव्यूहांश्च साङ्ग्रामिकान् ॥२॥

येनाहूय निबन्धकूपविशदग्रामोर्वराऽऽरामभू-
भूषाभिः परितोषिता सुविदुषा सर्वागमज्ञा द्विजाः ।
सौराष्ट्रद्रविडान्ध्रगुर्जरगयाकाशीकुरुक्षेत्रतः
शास्त्रस्योद्धरणाय पङ्ककुहरप्राये सिमङ्क्षा कलौ ॥३॥

नासंस्कृतः कोऽपि मदीयराष्ट्रे भवेत् त्रिवर्णेष्विति भूरि दत्त्वा ।
धनं चतुर्वेदविदोऽपि विप्राः काशीपुरो येन समाह्वियन्त ॥४॥

यस्त्रैवर्ण्यविधिं विधित्सुरखिले राज्ये निजे नैगमम्
प्रत्याहूय तदुद्भवाय चतुरो विप्रांश्चतुर्वेदिनः ।
प्रत्येकं शतमुद्रिकां रजतजां दत्त्वा भृतिं मासिकीं
तेभ्योऽन्नाम्बरसंश्रयादिभिरपि च्छात्रान् समध्यापिपत् ॥५॥

यः सन्ध्या समुपास्यतामिति समादिशद् द्विजान् सर्वशः,
नाऽधीता यदि साऽधुना विधिवदध्येया श्रुतिश्चाखिला ।
विप्रैः पुंसवनादिका श्रुतिभवा सम्पाद्यता संस्कृतिः
यः कुर्यादधिकं प्रियोऽस्ति स हि मे नो चेदपाङ्क्तो भवेत् ॥६॥

न कोऽपि मूर्खो विषयेऽत्र तिष्ठेदित्थं कृतो येन विदा निदेशः ।
शास्त्रेष्वधीती प्रतिशालमेकः सुपण्डितोऽस्यापि च पाठनाय ॥७॥
नानाशास्त्रश्रौतशैलीसरित्सु निष्णाता ये संस्कृतप्राकृताब्धौ ।
गोष्ठीस्तेषां योऽर्थसिद्धयै व्यधत्त प्रातः प्रेम्णा प्रत्यहं पण्डितानाम् ॥८॥
विज्ञैः सतार्किककुलैः रसकर्मयुक्तैस्तज्ज्ञैर्भिषग्भिरथ शब्दविदां वरिष्ठैः ।
वैशेषिकैरपि विशेषपदार्थविज्ञैः सांख्यैश्च योगनिपुणैर्नृपनीतिविद्भिः ॥९॥
सद्वैदिकैः परिलसच्चतुरागमज्ञैर्मीमांसकैरखिलकर्मकलापदक्षैः ।
वेदान्तिभिश्च विधिवद् विदितात्मतत्त्वैः काव्यामृताद्भुतकथाकुशलैः कवीन्द्रैः ॥१०॥
पौराणिकैः प्रणयवद्भिरुदारगाथासङ्कीर्तनैर्गणितशास्त्रविशारदैश्च ।
अन्यैरुदभ्यसितरीतिमदन्यविद्यापारगतैरमलकैरलिशाकुनैश्च ॥११॥
मन्त्रप्रयोगनिपुणैरखिलस्वरज्ञैः स्वीयैः सुवर्णवलयाङ्गदकुण्डलाढ्यैः ।
आगन्तुकैरपि विशद्भिरहर्दिवं यत्पूजागृहं सुविशदं प्रबभूव पूर्णम् ॥१२॥

किं बहुना, महाकविना कल्हणेन राजतरङ्गिण्यां (४।४८६-४८७,४९०-४९३) राज्ञो जयापीडस्य प्रशस्तौ विहिता. श्लोकास्तस्मिन् श्रीरणवीरसिंहे पुनरावृत्ति भेजिरे, ते *यथा*—

उत्पत्तिभूमौ देशेऽस्मिन् दूरदूरतिरोहिता ।
कश्यपेन वितस्तेव तेन विद्याऽवतारिता ॥४८६॥
वचो मूर्खोऽयमित्येवं कस्मैचिद् वदते स्फुटम् ।
सर्वज्ञानाददाच्चक्रे सर्वान् विद्याभियोगिनः ॥८८७॥
*भूपतेरात्मना स्पर्द्धां चक्षमे न स कस्यचित् ।*
आत्मनस्तु बुधैः स्पर्द्धां शुद्धधीर्बह्वमन्यत ॥४९०॥
तावत् पण्डितशब्देऽभूद्राजशब्दादपि प्रथा ।
तैस्तैर्दोषैर्न तु *म्लानिं कालान्तरवदाययौ* ॥४९१॥
नृपतौ विद्वदायत्ते राजसांमुख्यकाङ्क्षिभिः ।
गृहा बभूवुर्विदुषां व्याप्ताः सेवागतैर्नृपैः ॥४९२॥
समग्रहीत् तथा राजा सोऽन्विष्य निखिलान् बुधान् ।
विद्वद्दुर्भिक्षमभवद् यथाऽन्यनृपमण्डले ॥४९३॥ इति ।

## महाराजः श्रीप्रतापसिंह.

सेय द्विगर्तभूमिर्यस्या सर्वे वर्णा जन्मसिद्ध म्वीय स्वतन्त्रताधिकार सर्वत सरक्षितु निरन्तर सङ्गरमाचरन्तोऽद्यावधि कस्यापि वैदेशिकस्य वैधर्मिकस्य वा अधीनता नोररीचक्रु । भारताद् वहिर्भूतेषु शतश सहस्रशश्च युद्धेषु स्वाभिमुखागतान् शत्रून् विजित्यैकैकशो वीरा शत्रूणा शतघ्नी, गोलिकोद्गारकान् (मशीनगणान्) चापहृत्य समानीतवन्त । सेय वीरप्रसविनी महामहिमवती मही यत्रत्याना रणोद्भटाना भटाना कृपाणप्रहारान्, अधिज्यधनुष्टङ्कारान्, द्विनलिकागोलिकोद्गाराश्च स्मार स्मार तिव्वत-लद्दाख-चीन-भूटान-काबुल-कन्धार-सिक्कम-वसरा-जर्मनादिदेशवास्तव्यानामद्यापि वेपन्ते हृदयानि । सेय सस्कृतसाहित्यप्ररोहभूमिर्यत्रत्या विद्वास काशीकाश्मीरादिविद्याक्षेत्रेषु ग्राम ग्राम तत्रत्यपण्डितान् शास्त्रार्थसगरे विजित्य प्रधानपूजा लभमाना महती महती ख्याति समाप्नुवन् । सेय धर्मधुरन्धरा द्विगर्तधरा यदुद्भूता प्राणानामत्ययेष्वपि स्वधर्म नाजहु, कठिन तपश्चरन्तोऽमरता लेभिरे च । तस्यामेव समस्तभारतशिर शेखरायमाणम्, समन्ततो हरितमहीरुहाऽऽच्छादितमहीधरश्रेणिपरिवृतमुच्चस्थलमधिवासितम्, शतशो देवमन्दिराणा सुवर्णकलशै दिवा भास्करप्रभाभिभासमानै सुवर्णमयमिव, निशि सहस्रशो देदीप्यमानचपलाप्रदीपप्रकाशितैर्नक्षत्रमयमिव दूरत पथिकै समवलोक्यते तदिदमतिरमणीय जम्बूनगरम् । तस्य दक्षिणान्तराले स्वादूदका, नीलनिर्मलसलिला तापी नदी प्रवहति । यस्या अनुतीर शतश सहस्रशश्च सन्ध्यामुपासमानास्तपस्विनो दरीदृश्यन्ते । पारेतापि गिरिशिखरोपरि विशालोऽतिरमणीय शत्रुभिर्दुराधर्षो बाहुनामधेयो दुर्गो वर्तते । यो हि जम्बूलोचनस्य कनीयसा भ्रात्रा बाहुलोचनेन निर्मापितोऽभवत् । तस्मिन्नेक कालिकामन्दिर वर्तते । ता भगवती कालिका द्रष्टु समर्चितु च प्रतिदिन शतशो भक्तजना समायान्ति । दुर्गे तस्मिन्नेवम् अतिरमणीय स्वच्छसलिल सरो विद्यते, यस्मिन् स्नात्वा परिपूतशरीरा भक्तजना भगवती कालिका परिपश्यन्ति । दुर्गान्तर्महानेक शस्त्रालयो विद्यते, यस्मिन् प्रभूततरा शतघ्न्योऽपि विद्यन्ते, यासा गोला दूरदूरतर प्रयान्ति । दुर्गस्य रमणीयस्थानानि, अमूल्यानि भित्तिचित्राणि च दर्श दर्श दर्शकाना हृदयानि पर प्रसीदन्ति, विस्मयन्ते च । बाहुदुर्गदर्शनेन पराक्रमरहितानामपि धमनीष्वदम्यात्साह सञ्चरति । तस्य दुर्गस्य, नगरस्थराजप्रासादाना, मन्दिराणा च गगनभेदीनि, नक्षत्रैरालपन्ति, समुन्नतानि शिखराणि द्विगर्तिवसूर्यवशीयक्षत्रियाणा महान्त प्रताप सूचयन्ति । नगरस्य प्रतीच्या कृत्रिमकुल्यामुभयतो रम्योद्यानारामवनवृक्षलताकुसुमाना साधीयास सन्निवेशाश्चेतासि समावर्जयन्ति । शिल्पानि च तत्रत्यानि स्वान्त सन्तोषयन्ति ।

तस्मिन्नेव नन्दननिभे जम्बूनगरे विराजमान, वीरवन्द्यचरणारविन्द, रविकुल-कमलदिवाकर, महाराजश्रीगुलाबसिहस्य पौत्र, महाराजश्रीरणवीरसिहस्य ज्येष्ठ पुत्रो महाराज श्रीप्रतापसिंह काश्मीरान् शशास। असौ सप्ताधिकैकोनविंशतिशततमे (१९०७) वैक्रमे वत्सरे समाविर्भूय चत्वारिंशद् वर्षाणि राज्य कृत्वा स्वायुष पञ्च-सप्ततितमे वर्षे सत्यलोकमगात्। असौ तत्रत्याना दूरदूरादाहूतानामनेकशास्त्रसार्वभौमाना विदुषा सकाशादधीताखिलशास्त्रोऽपि कणभक्षाक्षपादप्रणीतन्यायशास्त्रे विशेषरुचिरासीत्। असौ विदुषा शास्त्रार्थानवधानदानेनाऽश्रौषीत्। मध्यस्थरूपेण विदुषा जय-पराजयनिर्णयमप्यकार्षीत्। असौ परमभागवत आसीत्। तस्य भगवत्पूजनसमये शतशो विद्वास पूजागृह प्रविश्य बहुविधदानानि समुपलभ्य तस्य परमेश्वरनिष्ठा समवलोक्य च पर मुमुदिरे, "तपोमयोऽय महाराज साक्षाद् धर्मावतार" इति परस्पर जगदुश्च।

अमुना महाराजेन पदे पदे क्रियमाण विद्वत्सम्मानमवलोक्य केचन वाममार्गा-नुयायिनोऽपि तादृशसम्मानलिप्सव प्रजासु स्वप्रभाव ख्यापयितु प्रवृत्ता। गतानुगतिको लोकस्तेषा चमत्कारान् नमस्कर्तुं प्रचलित, अनुचलितश्च तान्। समयेनैते वाममार्गीया महाराजसान्निध्यलाभायापि प्रायतन्त, अलभन्त चान्त प्रवेशम्। तेषामेतादृशी चेष्टा-मवलोक्य मनस्विनो विद्वासोऽपि तै सह शास्त्रार्थं कर्तुमुद्यता समभवन्। प्राक्रमत च तेषा वादयुद्धम्। एतस्मिन्नेवावसरे स्वामिश्रीब्रह्मानन्दतीर्थमहोदयै काश्मीरानभ्येत्य दैनिकशास्त्रार्थनियम प्रवर्तित। दिनकरप्रभासमक्ष खद्योतानामिव तस्य यतिवरस्य वाचोयुक्त्या तेषा वाममार्गीयाणा प्रतिभाप्रभा नितरा मन्दतामयासीत्। महाराजस्य सानुग्रहेणाऽऽग्रहेण स्वामिश्रीब्रह्मानन्दतीर्थमहोदयैस्तत्र चिर स्थित्वा बहूना ग्रन्थाना सम्पादन कृतम्।

तस्मिन्महाराजे द्विगर्तभुव शासति ह्रदेषु मत्स्या, वनेषु मृगा, गगने विहगा सुखेन जीवन्ति स्म। कश्चिन्मृगयु प्रमादेनाऽपि तत्र मृगया न कुरुते स्म। तस्मिन् स्वय निरामिषे शाकाशिनि राजनि प्रजास्वपि प्राय सर्वे जना निरामिषा सवृत्ता। गृहे गृहे देवप्रतिमा पूज्यन्ते स्म, तुलसीतरव समारोप्यन्ते स्म, गाव पाल्यन्ते स्म, विद्वासो ब्राह्मणा सादर समर्च्यन्ते स्म, होमाऽग्नयो हूयन्ते स्म, अतिथय समभ्यर्च्यन्ते स्म, सर्वगृहेषु देवालयेषु च वेदध्वनय श्रूयन्ते स्म, किं बहुना, न कश्चित् कस्मैचित् द्रुह्यति स्म, नेर्ष्यति स्म, नासूयति स्म च। सर्वे परस्पर स्निह्यन्ति स्मैव केवलम्।

तस्य राज्यकाले ब्राह्मणादयो वर्णा प्राय सुरगिरैव व्यवहरन्ति स्म, तद्यथा

महाराजः श्रीप्रतापसिंहः



जन्म १९०७ विक्रमाब्दे, राज्याप्ति १९६२ विक्रमाब्दे, स्वर्गमनम् १९८८ विक्रमाब्दे

'भारतीसन्देशे' भारती प्राह—

"तदह वहु प्रसन्ना रणवीरसिंहभूपे,
करणामयेन येन प्रभुणा समादृताऽस्मम् ।
सुचिर तदङ्कशय्यामधिशय्य निर्विशङ्कम्,
अधुना तु जातवोधा पुनरप्यह भवेयम् ।
सुसुतोऽस्य धर्ममूर्तिनृपति प्रतापसिंह.,
सकला प्रजास्तदा य स्वहितैपिण प्रणेमु ।
अमुना सुसेविताऽस्म सुरूपिणा किनाहम्,
सुरभारती तदा मा प्रचुरा जना समूचु " । इति ।

काश्मीरप्रान्ते सस्कृतस्य विशिष्टाना पोपकाणा मध्ये महाराजप्रतापसिंहस्य द्वितीय स्थान वरीवर्ति । यद्यप्यसौ स्वपितेव सुयोग्य शासको नासीत्, तथापि धर्मप्रियो, न्यायप्रियो, विद्वत्प्रियो, विद्याप्रियस्त्वासीदेव ।

१८८५ ख्रिष्टाब्देऽमुष्य राज्याभिषेकोऽभूत् । अमुनाऽऽङ्ग्लभाषाध्ययनार्थं विद्यालय-महाविद्यालयनिर्माणपुरस्सर राज्ये यत्र-तत्र सस्थापितास्य सस्कृतपाठशालास्य सहायतापि प्रदत्ता । एव च स्वपित्रा जम्मूनगरे, उत्तरवाहिन्यां श्रीनगरे च सस्थापिताना सस्कृतमहाविद्यालयाना सरक्षण पोपणमप्यमुना विहितम् ।

विद्वत्प्रियत्वाच्चामुनापि स्वसभाया विद्वन्मण्डल सम्मानितमासीत् ।

अमुना महाराजेनापि सस्कृतच्छात्रेभ्य पारितोषिक छात्रवृत्तयश्च प्रदीयन्ते स्म । समये समये देश्या वैदेशिकाश्च विद्वासो धनादिभिरपि सत्क्रियन्ते स्म ।

अमुना १६००-१६०२ ख्रिष्टाब्दयोर्मध्ये श्रीनगरे अनुसन्धानविभागस्य स्थापना कृता, यदीय कार्यविवरण परस्तात्प्रस्तोष्यते ।

अमुष्य महाराजस्य शासनकाल एव १६१६ख्रिष्टाब्दे राज्ये सस्कृतप्रसारसमिते स्थापनाऽजायत, तत्परिणामस्वरूपेण च राज्ये दशसख्याकाना सस्कृतपाठशालाना प्रारम्भोऽभूत्, यत्र पण्डितेभ्य सहायतारूपेण प्रत्येक चत्वारिंशद् रूप्यकाणि प्रादीयन्त ।

## महाराज. श्रीहरिसिंह

महाराजे श्रीप्रतापसिंहे दिव गते तदीयकनिष्ठभ्रातु श्रीमदमरसिंहस्य तनूज श्रीहरिसिंहोऽमुनेण तेन महाराजेन पुत्रत्वेनानुगृहीतो राजसिंहासनमध्यास्थात् । १६२५ख्रिष्टाब्दे चामुष्य राज्याभिषेकसमारोह समपद्यत ।

असावपराजेय, अपराजित, निर्भय, निरहङ्कार, निरपेक्षशासक, विशाल-हृदय, कर्मण्य, नीतिज्ञ, प्रजावत्सल, क्षमाशील, भेदभावशून्य, न्यायनयनिपुण, परममनस्वी चासीत्। असावेव महात्मा भारतीयपट्शताधिकक्षत्रियमहाराजेषु सत्स्वपि सर्वप्रथम लन्दननगरे राजसभाया सर्वसमक्ष "स्वतन्त्रताऽस्माक जन्मसिद्धोऽधिकार" इति सोत्साहमुद्घोपितवान्। असावेव स्वराज्याभिषेककाले "न्यायो मे धर्म' इति डिण्डिमघोपणामचीकरत्। असावेव वार्द्धुपिकपीडिता मुसलिमप्रजा वृद्धिबन्धनादमूमुचत्। असावेव भारतहितमुद्दिश्य चतुर्दश वर्षाणि जोपमास्त, स्वजन्मसिद्ध स्वत्वमपि देशहितायाऽत्याक्षीत्। स्वक्षत्रियत्वाऽभिमान सरक्षन्नसौ कञ्चिदपि नानमत्। असौ सौजन्येन, सौन्दर्येण, सौष्ठवेन, सौहार्देन, गाम्भीर्येण, गौरवेण, सर्वानजयत् तात्कालिकान् स्वसमकक्षान् महाराजान्।

असौ सस्कृतभाषा पूर्वजाना सर्वथा सर्वदा सरक्षणीया सम्पद जानन् सस्कृताध्यापकान् पुष्कलैर्वेतनैरन्वग्रहीत्। असौ यथा देवालयेषु देवान् प्रणन्तुमयासीत्, तथैव मस्जिदेष्वपि प्रयाति स्मेति प्रशस्योऽस्य साम्यभाव।

अमुष्य राज्यकाले बहवश्छात्रा धर्मार्थविभागाच्छात्रवृत्ति गृहीत्वा सस्कृत-साहित्यस्य विभिन्नाना विषयाणामध्ययनार्थ वाराणसी गच्छन्ति स्म। पितामहेन चालिताना पितृव्येन च सरक्षिताना सस्कृतपाठशालाना सरक्षणमममुष्य राज्यकालेऽपि यथावदेवाभवत्। यद्यपि महाराजोऽय स्वपूर्वजवद् विद्वत्प्रिय, सस्कृतप्रियश्च नाऽऽसीत्, तथाप्यस्य राज्यकाले सस्कृतपण्डिताना सस्कृतप्रियाणामन्येषा वा जनाना मार्गे न कोऽपि बाध समुपस्थित। अपि त्वमुष्य राज्यकाले तत्पितृव्यप्रचालितेनानुसन्धानविभागेन बह्वीना पाण्डुलिपीना प्रकाशन कृतम्।

दुर्दैवेन १६४७-४८ ख्रिष्टाब्दे भारतविभाजनावसरे काश्मीरेष्वपि महान् विप्लवो जात। येनामुष्य महाराजस्य भाविनीषु योजनासु महती त्रुटिरायाता। अमुना देवालय-विद्यालयादिसस्थाना कृते महती योजना स्वीकृताऽऽसीत्। नवीन-निर्माणस्य रेखाचित्राणि (नक्शे) विशेषज्ञैर्निर्माप्य तत्कृते विपुलो धनराशिरपि नियमित आसीत्। पाकस्थानीयानाम् अकाण्डताण्डवैरुपद्रुते राज्ये तस्य सा योजना कर्गलेष्वेव स्थिता। तथापि पूर्वपुरुषप्रवर्तिताया कार्यपद्धतावसौ प्रचलन्नेवावर्तत।

असौ त्रिंशद् वर्षाणि राज्य कृत्वा स्वायुष पञ्चषष्टितमे वर्षे मुम्बापुर्यामाकस्मिकमृत्युना सर्व सम्पज्जात स्वराष्ट्रजनहिताय वितीर्य स्वय दिव गत।

महाराज श्रीहरिसिंह



जन्म १९५२ विक्रमाब्दे, राज्याप्ति १९८२ विक्रमाब्दे, स्वर्गमनम् २०१८ विक्रमाब्दे

अमुष्य विषये पद्यद्वयेन श्रद्धाञ्जलि —

> यो द्विगर्तनिजदेशभास्कर शौर्यधैर्यगुणरत्नसागर ।
> विद्वदाश्रयकर क्षमाधर साधुशान्तिफलद सुधाकर ॥१॥
>
> तस्य गौरवमहामहोज्ज्वल कीर्तिजातमखिल विजल्पितुम् ।
> नास्ति नास्ति लवमात्रयोग्यता शोकराशिपरिविह्वलस्य हि ॥२॥

## महाराज. कर्णसिंह

महाराजस्य श्रीकर्णसिंहस्य जन्म १९८७ वैक्रमसवत्सरेऽभूत् । यद्यप्यसौ बाल्यावस्थायामतीव प्रखरमतिरासीत्तथापि शिक्षाया समुचित प्रबन्धो न कृतोऽस्य पित्रा । तदा देशे यत्र तत्राङ्ग्लान् भारतान्निस्सारयितु बहून्यान्दोलनानि प्रचलितान्यासन् । १९४७ खिष्टाब्दे यदा देशोऽय स्वतन्त्रो घोषितस्तदा काश्मीरराज्यस्य स्थितिरतीव शोचनीयाऽऽसीत् । १९४९ खिष्टाब्दे जूनमासस्य विंशत्या तारिकाया महाराजहरिसिंहेनासावस्थायिरूपेण स्वोत्तराधिकारी घोषित । तत्पश्चादय राज्यविधानसभया राज्यप्रधान (सदरे रियासत) इति घोषित । तदैव कुशलमति कर्णसिंहोऽहरह कठिनपरिश्रमेणाध्ययने प्रवृत्त. । अमुना क्रमशो बी०ए०,एम०ए० इत्याख्ये परीक्षे उत्तीर्णे । सस्कृतभाषाप्यतीव मनोयोगेन शिक्षिता । तदनन्तरममुना वङ्गप्रदेशीयस्य राजनीतिकुशलस्य महर्षेरग्विन्दघोषस्य राजनीत्या अनुसन्धानेन 'दक्षतर' (डाक्टर) इत्युपाधि प्राप्त ।

रणवीरपुस्तकालयस्य पुनरुद्धारेण, तत्र श्रीरणवीरसस्कृतानुसन्धानविभागस्योद्घाटनेन, पुष्कलपुरस्कारव्यवस्थया, निबन्धप्रतियोगिताऽऽयोजनेन, श्रीरघुनाथसस्कृतमहाविद्यालयस्य कृते लक्षद्वयरूप्यकाणामनुदानेन, देवपूजकाना कर्मकाण्डशिक्षणव्यवस्थापनेन चाय सस्कृतभाषावैदिकधर्मयो सरक्षणाय, प्रसाराय, सवर्द्धनाय च सतत यतत इत्युपरिष्टाद् व्याख्यास्यते ।

महामहिमशालिनोऽस्य सूनो महाराजस्य गौरवगाथा स्वल्पाक्षरै कतिपयपद्यैरेवाभिधीयते—

> कार्यं कार्यं, स्वधर्मे मतिरिति नियमो विद्यते यस्य नित्यम्,
> विद्याभ्यासाभिलाष मुनिरमतितरा मानसे यस्य मौन ।
> कार्ये सक्ता च बुद्धिर्न विरमति सदा यावदेतस्य पारम्,
> सत्सङ्गो, भक्तिभाव, सकलजनहित मुख्यधर्मोऽस्ति यस्य ॥१॥

वादान्यं, सौमनस्यं, प्रियहितवचनं स्मेरभावोपगम्यम्,
वैदुष्यं चेति सर्वे मनुजवरगुणा भूषयन्ते यमेनम् ।
बाला वृद्धा युवानो निखिलविधजनाः साधवोऽसाधवो वा,
य सङ्गम्यैव सद्यः स्वहृदयनिहितं भावमापूरयन्ति ।।२।।

प्राच्या विद्या प्रतीच्या सममिह वसतो यत्र लोकप्रियेऽस्मिन्,
भुक्तिर्मुक्तिश्च यस्मिन् विदुषि कृतपदे द्वन्द्वभावं विहाय ।
सर्वारम्भी बहिष्टादपि विमलमतिर्योऽन्तरत्यन्तशान्तः,
साक्षी पूर्णोऽपि लीलाधृतनृपतिवपुः श्रीगुलावप्रसादात् ।।३।।

प्रीत्यै भूत्यै समेषा निजसुखमखिल नेहते यो महात्मा,
धन्यो मान्योऽस्त्यनन्यः स्वकुलगुणगणैर्भूपितो भूमिपालः ।
सोऽयं श्रीकर्णसिंहो सकलजनहितैर्नेतृभिश्चापि वन्द्यो,
धर्मं स्वस्मिन् क्रमेण प्रतिफलितमिमं धारयेत् पूर्वजानाम् ।।४।।

वार वारं समस्तैर्भृतमिदमितरैः संस्कृतं भाष्यमाणम्,
भूयो यस्य प्रयासै. कथमपि वदनं जीवितु व्याददातु ।
सोऽयं श्रीकर्णसिंहः सुविमलयशसाऽलङ्कृतो भूतलेऽस्मिन्,
स्मारं स्मार स्वतारं हरिचरणयुग लोकमान्यः प्रभूयात् ।।५।।

सन्देशः

भो ! भो ! भाविनि भारतीयविभवे सर्गप्रतिष्ठापकाः,
बालाः प्रौढतमास्तथा च युवका वृद्धाः स्वदेशप्रियाः ।
सर्वे यूयमिद मदीयवचनं श्रुत्वा कुरुध्वं स्वयम्,
स्वातन्त्र्यैकनिदानमेतदधुना ध्येयं समैः संस्कृतम् ।।६।।

नैसर्गैरक्षरैर्या स्रगिव सुमणिभिर्गुम्फिता राष्ट्रभाषा,
भूयात् स्वीयैर्गुणैः सा कतिपयदिवसैः सर्वथा सार्वभौमी ।
तस्या वै यन्निदानं प्रभवतु नितरां भूतले संस्कृतं वः,
सर्वो लोकोऽपि चास्मिन् प्रभवतु भवतां प्रीतये सिद्धहस्तः ।।

शुभाशिषः

राष्ट्रं न. स्यात्समृद्ध सकलगुणगणैर्भूषिता. स्युर्युवानः,
नेतारो धर्ममुख्या नयविनयनताः शासतां भूमिभागम् ।

महाराज श्रीकर्णसिंह



जन्म १९८७ विक्रमाब्दे, राज्याप्ति २००६ विक्रमाब्दे

साहाय्य तास्तरुण्य सुचरितविभवैर्नित्यमेषा प्रकुर्युं,
विद्या विज्ञानपूर्णं कृषिकलनकलाकौशल वृद्धिमेतु ॥१॥

मोदन्ता सर्वलोका विधिविहितहिते कर्मणि प्रत्तचित्ता,
भूयो भूयाज्जगत्या सकलजनहित गौरव भारतस्य ।
शूरा शौर्येण नून निजविषयबल वर्धयन्ता नितान्त,
स्वातन्त्र्यस्यादिहेतु प्रभवतु सुतरा सौमनस्य प्रजासु ॥२॥

दौर्जन्यस्यास्य चैना फलमपि विपुल भुञ्जता स्वात्मनैव,
सौजन्येनैव मद्य सुविपुलविभव भारत भा-रत स्यात् ।
भीम तत् सर्वदु ख व्रजतु च विलय वृद्धिमायातु मौख्यम्,
आर्यं शान्तेर्निदान हृदि दधतु जना पञ्चशील सदैवम् ॥इति।

महाराजेन श्रीकर्णसिंहेन संस्कृतपोषण कृतानि महत्त्वपूर्णानि कार्याणि यथा प्रसङ्गमनेकस्थलेष्विह प्राप्स्यन्ते । सोऽय महानुभावोऽतीव विकट समये राज्यमवाप्तवान् । अर्धशताब्द्या अप्यधिकात्समयादङ्ग्रेजाना दु शासनपाशाद् भारतमातर स्वतन्त्रा कर्तुं कारायातनाद्यनेककष्टसहनपूर्वाणि भारतीयानामान्दोलनानि प्रचलन्ति स्म । केवल भेदनीतिबलेनैव भारतीयानार्यहिन्दूनमुस्लिमाश्च योधयित्वा तान्दुर्बलीकृत्य चाग्ला शासन चालयन्ति स्म । स्पृश्यास्पृश्यविषयेऽन्त्यजानामुद्वेदनादिका नाना दुर्व्यापारास्तदा प्रवर्तमाना आसन् । भारतीया दुर्भिक्षादिपीडिता विपद्यन्ते स्म, किन्तु आग्ला कूटनीत्यादिबलेनापारा सम्पद पारेसमुद्र नीत्वा स्वदेशवासिनो धिन्वन्ति स्म । विदेशीयाया आग्लभाषाया परमपावन्यामस्या भारतभूमौ प्रचारेण, इहत्यप्रकृतिविरुद्धाना विदेशीयानामेवाऽऽहाराचारव्यवहाराणामनेकैर्व्याजैश्छद्मैर्बलैरुपधिभिश्च प्रसारेण भारतीया मर्वे दशभक्ता उपरुध्यमानगला विषीदन्ति स्म । कलाकौशलादिशिक्षण भारतस्य च सामयिकविज्ञानसम्पन्नतापादन तु दूरे गतम्, अनेकेषामुदरम्भरीणा विचारा अपि तैस्तथा विपरिवर्त्तिता, यथा विस्मृत्य स्वसस्कृति, स्वधर्म, स्वभाषा, स्ववेष, स्वभोजनादिक च तेऽभारतीयतामेव सर्वत्र प्रसारयन्तो विलोक्यन्ते स्म विलोक्यन्ते चेदानी स्वतन्त्रेऽपि भारते । सर्व खलु भारतीय सभ्यतादिसद्भावस्तैरुन्मूलित ।

अथ नवनवैरान्दोलनैरुद्वेजिता, द्वितीयेन विश्वमहायुद्धेन धनजनादिभिरतिदापित क्षीणा स्वर्गामिना स्वनामधन्येन सुभाषवोसवीरेण जापानादिदेशसहयोगमवाप्य महासेनोत्थापनादिभिर्भीषिता, मोहमयीस्थपोतसैनिकादिविद्रोहेण च नितान्त वित्रा-

सिता आग्ला यदा भारतभुव स्वतन्त्रा घोपयन्तो देशमिममजहु, तदापि सोपधि भारतपाकिस्ताननामभ्या द्वधा त्रेधा च देश विभज्य, प्रच्छन्न मुस्लिमाना पक्षे पतन्तस्तान् भारते नानोपद्रवान् कर्तुं प्रोत्साहयन्नश्च शाश्वतिकानि विरोधवीजान्युप्तवन्त, येनापारा धनसम्पद् विनष्टा, असख्या मानवा असमये कालकवलता गता, कोटिशश्च मातृदुहितृस्वसृपत्न्यादिवियुक्ता निर्निकेता एतल्लेखक्षणेऽपि नारकीयातना भोक्तु विवशा सन्ति। सोऽय व्यतिकरो नात्रैव समापत्, आग्लै स्वशासनसमये भारते सार्धपट्शतेम्योऽप्यधिका, महान्तो, मध्या, अवमा, अवमावमाश्च 'राजा', 'महाराज', 'निजाम', 'नवाव' इत्यादिपदवीका भूभुज सम्पादिता आसन्, येषु कैश्चित्स्वातन्त्र्यान्दोलन दमयितुमेकोनविंशतितमख्रिष्टशतकादेव तेपा साहाय्य क्रियते स्म, कैश्चिच्च भारतजनता विदुह्य, विशोष्य, निष्पीड्य चाग्लदेशीयजनोदरभरणाय पुष्कल धन समर्प्य शेषेण विलासभरमन्थरा भोगा भुज्यन्ते स्म। ते सर्वे शासका आग्लशासनेन सह जातान् सन्धीन् परिसमाप्य स्वाधीनता नीता कृताश्च चिकीर्पिताश्च सार्धपद्शतेम्योऽप्यधिका भारतस्य खण्डविखण्डवर्गसर्गा।

परन्तु, केन्द्राधीनतया स्थापिते नरेन्द्रमण्डले सदस्यतामाप्ता अन्यविधाश्च तादृशा अपि चिरस्मरणीया महाराजा आसन्, ये देशभक्तिनिर्भरा स्वशासनसौविध्य बलिवेद्या समर्प्यापि भारतस्वातन्त्र्य हार्दिकेन प्रेम्णा कामयन्ते स्म। तेष्वन्यतम आसीन्महाराजा हरिसिंह। द्विनान्मुस्लिमशासकान् विहायेतरेषु क्षत्रियपुङ्गवेषु स्वस्वराज्यानि भारतीयसङ्घनिर्माणाय प्रादेशिकसङ्घटनसम्पादनाय च समर्पितवत्सु, महाराजो हरिसिंह काश्चिद् राजनैतिकीर्जटिलता अनुभवन् काश्मीरशासन युवराजे श्रीकर्णसिंहे विन्यस्य राजसिंहासन परित्यज्य च मोहमयीमध्यवात्सीत्। समयान्तरे च पार्थिव वपुर्विहाय स्वपुण्योपार्जिताँल्लोकानप्यशिश्रियत्।

तादृश समयच्छिद्र विलोक्याग्लप्रेरितेन पाकिस्तानेन सीमावस्थितान् मुस्लिमकौटुम्बिकान् (कबायलिकान्) अग्रत कृत्वा काश्मीरदेशोऽभिषेणितो लुण्ठितो दलितश्च। तादृशे भीपणे समये बुद्धिमता युवराजेन श्रीकर्णसिंहेनान्यराजवत्काश्मीरदेशोऽपि स्वमन्त्रिणा जनतायाश्च कामनया भारते विलय नीत। भारतीयसेनाभिस्तु पाकिस्तानीयसेना विद्राव्य कश्मीरदेश पुन प्रत्याहृत। काभिश्चिदेव होराभि प्रत्याहरिष्यमाणेऽखिले बलादाहृते काश्मीरभूखण्डे तु तदानीन्तनाना केपाचित् भारतराजनीतिधूर्वहानामाकालिकान्निषेधाद् भृश हतोत्साहा भारतसेना प्रत्यावर्त्तन्त, न्ययुज्यन्त च युद्धविरामरेखाया यथावत्परिपालनार्थमन्ताराष्ट्रिया प्रत्यवेक्षका। काश्मीरदेशश्च भारतशासना-

न्तर्भुक्तप्रदेशविशेषता नीत, युवराज श्रीकर्णसिहस्तत्प्रदेशाधिप सजज्ञे । परन्तु यथाऽन्यप्रदेशीया प्रथमे मन्त्रिणो 'मुख्यमन्त्रिण' उच्यन्ते, तथाऽकृत्वा केन्द्रीयप्रधानमन्त्रिपदवत्काश्मीरप्रदेशप्रथममन्त्रिपदमपि 'प्रधानमन्त्री' इति शब्देन, अन्यप्रदेशराज्यपालपदवच्च श्रीकर्णसिहस्य पदमकृत्वा तत्पद 'सदरेरियासत' इत्यनेन यावनशब्देन व्यपदिष्टमभूत् । तदेतच्छिद्र काश्मीरविलयस्यास्थायित्वासूचकमुपलक्ष्य पाकिस्तानीयै काश्मीरिक्या मुस्लिमबहुलाया जनताया समुद्धारव्याजेन नानामिषाण्यालम्ब्य शतश सहस्रशश्चोपद्रवा अकारिषत, येष्वनेकसहस्रसख्यानामार्यहिन्दूना जीवितहानि , पारेऽर्बुद धनसम्पत्तिविनाश , गृहभवनकार्यालयादीना विदाह , स्वसृदुहित्रादीना बलादाहरण धर्मत पातन च, लक्षशो हिन्दूना पूर्वपरपाकिस्तानाभ्या सर्वस्वहरणपूर्वक निष्कासन चेत्यादि शब्दैरवर्णनीय प्रत्यक्षदृष्ट सर्व कुकृत्यजातमभूत् । भारतीयास्तु सेनाभिर्दुष्टेषु दमनीयेषु केवल विरोधपत्राणि सप्रेष्यैव स्वेतिकर्त्तव्यताया पूर्त्तिममन्यन्त । सोऽयमैतिहासिकोऽस्माक महान् दोष सदा भारत दु खाकरिष्यतीति किम्वुच्येताप्रतिविधेये कर्मणि ।

व्यतिकरेऽस्मिन् युवराज (पितृनिधनानन्तर महाराज ) श्रीकर्णसिहो दिनमेकमपि काश्मीरशासन कर्तु नाशक्नत् । मन्त्र्यायत्तसिद्धित्वादसौ मुस्लिमबहुलया प्रजया निर्वाचितेषु मुस्लिमप्रधानेष्वेव मन्त्रिषु शासत्सु केवल साक्षिगोपालता नीत एव तिष्ठति । तथापि तेन निजकोषाल्लक्षशा रूप्यकाणि व्ययीकृत्य स्वपूर्वजै स्थापितानि सस्कृतसस्कृतिनिष्ठानि विविधानि कार्याणि यथावच्चालयितु प्रत्येकावसरस्य क्रियत समुचित उपयोग ।



### जम्बूकाश्मीरप्रदेशस्थाः

## संस्कृतसंस्थाः

१ उत्तरवाहिनीश्रीगदाधरसंस्कृतपाठशाला, उत्तरवाहिनी देविकातीर्थे ।
२ श्रीरघुनाथसंस्कृतपाठशाला ( सम्प्रति–श्रीरघुनाथसंस्कृतमहाविद्यालय ) श्रीरघुनाथमन्दिरे, जम्बूराजधान्याम् ।
३ श्रीरघुनाथसंस्कृतपुस्तकालय , श्रीरघुनाथमन्दिरे, जम्बूराजधान्याम् ।
४ श्रीरणवीरसंस्कृतानुसन्धानविभाग , श्रीरघुनाथमन्दिरे, जम्बूराजधान्याम् ।
५ श्रीजम्बू-काश्मीरविश्वविद्यालयस्थसंस्कृतविभाग , जम्बूराजधान्याम् ।
६ श्रीरणवीरहाईस्कूलस्थसंस्कृतपाठशाला, जम्बूनगरे ।
७ धर्मार्थविभाग (धर्मार्थपरिषत्), जम्बूनगरे ।
८ श्रीरघुनाथनिधि , जम्बूनगरे ।
९ संस्कृतपाठशाला , पुरमण्डले (जनसहयोगत शिक्षाविभागेन चालिता ) ।

क–झिडीग्रामस्था ख–फलाया ग्रामस्था
ग–ऊधमपुरनगरस्था घ–रियासीनगरस्था

१० श्रीरणवीरसंस्कृतपाठशाला, जम्बूनगरे ।
११ श्रीविद्याधरशैवाश्रमनिधिपा(ट्रस्ट), कर्णनगर-श्रीनगरे ।
१२ श्रीरूपादेवीशारदापीठम्, श्रीनगरे ।
१३ श्रीरामशैवाश्रम , फतेहकदलम्, श्रीनगरे ।
१४ श्रीपाणिनीयार्यसंस्कृतमहाविद्यालय , जम्बूनगरे ।
१५ आर्यसंस्कृतकन्यापाठशाला, अस्पतालरोड, जम्बूनगरे ।
१६ संस्कृतमहिलाविद्यापीठम्, जम्बूनगरे ।
१७ काश्मीरसंस्कृतसाहित्यसम्मेलनम्, कालखुड, श्रीनगरे ।
१८ संस्कृतसाहित्यपरिषद्, श्रीनगरे ।
१९ संस्कृतभाषाप्रचारसमितिशाखाः, श्रीनगरे, नववेन्द्रेषु च ।

## जम्बूकश्मीरराजवंशस्य संस्कृतेऽभिरुचिः

एकोनविंशतितमशताब्द्या जम्बूकाश्मीरराज्यस्य संस्कृतसाहित्यकगतिविधौ विहङ्गमदृष्टिपातेन प्रतीयते, यत्—शतकस्यास्य पूर्वार्द्धं तु मघर्षयुगमेवाभूत् प्राय । १८५७ खिष्टाब्दे यदा महाराज श्रीरणवीरसिंहमहोदयो राज्यसिंहासनमलङ्चकार, तत एव राज्ये तस्मिन् साहित्यिकयुग प्रावर्तत । यतो हि महाराजस्य तस्यात्यधिका रुचिर्लोकशिक्षाया, साहित्ये चासीत् । १८६७ खिष्टाब्दे, यदा पञ्चनदीयविश्वविद्यालयस्य स्थापनैव न मजाता, किञ्च पञ्चनदस्य प्रादेशिकशासक(लेफ्टिनेन्टगवर्नर)-महोदय 'श्रीमेक्लोड' नामधेय तत्र विश्वविद्यालयस्य स्थापन यदाऽचिन्तयदेव, रुप्यकाणा लक्षमेक च तेन प्रजाजनेभ्य साहाय्यरूपेण सगृहीतम्, तदा तस्मिन् धनराशौ ६२५००) रूप्यकाणि महाराजरणवीरसिंहेनैव प्रदत्तान्यासन् । परिणामत १८८२ खिष्टाब्दे यदा पञ्चनदीयविश्वविद्यालयस्य सस्थापना जाता, तदा सम्थापनविधाने (इन ऐक्ट आफ इन्कारपोरेशन) महाराजरणवीरसिंहस्य नाम "फर्स्ट फैलो आफ पजाब यूनिवर्सिटी" इत्येव लिखितमासीत् ।

महाराजस्तु स्वराज्ये शिक्षाप्रसाराय पुस्तकाना मुद्रणस्य प्रकाशनस्य च प्रबन्धमकरोत् । एव स जम्बूराज्ये सर्वप्रथम मुद्रणयन्त्र सस्थापितवान्, येन 'विद्याविलास प्रेस' इत्याख्यया प्रसिद्धि प्राप्ता । अय भूपतिवरेण्यो विभिन्नविषयेषु भाषान्तरीयपुस्तकान्यप्यनुवादयितु विशेषमेक विभाग स्थापितवान् । युगे तस्मिन् यान्यपि आख्येयानि पाठ्यपुस्तकानि प्रकाशितानि, तेषा सावल्यन निर्देशो मात्र सुकर । अतोऽत्रैतावदेव लेखन पर्याप्तम्, यदधिकाधिकविषयाणा पुस्तकान्यनुवादितान्यभूवन्निति । यथा—भूगर्भभूगोलभौतिकशास्त्राणामाङ्गलभाषातो हिन्द्या, जामेअलवूम-तसहीलअलवूमयो अरबीत पारसीकभाषाया, तारीखेफतह आसाम-तारीख कादरी इत्यनयो पारसीकभाषातो हिन्द्या, हिस्ट्री आफ काश्मीर-हिस्ट्री आफ रोम इत्यनयो ऐतिहासिकग्रन्थयो -आङ्गलभाषातो हिन्द्या जरत्खण्डस्य चानुवाद संस्कृतभाषातो हिन्द्यामसावेव नरेशोऽकारयत् ।

तेन समस्तमण्डलेषु विद्यालया, विशेषतो जम्बूकाश्मीरनगरयो विशिष्ट-शिक्षासस्था सस्थापिता । जम्बूप्रदेशे पारसीकभाषायामाङ्गलभाषाया संस्कृते च वैदिक-लौकिक-शास्त्राणा तिब्बे-यूनान्याश्च दशमकक्षापर्यन्त शिक्षा प्रदीयते स्म । विधान-शास्त्र-श्रेणिषु द्विविधा अधिनियमा पाठ्यन्ते स्म, ये राज्ये प्रायुज्यन्त । राजस्वविभागे भूमिते (पटवारस्य) शिक्षा दीयते स्म । आयुर्वेदिक-तिब्बीविभागयो शिक्षा प्राप्ता

एव छात्रा सर्वकारीयौपधालयेपु वृत्ति प्राप्तु योग्या मन्यन्ते स्म । फारसीभापाया शिक्षाऽपि 'मुन्शी आलम' स्तरपर्यन्त प्रदीयते स्म । फलत १६४० वैक्रमे सवत्सरे जम्बूप्रदेशस्य यस्मिन् विद्यालये चतुश्शतसख्याकाश्छात्रा पठन्ति स्म, स पश्चात् "रणवीरकालेज" इति नाम्ना प्रसिद्धोऽभूत् । एवमेव काश्मीरस्थविद्यालयेऽपि तस्मिन्नेव सवत्सरे पञ्चाशदुत्तरचतुश्शतसख्याकाश्छात्रा पाठ्यन्ते स्म । विद्यालये तस्मिन् अरबीशिक्षाया प्रबन्धोऽप्यासीत् ।

जम्बूप्रदेशस्थश्रीरघुनाथमन्दिरे सस्कृतभापाहिन्दीभापया शिक्षाया सर्वश्रेष्ठ प्रबन्ध कृत आसीत् । मठेऽस्मिन् सस्कृतस्यैका पाठशालोद्घटिता, यस्या नाम 'श्रीरघुनाथसस्कृतपाठशाला' इत्यभूत् । अस्या पाठशालाया चतुर्णा वेदाना, वेदाङ्गाना, षट्शास्त्राणा, साहित्यायुर्वेदज्यौतिषव्याकरणादीना चाध्यापनाय विशेपेण प्रबन्ध कृत । एवमेव जम्बूप्रदेशान्तर्गतायामुत्तरवाहिन्यामपि उच्चस्तरीया सस्कृतपाठशालैका समुद्घाटिता, यस्या श्रुतिस्मृतिपुराणकर्मकाण्डमीमासाशास्त्रादीना शिक्षा दीयते स्म । एतासा सस्थाना स्थापनेन कियद् विशाल लक्ष्य महाराजयो श्रीगुलाबसिंहरणवीरसिंहयोरभिमुखमासीत्तद् अधो दीयमानाभ्या द्वाभ्या शिलालेखाभ्या प्रतीतिपथमायास्यतीति तौ विन्यस्येते—

श्रीगदाधरमन्दिरस्य प्राङ्गणे देवनागरीलिप्या हिन्दीभापाङ्कितोऽय लेखो दरीदृश्यते, यस्येय देववाण्यामनूदिता प्रतिलिपिरिह प्रकाश्यते—

'अस्ति श्रुतिस्मृतीतिहासपुराणेपु परमपावनतया प्रथिता देविका नाम नदी, तत्रापीयम् उत्तरवाहिनी तु पावनतमतया पितृकृत्येपु गयाक्षेत्रोपमा प्रमीयते । तस्या देविकायाम् आ काश्मीरत्रिम्बितसिन्धुभ्य , आ हिमालयोत्तरस्थितकिन्नरवर्ष सकलवसुधापरिपालको दीनबन्धु श्रीमन्महाराजाधिराज श्रीगुलाबसिंहो जगदुपकारार्थं वसुग्रहवसुवसुमतीमिते १८९८ वैक्रमाब्दे उत्तरवाहिनीदेविकातीरपरिसरे श्रीगदाधरमन्दिर परिष्कृतवान् । मन्दिरस्य चास्य द्वितीयस्मिन् परिधौ दशावतारमन्दिर परिष्कृत्यावारितद्वारम् अन्नसत्रम् क्षुधिततृपिताना कृते प्रावर्तयत् । तत श्रीमन्महाराजाधिराजश्रीगुलाबसिंहात्मज श्रीमन्महाराजाधिराज श्रीरणवीरसिंह स्वपूर्वजराजगणगुणगौरवप्रकाशको ग्रहनेत्रग्रहेन्दुमिते १९२९ वैक्रमाब्दे देवपूजन-महोत्सव-विद्याध्ययन-रोगिपरिचर्या-गोपालनातिथिसेवा-तीर्थयात्रा-विरक्तावासार्थं क्रमेण नैवेद्यादिव्यवस्थया, पर्वसमाजेन, पाठशालया, चिकित्सालयेन, गोशालया, अतिथिशालया, तीर्थाश्रमै , विरक्ताश्रमैश्च तन्मन्दिरवर शोभयित्वा प्रासादसम्पत्तये धनकोप च स्थापयित्वा नीतिनिर्धारणेनेद

सर्वमपि परिरक्षितम् । इत्थं संसारसागरतरणकरणं निर्माणं कारयित्वा सर्वोपकार-कारणी नीतिरियं स्थापिता यद् यः कोऽपि श्रद्धावान् पुरुषः शतत्रयं दीनाराणां श्रीगदा-धरकोषे निदधीत स उपर्युक्तेषु कार्यविभागेषु यथेष्टं विभागमपि निर्दिशेत्, ततस्तस्य नाम्ना तद्विभागे पुरुषस्यैकस्य निर्वाहः प्रचलिष्यति । एकाधिकानां पुरुषाणां निर्वाहं कारयितुकामश्चैतेनैवानुपातेन यथोचितं द्रव्यं कोषेऽस्मिन् निदधीत ।" इति

अपरश्चाय तादृश एव लेखः श्रीरघुनाथमन्दिरस्य प्राङ्गणे विलोक्यते तस्यापि देववाण्यामनुवादिता प्रतिलिपिरिह विन्यस्यते—

"सर्वशक्तिमतः परमेश्वरस्यानुकम्पया स्वस्तिश्रीमहाराजाधिराज, इन्द्रमहेन्द्र-सिपरेसल्तनत-जनरलसरकार इङ्गलिशिया, मसीरावाद, कैसरेहिन्द, जी० सी० एन० एस० आई० सी० आई० इत्याद्युपाधिविभूषितः जम्मू-काश्मीर-तिब्बताद्यनेकदेशानाम-धिपतिः, प्रभुवर्यः, परमकारुणिकः, महाराजबहादुरः १०८ श्रीश्रीरणवीरसिंहः, लोक-हिताय, राज्यसिंहासनाधिरोहणानन्तरं स्वयं स्वेष्टदेव १०८ श्रीरघुनाथदेवस्य प्रतिमां १९२५ वैक्रमे संवत्सरे श्रीरघुनाथमन्दिरे संस्थापितवान् । मठेनैतेन सह सकल्प्य कतिपयग्रामान् धनराशिं च नियोज्य नानाविधा धर्मार्थव्यवस्था कृतवान् । 'संस्कृत-पाठशाला, वेदाः, वेदाङ्गानि, षट्शास्त्राणि च, सदावर्त्तं, पक्वान्नं, शुष्कान्नं, गोशाला, जलपानार्थं प्रपा, जलाशयः, धर्मशाला, भगवतः पञ्चायतनपूजनं, वस्त्राणि, आभूषणानि च, उत्सवः, सहस्रनामपाठः, रामनाम, पुस्तकदानम्, अभ्यागतेभ्यो वस्त्रदानम्, (कटारीदान), माला, छत्रम्, उपानह्, शालग्रामाः, शिवस्थापनम्, आरोग्यशाला, पुष्पाणि, तुलसीदलं, बिल्वपत्रं, पूजानैमित्तिकम्, यज्ञोपवीतं' इत्येतेषां, प्रतिमासं च अमायां पिण्डदानादिना श्राद्धादिकानां व्यवस्थाश्च मठेऽस्मिन् कृता । एवमेव नानाविधा धर्मव्यवस्था विहिता । तथा चोत्तरवाहिन्यामपि धर्मार्थव्यवस्था संचालिता । पुरमण्डल-देविकाया उमापतेरग्रे—'उत्तरवाहिनी' इति प्रसिद्धं स्थानम् । तत्र 'देविका' उत्तरे वहते, अत एवास्या नाम 'उत्तरवाहिनी' इति पुराणं प्रमाणीकृत्य स्वर्गीयमहाराज श्रीगुलाबसिंहमहोदयस्तीर्थस्यास्य प्रसिद्धिं कृतवान् । दशावताराणां मूर्तीः बहुशाल-ग्रामैः सह श्रीगदाधरस्वामिनो मूर्तिम्, अभिमुक्तेश्वर महोदयं च देवीपुराणप्रथितपञ्च-क्रोशमितेषु परमपवित्रस्थानेषु मठान् संस्थाप्य शिवलिङ्गं च स्थापितवान् । दर्शनीय-मेतत् स्थानम् ।

एकदा महाराजो रणवीरसिंहोऽपश्यत्—'कलिधर्मो वर्धते, आर्यधर्मश्च क्लिष्ट-त्वात् क्षीयते । अतो यदि क्लिष्टतेयं सुगमतयाऽपसार्येत, तर्हि आर्या अपि कथंचित्

स्वधर्मं पालयेयुः । अतो विष्णुभक्तिं शिवभक्तिं चापहाय नान्यः कश्चित्सरलः उपायः" इति । एवं विचिन्त्य महाराजः श्रीरघुनाथस्वामिनमभितः श्रीरामतापन्युपनिषद्वचनानुसारं श्रीरघुनाथदेवस्य साङ्गोपाङ्गां मूर्ति, पञ्चायतनमूर्तिम्, अवतारमूर्तिम्, द्वादशलक्षशालग्रामांश्च संस्थापयितुमाज्ञापितवान् । ततो राज्यसिंहासनाधिरोहणस्य सप्तवर्षानन्तरं १९२२ वैक्रमवत्सरे यथोक्ता मूर्तयः संस्थापिताः । ततो वैक्रमे १९३९ वत्सरे श्रीरणवीरेश्वरमहादेवस्य, एकादशसंख्याकानां नर्मदेश्वराणाम्, एकादशसंख्याकानां स्फटिकमणिनिर्मितानां शिवमूर्तीनां चैकस्मिन्नेव मासे नवमठनिर्माणपूर्वकं संस्थापनमभूत् । इत्थं जम्बूकाश्मीरराजवंशस्य संस्कृतेऽभिरुचिरधोनिर्दिष्टा संस्था संस्थापितवती ।

(१)

## उत्तरवाहिनी श्रीगदाधरसंस्कृतपाठशाला

**'उत्तरवाहिनीपाठशाला'** या 'दुर्गर'केसरिणो महाराज**श्रीगुलाबसिंहस्य**, तदात्मजस्य **श्रीरणवीरसिंहस्य** च शासनवेलायामुन्नतेरत्यारूढिमापन्ना साङ्गवेदाध्यायिनः श्रोत्रियान्, कर्मकाण्डपरिपाटीपटून् वृत्तीश्वरान्, नूत्नप्रत्नन्यायनयनिपुणान् नैयायिकान्, पूर्वोत्तरमीमांसामांसलमतीन् मीमांसकान्, सांख्ययोगान्वयोपस्कृतमतीन् सांख्ययोगिनः, औपनिषदिकतत्त्वविदो वेदान्तारविन्दसिद्धान्तमकरन्दास्वादनचणान् आत्मज्ञानिनः, चतुर्दशसिद्धान्तारविन्दवनविहरणव्यसनिनो गणितफलितोभयविधज्यौतिषशास्त्रसिद्धहस्तान् ज्योतिर्विदो गणकांश्च, अष्टविधायुर्वेदविद्याऽस्त्रनिरस्तसमस्तरोगरक्षोगणांश्चिकित्सकान्, पुराणेतिहासविदः पौराणिकानैतिहासिकांश्च, काव्यकलाकलनकुशलान् कवीन्, साहित्यनवनीतरसरसिकान् साहित्यिकान्, शब्दार्थतत्त्वज्ञान् शास्त्रार्थसमरविजयिनो महावैयाकरणान्, दर्शनविमर्शनविशारदान् परमदार्शनिकान्, धर्मादिमर्मवेदिनो निग्रहानुग्रहसमर्थान् धर्मशास्त्रिणः, नीतिरीतिनिर्णीतकर्तव्यकलापान् नीतिनिपुणांश्च स्नातकान् समपीपदत्, सर्वत्र भारते व्याप्तसौरभाऽपि सा क्रमेण ह्रासमापन्ना स्वज्योतिषैव कर्पूरवद् विलीयमाना २०१० वैक्रमाब्दे (१९५३ ई०) कथाशेषतां गता संस्कृतानुरागिणः सहृदयान्, वयस्कान्, स्वस्नातकांश्चानुस्मृततद्वैभवान् बलाद् रोदयति प्रेरयति च स्वगुणानभिधातुम् ।

तस्याः सर्वाण्यतिप्राक्तनानि **राजिस्तर(रजिष्टर)**पुस्तकान्यपि तात्कालिकाधिकारिजनप्रमादेन दैवदुर्विपाकेन वा प्रायो विनष्टानि समभूवन्निति स्मारं स्मारं दोदूयते चेतः ।

पूर्वेतिहासानभिज्ञतयाऽस्मिन् विषये मन्दादरं, **श्रीरघुनाथपाठशालाधिकारि**भिरपि सप्रमाण किंचिदभिधातु न प्राभावि। अतो महाराजश्रीरणवीरसिंहनिर्मापिताद् धर्मार्थविभागस्य नियमावलीपुस्तकात्, **'स्टेन'** महाशयनिर्मिताच् **श्रीरघुनाथसस्कृतपुस्तकालयस्य** सूचीपत्राच्च सूक्ष्मेक्षिकया सर्वमवगत्य, उपोद्वलकप्रमाणीकृत सस्कृतस्य साधारणज्ञानवतामपि सहृदयाना समवबोधाय, व्यावहारिकैरतिप्रसिद्धै क्लिष्टसन्ध्यादिदोषरहितैश्च शब्दैर्निगुम्फितो गीर्वाणवाणीप्रसारकर्मणि बद्धपरिकराणा विदुषामपि सन्तोषप्रद पुरस्तादुपाह्रियते निखिलोऽपीतिहासविमर्श।

महाराज श्रीरणवीरसिंहस्तदानी प्रतिग्राम, प्रतिपत्तन, प्रतिनगर चैकैका पाठशाला समतिष्ठिपदिति प्रसिद्धम्। परन्तु ता सर्वा एव शनै शनै समूलमुन्मूलीभूता इति तासा विषये किंचिदभिधान गते सर्पे तद्रेखासन्ताडनवन्निष्फलमिति तद्विषये किंचिन्नाभिधीयते। केवल सहसैव श्रुत्वा तत्स्पृशर्गर्तादिवन्यादिभिरनुमीयमाना महासागरवेलामिव दुर्दैवान्मूलिता स्वीयभग्नावशेषै स्वगौरव स्मारयन्तीमुत्तरवाहिनीपाठशाला स्वयौवनमनुस्मृत्य किंचिदन्तर्दूयमानामिव श्रीरघुनाथपाठशाला च समुद्दिश्य प्रारम्भतोऽद्यावधि समभिधीयते वृत्तान्त।

**'जम्बू'**नगरादष्टादशक्रोशान्तराले **'उत्तरवाहिनी'**नामधेय किंचित्तीर्थं विद्यते, यत्र पार्वतीस्वेदोद्भवा **श्रीदेविका** नाम नदी प्रवहति। एव किलाख्यायते यत्— 'महाराज श्रीगुलाबसिंहा लवपुराधीशस्य श्रीरणजीतसिंहस्य सेनानीपदमारूढ श्रीरणजीतसिंहादेशेन काश्मीरान् विजेतुमुत्तरवाहिनीमार्गेण तत्रत्ये 'हट्ट' नाम्नि वने मृगयाव्याजेन वराहान् हन्तु मति व्यधत्त। सोऽध्वश्रमश्रान्त कस्यचिद् बदरीवृक्षस्याऽधश्छायाया वाशगुरुसविधे शयानो निदद्रौ। स्वप्ने श्रीभगवन्त गदाधर भिक्षुवेशेन पुर स्थित रोषप्लुतमन्तश्शान्तमपि लोहितनयनविस्फारणन ज्वलदङ्गारानिव वर्षन्त सभयमद्राक्षीत्। सहसा च श्रद्धया चरणयोर्निपत्य स्वप्ने एव त महात्मानमुवाच— 'भगवन्! को भवान्? कुतोऽत्रागमन भवत? को निदेश? किमह करवाणि? श्रीचरणयोरर्हणयानुगृह्यतामय दास स्वमनोभावाभिव्यञ्जनेन चेति।" भिक्षुवेशो भगवानाह— अयि क्षत्रियडिम्भ! इदमुत्तरवाहिनीनामधेय महातीर्थं वर्तते यत्र गङ्गाकल्पा देविका प्रवहति। पुण्यस्थलीयम्, अत्र कृत पाप वज्रलेपायते" इत्यभिधाय क्षण तूष्णीभूते तजामय भिक्षुस्वरूपे भगवति गदाधरे गुलाबसिंह पुनश्चरणयोर्निपत्य "क्षमस्व भगवन्! नाहमितोऽग्रेऽत्र मृगया करिष्ये" इति भीत इवोवाच। वीरवेशस्य वीरस्वभावस्यापि च श्रीगुलाबसिंहस्य भिक्षुतो भीतिं परम विनय च समनुभूय परम-

प्रीतो भक्तवत्सलो भगवान् श्रीगदाधर क्षिप्र भिक्षुस्वरूप परिहाय स्वस्वरूपेण चतुर्भुजीभूय धृतशङ्खचक्रगदापद्म सलीलमवादीत्—"*गुलाबसिंह ! प्रीतोऽहमतिविनयवति, भिक्षुरक्षके, साधुसेवके च त्वयि। स्वल्पैरेवाहोभि काश्मीराद्यनेकदेशाधिपतिर्भविष्यसि*" इत्यभिधाय, कुङ्कुमतिलकमस्य भालेऽङ्गुष्ठेन विधाय, स्वय तत्रैवान्तर्बभूव । आश्चर्यचकितचित्तो महाराज श्रीगुलाबसिंह समुत्थाय देविकोदके मुख पश्यन् मस्तके कुङ्कुमतिलक निभाल्य, स्वप्नस्य सत्यतामनुमाय च "*कस्मिन् जन्मनि मयेय भगवत परा भक्तिराचरिता, यस्या इद भगवत साक्षात्काररूप योगिभिरपि अनन्तजन्मभिरपि दुर्लभ फल मया लब्धम्*" इति परमानन्दगद्गद साश्रुमुखनयनस्तद्भुव साष्टाङ्ग प्रणम्य मनसा भगवन्त गदाधर सस्मरन् ससेन काश्मीरान् प्रति प्रस्थित । ततो वर्षानन्तर मनावर'प्रान्त विजेतु तेनैव मार्गेण गच्छन् स्वप्नस्थानमुपेत्य पूर्वाभिमुखमुपविश्य, बद्धकरसम्पुटो, निमीलितनयन, क्षण भगवन्त गदाधर ध्यायन्, मनसि समप्राक्षीत्—"*भगवन् ! कियान् विलम्बो भगवद्वचसा पूर्णतायाम्*" ? इति । "*अष्टपञ्चाशद् दिनान्यवशिष्यन्ते*" इत्यशरीरिणी गिरमश्रौषीच्च ।

अथ पञ्चनदकेसरी महाराज श्रीरणजीतसिंह स्यालकोट समागतोऽकस्मादेव चन्द्रभागातीरस्थम् 'अखनूर'पत्तनमागतवान् । समाप्तेऽष्टपञ्चाशत्तमे दिवसे नयनाश्विवसुवसुमतीमिते (१८२२) ख्रिष्टाब्दे जूनमासस्य षोडशे दिने समागते एकोनषष्टितमे दिवसे चन्द्रभागानदस्यातिपावने तीरे '*पुत्रजीव*'वृक्षस्याधश्छायाया समासीन, ससामन्त, समन्त्रिमण्डल, पञ्चनदकेसरी, महाराज श्रीरणजीतसिंह स्वहस्तेन गुलाबसिंहस्य राज्यतिलकमकार्षीत् । एव प्राप्तराज्यो महाराज श्रीगुलाबसिंह पुन स्वप्नस्थलीम् अधिगत्य स्वकराभ्यामेक महान्त प्रस्तर देविकात समुत्थाप्य पूर्व यत्र शयितोऽभवत्, तत्र त निधाय पूर्ववच् श्रीगदाधरध्यानपरायण साङ्गस्य श्रीभगवद्गदाधरमन्दिरस्य निर्माण प्रत्यज्ञासीत् । तदनन्तर तिब्बताद्यनेकदेशान् विजयमानोऽपि भगवत श्रीगदाधरस्य साङ्गमन्दिरनिर्माण स्वजीवनलक्ष्येषु मुख्य लक्ष्यममन्यत । स्वसस्थापितप्रस्तर मन्दिरप्रतिष्ठान मत्वा परित पर्वतशिखरमालया परिवृतम् अनुवेदिक पाषाणेष्टिकामयेन प्राकारवलयेन वेष्टित मन्दिरमण्डलमचीकरत् । तस्य मध्ये स्वेष्टदेवस्य श्रीगदाधरस्यातिरमणीय स्वर्णपत्रजटित पूर्वाभिमुख मन्दिर निर्माप्य तस्य समन्ततो मत्स्यादिदशावताराणा मन्दिर निर्माप्य, ब्रह्मण सविधे गायत्रीसावित्रीसरस्वतीना प्रतिमासस्थापन विधाय च पारेदेविकमेक भगवतो महादेवस्याभिमुक्तेश्वरनामधेय मन्दिर, ततो गव्यूत्यन्तराले महादेवस्य श्रीरणवीरेश्वराभिध मन्दिर, श्रीरघुनाथमन्दिर च निर्माप्य, सर्वेषा मन्दिराणामङ्गभूत सच्छात्रावास साध्यापकनिवासमेक

गुरुकुलकल्प विद्यामन्दिर निरमीमपत् । यस्योत्तरवाहिनीश्रीगदाधरपाठशालेति पावन नामकरणमकार्षीत् । तस्या च स्वराज्यस्य पण्डितप्रकाण्डेभ्योऽतिरिक्तानपि विदुष· प्रायः सर्वस्मादपि भारतात् समुच्चित्य साङ्गवेदाध्यापकान्, नैयायिकान्, वेदान्तारविन्दसिद्धान्तमकरन्दप्रकाशनप्रभविष्णून् वेदान्तिन., सांख्ययोगसमन्वयनकुशलान् साङ्ख्यान्, मीमामामांसलप्रज्ञान् मीमांसकान्, अनुभूतिस्वरूपीय-पाणिनीय-व्याकरण-प्रयोगचणान् वैयाकरणान्, काव्यसाहित्यपुराणेतिहासज्यौतिषायुर्वेदान्वीक्षिकीत्रयी-वार्तादिसकलशास्त्रेषु पृथक् पृथक् प्रवीणान् पण्डितप्रकाण्डान् तत्तत्पदेषु नियुज्य तत्कालोचितेन पुष्कलवेतनेन तानपूपुजत् । उत्तरवाहिनीपाठशालीयच्छात्राणामध्यापनस्थानानि च चत्वारि कल्पितानि-श्रीगदाधरमन्दिरम्, अभिमुक्तेश्वरमन्दिरं, श्रीरघुनाथमन्दिरं, श्रीरणवीरेश्वरमन्दिरं चेति । तत्र श्रीगदाधरमन्दिरे द्विशत छात्रा समध्यगीषत, अपरेषु त्रिष्वेकैकशतम् । चत्वारो वर्णा· स्वस्ववर्णोचितशास्त्राणि समध्येतुं प्राभवन् । वर्णेतरेषा कृते श्रीतुलसी-कबीर-गुरुनानक-प्रभृतिमहात्मना पुस्तकान्यध्यापयितु प्रावध्नान्महाराज. । अत्र पञ्चशतोत्तरैकसहस्र (१५००) विद्यार्थिन. प्रवेशमर्हन्तीति प्रथम समादिदेश महाराजः । तेषु शराश्विशरमिता (५२५) जम्बू-काश्मीरवास्तव्या·, शरमुन्यग्नय· (३७५) पञ्चनदीयाः, तावन्त एवेतरप्रान्तीया., बाणाश्विनयनमिता (२२५) भारतेतरदेशीया प्रवेश्या आसन् । तेषु प्रवेशार्हेषु प्रतिशत चत्वारिंशज्जम्बू-काश्मीरवास्तव्या·, त्रिंशत् पञ्चनदीया , विंशति. समस्तोत्तरभारतीयास्तदितरे त्र देशसाधवो जिज्ञासवो योग्यतानुसार तत्तत्कक्षासु प्रवेश्यन्ते स्म तदानी छात्रा । प्रथमप्रवेशसमये छात्राणाम् (१) क्रमाङ्कः, (२) छात्रनाम, (३) पितृनाम, (४) आयु·, (५) ग्रामनाम, (६) प्रान्त (तहसील), (७) मण्डलम् (जिला), (८) सरक्षकनाम, (९) पठिताऽपठितत्वम्, (१०) किं कियत् पठितम्, (११) पठितश्चेद् योग्यताऽनुसार तत्तच्छ्रेण्या प्रवेश्य , (१२) द्वादशवर्षदेशीय एव छात्रोऽस्या पाठशालाया प्रवेशमर्हति स्म, (१३) पञ्चदशवर्षवयस्कोऽपि यदि किञ्चिदधीत स्यात्, (१४) विंशतिवर्षदेश्योऽपि यद्यधीतैकशास्त्र शास्त्रान्तर पठितुमीहेत, (१५) ततोऽधिकवर्षदेश्योऽपि अधिगतद्विशास्त्र शास्त्रान्तर-जिज्ञासुश्चेद् इत्येते पूरणीया अशा पूर्यन्ते स्म ।

### पाठशालीयाध्ययनाध्यापनवेला

ग्रीष्मकाल गौरचैत्रमासात् कार्तिकमासान्त यावत् प्रात ८ वादनत १२ वादनान्तम् । अपराह्णे ३ वादनत· साय यावत् ।

शीतकाले मार्गशीर्षात् फाल्गुनान्तं प्रातः १० वादनतः ४ वादनान्तं यावत् पाठशाला समलगत् ।

**नियमाः**

(१) प्रतिमासमुभयोः शुक्लकृष्णपक्षयोः प्रतिपदष्टमीष्वध्ययनाऽध्यापनावकाशाः समभूवन् । अमापूर्णयोरुभयोश्च मौखिक-लैखिकपरीक्षणं समभवत् ।

(२) दर्शनज्यौतिषायुर्वेदादिषु छात्रस्य रुचिं प्रवृत्तिं चानुभूय तत्तच्छ्रेणिषु प्रवेशोऽक्रियत ।

(३) प्रतिसप्ताहं बुधवासरे पूर्वाधीतपाठस्य श्रवणमितरदिनेषु निरन्तरमध्यापनम् ।

(४) प्रतिमासं प्रधानाध्यापकप्रबन्धकाभ्यामध्यापकेन सम्भूय छात्राणां परीक्षणम् ।

(५) षाण्मासिकपरीक्षणं धर्मार्थसमितिसदस्यानामधीनम् ।

(६) चैत्रमासे रामनवमीदिनात् प्राक् श्रीरघुनाथमन्दिरे वार्षिकपरीक्षणम् ।

(७) प्रतिमासं गृहीतच्छात्रवृत्तीनां छात्राणामध्यापकेनैव साक्षित्वप्रतिपादनम्, अनुत्तीर्णे छात्रे तस्माद् गृहीत्वा, स्वस्माद् वा तेनैव अध्यापकेन तत्प्रत्यर्पणं च कार्यम् ।

(८) प्रातः सायं वारद्वयम् उपस्थितिविधानम् । अनुपस्थितच्छात्रेभ्यः दण्डप्रतिपादनम् ।

(९) प्रतिशतमेकः शिष्याग्रणी समभवत्, यश्छात्राणां नियन्त्रणं यथाशक्ति तदध्यापनं चाकार्षीत् ।

(१०) तत्तच्छास्त्रज्ञेभ्य एव विद्वद्भ्यस्तत्तच्छात्राणाम् अध्ययनम् ।

(११) पाठशालीयसमस्तच्छात्राणां श्रेणीश्चतुर्धा विभज्य श्रीगदाधरमन्दिरे, श्रीअभिमुक्तेश्वरमन्दिरे, श्रीरणवीरेश्वरमन्दिरे, श्रीरघुनाथमन्दिरे च तासां पाठनम् ।

(१२) व्रतोत्सवादिदिनेषु प्रातः सायं पूजारातिकसमये चतुर्ष्वपि मन्दिरेषु यथाविभागं यथासमयं समुपस्थानम् ।

(१३) प्रतिदिनं सर्वैरेव छात्रैर्वारत्रयं सन्ध्योपासनं कर्तव्यम् ।

(१४) तत्तच्छ्रेणीस्थै सर्वैरेव छात्रै प्रतिसन्ध्यमेकैकमालया गायत्रीजपोऽवश्य कार्य, द्विजेतरेषा च विष्णुसहस्रनामोच्चारणमवश्यकर्तव्यमासीत् ।

(१५) सन्ध्योपासकाना विष्णुसहस्रनामोच्चारकाणा च प्रतिविंशति कश्चिदेक शिष्याग्रणी कल्प्यते स्म, यस्तेषा सन्ध्योपासनस्य विष्णुसहस्रनामोच्चारणस्य च गुण-दोषान् निभाल्य निग्रहानुग्रहौ व्यधात्, विशिष्टा दक्षिणा च समग्रहीत् ।

(१६) विष्णुसहस्रनाम्न पुस्तकस्यैक पाठ प्रति एकैकपणपारितोषिकप्रदानम् । यावत पाठान् कश्चिच्छात्र कुर्यात् तावत पणान् स लभते स्म । निरीक्षकश्चेत् कुर्यात्, स ततो द्विगुणान् लभेत ।

(१७) एकस्मिन् वर्षे मासद्वयमनुपस्थितश्छात्र कारणावश्यकत्वमनुसन्धाय पुन प्रवेश्य, द्वितीयवार १५ दिनान्यनुपस्थित एव, तृतीयवार दश दिनान्यनुपस्थित पुन प्रवेश्योऽभूत् ।

(१८) ततोऽधिकमनुपस्थितो न प्रवेशमार्हत्, विशेषाधिकारिसाहाय्यमन्तरा ।

(१९) द्यूतचौर्यव्यभिचारसुरापानव्यसनिनो विद्यार्थिनस्तु सर्वदा निष्कास्या अभूवन् । श्रीरणवीरदण्डविधिना दण्ड्याश्च यदि कश्चित् पाठशालाधिकारिदेय-दण्डादधिकापराधवान् स्यात् तदानीं स न्यायालयेऽभियोक्तव्योऽभूत् ।

(२०) महाराजश्रीरणवीरसिंहकारितश्रीरणवीरदण्डविधिविषयान् अध्यापको विद्यार्थिन श्रावयेत् । येन ते तन्निर्दिष्टधर्मानुसार व्यवहरेयुरन्यथा दण्ड्या निष्कास्याश्च भवेयु ।

(२१) आकस्मिकावकाशदिनेषु विद्यार्थिभि सम्भूय स्वगुरूणा समक्षे स्वाधीतविषये शास्त्रार्थोऽवश्य विधेय ।

(२२) प्रतिवर्षं श्रावणमासे ग्रीष्मावकाशा विधेया । ग्रीष्मावकाशदिनेषु च येऽन्तेवासिनो विद्यालये सन्तिष्ठेरन्, तेभ्या भोजनादिक प्रदेय स्यात्, न गृहान् गतेभ्य ।

(२३) पर्वोत्सवव्रतादिदिवसेषु महाराजप्रासादाद् दानरूपेण समागतम् अन्यैश्च दानिभि प्रदत्त धन विद्यार्थिभ्यो विभज्य देयम् । अध्यापकेभ्यश्च ततो द्विगुणम् ।

(२४) परीक्षोत्तीर्णच्छात्राय प्रशसापत्र कुलपतिहस्ताक्षराङ्कित, विशेषपुरस्कारादिक च प्रतिवर्षं पाठशालोत्सवावसरे स्वय महाराजो धर्मार्थसमितिप्रधानो वा छात्रोत्साहसवर्धनपुर सर वितरेत् ।

(२५) प्रतिवर्षं विद्यालयोत्सवदिनेषु अधिकाधिकाङ्कं समुत्तीर्णच्छात्रेभ्य शास्त्रार्थसमरविजयिभ्यश्च सप्त पदकानि प्रदातव्यानि । तेषु द्वे सौवर्णे पञ्च राजतानि तत्र प्रथम पदक तदानीन्तनशतद्वयरूप्यकमूल्य, द्वितीय सार्द्धैकशतमूल्य, तृतीय १००) शतरूप्यकमूल्य, तुरीय ५०) पञ्चाशद्रूप्यकमूल्य पञ्चम २०) विंशति-रूप्यकमूल्य, षष्ठ १०) रूप्यकमूल्य, सप्तम ५) रूप्यकमूल्यम् । पदकस्यैकस्मिन् पार्श्वे महाराजप्रतिमा तदखण्डैश्वर्यबोधकाक्षराणि च । अपरस्मिन् भागे तु विद्यार्थिनो नामधेय पारितोषिककार्यं च समुल्लख्य स्यात् ।

(२६) यदि कश्चित् छात्रश्छात्रवृत्ति प्राप्नुयात्, तदानी तस्य तत्सरक्षकस्य च प्राप्तिसूचकानि हस्ताक्षराणि अवश्य ग्रहीतव्यानि ।

(२७) तदानीन्तना अध्यापका अध्यापनकार्यातिरिक्त महाराजश्रीरणवीर-सिंहकारितसंस्कृतपुस्तकाना सशोधनादिकार्यं प्रतिलिपि चापि अकार्षु । अशीति-रूप्यकमासिकवेतनोऽध्यापको विंशतिरूप्यकाणि सशोधनादिकार्यशुल्करूपेणालभत । ६०) षष्टिरूप्यकमासिकवेतनक २०) विंशतिरूप्यकाणि, ५०) पञ्चाशद्रूप्यक-मासिकवेतनक १०) दश रूप्यकाणि, ३०) त्रिंशद्रूप्यकमासिकवेतनकोऽपि १०) दशैव रूप्यकाण्यलभत ।

(२८) जम्बूकाश्मीरराज्याद् बहिर्वास्तव्येभ्योऽध्यापकेभ्यो बृटिशराज्यरूप्य-काणि वेतनरूपेण प्रादीयन्त । जम्बूकाश्मीरराज्यवास्तव्येभ्यस्तु स्वराज्यकल्पितानि दशाणकमूल्यानि 'चिलकी' नामधेयानि रूप्यकाणि वेतनत्वेन प्रादीयन्त । महाराज-कारितपुस्तकानुवादकेभ्य, सशोधनकार्यकर्तृभ्य, सङ्गृहीतृभ्यश्चाध्यापकेभ्यो यथोचित पुरस्कारादिकमपि व्यतीर्यत ।

(२९) अध्यापकाना नामोच्चारण तत्तच्छास्त्रैरेव कर्तव्यम् । अर्थात्—न्याय-शास्त्राध्यापको 'नैयायिक' इति वक्तव्य, व्याकरणाध्यापको 'वैयाकरण' इति, मीमासाध्यापको 'मीमासक' इत्यादि ।

(३०) प्रतिपञ्चाशद्विद्यार्थि सेवायै कश्चित् सेवक सरक्षणीयो यो रुग्णाद्य-वस्थासु तेषा साहाय्य समाचरेत् ।

(३१) पूर्वपुस्तकस्य समाप्तौ सत्या परीक्षा विधेया । परीक्षोत्तीर्ण एव छात्रोऽग्रिमपुस्तक पठितु शक्नुयात् ।

(३२) रुग्णावस्थाया छात्राय भोजनौषधादिकमवश्य देय यदसौ छात्रावासस्थ स्यात्, न गृह गताय ।

## पारितोषिकवितरणम्

(३३) तत्तच्छास्त्रसम्बन्धिपुस्तकाना कण्ठीकरणरहस्योद्घाटनविशेषव्याख्यान-समुल्लेखनशलाकापरीक्षाप्रश्नोत्तरण कुर्वद्भ्यो विद्यार्थिभ्योऽधस्तनक्रमेण पारितोषिक-मूल्यमित द्रव्य व्यतीर्यत । तानि पुस्तकानि पुरस्कारमूल्यमित द्रव्य च निर्दिश्यन्ते ।

## तत्तद्विषयसमुत्तीर्णच्छात्रेभ्यः पारितोषिकवितरणम्

### १. प्रथमवर्ग—

| विषये | पारितोषिकम् रु प |
|---|---|
| १ व्यवहारादर्शे | २ २५ |
| २ सूक्ष्मव्याकरणे | १ २५ |
| ३ संहितापाठे | १ ७५ |
| ४ अमरकोषे | २ २५ |
| | योग —७ ५० |

### २. द्वितीयवर्ग—

| विषये | पारितोषिकम् रु प |
|---|---|
| १ सारस्वतलघुकौमुद्या | २ ५० |
| २ पदक्रमे | २ ३७ |
| ३ सारचन्द्रिकायाम् | १ ६३ |
| ४ कारिकावल्याम् | २ ३७ |
| ५ अष्टाङ्गयोगहठप्रदीपिकायो | २ ५० |
| ६ मीमांसादर्शने | २ ५० |
| ७ निरुक्ते | २ ५० |
| ८ वेदान्तपरिभाषायाम् | २ २५ |
| ९ गीतावल्याम् | ३ ३७ |
| १० लघुत्रय्याम् | ४ ५० |
| ११ रणवीरवृत्तरत्नाकर | २ ५० |
| १२ मन्त्रमहोदधौ | ३ ०० |
| | योग —३२ ०० |

### ३ तृतीयवर्ग—

| विषये | पारितोषिकम् रु प |
|---|---|
| १ रेखागणिते | ५ ०० |
| २ सिद्धान्तकौमुद्याम् | ३ ०० |
| ३ जटाघनयोर्विज्ञाने | ३ ०० |
| ४ किरातार्जुनीये | ३ ०० |
| ५ नैषधीयचरिते | २ ०० |
| ६ सांख्यतत्त्वकौमुद्याम् | ३ २५ |
| ७ मुक्तावल्याम् | २ ०० |
| ८ याज्ञवल्क्यस्मृतौ | २ ६३ |
| ९ अधिकरणमालायाम् | ३ २५ |
| १० पिङ्गलसूत्रे | ३ २५ |
| ११ सिद्धान्तसूत्रे | २ ६३ |
| १२ सर्वप्रकारकारिकारत्नावल्याम् | ६ ५० |
| १३ शारदातिलक | ४.०० |
| | योग —४३ ५० |

४ चतुर्थवर्गे—

| विषये | पारितोषिकम् |
| --- | --- |
| | रु प |
| १ शिशुपालवधे | २ २५ |
| २ सांख्यशास्त्रे | २ ७५ |
| ३ माथुर्याम् | ४ ५० |
| ४. ब्राह्मणग्रन्थेषु | ६ ०० |
| ५ योगदर्शनभाष्ये | ४.२५ |
| ६ चित्सुख्याम् | ४ २५ |
| ७ बीजगणिते | ४ २५ |
| ८. त्रिकोणमितौ | ४.२५ |
| ९ ब्रह्मसूत्रभाष्ये | ४ २५ |
| १० चरकसंहितायाम् | २ ७५ |
| योगः— | ३८ ७५ |

५. पञ्चमवर्गे—

| विषये | पारितोषिकम् |
| --- | --- |
| | रु |
| १. वैयाकरणभूषणे | ७ |
| २. वात्स्यायनभाष्यतात्पर्यटीकायाम् | ९ |
| ३ अलङ्कारकौस्तुभे | ५ |
| ४ कात्यायनभाष्ये | ६ |
| ५ शक्तिवादे | ६ |
| ६ प्रशस्तपादभाष्ये | ६ |
| ७. मीमांसाभाष्ये | ६ |
| ८. किरणावल्याम् | १ |
| ९. वेदान्तदर्शनभाष्ये | १२ |
| १०. सर्वप्रकाररसग्रन्थे | ७ |
| ११. तत्त्वविवेके | ९ |
| १२. वेदभाष्ये | १२ |
| १३ व्युत्पत्तिवादे | १३ |
| १४. वैयाकरणमञ्जूषायाम् | १५ |
| १५. प्रदीपोद्योतयो | १२ |
| १६ प्रदीपभाष्ये | १२ |
| १७ वाग्भटे | १२ |
| १८ कोरब्रह्मानन्द्याम् | १२ |
| १९. न्यायलीलावत्याम् | १२ |
| २०. समस्तब्राह्मणभाष्ये | २५ |
| २१. न्यायकुसुमाञ्जलौ | ३० |
| २२. बोधाधिकारे | १७ |
| २३. तर्ककुतूहले | ३० |
| २४. सूर्यसिद्धान्ते | २५ |
| २५. इतिहासग्रन्थेषु | १८ |
| योगः | २९९ |

संस्कृतसाहित्यसुधास्वादामरीकृतात्मनि, महामहिमशालिनि श्रीरणवीरसिंह-भूपतौ नयनवेदविहगवसुमतीमिते १९४२ वैक्रमाब्देऽमरलोकं गतवति, किंकर्तव्यविमूढे तत्परिजने, शोकसागरनिमग्ने प्रजागणे, शनैः शनैः क्रमेण क्षीयमाणेपूत्तरवाहिनी-श्रीगदाधरपाठशालीयाध्यापकेषु, श्रीगोपालशास्त्री गङ्गारामादिश्रोत्रियसाहाय्येन सर्वं पाठशालीयकार्यभारं समवाक्षीत् ।

असौ विद्वान् सर्वतन्त्रस्वतन्त्रोऽपि विशेषतया नव्यन्यायनिष्णातोऽभूद्यो ह्यमृत-सरोवास्तव्यहेमराजप्रभृतिनैयायिकशिरोमणीन् मच्छिष्यान् समपीपठत् । न्याय-

केसरिणोऽस्य श्रीहेमराजस्यैव शिष्याग्रणीः सर्वशास्त्रेष्वप्रतिहतगतिर्लोकोत्तरप्रतिभाप्रभाववशीकृतविद्वन्मण्डल, सरस्वत्याः प्रियपुत्रः, **श्रीहरदत्तशर्माऽमृतसरसि** समाविर्भूय लब्धप्रतिष्ठ, कतिचिद्धायनानि श्रीरघुनाथपाठशालीयप्रधानाध्यापकपदमलमकार्षीत् ।

कालेन विद्वत्प्रकाण्डे गोपालशास्त्रिणि दिवङ्गते उत्तरवाहिनीश्रीगदाधरपाठशालाऽपि तेनैव सह विलिल्ये । ततः कतिपयहायनानि तान्युत्तरवाहिनीश्रीगदाधरपाठशालाभवनानि निर्जीवशरीराणीव तीर्थयात्रिणां दर्शकानां चेतांसि स्वाकारमहिम्ना समाकृष्य स्वाभिमुखीकृत्य च स्वातीतवैभवशालिनीं दशां भवनस्थवनविहगकलरवैः श्रावं श्रावं करुणरसपरिपूर्णानि समकार्षुः ।

कदाचित्तीर्थयात्रिभिर्दर्शकैः श्रीगदाधरमन्दिराधिष्ठातृभिश्च सम्भूय प्रार्थितो महाराजः श्रीप्रतापसिंहस्तामिमामुत्तरवाहिनीश्रीगदाधरपाठशालां पुनरुद्धर्तुकामो जम्बूप्रान्तीयघोरडीग्रामवास्तव्यं पाणिनीयव्याकरणे सिद्धं, प्राक्तननूतनोभयन्यायनिपुणं, **शिवरामशर्माणं** विद्वांसं समाहूय सादरं तम् उत्तरवाहिनीश्रीगदाधरपाठशालीयप्रधानाध्यापकपदमध्यतिष्ठिपत् ।

असावपि कानिचिद् वर्षाणि बटून् पाणिनीयव्याकरणप्रक्रियां, न्यायाभिलापनपद्धतिं चाऽशिशिक्षत् । तस्मिन् श्रीशिवरामविदुष्यपि देवभूयं गते, महाराजः श्रीप्रतापसिंहो भगवन्तं श्रीविश्वनाथं द्रष्टुकामः कदाचित् वाराणसीमयासीत् । तत्र विदुषां समाजे सभापतिपदमधितिष्ठन् महाराजः श्रीप्रतापसिंहो जयदेवप्रभृतिभिर्विद्वद्भिः सह विवदमानं नव्यन्यायमूर्तिं पाणिनीयव्याकरणाम्बुधेः परं पारं गतं मैथिलं **'श्रीचन्द्रनाथ झा'** नामानं पण्डितं दृष्ट्वा, तदभिलापनपद्धतिं च समाकर्ण्य परां प्रीतिमापन्नस्तमनुनीय स्वेन सहैव जम्बूनगरमानिनाय ।

अत्रत्यैर्विद्वद्भिः शास्त्रार्थादिभिः सम्यक् परीक्षितं तमङ्गमुनिविहगवसुमतीमिते (१९७६) वैक्रमाब्दे उत्तरवाहिनीगदाधरपाठशालीयप्रधानाध्यापकपदमध्यतिष्ठिपत् ।

नयननगविहगवसुमतीमित (१९८२) वैक्रमाब्दान्तमयमुत्तरवाहिनीश्रीगदाधरपाठशालायां छात्रानध्यापिपत् । श्रीचन्द्रनाथझाशर्मणोऽध्यापनकाले कश्चित्कालं पण्डितप्रकाण्ड **श्रीशुकदेवमहानुभावोऽप्यपीपठत्** तान् । रसमुनिविहगेन्दुमित (१९७६) वैक्रमाब्दीयश्रावणमासस्य त्रिंशत्तमदिनतः समारभ्य वसुमुनिविहगेन्दुमित (१९७८) वैक्रमाब्दीयवैशाखमासस्याष्टमदिनान्तं यावत् श्रीचन्द्रनाथझाशर्मणोऽध्यापनकाले तत्र **श्रीनिवासशास्त्री** समध्यापिपत् ।

अब्धिवसुविहगवसुमतीमिते (१९८२) वैक्रमे वत्सरे **श्रीचन्द्रनाथझाशर्मणि** गृहं गते काव्यन्यायव्याकृतितीर्थ श्रीरघुनाथसंस्कृतपाठशालीयाध्यापकेष्वन्यतम **श्रीराम-प्रपन्नशास्त्री** उत्तरवाहिनीश्रीगदाधरपाठशालायां **श्रीचन्द्रनाथझाशर्मणः** स्थानेऽध्यापक-पदमलमकार्षीत् । अयमेव विद्वत्प्रकाण्डः तत्रोत्तरवाहिनीश्रीगदाधरपाठशालायां पञ्चनद-विश्वविद्यालयीयप्राज्ञ-विशारद-शास्त्रिपरीक्षाप्रणाली समचीचलत् । अस्य समये पर्याप्ता विद्यार्थिनस्तास्ताः परीक्षाः समुत्तीर्य शास्त्रिणः समभूवन् ।

वेदवसुनन्देन्दुमिते (१९८४) वैक्रमाब्दे पौषमासस्य नवमतारिकायां श्रीराम-प्रपन्नस्य रुग्णावकाशसमये **श्रीजगन्नाथशास्त्री** ऊधमपुरपत्तनवास्तव्यस्तत्पद-मध्यतिष्ठत् ।

१९८४ वैक्रमाब्दस्य तपसि मासि श्रीरामप्रपन्नशास्त्रिणि ब्रह्मभूयं गतेऽस्मि-न्नेव वर्षे फाल्गुनमासस्य २६ तारिकायां प्रातः षड्वादनवेलायां श्रीजगन्नाथशास्त्रिणः सकाशात् सर्वम् उत्तरवाहिनीश्रीगदाधरपाठशालीयकार्यभारं समादाय **श्रीजयराम-शास्त्रिणे** समार्पयन्नधिकारिणः ।

ततः **श्रीगौरीदत्तशास्त्री** मुनिविहगनन्देन्दुमिते (१९९७) वैक्रमे वत्सरे श्रीजय-रामशास्त्रिप्रार्थनया द्वितीयाध्यापकपदे न्ययुज्यताधिकारिभिः ।

अयं **श्रीगौरीदत्तः** शास्त्री लौकिकव्यवहारप्रवीणोऽध्यापनकर्मणि कुशलः, प्रबन्ध-विधानचतुरः सुसाहाय्यमकार्षीत् **श्रीजयरामशास्त्रिणः** ।

**श्रीशिवरामविदुषः** समये पञ्चविंशतेश्छात्राणाम्, श्रीचन्द्रनाथझावैयाकरणस्य समये त्रिंशच्छात्राणाम्, परमतपस्विनः परिश्रमैकशरीरस्य श्रीरामप्रपन्नशास्त्रिणः **श्रीजयरामगौरीदत्तशास्त्रिणोश्च** समये चत्वारिंशच्छात्राणां भोजनादिप्रबन्धस्तत्रोत्तर-वाहिनीश्रीगदाधरपाठशालायां समभवत् ।

श्रीरामप्रपन्नशास्त्रिणः समये दूरदूरतः स्वातन्त्र्येण तत्तच्छास्त्राणि समध्येतु-मप्यहमहमिकया विद्यार्थिनः समापतन्ति स्म ।

पञ्चनदविश्वविद्यालयीयप्राज्ञ-विशारद-शास्त्रिपरीक्षासु तु शतं प्रतिशतं छात्राः समुत्तरन्ति स्म । **श्रीजयरामगौरीदत्तशास्त्रिणोः** समयेऽपि विश्वविद्यालयीयो गृहीयश्च परिणामः परं सन्तोषजनक एवासीत् । यतो हीमावुभावपि परिश्रमशीलौ शास्त्राभ्यासव्यसनिनौ चास्ताम् ।

नयनगगननभोऽब्धिमिते (२००२) वैक्रमे वत्सरे पौषमासस्य पञ्चमतारिकायां

श्रीजयरामशास्त्रिणि श्रीरघुनाथपाठशालाया न्यायाध्यापकपदमारूढे श्रीगौरीदत्तशास्त्री प्रथमाध्यापकतामापन्न । श्रीगङ्गाधरशास्त्री य पूर्वं श्रीरघुनाथपाठशालीयाध्यापकेष्वन्यतमोऽभवत् तदानीमुत्तरवाहिनीश्रीगदाधरपाठशालाया द्वितीयाध्यापकोऽभवत् । २००३ वैक्रमाब्दीयज्येष्ठमासे श्रीगौरीदत्तशास्त्रिणि गृहीतावकाशे आषाढमासस्य १३ त्रयोदशतारिकाया श्रीअनन्तरामशास्त्री प्रधानाध्यापकपदमलमकार्षीत् ।

अथ श्रीअनन्तरामशास्त्री लोकोपचिकीर्षया विस्तृततर कार्यक्षेत्रमन्वीक्षमाण तत्र सङ्कीर्णप्रदेशे स्वप्रतिभोन्मेषावसरमलभमानो भाद्रपदमासीयपञ्चदशतारिकापर्यन्त ग्रीष्मावकाशीयमासद्वय व्यतियाप्य व्यावर्तत । पुन श्रीरघुनाथपाठशालायामेवाथर्ववेदाचार्यपदमन्वग्रहीत् ।

ततो गौरीदत्तशास्त्रिणि पुनरायाते गङ्गाधरशास्त्री सेनाया पुष्कल वेतन लब्ध्वा सैनिकपण्डितोऽभवत् । एवमध्यापकेषु छात्रेषु च क्रमेण निर्गतेषु गौरीदत्तपण्डितोऽपि द्वादशाधिकद्विसहस्रतमे २०१२ वैक्रमाब्दे ज्येष्ठमासस्य पञ्चमतारिकाया श्रीरघुनाथपाठशालीयाध्यापकेष्वन्यतमोऽध्यापकोऽस्मार्यधिकारिभि । एवमुत्तरवाहिनीश्रीगदाधरपाठशालाऽत्यार्द्धिं प्राप्तापि क्रमेण ह्रासमापन्नाऽन्ते महासागरे सरिदिव श्रीरघुनाथसस्कृतमहाविद्यालये विलीनाऽभवत् ।

उत्तरवाहिन्या श्रीगदाधरपाठशालायामध्यापकवेतनादिषु छात्राणा भोजनवसनादिषु च तदानी श्रीरामप्रपन्नादिविद्वत्समये सहस्रद्वयादपि अधिको व्ययोऽभवत् ।

**इदमत्र निर्दिश्यते —**

वसुविहगप्रकृतीन्दुमिते (१८९८) वैक्रमे वत्सरे महाराज श्रीगुलाबसिह उत्तरवाहिन्या सान्द्र श्रीगदाधरमन्दिर श्रीदगाधरपाठशाला च निर्माप्य प्रत्यतिष्ठिपत् । पर महाराजश्रीगुलाबसिहस्य तनूजन्मा परमपितृभक्तो महाराज श्रीरणवीरसिह सार्वभौमतुल्यस्य, नवपराक्रमशालिनो मानवधर्मधुरधरस्य, स्वपितुश्चरणचिह्नान्यनुसरन्, विहगाग्निनोननन्देन्दुमिते (१९२९) वैक्रम हायन प्रभूततरस्थिरचरधनसम्पन्न महान्तमेक धर्मार्थविभाग तत्कार्यालय च स्वराज्य पृथक् सस्थापितवान् ।

तत प्रभृति सर्वत्र मन्दिरतीर्थादिषु व्ययो धर्मार्थविभागकोषादेव प्रारब्ध । धर्मार्थविभागाधिकारिणा महाराजश्रीरणवीरसिहादेशेन उत्तरवाहिनीश्रीगदाधरमन्दिर श्रीगदाधरपाठशाला-गोशाला-रसशाला-पथिकशालाद्यखिलविषयोद्बोधक शिलालेखमेक लेखयित्वा तत्रोत्तरवाहिन्या श्रीगदाधरमन्दिरसविध सा शिलासन्निवेशिता । तस्य शिलालेखस्याद्यावधि केषाचिद्धर्मप्राणाना चेतसि इव श्रीगदाधरपाठशाला महाराज-

श्रीरणवीरसिंहसंस्थापिता" इति संशीतिर्जायते । पर महाराज श्रीरणवीरसिंह स्वपितृपादैर्निर्मापितसंस्थापिताया पाठशालाया व्यवस्थापक एव, न तु वैक्रमे एकोनत्रिंशदधिकैकोनविंशतितमे (१९२९) वर्षे श्रीगदाधरपाठशाला निर्माप्य ता स एव प्राचीचलत् इत्यतिवृद्धाना विदुषा च मुखात् *कर्णोपकर्णिकया श्रुतमिद वृत्तम्* ।

(२)

## श्रीरघुनाथसंस्कृतपाठशाला

पञ्चदशाधिकैकोनविंशतिशततमे (१९१७) वैक्रमे (१८८५) ख्रीष्टाब्दे वैशाखशुक्लपूर्णिमाया श्रीरघुनाथमन्दिरसंस्थापनसमकालमेव श्रीरघुनाथसंस्कृतपाठशालाया अपि संस्थापन समभूत् । श्रीरघुनाथमन्दिर परित आवेष्टकचतुष्टय (अहाताचतुष्टयम्) निर्माप्य तत्रेन्द्रादिदेवाना, ब्रह्मर्षीणा, राजर्षीणा च प्रतिमा, शालिग्रामशिलाश्च विधिना संस्थाप्य, चतुर्णामप्यावेष्टकाना (अहातानाम्) क्रमेण ऋगावेष्टको, यजुरावेष्टक, सामावेष्टक, अथर्वावेष्टक इति नामानि निर्दिश्य तत्र चतुर्णां वेदानामध्यापनार्थ चत्वारोऽध्यापका न्ययुज्यन्त ।

ततो यथानियम व्याकरणादिषडङ्गानि, न्यायादिषड्दर्शनानि, मन्वादिस्मृती, इतिहासपुराणानि, आयुर्वेदाद्युपवेदाश्चाध्यापयितु मन्दिर परित तत्तदध्यापकस्थानानि कल्पितान्यासन् । *गोपदायितायतशिखाना*, *चन्दनकुङ्कुमविभूषितललाटाना*, *सव्यस्कन्धस्थितब्रह्मसूत्राणा*, धृतामलवसनाना, यथास्थान पद्मासनासीनाना वेदविदुषा सस्वरैर्वेदध्वनिभिस्तदानी नभोऽपूर्यत । तत्तच्छास्त्रार्थाऽभिसन्ध्यनुसधानेन सयुक्तिक तास्तान् अर्थान् प्रतिपादयतोऽध्यापकान्, तत्र तत्रोहापोहौ विदधत कुशाग्रधिषणान् अन्तेवासिनश्च निरीक्ष्य प्रीतमानसा भक्तजना विस्मृतकलिप्रभावा सन्त साक्षात् कृतयुग तत्र समन्वभवन् ।

अहो ! महाराजश्रीरणवीरसिंहस्यास्तिकता, धार्मिकता, दूरदर्शिता, शास्त्रनिष्ठा च वचसामगोचरा । गुणग्राहिणो महाराज श्रीरणवीरसिंह श्रीरघुनाथमन्दिरस्य प्रतिष्ठाया कारयितृभ्य, सुपरीक्षितविद्वद्भ्य, सर्वतन्त्रस्वतन्त्रेभ्य, श्रीगोकुलचन्द्रेभ्य *श्रीरघुनाथमन्दिरस्य श्रीरघुनाथपाठशालायाश्च समस्त कार्यभार समार्पयत्* । मन्दिरस्याधिष्ठातृपद पाठशालायाश्च मुख्याध्यापकपद श्रीगोकुलचन्द्रशर्माण एवाध्यतिष्ठन् । पदवाक्यप्रमाणपारावारपारगतमतय इमे श्रीगोकुलचन्द्रशर्माणो महता कौशलेन कार्यद्वय सम्पादयन्तो महती ख्याति समाप्नुवन् विद्वत्समाजे । महाराजश्रीरणवीरसिंहो



जम्बूनगरस्थ श्रीरघुनाथमन्दिरम्

जम्बूनगरे श्रीरणवीरेश्वरनाम्ना प्रसिद्धम्, अतिरमणीयम्, एकं शिवमन्दिरमपि निरमीमपत्। तत्पितृपादैः महाराजश्रीगुलाबसिंहैः स्वसौधसविधे स्वेष्टदेवस्य श्रीगदाधरस्यैकं मन्दिरं प्रागेव कारितमासीत्। तेषु त्रिषु मन्दिरेषु तिस्रः पाठशालाः संस्थापयितुं समादिदेश महाराजः श्रीरणवीरसिंहः।

श्रीरणवीरेश्वरपाठशालाया मुख्याध्यापकपदं श्रीगोकुलचन्द्रशास्त्रिणो ज्येष्ठाननुजन्मानः श्रीगङ्गाधरशास्त्रिणः समलमकार्षुः। श्रीगदाधरपाठशालाया मुख्याध्यक्षपदं तत्रत्यो रैणाजातीयोऽधिष्ठाता समन्वग्रहीत्।

श्रीगोकुलचन्द्रशर्मणामनुरोधेन स्वेच्छया वा प्रत्नतूलन्यायनयनिष्णातं, व्याकरणप्रभावनिरस्तसमस्तशब्दाज्ञानं चुम्बनझानामानं, मैथिलं, विद्वांसं, शास्त्रार्थसमरविजयिनं, वेदषडङ्गविदं, जागदीशीपञ्चलक्षणीप्रभृतिनव्यन्यायग्रन्थेषु लब्धप्रतिष्ठं, जनार्दनभट्टनामानं परमकर्मकाण्डिनं दाक्षिणात्यं विद्वांसं, सर्वशास्त्रेष्वप्रतिहतगतिमपि विशेषतया वेदान्तसिद्धान्तारविन्दवनविहरणभास्वरं **गोविन्दाचारिणं**, जयपुरवास्तव्यं वैदिकं विद्वांसं **ब्रजलालशर्माणं**, पदवाक्यप्रमाणपारावारपारगतं वङ्गदेशीयं **श्रीरसमोहन**नामधेयं, महाचार्यं सिद्धयोगमहौषधिनिर्धूतातङ्कराक्षसमायुर्वेदाचार्यं **श्रीदिलारामं**, ज्योतिर्विदमपरं भास्कराचार्यं **श्रीभास्कराचार्यं** पुराणेतिहासमर्मविदं सस्वरवेदोच्चारणकुशलं, व्यासं, ऋग्यजुषां मर्मवेदिनं वाराणसेयं **देवकृष्णं**, जम्बूनगरवास्तव्यं साहित्यशास्त्रसारपारदृश्वानं **श्रीगङ्गारामं**, गादाधरीजागदीशीव्युत्पत्तिवादादिग्रन्थमर्मज्ञं शास्त्रार्थसमरविजयिनं तैलङ्गं **श्रीदेवकृष्णं**, कार्नाटकं **श्रीवेङ्कटशास्त्रिणं**, काश्मीरिकशैवशास्त्रविदं **श्रीदामोदरं श्रीगोविन्दकौलं** च, प्रत्यभिज्ञापरिशीलननिपुणौ काश्मीरिकतन्त्रशास्त्रचणौ **महाडिम्बेश्वरकौलौ**, 'श्रीरघुनाथगुणोदयमहाकाव्यस्य' 'धर्मसंक्षिप्ताह्निकस्य' च कर्तारं **नव्यचण्डीदासं**, काव्यकलाकलनकुशलं नीतिनिपुणं, **साहिबरामं**, 'रणवीरव्रतरत्नाकरस्य' कर्तारं **श्रीशिवशङ्करं**, 'चित्प्रतिभा'भिधवेदान्तग्रन्थस्य कर्तारं **श्रीवासुदेवम्**, आयुर्वेदविषयकं 'विषहरतन्त्रस्य' कर्तारं **श्रीगणेशशास्त्रिणं**, 'प्रश्नरत्नावली' निर्मातारं **श्रीलल्लपण्डितं** चादरेण समाहूय तत्तदधिकारेषु तदास्थानमचीकरत् महाराजः श्रीरणवीरसिंहः।

तेषां तत्र पाठशालायां समागमनसमयो निर्गमसमयश्च महताऽनुसन्धानेनापि निर्णेतुं नाशक्यत। तात्कालिकसमस्तरजिस्टर (रजिष्टर) प्रभृतिप्रामाणिकपुस्तकानि तात्कालिकाधिकारिप्रमादेन दैववशाद् वा विनष्टानीति श्रीरघुनाथपाठशालीयवर्तमानप्रमुखाध्यापकमुखादाकर्ण्यते। तेषु के उत्तरवाहिनीपाठशालायामपीपठन्, के च श्रीरघुनाथपाठशालायामित्यपि निर्णेतुं न शक्यते, इतरप्रमाणानुपलब्धेः। केवलं

डाक्टरस्टीनकृतश्रीरघुनाथपुस्तकालयसूचीपत्रात् (केटलोगन) तेषां वैदुष्यमध्यापकत्वं सम्पादकत्वमनुवादकत्वं च परिज्ञाय सर्वमिदं समभिहितम्।

## श्रीरघुनाथसंस्कृतमहाविद्यालयस्य समुद्देश्यम्

अपरा सर्वा अपि भाषास्तदीया वर्णाश्च काल्पनिका न मानवमात्रोच्चारणयोग्या, नापि च ता भाषास्तत्तद्देशिकशब्दान् स्वाक्षरैः स्फुटं सलिख्य दर्शयितुं प्रभवन्ति। न चापि ता मानवप्रकृतेः सर्वविधभावान् प्रादुर्भावयितुं शक्नुवन्ति। परमियं गीर्वाणवाण्येतदीया वर्णाश्च प्रकृतिदेव्या स्वभावत एव समाविर्भूताः। प्राकृतत्वादियमेतदीया वर्णाश्च मानवमात्रोच्चारणयोग्यतामावहन्ति, मानवमात्रस्य सर्वविधभावान् प्रादुर्भावयितुं प्रभवन्ति च। संस्कृतभाषावर्णोच्चारणं विदधानः पुमान् भाषान्तरवर्णोच्चारणमपि सुखेन विदधाति। संस्कृतभाषाव्याकरणस्य ज्ञानेनान्यभाषावबोधः सुखेन भवितुमर्हति। अस्या वर्णमाधुर्यमतिकोमलत्वं च व्यवहारसौकर्यं प्रतिपादयतः। कठिनतरमपि विषयमियं सारल्येन बोधयितुं प्रभवति। सात्त्विकबुद्धिवैशद्यम्, अनिर्वचनीयानन्दाऽऽनन्दाधिगमः, ऐहिकामुष्मिकाभ्युदयनिःश्रेयसविषयककृत्याऽकृत्यविवेकः, आध्यात्मिकपूर्णतापरिचायकानामात्मानात्मपरमात्मतत्त्वानामूहापोहने, अन्तर्जगदस्तित्वम्, तत्सञ्चालकदेवर्षिपितॄणामस्तित्वं, जीवतत्त्वं, प्रेततत्त्वं, मृत्युतत्त्वं, जन्मान्तरतत्त्वं, परलोकतत्त्वम्, अतिवाहकतत्त्वं, कर्मतत्त्वं, प्रवृत्तितत्त्वं, निवृत्तितत्त्वं, ज्ञानभूमितत्त्वम्, अज्ञानतत्त्वं, परलोकवादः, अध्यात्मवादः, ईश्वरवादः, अन्तर्जगद्वादः, आधिभौतिकाधिदैविकाध्यात्मिकतत्त्वाववोधः इत्येवमादीन् विषयान् बोधयितुं यथा संस्कृतं प्रभवति, न तथाऽन्या भाषास्तान् स्प्रष्टुमपि प्रभवन्ति इति सर्वविधज्ञानविज्ञानाधिगमार्थमस्याः सर्वतः पूर्णायाः संस्कृतभाषायाः प्रचारो नितान्तमावश्यक इत्येकमुद्देश्यं श्रीरघुनाथसंस्कृतमहाविद्यालयनिर्माणस्य। किंच यदि संस्कृतं न स्यात्, तदानीं प्रातःस्मरणीयचरणानां, साक्षात्कृतधर्मणां महर्षीणां चरित्रं कः केन बोधयेत्? वैदेशिककुशिक्षाकुत्सितादर्शः केन निवर्त्येत? चिरं मङ्गलसाधनशीलशालिनः सनातनधर्मस्य गूढरहस्यं केनोद्घाट्येत? साध्वीनामार्यनारीणां पवित्रपातिव्रतधर्ममाहात्म्यपरिज्ञानं केन भवेत्? आर्यजातीयोन्नतिमार्गप्रदर्शनं, धर्मनीत्योः पारस्परिकसम्बन्धसमन्वयश्च केन क्रियेत? पाश्चात्यसभ्यताविलासितानिशाचरीसमाक्रान्तस्वान्तेषु प्रकृतिप्रवृत्तिशक्तितारतम्येनाधिकारिभेदभिन्नेषु जीवेषु श्रुतिस्मृत्युद्बोधितधर्मपद्धतिः केन प्रतिपाद्येत? परायाः अपरायाश्चेति द्विविधाया अपि विद्याया ज्ञानं संस्कृतभाषायामेव विद्यते, तदुक्तं—"द्वे विद्ये वेदितव्ये परा चैवापरा च, तत्रापरा ऋग्वेदो, यजुर्वेदः, सामवेदो, अथर्ववेदः, शिक्षा, कल्पो,

व्याकरणं, निरुक्त, छन्दो, ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते" इति । एवमृग्वेदादिभिश्चतुर्भिर्वेदै, व्याकरणादिभि षड्भिरङ्गै, धनुर्वेदादिभिश्चतुर्भिरुपवेदै, मन्वादिभिरेकविंशतिस्मृतिभि, अग्निपुराणादिभिरष्टादशपुराणै, न्यायदर्शनादिभि षड्भिरास्तिकदर्शनै, सौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकभेदभिन्नचतुर्विधबौद्धार्हतचार्वाकै षड्भिरवैदिकैर्दर्शनैश्चानन्तसाहित्यग्रन्थैश्चैतस्य सम्कृतकल्पमहीरुहस्य तुलना कान्या भाषा कर्तुं प्रभवेत् ? इत्याद्यसकृदुक्तमुच्यते वक्ष्यते च ।

किञ्च, भाषाया भावैर्घनिष्ठ सम्बन्धो वर्तते, भाषया भावैश्च जातेश्चिरस्थायित्व सम्भवति, तयोरभावे च जाते, सस्कृते, सभ्यतायाः, धर्मस्य च समूलोन्मूलनमवश्यभावीति तादृशसार्वजनीनसस्कृतिसम्पादकं सस्कृतसाहित्य यदि नाभविष्यत्तर्हि महान्धकूपे पतितानामिवास्माक जगति नामापि नाश्रोष्यतेति आर्यजाते सरक्षणार्थं सस्कृतस्य प्रचार परमावश्यक । किञ्चेद भारतमार्याणामादिनिवासस्थानम् । अस्य प्रत्येक परमाणु प्राचीनार्यगौरवेण पवित्रित आर्यभावेन च परिपूर्णो विद्यते । या किलार्यजातिर्हिन्दुजातिर्वा धर्मपरायणा धर्मप्राणतामेव चाश्रयति, यस्याश्च रुधिर मज्जापि च धर्मभावपरिपूर्णतामावहति, यत्ससर्गेण पशुपक्षिणोऽपि धर्माचरण कुर्वाणा इव दरीदृश्यन्ते, तस्या धर्मप्राणप्रतिष्ठाया हिन्दुजाते समुन्नतिर्धर्मसरक्षण विना स्वप्नेऽपि भवितु नार्हति । वेदशास्त्रज्ञा विद्वास एव धर्मस्वरूपमुपदेष्टु धर्मोपदेशेन प्राचीनार्यभाव भुवमभितो विवर्द्धयितु च प्रभवन्ति । वेदादिधर्मशास्त्राणि च सस्कृतभाषामयान्येव विद्यन्ते । अत परमोपयोगिना धर्मान्वितसन्मार्गप्रदर्शकाना वेदादिधर्मशास्त्राणा ज्ञानोपलब्धये सस्कृतभाषाया अध्ययनमध्यापन च मानवमात्रोपयोगीति सर्वं परिज्ञाय महाराज श्रीरणवीरसिंह सस्कृतभाषाप्रचारप्रसारार्थं श्रीरघुनाथसस्कृतमहाविद्यालयमन्याश्च सस्कृतमहाविद्यालयान् यत्र तत्र सस्थापितवान् ।

धन्योऽय महाराज श्रीरणवीरसिंहो यस्यैवच्छुभोदर्कोद्देश्येन महता प्रयासेन चाद्यापि न केवल द्विगर्तेषु, अपि तु अन्यत्र भारतेऽपि श्रीरघुनाथसस्कृतमहाविद्यालयाधीताखिलशास्त्रैर्विद्वद्भि प्रसारिता सर्वाङ्गपरिपूर्णा सस्कृतभाषा सोत्साह जीवति, समाशास्ते च स्वात्मजीवनेन भारतस्य भाविन शुभोदर्कं सवर्द्धयितुम् ।

(३)

**श्रीरघुनाथसस्कृतमहाविद्यालयस्य पुस्तकालय**

अस्मिन् पुस्तकालये प्राय समस्तानि पाठ्यपुस्तकानि विद्यन्ते । प्रतिवर्ष

रूप्यकाणां शतत्रयमभिनवपुस्तकानि क्रेतुं धर्मार्थकौंसिलसदस्यैः स्वीकृतम् । अध्यापका विद्यार्थिनश्च यथानियमं पुस्तकालयपुस्तकानां लाभं लभन्ते ।

श्रीरघुनाथसंस्कृतमहाविद्यालयोऽनुसंधानविभागश्च श्रीरघुनाथमन्दिरस्याङ्गभूतौ, संस्कृतमहापुस्तकालयोऽप्यत्र विद्यते, यस्मिन् सहस्रपट्कममुद्रितपुस्तकानि हस्तलिखितानि विद्यन्ते । प्रायः सहस्रचतुष्टयं मुद्रितानि सन्ति । तेषु चतुष्पञ्चाशत् पुस्तकानि महाराजश्रीरणवीरसिंहस्य तत्त्वावधाने सम्पादितानुवादितसङ्गृहीतानि विद्यन्ते । तेषु रणवीरप्रायश्चित्तप्रकरणं प्रथमो भागः, 'रणवीरप्रायश्चित्तप्रकरणं द्वितीयो भागः, 'रणवीरज्योतिर्महानिबन्धा', 'श्रीरणवीरव्रतरत्नाकर', 'श्रीरणवीरचिकित्साप्रकाश', 'श्रीरणवीरचिकित्सा (डोगरीलिपि) इत्येतानि पुस्तकानि मुद्रितानि वर्तन्ते । अन्यानि मुद्रापयितुं प्रयतते महाराजश्रीकर्णसिंहः । अस्मिन्नपि पुस्तकालयेऽभिमतपुस्तकानि क्रेतुमावश्यकं सम्भारं समाहर्तुं च रूप्यकाणां पञ्चशती स्वीकृता कौंसिलसदस्यैः । अस्मिन् पुस्तकालये डायरेक्टरमहोदयः, अनुसन्धाता (रिसर्च स्कालर), पुस्तकालयाध्यक्षः, सन्देशहरश्चेति चत्वारः कार्यकर्तारो विद्यन्ते । तेषु डायरेक्टरमहोदयोऽवैतनिकोऽन्ये त्रयो वैतनिका वर्तन्ते । अस्य पुस्तकालयस्यानुसन्धानविभागस्य च विशिष्टमितिवृत्तं पुस्तकालयाध्यक्षेण श्रीरामकृष्णशास्त्रिणा संस्कृते लिखितम्, अनुसन्धात्रा च हिन्दीभाषया लिखितं श्रीरणवीरसंस्कृतानुसन्धानविभागस्य संक्षिप्ते परिचयपत्रे विद्यते ।

## शिक्षापद्धतिः

प्राचीनसमये तत्तच्छास्त्राध्यापकेभ्यस्तत्तच्छास्त्रं समधीत्य तत्तच्छास्त्रेषु विशिष्टं वैदुष्यमाप्नुवन्ति स्म छात्राः, तत्तच्छास्त्रवैशिष्ट्योपलब्धिसूचकं प्रमाणपत्रं च प्रतिवर्षं पाठशालीयोत्सवसमये स्वयं महाराजः समुत्तीर्णच्छात्रेभ्यो व्यतरत् । तदेव सर्वत्र प्रमाणतामापन्नं सद्विदुषां सम्मानभाजनं समभवत् । अर्वाचीनसमये तु पञ्चनदविश्वविद्यालयीयपरीक्षानुकूलपाठनक्रमाः प्रचलन्ति । पञ्चाशीत्यधिकाष्टादशशततमे (१८८५) ख्रिष्टाब्दे पञ्चनदविश्वविद्यालयस्य संस्थापनमभूत् । ततः प्रभृति श्रीरघुनाथपाठशालीयः पठनपाठनक्रमो विनिवृत्तः । पञ्चनदविश्वविद्यालयीयपाठ्यक्रमानुसारमेवात्र विद्यालयेऽपि पाठ्यपुस्तकाध्यापनक्रमः प्रावर्तत । कतिचिच्छात्रा दर्शनव्याकरणज्यौतिषायुर्वेदकर्मकाण्डादिशास्त्राण्यप्यधीयाना आसन् । शतशो विद्यार्थिनो हीत शास्त्रिपरीक्षां समुत्तीर्य प्रायः सर्वत्र भारते भारतेतरलङ्कादिप्रदेशेषु च सुरभारतीं सेवमाना आसन् सन्ति च ।

## वर्तमानकालिकी शिक्षापद्धति.

वर्तमानसमये श्रीरघुनाथपाठशालीया प्राय सर्वेऽध्यापका श्रीरघुनाथपाठशालाया एव स्नातकास्त एव साम्प्रतिकीमध्यापनानुशासनयोग्यता व्यावहारिकीमौचिती चाऽऽवहन्ति ।

वर्तमानकालिकशिक्षापद्धति पूर्वकालिकशिक्षापद्धतेस्तुलना वोढु न प्रभवति । पूर्वं छात्रा ज्ञानपीयूषपिपासव समभूवन् । साम्प्रत केवल परीक्षापयोनिसमुत्तितीर्षवो न शास्त्रज्ञानमीप्सन्तीति महदन्तर तयो पद्धत्यो ।

वर्तमान भारतीयकेन्द्रप्रशासन सस्कृतच्छात्राणा वाङ्मयपाथोधिपारगतानामपि, अभिनवसाइन्सादिविषयेपु सङ्कीर्णताम्, भूगोलेतिहासादौ कूपमण्डूकताम्, अर्वाचीनपाश्चात्यसभ्यतासम्मानितजगति व्यवहारानभिज्ञता चानुभूय सामयिकसाइन्सगणितभूगोलेतिहासादिविषयान्, आङ्गलभाषा च तान् शिक्षयितु, व्यावहारिकशिक्षया तानद्यावधिकान् सामयिकान् (अप्टुडेटान्) विधातुकाम समस्तविश्वविद्यालयीयसस्कृतविभागकार्यालयेपु चैकैकमादेशपत्र प्राहिणोत् ।

श्रीरघुनाथसस्कृतविद्यालयसरक्षकाय महाराजश्रीकर्णसिहायापि तद्विषयकमेक पत्र प्रैषयत् । महाराज श्रीकर्णसिह श्रीरघुनाथसस्कृतमहाविद्यालये त विधि प्रचालयितुमेका सुधारकसमितिम्, समित्याश्च काश्चिद् विदुष, तत्सञ्चालक चैव परिकल्प्य तत्पदस्थ (चीफयन्सरवेटर) श्रीरामलालशर्माण वाराणस्या हिन्दूविश्वविद्यालयीयसस्कृतविभागाध्यक्षै सहास्मिन् विषये विचारविनिमय विधातु प्राजीगमत् ।

तत्रत्यैरन्यैश्च विद्वद्भिर्विमृश्य भारतकेन्द्रप्रशासनादिष्ट त पूर्वोक्त विधि श्रीरघुनाथपाठशालाया प्रचालयितु समादिशन्महाराज श्रीकर्णसिह । प्राज्ञकक्षापर्यन्त साम्प्रत प्रचलति विधिरय श्रीरघुनाथपाठशालायाम् । कक्षान्तरेषु च प्रचालयिष्यते ।

### छात्रावास

रात्रिन्दिव गुरुजनैर्निरीक्ष्यमाणाना छात्राणामाचारविचारपरिष्कार साधीयान् भवति । धर्मभक्तिज्ञानादिसम्पन्नाना च गुरुजनाना सवासेन छात्राणामपि तत्तत्तस्य गुणस्योपलब्धि सुकरा भवति । गृहत्यागेन च भूयसीनामध्ययनप्रत्यूहकारिणीना प्रवृत्तीना स्वतो निवृत्तिर्जायते । इत्यादि मनसिकृत्य प्राचीनाश्रमपरिपाटीपरिपालनतत्परैर्जम्बूकाश्मीरनरेश्वरैरस्य महाविद्यालयस्य छात्राणा कृते विद्यालयसविध एवावासव्यवस्थाऽपि समाहृताऽभवत् । तत एवास्य श्रीरघुनाथसस्कृतमहाविद्यालयस्यैका महान् छात्रावासो विद्यते । यस्मिन्नेवच्छात्रावासाध्यक्ष (सुपरिण्टण्डेण्ट), तत्र प्रहरिणस्तथैव क्रीडाध्यापको (ड्रिलमास्टर) नियुक्तो विद्यते ।

छात्रावासे प्राय सर्वेऽप्युत्तरवाहिनीश्रीगदाधरपाठशालाया छात्रावासनियमा प्रचाल्यन्ते । साम्प्रत प्राय शताधिका विद्यार्थिनोऽस्मिन् छात्रावासे विद्यन्ते । सर्वेपामपि भोजनप्रकाशादिकप्रबन्ध धर्मार्थसमिति ( धर्मार्थकौन्सिल ) महाराजश्रीरणवीरसिंहकल्पितकोपद्रव्येण करोति । छात्रावासस्य सविधे एव मन्दिरस्य दक्षिणपार्श्वे छात्राणा कृते महानस विद्यते, यस्मिन् द्वौ पाचकौ, द्वौ च महानसपात्रसम्मार्जकौ धीवरौ दिवानिशमवतिष्ठन्ते ।

### वार्षिकोत्सव

प्रतिवर्ष वसन्तपञ्चमीदिवसे विद्यालयस्य वार्षिकोत्सवो विद्यालयप्राङ्गणे धर्मार्थविभागसरक्षक(सोलट्रस्टी)महाराजश्रीकर्णसिंहादेशेन सर्वैरध्यापकैरन्तेवासिभिश्च सम्भूय सम्पाद्यते । तस्मिन्नुत्सवे प्राय सर्वे संस्कृतज्ञा नागरिका विद्वासोऽधिकारिणश्चामन्त्र्यन्ते ।

महाराज श्रीकर्णसिंह सानुचर, समन्त्रिमण्डलश्च स्वयमागत्य छात्राणा रूपकाभिनयकौशल, सङ्गीतस्वरारोहावरोहक्रम, व्याख्यानपाटव, प्रतियोगितायोग्यता, यौगिकासनप्रहसनादिषु च नैपुण्य निभाल्य तेभ्यो विश्वविद्यालयीयप्राज्ञविशारदशास्त्रिपरीक्षासमुत्तीर्णेभ्यो गृहीतपरीक्षासमुत्तीर्णेभ्यश्च छात्रेभ्य प्रथमादिक्रमेण स्वहस्ताभ्या पुरस्कार वितरति । प्रतिवर्ष विद्यार्थिभ्यश्शाटिकादिवस्त्राण्यपि वितीर्यन्ते ।

महाराज श्रीकर्णसिंह प्रतिवर्ष त्रीन् प्रतियोगितानिबन्धान् लेखयति, येषा सूचना सर्वत्र भारते समाचारपत्रेषु प्रागेव प्रदीयते । तत्र प्रथमनिबन्धस्य शतद्वयम् रूप्यकाणि, द्वितीयनिबन्धस्य शत रूप्यकाणि, तृतीयनिबन्धस्य पञ्चाशद्रूप्यकाणि लेखकेभ्य पुरस्काररूपेण प्रदीयन्ते । 'तृतीय पञ्चाशद्रूप्यकपुरस्कारो निबन्धोऽष्टादशवर्षवयस्कान्तवासिनैव लिखितम ' इति विशेषनिर्देशो वर्तत ।

निबन्धान् पूर्वं द्वौ त्रयो वा विद्वास सम्यग निरीक्ष्य, तत्तल्लेखकाना पुरस्काराभियोग्यता सन्तोल्य, पात्राऽपात्रविवेक च विधाय तन्निर्णय महाराजश्रीकर्णसिंहाय निवेदयन्ति, तन्निर्णयानुरूपमेव पुरस्कारवितरण भवति ।

### साम्प्रतिकी व्यवस्था

अस्मिन् श्रीरघुनाथसस्कृतमहाविद्यालये प्रतिवर्ष पञ्चाशत्सहस्रेभ्योऽप्यधिको व्ययो भवति । पाठशालाभवन श्रीरघुनाथमन्दिरमनु पश्चिमदिशि वर्तते । सर्वेपामप्यध्यापकाना पृथक् पृथक् कक्षा विद्यन्त । प्रतिकक्षमेकैक विद्युच्छदिर्व्यजनमपि मान्तेवासिनामध्यापकाना ग्रीष्मोष्माणमपहर्तु सलग्न वर्तत । पाठशालाभवनस्य पृष्ठभागेऽ-

तिरमणीया क्रीडनस्थली विद्यते । यस्या प्रात साय च यथासमय विद्यार्थिन क्रीडन्ति । क्रीडनाध्यापकश्च पाश्चात्यपद्धत्या भारतीयकलया च क्रीडास्तान् शिक्षयति ।

महाराज श्रीकर्णसिंहो लक्षत्रयरुप्यकव्ययेन महदेक पाठशालाभवन निर्मापयितु प्रयतमान आस्ते । आशास्यतेऽस्य महानुभावस्य प्रयत्नोऽय स्वल्पैरेवाहोभि सफलो भविष्यति । अस्मिन् श्रीरघुनाथसस्कृतमहाविद्यालयेऽध्यापक-कार्यवाहक-पाचक-प्रहरिक-धीवर-सम्मार्जकादीना वेतनेषु, छात्राणा भोजनवसनपरीक्षाशुल्कपारितोषिकवितरण-विद्यालयकार्यालयोचितसकलसम्भारसङ्ग्रहणादौ च प्राय पञ्चाशत्सहस्रतोऽप्यधिको व्ययो भवति इत्युक्तमेव ।

**श्रीरघुनाथसस्कृत पाठशालाया (साम्प्रतिकश्रीरघुनाथसस्कृत महाविद्यालयस्य) प्रमुखाध्यापकपरम्परा**

**प्रथमो मुख्याध्यक्ष**

(१) श्रीगोकुलचन्द्रशास्त्रिण स० १९१५ वैक्रमे वत्सरे (१८५८ ई०) श्रीरघुनाथमन्दिरस्य अधिष्ठातृपदसमारोहणसमकालमेव श्रीरघुनाथपाठशालाया प्रमुखाध्यापकपदमारुरुहु । कतिपयवर्षाणि उभय (श्रीरघुनाथमन्दिर पाठशाला च) सेवमाना इमे लोकेषु धार्मिकभावना, शास्त्रश्रद्धा, सस्कृतभाषा च समवीवृधन् । ते स्वजीवनकाल एव श्रीरघुनाथमन्दिरस्य, श्रीरघुनाथपाठशालायाश्च सर्व कार्यभार परमविदुषि स्वात्मजे श्रीगगाधरशास्त्रिणि समर्प्य, पर वैराग्यमापन्ना श्रीरघुनाथमन्दिरस्य परिधावेव कुटीर निर्माप्य, तत्रस्था परमेश्वरपरायणा समभवन् । महाराजश्रीरणवीरसिंह, तदनन्तर महाराज श्रीप्रतापसिंह, राजा रामसिंह, राजा श्रीमदमरसिंहश्च यथासमय तच्चरणयोर्मूलमुपेत्य धर्मोपदेश राजनीतिरहस्य च श्रद्धया तेभ्योऽश्रौषु । तेषामुभयत्र कार्यवर्तृणा वेतन कियदासीदिति न प्रतीतम् । पर मन्दिरस्य सर्वस्मिन्नुपहारादावेषामेवाधिकारोऽभवदिति सुप्रसिद्धम् । तेषा विशिष्टमितिवृत्तमन्यत्र प्रस्तुतम् ।

**द्वितीयो मुख्याध्यक्ष**

(२) सर्वतन्त्रस्वतन्त्रा श्रीगङ्गाधरशास्त्रिण स्वपितृपादादेशेन महाराजश्रीप्रतापसिंहप्रेरणया च श्रीरघुनाथपाठशालीयप्रमुखाध्यापकपदमधिष्ठाय महता कौशलेन श्रीरघुनाथमन्दिरस्य, श्रीरघुनाथपाठशालायाश्च कार्यजात समपादयन् । ते स्वपितृपादानामधिकारसमयेऽपि न्यायव्याकरणादीनि कठिनशास्त्राणि समध्यापयन्तश्छात्रसदसि महद् यशो लेभिरे । स्वपितृपादै समर्पिताधिकारास्तु लोकान्तरप्रतिभया अध्य-

यनाऽध्यापनातिरिक्तमपि प्रबन्धजात विदधाना स्वपितृपादाना तात्कालिकमहाराजश्रीप्रतापसिहस्य च परा मुदमवर्द्धयन्। पर महामारीरोगेण पीडिता, अकस्मादेव वार्धक्यवयसि वर्तमानान् स्वपितृचरणान् शोकसागरे निमज्ज्य वसुवाणविहगवसुमतीमित (१६५८) वैक्रमाब्दे (२६०१ ई०) तपसि मासि दिव प्रस्थिता इति स्मार स्मार चेखिद्यते चेत। विद्वद्वरिष्ठाना तेषा तदानीतन वेतन केवल पट्‌त्रिंशद् रूप्यकाणि समभवत्। तेषामपि विशिष्टमितिवृत्तमन्यत्र प्रस्तुतम्।

## तृतीयो मुख्याध्यक्ष

(३) महामहोपाध्याया श्रीजगदीश्वरशास्त्रिणो रसवाणविहगेन्दुमिते (१६५६) वैक्रमेऽब्दे (१८६६ ई०) स्वपितृचरणनिदेशेन महाराजश्रीप्रतापसिहप्रेरणया च श्रीरघुनाथमन्दिरस्याधिष्ठातृपदमध्यतिष्ठन्। अष्टपञ्चाशदुत्तरनवशताधिकैकसहस्रतमे (१६५८) वैक्रमाब्दे (१६०१ ई०) सकलविद्याविद्योतितान्तरात्मनि श्रीगङ्गाधरशास्त्रिणि दिव गते नन्दवाणविहगेन्दुमिते (१६५६ १६०२ ई०) वैक्रमे शतके महाराजश्रीप्रतापसिंह श्रीरघुनाथपाठशालीयप्रधानाध्यापकपदमध्यतिष्ठिपदमून् महामहोपाध्यायश्रीजगदीश्वरशास्त्रिण। तेषामध्यापनकौशलम्, व्यवहारचातुर्यम्, प्रबन्धसौकर्यं च निशम्य वदरिकाश्रमादारम्य आ कन्याकुमार्या, पूर्वसमुद्रात् पश्चिमसमुद्रपर्यन्त च पिपठिषवो जिज्ञासवश्च छात्रा सोल्लासमागाममागाम, श्रीरघुनाथपाठशाला प्राविशन्। प्रतिवर्ष पञ्चदश, विंशति, पञ्चविंशतिर्वा छात्रा पञ्चनदविश्वविद्यालयीयप्राज्ञविशारदशास्त्रिपरीक्षा समुदतरन्। अमी महामहोपाध्याया श्रीजगदीश्वरशास्त्रिणो विहगवसुनन्देन्दुमिते (१६८६) वैक्रमे वत्सरे (१६३२ ई०) माघशुल्कचतुर्थ्या दिव गता। अमी नि शुल्क सर्वं कार्यजात सम्पादयन्ति स्म तथा जीविका परमभक्त, शिष्यभूत, श्रीमहाराज प्रतापसिंह स्वकोषात् सम्पादयति स्म। तेषामपि विशिष्टमितिवृत्तमन्यत्र प्रस्तुतम्।

## श्रीजगदीश्वरशास्त्रिणा समकालिका विद्वास

(१) अत्र सर्वतन्त्रस्वतन्त्रा अमृतसरोवास्तव्या श्रीहरदत्तशास्त्रिण प्राध्यापकपदमध्यतिष्ठन्। तेषा मासिक वेतन सार्द्धैकशत रुप्यकाणि १५०)। तदानी नान्य कश्चिद् विद्वान् तत्तुलामारोढु प्राभूत्। तेषामितिवृत्तमन्यत्र प्रस्तुत वर्तते।

(२) वैयाकरणकेसरिणोऽपि सर्वशास्त्रेष्वप्रतिहतगतय **श्रीआरूढभानुशास्त्रिण**। तेषा मासिक वेतन सार्द्धद्विषष्टिरुप्यकाणि ६२॥), २०) विंशतिरुप्यकाणि च वैयक्तिक सम्मानम्। तेषामपि विशिष्टमितिवृत्तमन्यत्र प्रस्तुतम्।

(३) काव्यव्याकरणतीर्थाः, परमतपस्विनः, श्रीरामप्रपन्नशास्त्रिणः । तेषामपि मासिकवेतनं सार्द्धद्विषष्टिरुप्यकाण्येव । वैयक्तिकं सम्मानमपि विंशतिरुप्यकाणि । अमी टीकाकाराः, स्वतन्त्रलेखकाश्चासन् । तेषामपि वैयक्तिकमितिवृत्तमन्यत्र प्रस्तुतम् ।

(४) कर्मकाण्डपरिपाटीपटवो, वेदान्तारविन्दमकरन्दास्वादनानन्दमग्नाः, श्रीनिक्कारामशास्त्रिणः । तेषां मासिकं वेतन ४०) चत्वारिंशद् रुप्यकाणि । विशिष्टमितिवृत्तं विदुषां लेखेषु द्रष्टव्यम् ।

(५) न्यायनयनिष्णाताः, शास्त्रार्थसमरविजयिनः, श्रीनरपतिशास्त्रिणः । तेषां मासिक वेतनं ४०) चत्वारिंशद् रुप्यकाणि । अमी पुरमण्डलपत्तनासन्ननंगलग्रामवास्तव्याभिजनब्राह्मणकुलोत्पन्नाः ।

(६) न्याये निष्णाताः, साख्येषु संख्यावन्तो, दार्शनिकशिरोमणयः, श्रीसुन्दरलालशास्त्रिणः । तेषां मासिक वेतन ४०) चत्वारिंशद्रुप्यकाणि । अमी पञ्चनदेषु विद्यमानग्रामवास्तव्या, स्वपक्वभोजिनः, परमकर्मकाण्डिनश्च समभूवन् ।

(७) श्रीनत्थूरामशास्त्रिणः प्रत्ननूत्नन्यायव्याकरणयोर्लब्धप्रतिष्ठा अपि साहित्यनवनीताऽऽस्वादने विशेषरुचयोऽभवन् । महाराजश्रीप्रतापसिंहो हीमान् मीमांसाध्यापकपदमध्यतिष्ठिपत् । तदानीतना विद्वांस इमान् 'शास्त्रार्थमहारथा' इत्यचकथन् । एषां वेतनम् ४०) चत्वारिंशद् रुप्यकाणि । इमे १९६० वैक्रमाब्दात् (१९०३ ई०) १९८८ वैक्रमाब्दपर्यन्त (१९३१ ई०) पाठशालायामध्यापिपन् । एषां विशिष्टमितिवृत्तमन्यत्र विद्वल्लेखेषु द्रष्टव्यम् ।

(८) ज्योतिषाचार्याः मैथिला, श्रीकेशवशास्त्रिणः, फलितगणितोभयविधज्योतिषे सिद्धहस्ता, ज्योतिश्शास्त्राध्यापकपदमलङ्कुर्वाणाः १९६० वैक्रमाब्दात् (१९०३ ई०) १९८८ वैक्रमाब्दपर्यन्त (१९३१ ई०) पाठशालायामध्यापिपन् ।

(९) आयुर्वेदविदः श्रीरघुनाथशास्त्रिणः खलु कतिपयहायनान्याऽऽयुर्वेदमध्याप्य दिवंगताः ततस्तेषां तनूजन्मान श्रीरमाकान्तशास्त्रिणस्तत्पदमधिष्ठायायुर्वेदमध्यापिपन् । इमे रमाकान्तशास्त्रिण २००२ (१९४५ ई०) वैक्रमाब्दान्तमध्यापयन्त क्रमेण चत्वारिंशद्भ्यः समारभ्य शतं रुप्यकाणि मासिकवेतन लब्धवन्तः । इमे पञ्चनदविश्वविद्यालयीयशास्त्रिपरीक्षा समुत्तीर्णा भिषगाचार्यपरीक्षां पारितवन्त । एषामपि विशिष्टमितिवृत्तमन्यत्र प्रस्तुत वर्तते ।

(१०) निखिलनिगमाऽऽगमधुरन्धरा **श्रीकाशीनाथशास्त्रिणो** हि पञ्चनदेषु 'लुथडा'ग्रामवास्तव्या श्रीगङ्गाधरशास्त्रिणामनन्तरं प्राध्यापकपदमध्यतिष्ठन् । इमे हि १९५९ (१९०२ ई०) वैक्रमाब्दात् १९६४ (१९०७ ई०)वैक्रमाब्दान्तं पाठशालायामध्यापिपन् । एषां मासिकं वेतनं तदिच्छया केवलं ३२) द्वात्रिंशद् रूप्यकाणि । तेषामानुक्रमिकवेतनम् ६०) १००) रूप्यकाणि ।

(११) **श्रीकर्मनारायणशास्त्रिणः** पाठशालीयप्रबन्धकपरिषदो मन्त्रिपदमध्यतिष्ठन् । यतो हीमे आंग्लोर्दूभाषयोरपि लेखनज्ञाननिपुणा आसन् । २८ वर्षाणि च कार्यमकार्षुः । तेषां प्रारम्भिकं वेतनं ६०) षष्टिरूप्यकाणि, आनुक्रमिकं ८०) १००) परिमितमासीत् ।

(१२) *श्रीकर्मनारायणानन्तरं* ***श्रीचन्द्रमौलिशास्त्रिणः*** *तत्पदमध्यतिष्ठन्* । इमेऽपि भाषात्रयभाषिणः १९८१ (१९२५ ई०) वैक्रमाब्दाद् २०१० (१९४३ ई०) वैक्रमाब्दान्तं कार्यमकुर्वन् । तेषामन्तिमं वेतनं प्रतिमासं १५०) सार्धशतं रूप्यकाणि । तेषां विशिष्टमितिवृत्तमन्यत्र प्रस्तुतं वर्तते ।

(१३) निबन्धलेखकाः **श्रीकाकारामशास्त्रिणः** साहित्याध्यापकपदमधिरूढा अपि यथासमयं दर्शनव्याकरणादिशास्त्राण्यप्यध्यापिपन् । श्रीरामप्रपन्नशास्त्रिपूत्तरवाहिनीपाठशालायां नियुक्तेषु तत्पदे न्ययुज्यन्तेमेऽधिकारिभिः । इमे १९८२ (१९२५ ई०) वैक्रमाब्दात् २०१५ (१९५८ ई०) वैक्रमाब्दान्तमध्यापिपन् । तेषामानुक्रमिकं वेतनम् ५०) ८०) २००) रूप्यकाणि । *तेषामपि विशिष्टमितिवृत्तमन्यत्र प्रस्तुतम्* ।

### श्रोत्रियाः

(१) सस्वरमृग्वेदाध्यापकाः **श्रीलक्ष्मणदत्तशास्त्रिणः**, एषामध्यापनसमयः (कार्यकालः) कुतः कियानिति सन्दिग्धम् । एषां वेतनम् २५) रूप्यकाणि तदानीमासीत् ।

(२) श्रीलक्ष्मणदत्तानन्तरं तत्तनूजाः **श्रीठाकुरदत्ताः** ऋग्वेदाध्यापकपदमधिरूढाः । इमे हि पितृगुणैर्विभूषिता मधुरस्वरा समभूवन् । एषां २५) प्रारम्भिकं वेतनम् ४०) अन्तिमं च । १९९० (१९३३ ई०) वैक्रमाब्दान्तमत्रेमेऽप्यपठन् । इमौ पितापुत्रौ जम्बूवास्तव्यौ ।

(३) यजुर्वेदाध्यापकाः **श्रीसन्तरामशर्माणः** । इमे कर्मकाण्डप्रक्रियाप्रवीणा अपि शास्त्रार्थज्ञाः सार्थयजुर्वेदमप्यपठन् । सप्तनवतिवर्षवयसीमे प्राणानत्याक्षुः । एषा-

मध्यापनसमय. (कार्यकालो) विशिष्य न ज्ञायते। एषां विशिष्टमितिवृत्तमन्यत्र प्रस्तुतम्।

(४) **श्रीनन्दलालशर्म्माणः** सस्वरं सामवेदमपीपठन्। एषां स्वरमाधुर्यमाकर्ण्य श्रोतारो लोकोत्तरानन्दपयोधौ मज्जन्ति स्म। एषामप्यध्यापनकालो नोपलब्ध.। जम्बूनगरवास्तव्या इमे।

(५) उपरतेषु श्रीनन्दलालेषु तेषां स्वात्मजा. **श्रीपरशुरामशर्माणः** सामवेदाध्यापकपदमध्यतिष्ठन्। इमेऽपि स्वपितृगुणै. परिपूर्णा आसन्। एषामप्यध्यापनसमयो नोपलब्धः। एषां मासिकं वेतनं प्रारम्भिकं रूप्यकाणि २५) अन्तिमं तु ४०) रूप्यकाणि। एषां तनूजन्मानः **श्रीरामकृष्णशास्त्रिणः** सर्वे. पैतृकैर्गुणैरुपेता. सम्प्रति श्रीरणवीरसंस्कृतपुस्तकालयाध्यक्षपदमधिरूढा.।

(६) श्रीपरशुरामानन्तरं **श्रीरामशरणाः** सामवेदाध्यापकपदमधिरूढा., इमेऽपि कतिपयवर्षाणि समध्याप्य दिवंगता, एषामपि समयो नोपलब्ध।

(७) जम्बूवास्तव्या इमे **श्रीबलदेवशर्माणोऽथर्ववेदाध्यापका.** एते श्रोत्रिया अपि काव्यपुराणाद्यध्यापनपटव. फलिते ज्योतिषि च सिद्धहस्ता आसन्। १९९० (१९३३ ई०) वैक्रमाब्दे लोकान्तरमगु। एषां प्रारम्भिकं वेतनम् २५) पञ्चविंशतिरूप्यकाणि, अन्तिमं तु ४०) चत्वारिंशद् रूप्यकाणि। जम्बूप्रान्तान्तर्गतोधमपुरवास्तव्या इमे।

**श्रीश्रीचन्द्रशास्त्रिणः**

इमे सर्वशास्त्रनिष्णाता स्वपितृचरणानां समक्षे विद्यालयेऽमुष्मिन् उपाध्यक्ष (वायसप्रिन्सिपल) पदमध्यतिष्ठन् स्वपितृचरणानामवकाशकाले वर्षद्वयं प्रिन्सिपलपदमप्यलमकार्षुः। इमे २००० (१९४३ ई०) वैक्रमाब्दे आषाढमासे दिवमारुक्षन्। एषां विशिष्टं चरितमन्यत्र प्रस्तुतं वर्तते।

## तुरीयो मुख्याध्यक्षः

महामहोपाध्यायाः **श्रीदेवराजशास्त्रिणः** स्वपितृव्यचरणेषु श्रीजदीश्वरशास्त्रिषु दिवं प्रयातेषु १९८९ (१९३२ ई०) वैक्रमाब्दे श्रीरघुनाथपाठशालायां मुख्याध्यक्षपदमध्यारोहन्। तेषां प्रबन्धसौकर्यमनुशासननैपुण्यं चानुपममेवासीत्। तेषामनुशासनसमये सर्वेऽपि अध्यापका छात्राश्च स्वस्वकर्मणि सलग्ना एवासन्। नासीत्तदानीं कश्चित्तादृशोऽध्यापको यो हि तात्कालिकस्वपाठ्यपुस्तकानि स्वसद्मनि समभ्यस्य नापी-

पठत्, सर्वदा चतुरस्रमतिश्च नाभवत् । नासीच्च कश्चित्तादृशोऽन्तेवासी यो यथासमयं छात्रोचितमध्ययनक्रीडनसन्ध्योपासननियमानुसरणगुरुशुश्रूषणादिकं कर्मजातं न समपीपदत् । किं बहुना, तदानीतना श्रीरघुनाथमन्दिरस्यापि पूजकाः, अधिकारिणः, कर्मकराश्च स्वस्वकर्मैकचेतसो यथासमयं स्वस्वकार्यं सम्पादयन्तोऽनुशासनस्य परामादर्शतामुपदिशन्ति स्म भक्तिभावनाभावितान्तरात्मनो भक्तान् । नासीत्कश्चित्कृतापराधस्तादृशो यः स्वयं तत्समीपमागत्य स्वापराधं क्षमापयितुं तस्य दण्डं च भोक्तुं न प्रार्थयत । तेषां ब्रह्मवर्चसमनुभूय तदानीतनाः कौंसिलसदस्या अपि अबिभयुः । तेषामाशुकार्यकारित्व, धारणां, स्मृतिं, प्रतिभां च निभाल्य महाराजः श्रीहरिसिंहोऽपीमान् परममीमनत् । तेषां समयेऽपि श्रीजगदीश्वरकालिका एवाध्यापकाः समभूवन् । वैक्रमाब्दादारभ्य वैक्रमाब्दान्तमिमे श्रीरघुनाथपाठशालीयप्रधानाचार्यपदमलमकार्षुः । १९९८ (१९३१ ई०) वैक्रमाब्दे भाद्रपदे मासि कृष्णजन्माष्टम्यां काश्मीरेषु श्रीनगरे प्राणानिमेऽहासिषुः ।

## पञ्चमः प्रधानाचार्यः

विहगवसुनन्देन्दुमिते १९८९ (१९३२ ई०) वैक्रमाब्दे कार्तिकमासस्य १८ तारिकायां श्रीदेवराजशास्त्रिषु मन्दिराधिष्ठातृपदं पाठशालायाश्च प्रधानाचार्यपदं स्वयं त्यक्तवत्सु तदनुजान्, परमविनीतान्, **श्रीबालकृष्णशास्त्रिणः** श्रीरघुनाथमन्दिरस्याधिष्ठातृपदम्, श्रीरघुनाथपाठशालायाः प्रधानाचार्यपदं चाध्यतिष्ठिपन् महाराजः श्रीहरिसिंहः । इमे श्रीबालकृष्णशास्त्रिणः स्वपूर्वजानां चरणचिह्नान्यनुसरन्तः परया योग्यतया, वैदुष्येण, स्वाधीनविद्वज्जनसहानुभूत्या च तात्कालिकपरिस्थित्यनुसारं पाठशालीयकार्यजातं सम्पादयन्तः सर्वेषां विद्यार्थिनां च चेतांसि समावर्जयन्ति स्म । एषां समये पाठशालाया विशेषोन्नतिः समभूत् । प्रायः समस्तभारतवर्षाद् विद्यार्थिनोऽहमहमिकयाऽऽगत्य पाठशालायामविक्षन् । इमे स्वयं समस्तशास्त्राणि समध्यापिपन् । अध्यापकानां वेतनवृद्धयोऽपि तत्समये समभूवन् । विद्यार्थिनां भोजनादिव्यवस्थाऽपि साधीयसी संवृत्ता । व्यायाममल्लयुद्धयौगिकासनमणिबन्धग्रहणकपर्दिका(कबड्डी)क्रीडनादिषु छात्राः पर्याप्तान् पुरस्कारान् लभन्ते स्म । सुरगिरा भाषणे, शास्त्रार्थविजये, परीक्षाधिकाङ्कलाभे च ते छात्रा विशेषपारितोषिकैरनुगृह्यन्ते स्म । एषां प्रेरणयाऽभिनवा विद्वांसोऽप्यत्र पाठशालायां महाराजश्रीहरिसिंहमहानुभावैर्नियुक्ताः । तेषामिदं संक्षिप्तं विवरणम् । विस्तृतं चान्यत्र द्रष्टव्यम् ।

## एतेषां समसामयिका विद्वांसः

(१) **महेश्वरशास्त्रिणो** हिन्दूविश्वविद्यालयात् महानुभावेन श्रीमदनमोहन-मालवीयेन महाराजश्रीहरिसिहानुरोधात् प्रेषिता.। इमे न्यायवेदान्तसांख्यमीमांसा-चार्या अशीतिरूप्यकाणि मासिक वेतनमग्रहीषु.। इमे केरलान्तराले कर्णाटकभुव स्वजन्मनालमकार्षुः। विलोचनविहगनन्देन्दुमिते (१९९२ · १९३५ ई०) वैक्रमे वत्सरे श्रीरघुनाथपाठशालीयन्यायाध्यापकपदमलङ्कृत्य छात्रावासाध्यक्षतामपि स्वीयैः विद्याबुद्धिविभवगुणैः समाप्नुवन्। एषामनुशासनाधीनास्तदानीतनाश्छात्रा. परम-विनीता, सुशिक्षिता., शास्त्रार्थव्यसनिन., प्रवक्तारोऽध्ययनाऽध्यापनपरिपाटीपटीयास. गुरुशास्त्रवाक्येषु श्रद्धावन्तश्चासन्। इमे वसुविहगनन्देन्दुमिते (१९९८ : १९४१ ई०) वैक्रमे वत्सरे स्वेच्छया विनिवृत्ता.।

(२) **श्रीभोलानाथशास्त्रिणः**। इमे जम्मूकाश्मीरराज्यशासनसकाशात् पुष्कला छात्रवृत्ति समुपलभ्य कालिकाताविश्वविद्यालयेऽष्टविधचिकित्साशिक्षकेभ्यो ह्यायुर्वेद-विद्भ्य. समधीत्याऽऽधिव्याधिपरिज्ञानरोगनिदानौषधनिर्माणनाडीपरीक्षणादौ पर प्रावीण्यमधिगत्याऽऽयुर्वेदाचार्यपरीक्षा समुदतारिषु। कविराजोपाधिमपि तत्रत्येभ्यो विद्वद्भ्यः समधिगत्य प्रथम जम्मूकाश्मीरराज्यस्य प्रधानवैद्यस्थान समाप्नुवन्। इमे यथाऽऽयुर्वेदविद्याया सिद्धहस्ता वर्तन्ते तथैव दर्शनादिशास्त्रेषु लोकोत्तरोहापोहप्रतिभा मावहन्ति। एषा सर्वशास्त्रवनविहरणव्यसनिनी प्रतिभा निभाल्य धर्मार्थकौन्सिलमदस्या श्रीभोलानाथशास्त्रिणो वेदान्ताध्यापकपदमध्यतिष्ठिपन्। नभोविहगनन्देन्दुमिते(१९९० : १९३३ ई०) वैक्रमाब्दे श्रीभोलानाथशास्त्रिण श्रीरघुनाथपाठशालीयवेदान्ताध्यापक-पदमधिष्ठाय १२५) रूप्यकाणि मासिक वेतनमलभन्त। ततो वसुविहगनन्देन्दुमिते (१९९८ १९४१ ई०) वैक्रमे वत्सरे जम्मूकाश्मीरराज्यस्याऽऽयुर्वेदविभागस्योप-प्रबन्धकपदे (असिस्टेण्ट डायरेक्टरस्थाने) नियुक्ता राज्याधिकारिभि तत्र पञ्चशतानि रूप्यकाणा मासिक वेतनमग्रहीषु। साम्प्रत वयस्कवृत्ति लब्ध्वा लोकसङ्ग्रहाय प्रयतन्ते।

(३) **मदनमोहनशास्त्रिणः**। इमे ज्यौतिषाचार्या, चन्द्रग्रहनन्देन्दुमिते (१९९१ · १९३४ ई०) वैक्रमाब्दे श्रीरघुनाथपाठशालीयज्यौतिषाध्यापकपदमधिष्ठाय ज्यौतिष-शास्त्र शास्त्रान्तराणि चाध्यापिपन्। एते मासिक वेतन शत १००) रूप्यकाणि सम-ग्रहीषु। वेदशून्यगगननयनमिते (२००४) वैक्रमे वत्सरे वयस्कवृत्ति लब्ध्वा स्वसद्-मनि दैवज्ञकार्यं कुर्वाणा सम्प्रत जीवन्ति। एषा विशिष्ट चरितमन्यत्र प्रस्तुत वर्तते।

(४) साख्ययोगाचार्या **श्रीमुन्शीरामशास्त्रिणः**, 'भिम्बर' प्रान्तस्य मनावर-ग्रामवास्तव्या श्रीरघुनाथपाठशालाया समधीत्य पञ्चनदविश्वविद्यालयीयशास्त्रिपरीक्षा समुत्तीर्य, राजकीयहाईस्कूले संस्कृताध्यापका समभूवन् । ततो धर्मार्थविभागाच्छात्र-वृत्तिमादाय साङ्ख्ययोगौ समध्येतु वाराणसीमयासिषु । तत्र वर्षचतुष्टय समधीत्य पटनाविश्वविद्यालयीयसाख्ययोगाचार्यपरीक्षा समुदतारिषु । पुन श्रीरघुनाथपाठशालीय-साख्ययोगाध्यापकपदमधिष्ठाय १९८७ (१९३० ई०) वैक्रमाब्दीयसप्तमासान् व्यतिया-प्य पुना राजकीयहाईस्कूले संस्कृताध्यापकपदमग्रहीषु । पाठशालायामेषा वेतन चत्वारिंशद् रूप्यकाणि मासिक समभूत् ।

(५) **गोविन्दराजदानशास्त्रिण** एम० ए० । इमे पञ्चनदविश्वविद्यालयीय-शास्त्रिपरीक्षा समुत्तीर्य्य केवलेंग्लिशभाषाया क्रमेण मैट्रिक, एफ ए-बी ए परीक्षा समुदतारिषु । ततो वाराणस्या मालवीयविश्वविद्यालये प्रविश्य संस्कृते एम ए परीक्षा समुदतरन् । काश्मीरिकाभिजनराजदानवंशीया इमे अष्टाशीत्युत्तरनवशताधिकैक-सहस्रतमे (१९८८ १९३१ ई०) वैक्रमे वत्सरे पण्डितप्रकाण्डेषु श्रीचन्द्रेषु गृहीता-वकाशेषु सत्सु तत्पदे नियुक्ता कौन्सिलसदस्यैर्यथासम्भव संस्कृताध्यापनकार्य सम-पीपदन्। केवलमेक हायन पाठशालायामध्यापनकार्य कृत्वा समाप्ते हायने पुन काश्मी-रेषु राजकीयहाईस्कूले संस्कृताध्यापका समभूवन् । पाठशालायामिमे सार्द्धैकशत रूप्य-काणि मासिक वेतनमग्रहीषु ।

(६) त्रैगर्ता **श्रीघनैयालाला** नव्यन्याये व्याकरणे च लब्धप्रतिष्ठा, विलोचन-विहगनन्देन्दुमिते (१९९२-१९३५ ई०) वैक्रमे वत्सरेऽध्यापकपदे नियुक्ता, चत्वा-रिंशद्रूप्यकाणि वेतन गृह्णाना केवलमेकमेव हायन श्रीरघुनाथपाठशालायामध्यापिपन् । तत्रेमे साख्ययोगाध्यापकपदे नियुक्ता आसन् प्रिन्सिपलमहोदयै श्रीबालकृष्ण-शास्त्रिभि ।

(७) **श्रीकृष्णदत्तशास्त्रिणो** राजनीतिनिपुणा श्रीरघुनाथमन्दिराधिष्ठातृणाम-धीना श्रीरघुनाथमन्दिरस्य मुख्या प्रबन्धका (मोहतमिमा) समासन् । एषा वैदुष्येण विद्यार्थिनोऽपि लब्धलाभा भवेयुरिति मत्वा उभयपदे अलङ्कुर्वाणै श्रीबालकृष्ण-शास्त्रिभिरिमे श्रीरघुनाथपाठशालीयाध्यापकेष्वन्यतमाध्यापकपदे नियुक्ता । तत्र छात्रान् शास्त्रर्माणि बोधयन्तोऽमी प्रत्यह घण्टिकाद्वयमपीपठन् । बाणविहगनन्देन्दु-मिताद् (१९९५-१९३८ ई०) वैक्रमाब्दादारभ्य ग्रहविहगनन्देन्दुमित (१९९९-१९४२ ई०) वैक्रमाब्दान्त पिपठिषून् छात्रान् पाठयन्तोऽमी महात्मानो महयश समा-

प्नुवन् । सम्प्रति लब्धवयस्कवृत्तिका सदुपदेशादिभिर्लोकसङ्ग्रह कुर्वाणा महद्यशोभाज-नीभूता आमुष्मिकी चिन्ता विदधति ।

(८) **श्रीगङ्गाधरशास्त्रिणो** नवनवत्यधिकैकोनविंशतिशततमाद् वैक्रमाब्दा-दारम्य द्व्यधिकद्विसहस्रतमवैक्रमाब्दान्त श्रीरघुनाथपाठशालायामपीपठन् । छात्रा-वासाध्यक्षता च कुर्वाणा श्रीरघुनाथपाठशालीयच्छात्राणा विदुषा च स्पृहणीया सवृत्ता । तदनन्तरमुत्तरवाहिनीगदाधरपाठशालाया प्रधानाध्यापकपदे नियुक्ता सफल-मनोरथा सन्त सेनाया सदुपदेशकपद गृहीत्वा साम्प्रत 'सूबेदार' पद समवाप्य कृत-कृत्यीभूता । उभयत्र पाठशालयो चत्वारिंशद् रुप्यकाणि मासिक वेतन लब्धवन्त । सेनायान्तु पुष्कलमेषा वेतनम् ।

**श्रीपूर्णचन्द्रशास्त्रिणो** ज्यौतिषाचार्या इम धर्मार्थविभागत पञ्चाशद्रुप्यकमिता मासिकी छात्रवृत्ति समधिगत्य ज्यौतिषशास्त्र समध्येतु काशीमयासिषु । तत्र वाराणसेय क्विन्सकालिजे प्रविश्य क्रमण ज्यौतिषविषयिणी प्रथमा-मध्यमा-शास्त्रि-आचार्य-परीक्षा प्रथमश्रेण्या समुत्तीर्य ज्यौतिषाचार्या सवृत्ता । ततो मुनिविहगनन्देन्दुमिते (१९९७ १९४२ ई०) वैक्रमे वत्सरे रिक्ते न्यायाध्यापकपदे पाठशालायामिमे नियुक्ता प्रथम पञ्चाशद् रुप्यकाणि मासिक वेतनमलभन्त । ततो ज्यौतिषाध्यापकपदमङ्कुर्वाणा अशीतिरुप्यकाणि समाप्नुवन् । एषा विशिष्ट चरितमन्यत्र प्रस्तुत वर्तते ।

(१०) **श्रीअनन्तरामशास्त्रिणो** द्विगर्तेषु जघानूपत्तनवास्तव्या श्रीरघुनाथपाठ-शालाया समधीत्य पञ्चनदविश्वविद्यालयीयशास्त्रिपरीक्षा समुत्तीर्य श्रीरघुनाथपाठशालाया-मेव साह्याध्यापकपदमलमवापु , तत एव व्ययेन अथर्ववेदमध्येतु वाराणसीमयासिषु तत्र यथासमय समधीत्याऽथर्ववेदाचार्योपाधि समलभन्त । तत समागत्याथर्ववेदाध्यापक-पदमलमवापु । एषा प्रारम्भिक वेतन ४०) रुप्यकाणि । इम राजनीतिनिपुणा, व्यव-हारपटव परिचयविज्ञानघनाश्च वर्तन्ते । किञ्चेमे प्राज्ञ-विशारद-शास्त्रिपरीक्षा-नियुक्तान् ग्रन्थान् सम्यगध्यापयन्ति ।

(११) **श्रीमूलराजशास्त्रिण** श्रीरघुनाथपाठशालाया समधीत्य क्रमेण पञ्चनद-विश्वविद्यालयीयप्राज्ञ-विशारद-शास्त्रिपरीक्षा समुत्तीर्य न्यायव्याकरणसाहित्यकर्म-काण्डादिषु पर प्रावीण्यमाप्नुवन् । एषा तादृश वैदुष्य समनुभूय न्यायाध्यापकपद नियुक्ता इमेऽधिकारिभि । प्रारम्भिकमेषा वतन केवल त्रिंशद् रुप्यकाणि समभूत् । इमे विनीता , सुशीला , सच्चरित्रा , धर्ममर्मविद , कर्मकाण्डपरिपाटीपटीयासा वर्तन्ते । जम्बूप्रान्तस्य जग्घ्राइ पत्तनवास्तव्या । एषा विशिष्टमितिवृत्तमन्यत्र प्रस्तुत वर्तते ।

(१२) सङ्गीताचार्याः **श्रीकृष्णदत्तशर्माणः**। इमे शास्त्रीयसंगीतकलां श्रीरघुनाथपाठशालीयच्छात्रान् शिक्षयन्ति। श्रीरघुनाथमन्दिरस्य गायकेष्वन्यतमा इमे स्वरमाधुर्येण सङ्गीतविज्ञानेन च भगवन्तं श्रीराघवं तद्भक्तांश्च प्रतिदिनं सायं सङ्गीतरससागरे निमज्जयन्ति। मुख्यं वेतनं श्रीरघुनाथमन्दिरकार्यालयतो लभन्ते। एकनवत्यधिकनवशतोत्तरैकसहस्रतम (१९९१ १९३४ ई०) वैक्रमाब्दतः शालायां प्रत्यहं होरामात्रं छात्रान् सङ्गीतं स्वरारोहावरोहादिक्रमाद् शिक्षयन्तः केवलं प्रातःकल्यवर्तार्थं पञ्चविंशतिं २५) रूप्यकाणि मासिकं वेतनं लभन्ते। एभ्योऽन्ये विद्वांसो जगदीश्वरशास्त्रिणां समकालिकाः।

### षष्ठा प्रधानाचार्याः

**श्रीपरशुरामशास्त्रिणो** व्याकरणाचार्याः इमे जम्बूप्रान्तस्थ'शोभाञ्जन'(सुहाञ्जना)ग्रामवास्तव्या अभिजनब्राह्मणकुलोत्पन्नाः श्रीरघुनाथपाठशालायां लवपुरस्थसनातनधर्मकालिजे च समधीत्य क्रमेण पञ्चनदविश्वविद्यालयीय-प्राज्ञ-विशारद-शास्त्रिपरीक्षाः समुत्तीर्य स्वयोग्यतानुसारं धर्मार्थविभागतः पुष्कलां छात्रवृत्तिं समवाप्य विशेषेण व्याकरणशास्त्रं समध्येतुं वाराणसीमयासिषुः। तत्र क्विन्सकालिजे साकल्येन व्याकरणशास्त्रमध्यगीषत, 'व्याकरणाचार्य'परीक्षां च प्रथमश्रेण्यां समुदतारिषुः। ततो महावैयाकरणपदवीं समवाप्य नभोविहगनन्देन्दुमिते (१९९० १९३३ ई०) वैक्रमे हायने पौषमासस्य विंशतितारिकायां श्रीरघुनाथपाठशालायां व्याकरणाध्यापकपदमध्यतिष्ठन्। अशीतिरूप्यकाणि मासिकं वेतनमलभन्त च। ततः श्रीबालकृष्णशास्त्रिषु भौतिकशरीरलीलां विहाय लोकान्तरं गतेषु द्वयधिकद्विसहस्रतमे(२००२ १९४५ ई०) वैक्रमे वत्सरे वैशाखमासस्य त्रयोदशतारिकायामधिकारिभिर्यथानियमं प्रधानाचार्यपदे न्ययुज्यन्तेमे श्रीपरशुरामशास्त्रिणः। तदानीतनमेषां वेतनं षष्ट्युत्तरैकशतं १६०) रूप्यकाणि। तदनन्तरमितरेषां कतिपयाध्यापकानां मासिकं वेतनं सार्धैकशतं १५०) रूप्यकाणि समभूत् तदानीमेषां सार्द्धद्विशतं २५०) वेतनं समभूत्। ततः कतिपयवर्षानन्तरमध्यापकानां वेतनं शतद्वयम्, प्रधानाचार्यस्य त्रीणि शतानि वेतनं समभवत्। इमे श्रीपरशुरामशास्त्रिणो व्याकरणाचार्याः, प्रत्युत्पन्नमतयः, सहिष्णवः, समस्तशास्त्रेष्वप्रतिहतमतयोऽपि विशेषेण व्याकरणे, साहित्ये च लब्धप्रतिष्ठाः। न केवलमिमेऽध्यापका विद्वांस एव, किन्तु प्रबन्धविधानमनुशासनसामर्थ्यमपि च तत्सदृशं नान्येष्वद्यतनेषु येषुचिद् विद्यते। त्रिंशदुत्तरशतत्रयं वेतनमाददाना इमे केनापि हेतुना षोडशोत्तरद्विसहस्रतमे (२०१६ १९५९ ई०) वैक्रमाब्दे पूर्णां वयस्कवृत्तिमादाय

श्रीरघुनाथपाठशालीयप्रधानाचार्यपदान् मुक्ता अभूवन् । तत प्रभृति सर्वाङ्गव्याकरणाध्ययनाध्यापने ह्यस्या पाठशालाया शैथिल्यमापन्ने । एषा विशिष्ट चरितमन्यत्र प्रस्तुत वर्तते ।

### श्रीपरशुरामशास्त्रिणा समकालिकाध्यापका

(१) **श्रीमदनमोहनशास्त्रिणो** जमवाला यजुर्वेदाचार्या एम ए पदवीकाश्च इमे श्रीरघुनाथपाठशालात क्रमेण पञ्चनदविश्वविद्यालयीयप्राज्ञ-विशारद-शास्त्रिपरीक्षा समुत्तीर्य धर्मार्थविभागत पुष्कला छात्रवृत्ति समवाप्य च साङ्ग यजुर्वेद समध्येतु वाराणसीमयासिषु । तत्र मालवीयाना हिन्दूविश्वविद्यालये प्रविश्यानुक्रमेण यजुर्वेदाचार्यपरीक्षा समदु, समुदतारिषुश्च प्रथमश्रेण्याम् । चत्वारिंशद्रुप्यकमासिकवेतनेन २००२ (१९४५ ई०) वैक्रमाब्दे श्रीरघुनाथपाठशालाया यजुर्वेदाध्यापकपदमध्यतिष्ठन् । २००५ (१९४८ ई०) वैक्रमाब्दपर्यन्त पाठशालायामुषित्वाऽधिकलिप्सया होशियारपुरे विश्वबन्धूनामनुसन्धानकार्यालये कार्यमकार्षु । द्विवर्षानन्तर कुरुक्षेत्रविश्वविद्यालय प्रविश्य तत्राध्यापनकार्येण सहाऽऽङ्लभाषा ममधीत्य एम ए उपाधिमध्यगच्छन् । साम्प्रत क्रमवृद्धिपरिणतेनाऽष्टशतरूप्यकवेतनेन चण्डीगढविश्वविद्यालयीयसस्कृतविभागस्य यजुर्वेदाचार्यपदमलङ्कुर्वन्ति ।

(२) **श्रीगङ्गादत्तशास्त्रिण** ऋग्वेदाचार्या सस्कृते हिन्द्या च एम ए पदवीका । इमे श्रीरघुनाथपाठशालाया समधीत्य क्रमेण पञ्चनदविश्वविद्यालयीय-प्राज्ञ-विशारद-शास्त्रिपरीक्षा समुत्तीर्य धर्मार्थविभागतश्छात्रवृत्तिमादाय वाराणस्ये मालवीयाना हिन्दूविश्वविद्यालये ऋग्वेद साङ्ग समध्येतुमगच्छन् । तत्र क्रमेण ऋग्वेदाचार्यपरीक्षा प्रथमश्रेण्या समुत्तीर्य श्रीरघुनाथपाठशालायामृग्वेदाध्यापकपदे चत्वारिंशद्रूप्यकमासिकवेतनेन नियुक्ता अभूवन् । पुनर्महाराजश्रीकर्णसिंहसकाशात् पुष्कला छात्रवृत्ति समधिगत्य काश्या मालवीयाना हिन्दूविश्वविद्यालयमगमन् । हिन्द्या सस्कृते च एम ए परीक्षाग्रन्थान् तत्र समधीत्य परीक्षाद्वय समुदतारिषु । भूयो जम्मूनगरमागत्य शत रूप्यकाणि मासिक वतन लभमाना पाठशालीय कार्यजात परित्यज्य प्रथम काश्मीरेषु 'सोप्पर'नाम्नि पत्तने गवर्नमेण्टाङ्लविद्यालये सस्कृताध्यापकपदमलमकार्षु । साम्प्रत श्रीनगरस्थामरसिंहकालेजे सस्कृतमध्यापयन्ति पुष्कल वेतन च लभन्ते । इमे जम्मूप्रान्तस्य 'अम्बगढोटा ग्रामवास्तव्या, अभिजनब्राह्मणवशावतसा । एषा विशिष्टमितिवृत्तमन्यत्र प्रस्तुतम् ।

(३) **श्रीद्वारिकानाथशास्त्रिण आयुर्वेदाचार्या** । इम द्वारिकानाथशास्त्रिणा राज-

नीतिनिपुणा, गुणग्रहिला, व्यवहारविद, परिचयपेशलाश्च विद्यन्ते। श्रीरघुनाथपाठशालाया समधीत्य क्रमेण पञ्चनदीयप्राज्ञ-विशारद-शास्त्रिपरीक्षा समुदतारिषु। कञ्चित्काल पुस्तकालयाध्यक्षपदमधिष्ठाय स्वव्यवहारकौशलेन धर्मार्थविभागतश्छात्रवृत्ति समधिगत्य 'इन्द्रप्रस्थ' (दिल्लीम्) आयुर्वेदमध्येतुमगमन्। तत्र तिब्बीकालेजे प्रविश्य विशेषज्ञेभ्य आयुर्वेदविद्भ्य समधीत्यायुर्वेदाचार्योपाधिमध्यगच्छन्। तत २००७ (१९५० ई०) वैक्रमाब्दे श्रीरघुनाथपाठशालायामायुर्वेदाध्यापकपदमध्यतिष्ठन्। आयुर्वेदातिरिक्तान्यन्यान्यपि शास्त्राणि पाठयितु पटीयास इमे तान्यपि यथावसरमपीपठन्। साम्प्रत जम्बूस्थाभिनवायुर्वेदकालेजे आयुर्वेदविषयकान् दार्शनिकसिद्धान्तान् पाठयितु दार्शनिकाध्यापकपदमलङ्कुर्वाणा सर्वोत्तमा यश सन्तति समर्जयन्ति।

(४) **श्रीशान्तिप्रकाशशास्त्रिण** (सामवेदाचार्या) इमे तरुणा, परमोत्साहसम्पन्ना, प्रत्युत्पन्नमतय, जम्बूप्रान्तान्तर्गत 'कडवाडा' ग्रामवास्तव्या, श्रीरघुनाथपाठशालीयस्नातकेष्वन्यतमा अक्षरारम्भतोऽस्या पाठशालाया समधीत्य क्रमेण पञ्चनदविश्वविद्यालयीयप्राज्ञ-विशारद-शास्त्रिपरीक्षा समुदतारिषु। तता धर्मार्थविभागतश्छात्रवृत्ति समवाप्य वाराणस्या हिन्दूविश्वविद्यालये प्रविश्य साङ्ग सामवेद समध्यगीपत। तत सामवेदाचार्योपाधिमधिगत्य कृतकृत्या जम्बूराजधानी प्रत्यावृत्य गगनेन्दुनभोनयनपरिमिते (२०१० १९५३ ई०) वैक्रमे वत्सरे सामवेदाध्यापकपदमध्यतिष्ठन् श्रीरघुनाथपाठशालायाम्। एषा प्रारम्भिक वेतन ४०) चत्वारिंशद्रूप्यकाणि समभवत्, साम्प्रतिक तु सार्द्धैकशत रुप्यकाणि। इदानी छात्रावासाध्यक्षपदमलङ्कुर्वाणास्तत्रत्य प्रबन्धजात साधु सम्पादयन्ति। पाठशालाया च प्राय सर्वानपि काश्मीरविश्वविद्यालयीयपाठ्यग्रन्थान् समध्यापयन्ति। कर्मकाण्डपरिपाटीपटीयास इमे नागरिकजनेष्वपि महती ख्याति समाप्नुवन्ति।

अन्ये सर्वेऽप्यध्यापका श्रीबालकृष्णसामयिका एवाभवन्।

## सप्तमा प्रधानाचार्या

श्रीकाशीरामशास्त्रिण, इमेऽस्यामेव पाठशालाया विद्वद्वरिष्ठश्रीहरदत्तरामप्रपन्नारूढभानुविश्वम्भरदत्तरघुनाथशास्त्रिप्रभृतिभ्यो विद्वद्भ्य समधीत्य क्रमेण पञ्चनदविश्वविद्यालयीयप्राज्ञ-विशारद-शास्त्रिपरीक्षा समुदतरन्। तत सकलशास्त्रपारगताना नव्यन्यायनिष्णाताना श्री १०८ विश्वेश्वराश्रमस्वामिना जम्बूराजधानीसंस्थिताना सकाशात् विश्वनाथपञ्चाननकृतन्यायसिद्धान्तमुक्तावल्या मर्मस्थलानि क्षणभङ्गाश-

पाददर्शने च मनिशेष ममबीरय ज्योतिर्विदा श्रीविश्वेश्वरशर्मणा सकाशात् ज्यौतिप-शास्त्ररहस्यमवगन्तु प्रायतन्त । ततो हरिद्वारे योगाश्रमपाठशालाया मुख्याध्यापकस्य जयदेवमिश्रममकक्षस्य विदुपो न्यायवेदान्तव्याकरणाचार्यस्य श्रीद्रव्येशझाशर्मण सकाशात् माग्ययोगवेदान्तदर्शनानि, सिद्धान्तलेशाद्वैतसिद्धिप्रभृतिखण्डनग्रन्थान्, शब्देन्दुशेखर-व्याकरणमञ्जूषावैयाकरणभूपणप्रभृतिव्याकरणग्रन्थाश्च समध्यगीपत । रसगङ्गाधर-ध्वन्यालोककाव्यप्रकाशवक्रोक्तिजीवितव्यक्तिविवेकादिसाहित्यग्रन्थेपु तु प्रागेव लब्ध-प्रतिष्ठा इमे त्रिलोचनवसुविहगेन्दुमिते (१९८२) वैक्रमाब्दे (१९२५ ई०) श्रीरघुनाथ-पाठशालाया साहित्याध्यापकपदमध्यतिष्ठन् । एषा प्रारम्भिक वेतन ५०) पञ्चाशद्-रूप्यकाणि, तदनन्तरित ८०) अशीतिरुप्यकाणि, अन्तिम २००) द्वे शते । समाप्तेऽपि भूतसमये छात्रसमदि विद्वद्गोष्ठ्या चैषा भूयसी कीर्त्ति कर्णोपकर्णिकया श्राव श्राव स्वय चानुभूय महाराजा श्रीकर्णसिहा सार्द्धवर्षचतुष्टयमधिकमेम्य समय प्रादु । भृतेर-न्तिमे समये श्रीपरशुरामशास्त्रिपु गृहीतावकाशेष्विमे श्रीरघुनाथपाठशालाया मुख्याध्यापकपदमध्यतिष्ठन् । इमे ज्यौतिपशास्त्रमायुर्वेद च विहाय प्राय सर्वशास्त्रजात-मस्मिन् श्रीरघुनाथसस्कृतमहाविद्यालयेऽध्यापिपन् । एषा विशिष्टमितिवृत्तमन्यत्र प्रस्तुत वर्तते ।

## अष्टमा प्रधानाचार्या

श्रीसीतारामशास्त्रिणो राजस्थानाभिजनब्राह्मणवशजा साम्प्रत काशीवास्त व्याना सुप्रसिद्धविदुपा श्रीगुरुप्रसादशास्त्रिणा तनुजन्मानो महाराजश्रीकर्णसिहमहानु-भावै सादर समाहूय नभोरसविहगेन्दुमित (१९६०) ईसवीये शतके मईमासस्य १२ द्वादशतारिकाया पञ्चशतानि मासिक वेतन स्वीकार्य श्रीरघुनाथपाठशालाया प्रधाना-चार्यपदे न्ययुज्यन्त । इमे महानुभावा श्रीसीतारामशास्त्रिणो व्याकरण-साहित्याचार्या पी०एच्०डी० (डाक्टर) उपाधिमधिगतवन्त । इमे दशमासान् परया योग्यतया श्रीरघुनाथपाठशालीयकार्यजात सम्पाद्य इतोऽधिकवेतनसम्भावनया विधुरसविहगेन्दु-मिते (१९६१) खिष्टाब्दे फरवरीमासस्य २९ एकोनत्रिंशतारिकाया सर्व पाठशालीय-कार्यजात परित्यज्य वाराणस्या मालवीयाना हिन्दूविश्वविद्यालयमयासिपु । श्रूयते तत्रैकादशशतरूप्यकाणि मासिक वेतन क्रमश लप्स्यन्त इति । साम्प्रतन्तु षट्शतानि रूप्यकाणा मासिक वतन लभमाना विश्वविद्यालयीय संस्कृतविभाग व्याकरणाचार्यपद भूपयन्ति ।

## नवमा. प्रधानाचार्याः

**श्रीजयरामशास्त्रिण** । सीतारामशास्त्रिणि श्रीरघुनाथपाठशालीयकार्यजातं परित्यज्याधिकवेतनकाम्यया वाराणस्यां हिन्दूविश्वविद्यालये व्याकरणाध्यापकपदमधिरूढे धर्मार्थकौन्सिलसदस्यास्तावता वेतनेन कञ्चिद्विद्वांसमलभमाना अगत्या पाठशालीयाध्यापकेषु वरिष्ठान् (सीनियरान्) श्रीजयरामशास्त्रिणश्चन्द्ररसविहगेन्दुमिते ( १९६१ ) ख्रिष्टाब्दे जनवरीमासस्य ३० तारिकायां श्रीरघुनाथपाठशालीयप्रधानाध्यापकपदमध्यतिष्ठिपन् । इमे प्रथममुत्तरवाहिनीपाठशालायां चत्वारिंशद्रुप्यकमासिकवेतनेन प्रधानाध्यापकपदमलमकार्षुः । ततः श्रीरघुनाथपाठशालायां न्यायाध्यापके श्रीमहेश्वरशास्त्रिणि गृहान् गते, तत्पदे नियुक्ता इमेऽधिकारिभिरशीतिरुप्यकाणि मासिकं वेतनमलभन्त । ततः प्रतिवर्षं रुप्यकाष्टकक्रमवृद्ध्या शतद्वयरुप्यकमासिकवेतना इमे समभूवन् । साम्प्रतं प्रमुखाध्यापकपदमलङ्कुर्वाणा इमे प्रतिवर्षं १५) पञ्चदशरुप्यकवृद्ध्या ३५०) मासिकवेतनमधिजिघृक्षन्ति । इमे जम्बूराज्यान्तर्गतराजौरीप्रान्तीयपञ्जाहग्रामवास्तव्या भिम्बरप्रान्तान्तर्गत'ढन्न'ग्रामवासिनो गुसाङरामशर्मणो द्विजवराज्जनिमग्रहीषु । एषां विशिष्टमितिवृत्तमन्यत्र प्रस्तुतम् ।

### श्रीरघुनाथसंस्कृतमहाविद्यालयीयवर्तमानाध्यापकानामुपाधयो वेतनस्तरोऽध्यापनकालश्च

#### प्रधानाध्यापकः

**श्रीजयरामो** वेदान्तशास्त्री, न्यायाचार्यश्चन्द्ररसविहगेन्दुमिते (१९६१) ख्रिष्टाब्दे जनवरीमासस्य २० त्रिंशतारिकायां प्रधानाध्यापकपदमध्यतिष्ठत् । ततः पूर्वं तृतीयाध्यापकपदमलङ्कुर्वन्नासीत् । वयस्कवृत्तिं गृहीत्वा गते द्वितीयाध्यापके शृतिक्रमेणाय द्वितीयत्वमलभत । अथ २०५) सार्द्धद्विशतवेतनतः समारभ्य प्रतिवर्षं १५) पञ्चदशवृद्ध्या ३५०) सार्द्धशतत्रयं वेतनं जिघृक्षति । श्रीजयरामः साम्प्रतं २८०) अशीत्युत्तरशतद्वयवेतनं गृह्णाति अयं १९९४ (१९३७ ई०) वैक्रमाब्दात् २००१ (१९४४ ई०) वैक्रमाब्दान्तमुत्तरवाहिनीसंस्कृतपाठशालायाम्, २००२ (१९४५ ई०) वैक्रमाब्दान्तादद्यावधि च श्रीरघुनाथपाठशालायां कार्यं कुर्वन्नास्ते ।

#### द्वितीयाध्यापकः

**श्रीपूर्णचन्द्रशास्त्री** ज्योतिषाचार्यः १९९७ (१९४० ई०) वैक्रमाब्दात् समारभ्य श्रीरघुनाथपाठशालायां ज्योतिषशास्त्रमध्यापयन् १५०) सार्द्धैकशतमासिकवेतना-

दारभ्य प्रतिवर्षं दशरूप्यकवृद्धया २५०) सार्द्धशतद्वयवेतन जिघृक्षति । साम्प्रत २३०) त्रिशदधिकशतद्वय प्रतिमास वेतन लभते ।

## तृतीयाध्यापक

श्रीअनन्तरामशास्त्री, अथर्ववेदाचार्य १९९५ (१९३८ ई०) वैक्रमाब्दादद्यावधि श्रीरघुनाथपाठशालाया साङ्गमथर्ववेद प्राज्ञ-विशारद-शास्त्रिकक्षानियतपुस्तकानि च पाठयन् १५०) सार्द्धैकशतप्रारम्भिकवेतनादारभ्य प्रतिवर्षं दशरूप्यकवृद्धया २५०) सार्द्धशतद्वय वेतन जिघृक्षति । साम्प्रत तु प्रतिमास शतद्वय वेतन लभत ।

## चतुर्थाध्यापक

श्रीगौरीदत्तशास्त्री, १९९६ ( १९३९ ई० ) वैक्रमाब्दादारभ्य २००२ (१९४६ ई०) वैक्रमाब्दान्तमुत्तरवाहिनीसस्कृतपाठशालायामपीपठत् । १९४७ खिस्ताब्दादद्यावधि श्रीरघुनाथपाठशालाया पाठयति । सम्प्रति १५०) सार्द्धैकशतप्रारम्भिकवेतनादारभ्य प्रतिवर्षं दशरूप्यकवृद्धया २५०) सार्द्धशतद्वय वेतन जिघृक्षति । सम्प्रति १६०) षष्ट्युत्तरैकशत रूप्यकाणि प्रतिमास गृह्णाति ।

## पञ्चमाध्यापक

न्यायनयनिष्णात, कर्मकाण्डप्रकाण्ड, श्रीमूलराजशास्त्री १९९५ (१९३८ ई०) वैक्रमाब्दादारभ्याद्यावधि समस्तानि प्राज्ञ-विशारद-शास्त्रिकक्षापाठ्यपुस्तकानि साङ्ग यजुर्वेद च समध्यापयन् छात्रसदसि विद्वत्समाजे च महद्यश समर्जयति, नागरिककर्मकाण्डप्रकाण्डत्वमप्यद्वितीयत्वमादधाति । १५०) सार्द्धैकशतप्रारम्भिकवेतनादारभ्य प्रतिवर्षं दशरूप्यकवतनवृद्धया २५०) सार्द्धशतद्वय मासिक वेतन जिघृक्षति । साम्प्रत प्रतिमास १६०) षष्ट्युत्तरैकशत वेतन गृह्णाति ।

## षष्ठाध्यापक

श्रीशान्तिप्रकाशशास्त्री सामवेदाचार्य २०१० (१९५३ ई०) वैक्रमाब्दादारभ्य श्रीरघुनाथपाठशालाया सामवेद पाठयति, विषयान्तरमपि यथासमय पाठयति, कर्मकाण्डकर्मण्यप्यस्य मति प्रस्फुरति प्रतिष्ठा चादधाति । प्रतिमास ८०)अशीतिरूप्यकवेतनादारभ्य प्रतिवर्ष सप्तवृद्धया १५०) सार्द्धैकशतरूप्यकमासिकवेतन जिघृक्षति । साम्प्रत १३६) षट्त्रिंशदधिकैकशत प्रतिमास वेतन गृह्णाति ।

सप्तमाध्यापक

**श्रीमोतीरामशास्त्री** प्रथम श्रीरघुनाथसंस्कृतपुस्तकालये पुस्तकालयाध्यक्ष-पदमलमकार्षीत् । ततोऽस्याध्यापनयोग्यता निभाल्य २०१० ( १९५३ ई० ) वैक्रमाब्दे श्रीरघुनाथपाठशालायामधिकारिभिरानीतोऽय महता कौशलेनाध्यापनकार्यं सम्पादयति । प्रतिमासमशीतिरूप्यकमासिकवेतनादारम्य प्रतिवर्षं सप्तवृद्धचा १५०) सार्द्धैकशत वेतन जिघृक्षति । अस्मिन् वर्षे प्रतिमास १२२) द्वाविंशत्युत्तरैकशत रूप्यकाणि गृह्णाति ।

अष्टमाध्यापक

सर्वतन्त्रस्वतन्त्र **श्रीविश्वनाथशास्त्री** अय पुञ्छराजवशस्य राजपण्डित ततो गृहीतवयस्कवृत्तिक २०१६ ( ११६६ ई० ) वैक्रमाब्दे कौन्सिलसदस्यैर्वैदुष्य समनुभूय श्रीरघुनाथपाठशालायामुच्चकक्षास्थच्छात्रान् समध्यापयितु नियुक्त । अय प्रतिमास शत रूप्यकाणा वेतन गृह्णाति ।

नवमाध्यापक

**श्रीक्षेमचन्द्रशास्त्री** २०१८ ( १९६१ ई० ) वैक्रमाब्दात् श्रीरघुनाथपाठशालाया तत्तत्कक्षानियुक्तघण्टिकासु तत्तद्विषयान् सोत्साह पाठयति । अस्य प्रारम्भिक वेतनमशीतिरूप्यकाणि, प्रतिवर्षं सप्तवृद्धचा १५०) सार्द्धैकशतमय जिघृक्षति । सम्प्रति १०१) रूप्यकाणि प्रतिमास वेतन गृह्णाति ।

दशमाध्यापक

श्रीपीताम्बरशास्त्री, कठुआपत्तनवास्तव्याभिजनब्राह्मणकुलप्रसूत, श्रीरघुनाथ-पाठशालीयस्नातकेष्वन्यतमो मैट्रिकपरीक्षावधि पाश्चात्यभाषाभाषणप्रवीण २०१८ ( १९७१ ई० ) वैक्रमाब्दात् श्रीरघुनाथपाठशालाया संस्कृतमध्यापयति । ८०) अशीतिरूप्यकमासिकवेतनादारम्य प्रतिवर्षं सप्तवृद्धचा १५०) सार्धैकशत रूप्यकाणि वेतन जिघृक्षति । साम्प्रत प्रतिमास १०१) रूप्यकाणि वेतन गृह्णाति ।

एकादशोऽध्यापक

**श्रीविहारीलालशास्त्री**, प्रभाकर, जम्मूनगरान्तर्गत गिहाडियाग्रामस्थाभिजनब्राह्मणकुलोत्पन्न ज्योतिषशास्त्रे विशेषरुचिर्वर्तते । २०१८ ( १९६१ ई० ) वैक्रमाब्दादारम्य पाठशालाया संस्कृतमध्यापयति । अयमपि ८०) अशीतिप्रारम्भिकवेतनादारम्य प्रतिवर्षं सप्तरूप्यकवृद्धचा १५०) सार्द्धैकशतरूप्यकाणि वेतन जिघृक्षति । साम्प्रतमस्य मासिक वेतन १०१) एकोत्तरशतरूप्यकाणि ।

## द्वादशोऽध्यापक.

(१२) द्वादशो व्यायाम (ड्रिल्ल) शिक्षक, ठाकुर श्रीधर्मसिंह अयं सैनिको वीर सेनातो लब्धविश्रामवृत्तिक (१९६२ ई०) वर्षे श्रीरघुनाथपाठशालाया सैनिक-रीत्या व्युग्लीकला शिक्षयति। तच्छिक्षणे लब्धप्रमाणपत्रो महतो यशसो भाजन मवृत्त। सेनायामय हवालदारपदभागभवत्। अधुना पञ्चसप्ततिरूप्यकाणि मासिक वेतन च लभते।

## त्रयोदशोऽध्यापक

(१४) त्रयोदश. सङ्गीताचार्य श्रीकृष्णदत्तशर्म्माऽयं शास्त्रीयसङ्गीतानि वर्तमानयुगे प्रचलितगीतानि च छात्रान् शिक्षयति। जम्बूनगरवास्तव्योऽयं सङ्गीतशास्त्रे प्राय सिद्धहस्तो वर्तते। प्रत्यह होरामात्रस्य २५) पञ्चविंशतिरूप्यकाणि वेतन गृह्णाति। इति पुरस्तान्निवेदितम्।

## विशिष्टा स्नातका

श्रीरघुनाथसंस्कृतमहाविद्यालय सर्वस्मिन् भारते भारतेतरदेशेषु च सुरभारती सभाजयितु समस्तजीवोपचिकीर्षया मानवधर्मापरपर्याय सनातनधर्मं प्रचारयितु चानन्तान् स्नातकान् समुत्पाद्य प्रतिनगरम्, प्रतिपत्तनम्, प्रतिग्रामम्, यत्र तत्र तान् प्रचारकप्रसार-काध्यापकोपदेशकरूपेण सुस्थिरीकृत्य पर्य्याप्तामभ्यर्चनामकार्षीत् कुर्वन्नास्ते च सुरभारत्या परमेश्वरस्वरूपस्य सनातनधर्मस्य च। किञ्च धर्मेश्वरपरायणस्य महाराजश्रीरणवीरसिंहस्य समीहा पूरयितु ते स्नातका यत्र तत्र सर्वत्र मानवमात्र धर्मेश्वरपरायण विधातु प्रायतन्त प्रयतमानाश्च सन्ति। तेषु केषाचिन्नामनिर्देश क्रियते।

(१) साङ्गयजुर्वेदाचार्यो महामहोपाध्याय श्रीजगदीश्वरशास्त्री, श्रीरघुनाथसंस्कृतपाठशालाया प्रधानाचार्य, श्रीगोकुलचन्द्रशास्त्रिणा मध्यम पुत्रो जम्बूवास्तव्य।

(२) पण्डितप्रकाण्ड सर्वतन्त्रस्वतन्त्र, श्रीगङ्गाधरशास्त्री श्रीरघुनाथसंस्कृतमहाविद्यालयस्य प्रधानाचार्य। श्रीगोकुलचन्द्रशास्त्रिणा ज्येष्ठ पुत्र, जम्बूवास्तव्य।

(३) अतीतानागतज्ञाता सर्वदाशास्त्राऽप्रतिहतगतिरपि गणितफलितोभयविध-ज्योतिषशास्त्र विशेषरुचि, उत्तरवाहिनीसंस्कृतमहाविद्यालयस्नातक श्रीलक्ष्मणशास्त्री

पञ्चाङ्गनिर्माता, जम्बूस्थप्रिन्सआफवेल्ज कालिजस्य भूतपूर्व सस्कृताध्यापक, शास्त्रार्थमहारथो जम्बूप्रान्तीयभटियालग्रामवास्तव्य ।

(४) **श्रीविश्वेश्वरज्यौतिषी,** ज्यौतिषशास्त्रीयत्रयोदशसिद्धान्तवेत्ता, राजपूज्य, जम्बूकाश्मीरधर्मार्थविभागस्य मुख्याध्यक्ष । वसुस्थली (वसोली) वास्तव्य । (एषा विशिष्ट जीवनमन्यत्र प्रस्तुतम् ।)

(५) **श्रीदेवराजशास्त्री,** महामहोपाध्याय, श्रीरघुनाथसस्कृतमहाविद्यालयस्य प्रधानाचार्य, कर्मकाण्डपरिपाटीपटु, प्रत्युत्पन्नमति, महाराजश्रीहरिसिंहस्य राज्याभिषेकाचार्य । श्रीगोकुलचन्द्रशर्मणा प्रपौत्र, श्रीगङ्गाधरशास्त्रिणा ज्येष्ठ पुत्र ।

(६) **श्रीबालकृष्णशास्त्री,** तर्कव्याकरणतीर्थ, जम्बूकाश्मीरराजवशपण्डित, श्रीरघुनाथसस्कृतमहाविद्यालयस्य प्रधानाचार्य । श्रीदेवराजशास्त्रिणा कनीयान् भ्राता ।

(७) **श्रीचन्द्रशास्त्री,** सर्वतन्त्रस्वतन्त्र, लोकोत्तरप्रतिभावान्, जर्मनामेरिकायूरोपादिदेशीयविद्वद्वरसम्पूज्य, श्रीरघुनाथसस्कृतमहाविद्यालयस्य उपाध्यक्ष (वाइसप्रिन्सिपल) ।

(८) **श्रीआरूढभानुशास्त्री,** जम्बूप्रान्तीयपल्लीग्रामवास्तव्योऽपरो भट्टोजिदीक्षित । श्रीरघुनाथसस्कृतमहाविद्यालयस्य व्याकरणाध्यापक, उत्तरवाहिनीसस्कृतमहाविद्यालयस्य स्नातक । अस्य वृत्तविशेषमग्रे प्रस्तोष्याम ।

(९) **श्रीनिक्कारामशास्त्री,** वेदान्तसिद्धान्तज्ञ, कर्मकाण्डी, श्रीरघुनाथसस्कृतमहाविद्यालयस्याध्यापको जम्बूवास्तव्य ।

(१०) **श्रीरामप्रपन्नशास्त्री,** तर्कव्याकरणकाव्यतीर्थ, स्वतन्त्रग्रन्थलेखनटीकाकरणकुशल, पञ्चनदीयजेझोग्रामवास्तव्य, उत्तरवाहिनीपाठशालाप्रधानाध्यापक ।

(११) **श्रीदीनानाथशास्त्री,** जम्बूवास्तव्य, राज्ञो रामसिंहस्य गृहपण्डित श्रीरणवीरहाईस्कूलस्यसस्कृतपाठशालाया प्रधानाचार्य ।

(१२) **श्रीविश्वम्भरशास्त्री,** जम्बूप्रान्तीयभटियालग्रामवास्तव्य, नवनवलाकुशल, श्रीरणवीरहाईस्कूलस्य प्रमुखाध्यापक ।

(१३) **श्रीलब्धरामशास्त्री,** आर्यसिद्धान्तसस्थापक, पञ्चनदीयवेडियांवालाग्रामवास्तव्य ।

(१४) **श्रीरघुनाथशास्त्री,** सर्वतन्त्रस्वतन्त्रो, विशेषेण व्याकरणसाहित्ययोर्लब्धप्रतिष्ठ, काश्मीरेषु श्रीनगरीयहाईस्कूलसंस्कृतपाठशालाया प्रधानाध्यापक । जम्मूप्रान्तीयघृत(घो)ग्रामे समाविर्भूय जम्मूनगरे कृताधिष्ठान ।

(१५) **श्रीगौरीशङ्करशास्त्री,** भद्रवाहप्रान्तीय, सर्वत्र भद्रवाहे लब्धप्रतिष्ठ, तत्रत्यहाईस्कूलाध्यापकोऽपि स्वातन्त्र्येण भद्रवाहीयद्विजवटून् न्याय-व्याकरणादिकठिनविषयान् अपि समपीपठत् ।

(१६) **श्रीजगदीश्वरभट्टशास्त्री,** तर्कव्याकरणतीर्थ, जम्मूवास्तव्य, पञ्चनदविश्वविद्यालयीय-ओरियण्टलकालेजस्य संस्कृतविभागे प्रमुखाध्यापक ।

(१७) पण्डितेन्द्र **श्रीराजारामशास्त्री,** श्रीमद्भगवद्गीता-निरुक्तादि-प्रचुरग्रन्थाना टीकाकर्त्ता, महर्षिदयानन्दसिद्धान्तसंस्थापने शास्त्रार्थमहारथो लवपुरीय डी० ए० वी० कालेजस्य संस्कृतप्रधानाध्यापक ।

(१८) **श्रीगाङ्गेयनरोत्तमशास्त्री,** कालिकाताप्रान्तीयश्रेष्ठिन श्रीविनायकमिश्रस्य सम्पदोऽधिकारिष्वन्यतम, परिचयविधानदक्ष, काव्यकलाकलनकुशल ।

इत्यादयोऽनन्ता श्रीरघुनाथसंस्कृतमहाविद्यालयस्योत्तरवाहिनीसंस्कृतमहाविद्यालयस्य च स्नातका आसन् । एतेषु केचित् पूर्वं विस्तरेण परिचायिता एव । केचिच्चाग्रे प्रस्तोष्यन्ते यथावसरम् ।

### जीवता केषाचिन्नामादिनिर्देश

(१) **रामनाथशास्त्री,** एम्० ए०, जम्मूवास्तव्य, साम्प्रत जम्मूनगरस्थिते आर्टकालेजे संस्कृतमध्यापयति । अय संस्कृत-हिन्दी-डोगरीभाषासु सरसा कविता कलयति । बहूनि टीकापुस्तकानि मौलिककाव्यानि च स्वकृतान्यनेन मुद्राप्य प्रकाशितानि ।

(२) **श्रीबलजिन्नाथशास्त्री,** एम्० ए०, काश्मीरेषु कुलग्रामवास्तव्य । काश्मीरप्रान्तीयानन्तनागपत्तनगवर्नमेण्टकालेजे संस्कृतमध्यापयति । अय शैवसिद्धान्तमर्मज्ञस्तद्विषये बहु समुदलेखीत् । अयमस्या पाठशालाया समधीत्य पञ्चनदविश्वविद्यालयीयप्राज्ञ-विशारद-शास्त्रिपरीक्षा प्रथमश्रेण्या समुदतारीत् ।

(३) **श्रीगङ्गादत्तशास्त्री,** ऋग्वेदाचार्य संस्कृत हिन्द्या च एम्० ए०, जम्मूप्रान्तीयाम्बगढोटाग्रामवास्तव्य । काव्यकलाकलने, निबन्धरचने च परमप्रवीण ।

(४) श्रीमदनमोहनशास्त्री, यजुर्वेदाचार्य, एम्० ए०, पञ्चनदीयचण्डीगढ राजधानीस्थे ओरियण्टलकालेजे पुष्कलवेतनेन वेदानध्यापयति। अय स्यालीप्रान्तीय-बुटनग्रामवास्तव्य ।

(५) श्रीबालकृष्णशास्त्री, एम्० ए०, अय परमविनीत, मेधावी, पितृभक्त, शास्त्रीरेषु गवाधवलप्रान्तीयगवर्नमेण्टकालेजे संस्कृतमध्यापयति, जम्बूनगरवास्तव्यश्च ।

(६) श्रीशम्भुनाथशास्त्री, एम्० ए०, जम्बूनगरसविधे 'खैरी'ग्रामवास्तव्य, जम्बूकाश्मीरविश्वविद्यालयीयसंस्कृतविभागस्य एम्० ए० श्रेणी पाठयति ।

(७) श्रीसत्यपालशास्त्री, एम्० ए०, वसुस्थलीप्रान्तीयग्रामवास्तव्य, साम्प्रत पुञ्छनगरे गवर्नमेण्टकालेजे संस्कृतमध्यापयति ।

(८) श्रीभगवत्प्रसादशास्त्री, जगन्नाथपुरीवास्तव्य, तत्रत्यसदाशिवसंस्कृत-कालेजस्य प्रधानाचार्यपदमारुह्य संस्कृतमध्यापयति ।

(९) श्रीशुकदेवशास्त्री, पाटीग्रामवास्तव्य, काव्यकलाकलनकुशलोऽय प्रभूततरा मुक्तक(प्रकीर्ण)कविता खण्डकाव्यानि च निर्मायैकं महाकाव्य त्रिगर्तस्तुति-लक्षण निरमासीत् । पण्डितप्रवरोऽय शास्त्रमर्मोद्भेदकव्याख्यानै, धर्मोपदेशै, पुराण-प्रवचनैश्च साम्प्रत सर्वजनमनासि रञ्जयति, स्वक च पारलौकिक सुकृतमुपार्जयति ।

(१०) श्रीश्रीशङ्करशास्त्री, श्रीगोकुलचन्द्रशर्मणा प्रपौत्र, श्रीगङ्गाधरशास्त्रिणा पौत्र, श्रीबालकृष्णशास्त्रिणा सुपुत्र साम्प्रत श्रीरघुनाथमन्दिरस्याधिष्ठातृपदमधितिष्ठति । श्रीरघुनाथसंस्कृतपुस्तकालयस्य अनुसन्धानविभागस्य (श्रीरणवीरसंस्कृतरिसर्चइन्स्टीच्यूटस्य) च डायरेक्टरपदमलङ्करोति ।

(११) श्रीचन्द्रमौलिशास्त्री, अय जम्बूवास्तव्यो, रैणाजातीय, परमकुलीनो ब्राह्मण, स्वकुलमर्यादा महता प्रयत्नेन सरक्षन्नास्ते । भगवति महादेवेऽस्य परा भक्ति-र्विद्यते, तद्भक्तिविषयक भक्तिरसपरिपूर्णमेक काव्य सल्लिख्याऽय भगवतो महादेवस्य चरणयोरर्पितवान् । सम्प्रति वयस्कवृत्त्या जीवन् शिवमाराधयति ।

(१२) श्रीकृष्णदत्तशास्त्री। अय व्याख्यानकलाकुशल, शास्त्रप्रवचनप्रवीण, राजनीतिनिष्णात, श्रीरघुनाथमन्दिरस्य महाप्रबन्धक (मोहतमिम) पदमलमकार्षीत् । साम्प्रत लब्धवयस्कवृत्तिको धर्मोपदेशादिना लोकान्, आत्मान च पारलौकिक पन्थान प्रतिबोधयति ।

(१३) **श्रीदेवरत्नशास्त्री,** एम्० ए०, प्रभाकर । अयं विद्वत्प्रकाण्डस्य श्रीरघुशास्त्रिणस्तनुजन्मा, परमविनीत, सुशील, साम्प्रतं पुठुयापत्तने गवर्नमेण्टकालेजे संस्कृतप्रधानाध्यापकपदमारुह्य संस्कृतमध्यापयति । अयं तौर्यत्रिके (नृत्यगीतवाद्येष्वपि) परमप्रवीणो वर्तते ।

(१४) **श्रीबालकृष्णशास्त्री,** एम्० ए०, आचार्यजातीयस्य, गान्धर्ववेदविद, श्रीइन्द्रदत्तशर्मणस्तनूज, संस्कृत-हिन्दी-डोगरीभाषासु काव्यकलाकुशल, गुलाबचरित-नामकस्येतिहासपुस्तकस्य हिन्दीभाषायामनुवादक । अयं परमविनीत, सुशील, गुण ग्रहिलोऽध्यापनकलाकुशल सम्प्रति जम्ब्वा गान्धिनगरस्य आर्टकालेजे संस्कृतमध्यापयति ।

(१५) **श्रीभोलानाथशास्त्री,** भिषगाचार्यो वैद्यशिरोमणि, जम्बूकाश्मीरराज्ये आयुर्वेदविभागे डायरेक्टरपदमलङ्कृत्य सर्वमायुर्वेदसम्बन्धि कार्यजात सम्पादितवान्, दिगन्तव्यापिनी कीर्ति चाप्तवान् । सम्प्रति लब्धपुष्कलवयस्कवृत्तिका गदितश्चिकित्सति, दयनीयदीनान् स्नेहदृष्ट्या सभाजयति च । जम्बूवास्तव्योऽयं करामलकीकृताखिलवस्तु-तत्त्वाना ज्योतिर्विदा श्रीभक्तरामशर्मणा तनूजन्मा ।

(१६) **श्रीद्वारिकानाथशास्त्री,** भिषगाचार्य, अयं व्यवहारपटु, शास्त्रमार्गा-न्वेषणसलग्न, सकलरोगापाकरणकुशल, स्वस्थास्वस्थयारम्भयत्र लब्धप्रतिष्ठ, आयुर्वेद गवर्नमेण्टकालेजे ( जम्बूराजधान्याम् ) दर्शनाध्यापकपदमलङ्करोति पुष्कलं च वेतन लभते ।

(१७) **श्रीमदनमोहनशास्त्री** ज्यौतिषाचार्य, जम्बूवास्तव्य, पुछ-अलवरादि-देशाधिपतिभि सम्मानित, महाराजश्रीप्रतापसिंहाश्रितश्रीनन्दलालपुरोहितस्य तनु-जन्मा । ज्यौतिषशास्त्रे सिद्धहस्तस्यापि दर्शनव्याकरणसाहित्यादिशास्त्राण्यप्यस्य समीहा मनुसरन्ति, विद्वत्समाजे महती प्रतिष्ठाऽस्य वर्तते । साम्प्रतं ज्यौतिषशास्त्रचक्षुषाऽ तीताऽनागतवर्तमानकालिक शुभाशुभ कर्मफल सन्दर्शयन्, जनताजनार्दन सेवमान, ससुखं जीवति ।

(१८) **श्रीदुर्गादत्तशास्त्री** । अयं प्रौढ प्रवक्ता, पुराणवाचक, सनातनधर्माव-लम्बिना सदुपदेशादिना मनोविनोदक, हिन्दी-संस्कृत-डोगरीभाषामयी कविता निर्माय विद्वत्परिषदि लब्धप्रतिष्ठ, साम्प्रत श्रीरणवीरहाईस्कूल संस्कृतमध्यापयन् गान्धीनगरे कृतावसथ सुखेन वसति ।

(१९) **श्रीपरशुरामशास्त्री** अयं जम्बूप्रान्तीयशोभाञ्जन(सुहाञ्जना)ग्राम-वास्तव्य, सत्कुलप्रसूत महावैयाकरणो व्याकरणाचार्योपाधिमधिगत्य क्रमेण श्रीरघु-

नाथसंस्कृतमहाविद्यालयस्य प्रधानाचार्यपदमध्यतिष्ठत् । साम्प्रतं लब्धवयस्कवृत्तिको गान्धीनगरे स्वकारिते सद्मनि निवसन् लोकान् कर्मकाण्डविधिना सदुपदेशादिना चानुगृह्णाति ।

(२०) **श्रीकेदारनाथशास्त्री**, एम्० ए०, अनुसन्धाता (रिसर्चस्कालर.) अयं महान् लेखकः, सम्प्रति लब्धवयस्कवृत्तिको जम्बूनगरे निवसति । अस्य विशिष्टमितिवृत्तमन्यत्र प्रस्तुतं वर्तते ।

(२१) **श्रीरामस्वरूपशास्त्री** । पञ्चनदीये प्रेप्सुप्रान्ते निरीक्षक(इन्स्पेक्टर)-पदमारूढः ।

(२२) **श्रीसुखदेवशास्त्री** । सिलोन (लङ्काद्वीप)वास्तव्यस्तत्रत्यान् संस्कृतमध्यापयति, वैदिकधर्मं च शिक्षयति ।

(२३) **श्रीनिवासाचार्यो**, हिमाचलप्रदेशे 'नाहन' राज्ये राजपण्डितः ।

(२४) **श्रीविश्वनाथशास्त्री**, पञ्चनदीयगन्नापत्तनीयसरस्वतीकालेजस्य प्रधानाचार्यः । अयं लघुमध्यकौमुदीटीकाकर्त्ता निबन्धलेखकश्च ।

(२५) **श्रीनरेन्द्रशास्त्री**, एम्० ए०, इन्द्रप्रस्थस्थः ।

(२६) **श्रीरविशंकरशास्त्री**, एम्० ए०, दिल्ल्या यीसूमसीहकालेजे संस्कृतमध्यापयति । व्यञ्जनासम्बन्धिनिबन्धं संलिख्य डाक्टरपदवीं जिघृक्षति ।

(२७) **श्रीकृष्णकुमारवर्मा शास्त्री**, एम्० ए०, चण्डीगढराजधानीस्थे डी० ए० वी० कालेजे संस्कृतमध्यापयति । अयं टीकाकर्त्ता निबन्धलेखकश्चास्ति, अयं पञ्चनदीयः ।

(२८) **श्रीविश्वनाथशास्त्री**, ('खजूरिया') राजपुरोहितः, पुञ्छराज्यस्य राज्ञो गृहपण्डितः, सर्वशास्त्रमर्मज्ञोऽपि साहित्य-व्याकरणयोर्विशेषरुचिः, जम्बूनगरवास्तव्यः । साम्प्रतं श्रीरघुनाथपाठशालायां विशिष्टाध्यापकपदमलङ्करोति ।

(२९) **श्रीकाकारामशास्त्री**, छात्रसंसदि, विद्वद्गोष्ठ्यां च लब्धकीर्तिः, श्रीरघुनाथपाठशालीयविशिष्टाध्यापकेष्वन्यतमः, छम्बपत्तनसमुद्भूतोऽपि साम्प्रतं जम्बूनगरवास्तव्यः । इत्येवमादयः प्रभूततराः स्नातकाः श्रीरघुनाथसंस्कृतमहाविद्यालये समधीत्य महाराजश्रीरणवीरसिंहस्य कीर्तिकौमुदीं सर्वं भूमण्डलं प्रकाशयन्ति ।

(४)

## जम्बूकाश्मीरविश्वविद्यालयः

पञ्चाशदुत्तरनवशताधिकैकसहस्रतमे ( १९५० ) ख्रिष्टाब्दे जम्बू-काश्मीर-विश्वविद्यालयस्य संस्थापनं समभूत्। ततः प्रभृति विद्यालयोऽयमपि तस्मिन् घनिष्ठ-सम्बन्धेनाऽऽबद्धः। तदारभ्य तन्नियतपाठ्यक्रमानुसारमेव प्राज्ञविशारदशास्त्रिपरीक्षाणां पाठ्यपुस्तकान्यस्मिन् विद्यालयेऽध्याप्यन्ते। प्रतिवर्षं शास्त्रिपरीक्षां समुत्तीर्णाश्छात्रा यत्र तत्राङ्गलविद्यालयेषु संस्कृताऽध्यापकपदमधितिष्ठन्ति। केचन केवलमाङ्गलभाषां समधीत्य संस्कृते एम्०ए० परीक्षां समुत्तीर्णा यत्र तत्रोच्चविद्यालयेषु संस्कृताध्यापक-पदमलङ्कुर्वन्ति। प्राज्ञविशारदवर्गसमुत्तीर्णाश्छात्रास्ततोऽग्रिमश्रेणीषु प्रवेश्यन्ते। प्राज्ञ-वर्गतः पूर्वम् प्रथमा, द्वितीया, तृतीया, तुरीया इति श्रेणिचतुष्टयं पृथग् वर्तते। सर्वा-सामपि श्रेणीनां त्रैमासिकषाण्मासिकवार्षिकपरीक्षाः पाठशालाध्यापकैर्वर्षाभ्यन्तरे स्वयं सम्पाद्यन्ते। प्रतिवर्षं विश्वविद्यालयीयपरीक्षादिरमुच्छात्राणां योग्यतापरीक्षापि सम्पाद्यते। प्राज्ञविशारदशास्त्रिपरीक्षासु जम्बूकाश्मीरविश्वविद्यालयसमितिनियतपाठ्य-क्रमानुसारं पाठ्यपुस्तकानि समध्याप्यन्ते। तत्र प्रथमश्रेण्यामक्षरारम्भः, प्रथमं हिन्दीपुस्तकम्, किञ्चित् स्तोत्रम्, अमरकोशस्य कश्चिद् भागः, वर्णविन्यासप्रकारः, अङ्कोच्चारणप्रकारः (पहाडे)। द्वितीयश्रेण्यां हिन्दीभाषावबोधकानि कानिचिल्लघुपुस्तकानि, अमरकोशस्य काण्डद्वयम्, प्रारम्भिकगणितपुस्तकम्, किञ्चित्संस्कृतभाषाज्ञानसम्पादकं संस्कृतलघुपुस्तकम्। तृतीयश्रेण्यां किञ्चिद् व्याकरणम्, संस्कृतपुस्तकम्, संस्कृतानुवादः, गणितम्, भूगोलः, आङ्गलभाषायाः किञ्चिज्ज्ञानम्, हिन्दीबोधपुस्तकम्, वेदसन्ध्या च। चतुर्थश्रेण्यां व्याकरणं विशेषः, संस्कृतपुस्तकम्, संस्कृतानुवादः, होडाचक्रम्, गणितम्, भूगोलः, हिन्दीभाषा, इङ्गलिशभाषा चाध्याप्यन्ते। प्रथमप्राज्ञद्वितीयप्राज्ञप्रथम-विशारदद्वितीयविशारदप्रथमशास्त्रिद्वितीयशास्त्रिकक्षासु जम्बूकाश्मीरविश्वविद्यालयीय-पाठ्यक्रमानुसारमेवात्र पाठ्यपुस्तकानि पाठ्यन्ते।

जम्बूकाश्मीरविश्वविद्यालये प्रथमश्रेण्यां समुत्तीर्णाः प्राज्ञकक्षीयाः, विशारद-कक्षीयाश्च छात्रा जम्बूकाश्मीरविश्वविद्यालयाद् दशरूप्यकाणि प्रतिमासं छात्रवृत्तिं लभन्ते।

अद्यावधि पञ्चषाः श्रीरघुनाथसंस्कृतमहाविद्यालयीया अपि छात्राश्छात्रवृत्तिं लब्ध्वा स्वस्वाध्यापकानां प्रयत्नसाफल्यं परं प्रोत्साहं च विदधानाः श्रीरघुनाथसंस्कृत-महाविद्यालयस्य वैशिष्ट्यं प्राचीकटन्।

## जम्बू-काश्मीर-विश्वविद्यालयीयस्नातकोत्तर-
## संस्कृत (एम्० ए०) श्रेणीविभागस्य
### मुख्याध्यक्षादिपरिचयः

अस्य स्नातकोत्तरसंस्कृतविभागस्य संस्थापनं काश्मीरेषु द्विषष्ट्युत्तरैकोनविंशतिशततमे (१९६२) ख्रिष्टाब्दे समभूत्।

तदानीं डाक्टरश्रीराधाकृष्ण कावो भारतीयाऽनुसन्धानकार्यालयाद् आगत्य अनियतसमयावधि मुख्याध्यक्षपदमधिष्ठाय शम्भुनाथ एम्० ए० इत्यस्य साहाय्येनास्य स्नातकोत्तरविभागस्य सर्वमध्ययनाध्यापनसम्बन्धि कार्यं समचीचलत्।

ततः पञ्चमासानन्तरं विश्वविद्यालयस्य कुलपतेर्महाराजश्रीकर्णसिंहस्याऽऽदेशेनाय स्नातकोत्तरसंस्कृतविभागो जम्बूराजधान्या 'गान्धीमेमोरियलसाइन्सकालिज'-मध्यतिष्ठत्। ततो डाक्टरश्रीराधाकृष्णकाव, स्वानियतसमयं परिसमाप्य होश्यारपुरे वैदिकशोधसंस्थानस्य स्नातकोत्तरविभागेऽध्यापकोऽभवत्। ततः डाक्टरवेदकुमारी (घई)एम्०ए०, स्ववैदुष्यप्रभावेणाऽस्मिन् स्नातकोत्तरविभागे मुख्याध्यक्षपदमलमकार्षीत्।

गुणग्रहिलेयं विदुषी स्वाधिकारिष्वध्यापकाऽऽवश्यकतां सन्दर्श्य, डाक्टरराधाकृष्णकाव समानाय्य पुनरेनमत्रान्यतमाध्यापकपदमध्यतिष्ठिपत्।

साम्प्रतमत्र डाक्टरश्रीवेदकुमारी (घई) एम० ए०, डाक्टर श्रीराधाकृष्णकाव एम्० ए०, श्रीशम्भुनाथशास्त्री एम्० ए० इत्येते त्रयोऽध्यापकाः सन्ति। अधिकास्तु समपेक्ष्यन्ते, मन्ये तेऽपि नियोक्ष्यन्ते।

साम्प्रतमस्मिन् विभागे प्रथमवर्षीया दश (१०) छात्रा विद्यन्ते द्वितीयवर्षीयाश्च त्रयोदश (१३)। वह्निरसविहगविधुमिते (१९६३) ख्रिष्टाब्दे प्रथमवर्षीयाश्चतुर्दश छात्रा परीक्षायां प्रविष्टाः। चतुर्दशैव समुत्तीर्णाः। तेषु च पञ्च प्रथमश्रेण्यां समुत्तीर्णाः।

### अध्याप्यविषयाः

वेदः, साहित्यम्, भाषाविज्ञानम्, साहित्येतिहासः, धर्मशास्त्रम्, अर्थशास्त्रञ्च।

(डाक्टरवेदकुमारी(घई) एम्० ए०, डाक्टरराधाकृष्ण एम्० ए०, शम्भुनाथ एम्० ए०, एषां त्रयाणामपि जीवनचरितमन्यत्र प्रस्तुतं वर्तते। तेषु श्रीराधाकृष्णस्य राष्ट्रीयेषु विद्वत्सु श्रीवेदकुमारीशम्भुनाथयोश्च दौर्गेषु द्रष्टव्यम्।)

## (५)

## श्रीरणवीरसंस्कृतानुसन्धानविभागीयपुस्तकालयः

## श्रीरघुनाथमन्दिरे, जम्मूराजधान्याम्

## कार्यारम्भेतिहासः

अस्मिन् जम्मूकाश्मीरराज्ये दुर्गर(डोगरा)शासकैरेव सर्वप्रथमं प्राचीन-पुस्तकानां पाण्डुलिपीनां च अत्यधिकं सांस्कृतिकं महत्त्वमज्ञायि। ते केवलं तेषामनुसन्धाने, संरक्षणे चैव कृतप्रयत्ना नासन्, अपितु तेषामध्ययने प्रकाशनेऽपि तैर्गतिः कृता। विद्वज्जगद् अतिकृतज्ञतामावहति तेषां कृते यत्तैर्देशस्य साहित्यिको निधिर्लोपात् संरक्षितः, काश्मीरपाठशोधाध्ययनमालायां ग्रन्थाश्च सततं प्रत्ताः।

महाराजश्रीरणवीरसिंहस्य शासने प्रथमेऽब्दे (सप्तदशोत्तराष्टादशशततमे ख्रिष्टाब्दे) राज्ये सर्वप्रथमं संस्कृतग्रन्थानां पुस्तकालयः प्रतिष्ठापितोऽभूत्। अयं पुस्तकालयं स्वल्परूपेणैवारब्धः। अस्मै पुस्तकालयाय पाण्डुलिपीनां संग्रहो राज्ये, बहिश्च, विशेषतो वाराणस्यां विहितः। प्रारम्भे महाराजेन आशानन्दो नाम पण्डितोऽस्मै कार्याय वाराणस्यां नियुक्तो यत्र तेन पाण्डुलिपीनां प्राप्त्यै पञ्चदशसहस्ररूप्यकाणि व्ययीकृतानि। कालेन स्थानीयक्रमेणापि पाण्डुलिपीनां संग्रहे अभिवृद्धेरवसरा प्राप्ता अभूवन्। काश्मीरदेशीयैः संस्कृतपण्डितैः संरक्षितः संस्कृतसाहित्यस्य महान् कोषो महाराजस्य ध्यानं चकर्ष। एकषष्ट्यधिकाष्टादशशततमे ख्रिष्टाब्दे सर्वासां काश्मीरदेशीयकृतीनां प्राप्त्यै महान्त आरम्भाः समारब्धाः। अस्य पुस्तकालयस्य गतिविधयो वैदुष्यस्य अन्येषु क्षेत्रेषु अपि विस्तृता अभवन्, येनेदं सर्वसम्पूर्णं शोधसंस्थानं जातम्, महत् कोषगृहं च, यस्मिन् पाण्डुलिपीनाममूल्यः संग्रहोऽभवत्। अनेन 'डा० ग्रियर्सन डा० स्टीन' इत्यादीनां विदुषां ध्यानमाकृष्टम्। एतत्संस्थानं द्वयुत्तरैकोनविंशतिशततमेऽब्दे (१९०२ ई०) 'काश्मीर-अनुसन्धानविभाग.' इत्यस्मिन् रूपे परिवर्तितम्।

पाण्डुलिपीनां नियमिता प्राप्तिः, विषयानुसारं च तासां निर्देशः १९०२ ख्रिष्टाब्दे निष्पन्नौ। विभागेन ज्ञातं यत्-लब्धाक्षे (लद्दाखप्रदेशे) बौद्धमठानां पुस्तकालयेषु, केषाञ्चिच्च मनुष्याणां पार्श्वे संस्कृते, त्रिम्बित(तिब्बत)भाषायामन्यासु च भाषासु पाण्डुलिप्यः सन्ति इति। ता अपि तेन गृहीताः। १९०४ ख्रिष्टाब्दे विभागस्य विवरणे 'लवपुर-संग्रह.' (लाहौर-संग्रह) इति नाम्नः पाण्डुलिपिसंग्रहस्य उल्लेखः कृतोऽस्ति यो महामहिम्ने महाराजाय आनीत आसीत्। महाराजेन च सोऽध्ययनानु-

सन्धानाभ्या विभागाय समर्पित । तस्मिन्नेव वर्षे 'तारीख-ए-हसन' (फारसीभाषाया 'काश्मीरस्येतिहास') इत्यस्या पाण्डुलिपे सग्रहोऽप्युल्लेखनीयो वर्तते । १६३१ ख्रिष्टाब्दे काश्मीरराज्ये गिलगितप्रदेशात् बौद्धपाण्डुलिपीना महान् सग्रह प्रकाश यात । ता लिपय श्रीनगरमानीता पाण्डुलिपिपुस्तकालये च सुरक्षिता । कालान्तरे च ता श्रीएस्० एन० शर्मण साहाय्येन श्रीएन्० एन्० दत्तमहाभागेन पञ्चसु भागेषु १६३१, १६४१, १६४२, १६४३, १६४७ ख्रिष्टाब्देषु प्रकाशिता । इमा पाण्डु-लिपय ख्रिष्टस्य पञ्चम्या षष्ठ्या वा शताब्द्या लिखिता—इति विश्वस्यते । किंच—एता अद्यावधि उपलब्धासु कासुचित् प्राचीनतमासु पाण्डुलिपिषु अन्यतमा सन्ति ।

१८७५ ख्रिष्टाब्दे डा० जी० बुह्लरमहोदयो भारतसर्वकारेण पाण्डुलिपीना-मन्वेषणार्थ काश्मीरप्रदेशे, राजस्थाने, मध्यभारते च भ्रमणाय आज्ञप्त । तेन स्वयात्रा-विवरण उल्लिखित यन्मया काश्मीरप्रदेशे स्वीयान् पुस्तकालयान् धारयद्भ्य पण्डिते-भ्योऽनेका पाण्डुलिपय प्राप्ता । डा० बुह्लरमहोदय काश्मीरप्रदेशात् लब्धा पाण्डुलिपी-श्चतुर्षु भागेषु विभजति १—भूर्जपाण्डुलिपय, २—कर्गदे शारदापाण्डुलिपय, ३—कर्गदे देवनागरीपाण्डुलिपय काश्मीरप्रदेशे लिखिता, ४—कर्गदे देवनागरीपाण्डुलिपयश्च भारतस्यान्यप्रान्तेभ्य प्राप्ता । काश्मीरे प्राचीनादेव कालात् वर्षशतत्रयपूर्वमकबरकृत-प्रदेशविजयावधि सर्वा पाण्डुलिपयो भूर्जपत्रेषु एव लिखिता अभूवन् । अकबरसम्राजा कर्गदनिर्माण समारब्धम् । तत प्रभृति भूर्जपत्राणा लखनार्थं प्रयोग परित्यक्त समाप्तश्च । वस्तुता वर्षशतद्वयादर्वाचीना भूर्जपाण्डुलिपय एव न सन्ति । काश्चित्तु चतुर्दशतवर्षेभ्य प्राचीना । डा० बुह्लरमहोदयाय एकस्या पाण्डुलिप्या विषये कथितमासीद् यत्-सा काश्मीरान्नेदीयसो दलसागरात् (डल झील) निष्कासिता यत्र सा कस्यचिन्महामदाक्रमणस्य समये निक्षिप्ताऽऽसीत् । इयमनेकेभ्यो वर्षेभ्यो जले पतिताऽभविष्यत् । बुह्लरेण तेनैकस्यान्यस्य ग्रन्थस्य विषयेऽपि तदेव श्रुत येनासौ स लुप्त इति व्यश्वसीत् । पर स एकेन पण्डितेन स्वगृहस्य आवरण प्राप्ताया पाण्डुलिप्या-मुपलब्ध, यस्तत्र वर्षोदबिन्दूना वारणाय न्यस्ता आसीत् ।

१८८८तमे ख्रिष्टाब्दे डा० एम्० ए० स्टीनमहोदयो भारते आगमनानन्तर प्राध्यापकबुह्लरमहाभागेन प्ररित सन् सस्कृतपुस्तकालयस्य निरीक्षणार्थ दुर्गरराज-धानी जम्बूनगर गत । स च रघुनाथमन्दिर नीतो यत्र स्वर्गीयेण महाराजश्रीरणवीर-सिंहेन सगृहीता पाण्डुलिपय सरक्षिता आसन् । अनेन द्रुतनिरीक्षणेनैव स जम्बू-सग्रहस्य विस्तरेण महत्त्वेन च प्रभावितोऽभूत् । ततश्च शीघ्रमेवासौ पुस्तकालयसामग्र्या

सर्वजनसामान्यस्यानुसन्धानकार्ये सौलभ्यकरणाय योजनामेका प्रास्तौत् । यथा स पुस्तकालयस्थाना सस्कृतपाण्डुलिपीना सूचीनिर्माणार्थम् उक्तवान् । एतदर्थं तस्मै द्वौ सहायकावपि प्रदत्तौ । इय सूची सुचारुरूपेण निर्मिता १८९४ ख्रिष्टाब्दे प्रकाशिताऽभूत् । अस्यामाधुनिकीना पट्त्रिंशज्जैनप्राकृतपाण्डुलिपीना दर्शनशास्त्रसम्बद्धाना तेलगुप्रतिलिपीना च लघुसग्रह सम्मिलितो नास्ति । सूच्या भूमिकाया डा० स्टीनमहोदयो लिखति यद्—"अस्मिन् पुस्तकालये महान् योगोऽलवरनरेशस्य महाराजश्रीसवाईमगलसिंहस्य १८८३ ख्रिष्टाब्दे जम्बूराजययानाकालेऽभवत् । महाराजो मगलसिंहो जम्बूकाश्मीरपते पाण्डुलिपीना सग्रहे रुचि विज्ञाय अलवरप्रासादपुस्तकालयस्थाना दुर्लभग्रन्थाना प्रतीरार्पयत् । इमा प्रतय श्रीरघुनाथमन्दिरे सस्थापिता सन्ति" इति ।

अष्टपष्ट्युत्तरशतत्रयपाण्डुलिपीनामेकोऽन्य सग्रहो मुख्यरूपेण सस्कृतभाषायाम्, डा० एम्० ए० स्टीनमहोदयेन १८८८ वर्षादारभ्य १९०५ ख्रिष्टाब्दपर्यन्त स्वकाश्मीरयात्रासमये अधिकतर श्रीनगरात् स्वधनव्ययेन प्राप्त । स तेन स्वजीवनकाले एव 'इण्डियासस्थान-आक्सफोर्ड' इत्यस्याध्यक्षाय दत्त । अस्य सग्रहस्य सूची गेराड एल्० एम्० क्लाजनमहोदयेन निर्मिता प्राध्यापकस्य ए० ए० मैक्डानलमहाभागस्य च भूमिकया सह प्रकाशिता विद्यते ।

महाराजश्रीरणवीरसिंहस्य शासनकाले पुस्तकालयविभागेन प्राचीनज्ञानस्य पुनरुद्धाराय अनेकधा प्रयतितम् । जम्बूपुस्तकालयस्थाना पाण्डुलिपीना नामसूच्या भूमिकाया डा० स्टीनमहाभागेन लिख्यते यद्—'अत्र मौलिकग्रन्थेभ्योऽतिरिक्ता अधिसख्याकाष्टीका, सस्कृतसाहित्यस्य विभिन्नाना शाखाना सग्रहा, प्रामाणिकग्रन्थाना हिन्द्यामनुवादाश्च कृता आसन् । केचित् तेषु मुद्रितानामितिहासदर्शनादिविषयकाणाम्, अरबीफारसीभाषयोर्ग्रन्थाना सस्कृतेऽनुवादा कृता आसन् । डा० ग्रियर्सनमहोदयेन लिखित यद्—"अस्मिन् विभागे विभिन्नभाषास्थाना ग्रन्थाना सस्कृते भाषाया च अनुवादो भवति ।" इमे १९०२ वर्षात्पूर्वं साहित्यिकप्रवृत्तीना प्रारम्भा आसन् ।

श्रीरघुनाथमन्दिरपुस्तकालयस्थाना पाण्डुलिपीना डा० स्टीनमहोदयन कृताया सूच्या प्रकाशनानन्तर १९०२ ख्रिष्टाब्दे राज्यस्य काश्मीरशोधविभाग सचालितोऽभूत् । सस्कृतस्य विद्वान् श्री जे० सी० चैटर्जी महोदय प्रथम सेवाधिकारी नियुक्त, यो विभागे उत्तरदायी आसीत् । तत्र डा० बुह्लरमहोदयस्य सस्कृतपाण्डुलिपीनामन्वेषणयात्राविवरणाज्ज्ञात यद्–विदुषा अन्वेषकेण काश्मीरप्रदेशे तद्देशीयं पण्डितं

**'शैवशास्त्रम्'** इति सामान्ये नाम्नि रचितास्ता कृतय समुपलब्धा, या काश्मीरस्य विशिष्टे शैवदर्शने आधृता सन्ति। तेनानेका पाण्डुलिपय सगृहीता, तासा च शैवदर्शनसम्बद्धा केचिद् भागा काश्मीरस्य शैवमतद्वयानुसार विभक्ता। एक मत **वसुगुप्तस्य 'स्पन्द'**शास्त्रानुसारि, अपर च सोमानन्दोत्पलदेवयो प्रत्यभिज्ञाशास्त्रानुसारि। वाङ्मयस्य अस्या विशिष्टाया शाखाया अध्ययनानुसन्धाने प्रति सर्वप्रथम **चैटर्जी**-महोदयेनैवावधान दत्तम्। विभागस्य प्रथमे विवरणे तेन १९०४ ख्रिष्टाब्दे एव शैवदर्शनस्य वैज्ञानिके पक्षे ध्यानमार्कापितम्—"इदमत्यधिक रुचिपूर्ण मतमस्ति, यतोऽस्मिन् कतिपयानामाधुनिकतमाना वैज्ञानिकसिद्धान्ताना पूर्वाक्षेप कृत, विशेषतो द्रव्यस्य मौलिकरचनासिद्धान्तस्य, यद्विषये शैवमतम् 'ऊर्जाया रूपमात्रम्' इत्येव मन्यते' इति। पुनश्च तेन सूचित यत्—"काश्मीरप्रदेशेऽत्यधिक शैवदर्शनसम्बद्ध वाङ्मय वर्तते, यस्य विषये अन्यदेशीया अपरिचिता सन्ति। इद मतमतीव रुचिकरम्। अस्य पाण्डुलिपय सर्वजनसुलभा कर्तव्या" इति। एतदनुसारमेव शैववाङ्मयस्य ग्रन्थाना सम्पादन प्रकाशन च **चैटर्जीमहोदयस्यैव** सरक्षकत्वे १९०४ ख्रिष्टाब्दे समारब्ध। तदनन्तर च क्रमश पण्डितमुकुन्दराम-पण्डितमधुसूदनकौलादीना विभागाधिकारिणा निदेशानुसार कार्यं सम्पाद्यमानमस्ति।

## जम्बूनगरस्थस्य श्रीरणवीरसस्कृतानुसन्धानविभागीयमहापुस्तकालयस्य परिचय

१. **पूर्वसंस्थापना**—द्विगर्त (डुगर) केसरी महाराजो **गुलाबसिंह** परमास्तिको, बुद्धिमान्, नीतिज्ञो, वीरशासकश्चासीत्। तेन हि शतशो विभक्तानि द्विगर्तीयलघुराज्यानि सघट्य (सघटय्य) सर्वोऽपि द्विगर्तदेशोऽयमेकराज्यसूत्रे सग्रथित। निजबाहुबलेन यत्र तत्र सस्थितान् क्रूरशासकान् पराभूय अस्य देशस्य सीमा काबुल-चीन-प्रभृतिभिर्देशै सह सम्मेलिता। तैश्च स्वच्छन्दशासकै प्रपीडिता सशोषिताश्च प्रजाजना निर्भया पुनश्च समृद्धा सविहिता।

तस्यैव राजर्षे सुपुत्रो **रणवीरसिंह** १८५७ ख्रिष्टाब्दे पितुर्निदेशेन तद्राज्यभार सजग्राह। अनन्तर चासौ प्रजाजनानामाध्यात्मिक-साहित्यिक-राजनैतिकार्थिक-समुन्नत्यै, परस्पर बन्धुत्वमस्थापनार्थं, सुख-शान्तिप्रसारार्थं च प्रायतत। यतो हि स स्वराज्ये रामराज्यादर्श सस्थापयितु समीहते स्म। एताभिरेव धार्मिकप्रवृत्तिभि प्रेरितोऽसौ राज्याभिषेकात् स्वल्पेषु एव दिनेषु (अग्रिमवर्षारम्भ एव १८५८ ख्रिष्टाब्दे) जम्बूनगरे श्रीरघुनाथमन्दिरस्य सस्थापनामकरोत्। तेन हि अस्मिन् मन्दिरे भगवत

श्रीरामचन्द्रस्य प्राधान्ये आर्यमतानुसारमुपाधिभेदेन एकस्यैव परमेश्वरस्य अन्यान्यरूपाणा विभिन्नदेवाना सुमनोहरा प्रतिमा सस्थापिता । धर्मप्रचारस्तु विद्यया एव सम्भवति । तदर्थं तु धर्मानुरागिणा विद्याप्रियाणा च कृते मन्दिराभ्यन्तर एव सस्कृत-विद्यालयस्य सस्कृत-महापुस्तकालयस्य च सस्थापना विहिता ।

२ विस्तार-योजना—श्रीरघुनाथमन्दिर, सस्कृतमहाविद्यालय, सस्कृतमहापुस्तकालयश्च एते त्रयोऽपि महाराजश्रीरणवीरसिंहस्य धार्मिकभावनाया वशानुगत-भारतीयविद्यानुरागितायाश्च प्रतीकभूता सन्ति । स्वल्पेनैव कालेन मन्दिरस्थापनमिद न केवल द्विगर्तदेशस्य, अपितु समस्तभारतस्य कृते महातीर्थभूत सजातम् ।

महाराजश्रीरणवीरसिंहस्य शुभादेशेन विभिन्नस्थानेभ्यो मुद्रितानि अमुद्रितानि च पुस्तकानि सग्रहीतु महान् प्रयत्न समारब्ध । प्रचुरधनव्ययेन पुस्तकानि समानेतु बहवो विद्वास प्रोत्साहिता विभिन्नदेशेषु च प्रेषिता । पुस्तक-सग्रहकार्ये प्रमुखा विद्वास —१–जम्बूवासी पण्डितगोकुलचन्द्र, २–जयपुरवासी पण्डितदुर्गादत्तमहामहोपाध्यायस्य जनको व्रजलालपण्डित, ३–वङ्गवासी पण्डितरसमोहनभट्टाचार्य, ४–जम्बूवासी पण्डितदिलारामवैद्य, ५–ज्योतिर्वित् पण्डितभास्कराचार्यश्च एते सर्वे नियुक्ता आसन् । अन्येऽपि बहव पण्डिता कार्यमिद सपादयितु सप्रवृत्ता, येषु आशानन्दपण्डितो वाराणस्या बहूनि अमुद्रितानि कानिचिन्मुद्रितानि च पुस्तकानि प्रचुरार्थप्रदानेन सगृह्य महाराजाज्ञया पुस्तकालये समस्थापयत् इत्युक्तमेव पूर्वम् ।

३ सग्रहकार्यम्—डा० एम्० ए० 'स्टाईन' महोदयेन स्पष्टमेतत्प्रतिपादित यत्—'एडवर्डहाल'महोदयेन यानि ९९ पुस्तकानि पण्डितवैद्यनाथपाठकस्य पुस्तकालये सदृष्टानि अधीतानि च तेषु अपि ९४ पुस्तकानि जम्बूराज्याधिकारिभि नीत्वा जम्बूस्थ-सस्कृतमहापुस्तकालये समावेशितानि । सस्कृतपुस्तकाना विषये अनुसन्धानादि-कर्मसम्पादनाय बहवो विद्वासो देशान्तरेभ्योऽपि समाकारिता । तेषु कतिपयास्तु अस्थायिरूपेण कार्यमकुर्वन् । केचन महाराजानुरोधेन वेतनग्राहिणा भूत्वा कार्यं सम्पादयामासु ।

महाराजश्रीरणवीरसिंहस्याश्रित पटियालानिवासी व्यासपण्डितो यदा १८६६ ख्रिष्टाब्दे सुरपुर प्रययौ, तदा तत्सगृहीतानि पुस्तकानि पुष्कलधनव्ययेन तत्पत्न्या सकाशात् समादायाधिकारिभिरस्मिन् पुस्तकालये सस्थापितानि । पुरमण्डलवासी पण्डितगोपालराम, जम्बूवासी पण्डितरामकृष्णश्चापि प्रचुरधनमादाय स्वानि पुस्तकानि पुस्तकालयेऽदाताम् । अन्यस्थानेभ्योऽपि ये केचन विद्वास पुस्तकालय मद्रष्टु यान्ति

स्म, तानपि महाराजश्रीरणवीरसिंह पुस्तकान्यादातु सोत्साह विनिर्दिश्य प्रभूतमर्थसाहाय्य च प्रदाय स्व विद्यानुराग सप्रदर्शयति स्म । 'स्टाईन-कैटेलाग'—नाम्न बृहत्सूचीपत्रस्य सदर्शनेन ज्ञायते यत्–३११६० सख्याङ्कित **'शालिहोत्रम्'** (अश्वचिकित्सा), ३२१५-१८ सख्याङ्कित **'हस्त्यायुर्वेद'**, ६३० सख्याङ्कित **'तर्ककुतूहलम्'** च एतानि सस्कृतपुस्तकानि पण्डितगोपालदक्षिणनागरो जयपुरात् समानीतवान् । कूर्माचलवासी पण्डितदुर्गादत्त **'सिद्धान्तसुधानिधि'** प्रभृतिग्रन्थान् जयपुरात् समानयत् ।

४ **श्रीनगरे (काश्मीरे) लिपिकार्यम्**—ये केचन पुस्तकस्वामिन पुस्तकविक्रय नाकुर्वन्, तेभ्यो लेखकैस्तत्तत्पुस्तकाना प्रतिलिपि कारयित्वा अधिकारिभिस्तत्र पुस्तकसख्या सर्वधिता । श्रीनगर (काश्मीर) तु सस्कृत-साहित्यस्य जन्मभूमिरेवास्ति । वैदेशिकैरनेकधा विध्वस्तेऽपि सस्कृत-साहित्ये अनन्ता प्राचीनावशेषा अधुनाऽप्यवशिष्टा सन्ति । एतत् सर्व सुविचार्यैव महाराजश्रीरणवीरसिंहेन श्रीनगरेऽपि पुस्तकसग्रहकार्य समारब्धम् । पण्डित**वीरबलभद्रस्य** सुत पण्डितराजकाकस्तदा अस्मिन् कार्ये महत् साहाय्यमकरोत् । तेन एतादृशानि पुस्तकानि सगृहीतानि, यानि अन्यत्र दुष्प्रापाणि एव आसन् । बहूना शारदालिपिग्रन्थाना देवनागरीभाषायामनुवाद पण्डितराजकाकस्य प्राधान्येऽभूत् । तेऽनुवादकाश्च पण्डितबलभद्रकाक, पण्डितसाहिबराम, पण्डितकृष्णप्रभृतयश्चासन् । शारदालिपिग्रन्थेषु २० पुस्तकानि भूर्जपत्रेषु सुलिखितानि आसन्, यानि दर्शनार्हाणि मत्वा तथैव (शारदालिप्यामेव) सगृहीतानि । एतादृशे विशालपुस्तकालये तेषा यथानुरूप सस्थापनमपि शोभास्पदमेवास्ति । पण्डितराजकाकस्य स्वर्गारोहणानन्तर तु तत्सग्रहकार्य जम्बूवासिना पण्डितजगद्धरमहोदयेन स्वहस्ते कृतम् । तस्य सहायकाश्चान्येऽपि त्रय पण्डितसुखाराम, पण्डितआशानन्द, पण्डितदयारामश्च एते विद्वास आसन् । एतेषा साहाय्येन तेन महतामपि सुदुर्लभाना ग्रन्थाना भाषान्तरानुवादो विहित ।

५ **काश्यामन्वेषणकार्यम्**—पुस्तकसग्रहार्थमेव पुन पण्डितवर्गस्याग्रहेण महाराजमहोदयेन केचन पण्डिता योग्या विद्यार्थिनश्च वाराणस्या सप्रेषिता । तैस्तत्र सुप्रयत्नेन विभिन्नस्थानेभ्य पुस्तकसग्रह कृत । बहूना प्राचीनग्रन्थाना प्रतिलिपयोऽपि सप्राप्ता । तदा सर्वेषामेव एतेषा पुस्तकाना सग्रहोऽस्मिन् पुस्तकालये पृथक् पृथक् बन्धेषु बद्ध्वा सुरक्षितोऽवस्थापित । सग्रहेऽस्मिन् कतिपया मुद्रितग्रन्था अपि आसन् ये विभिन्नदातृभि सप्रदत्ता ।

६. **अलवरराज्ये सग्रहकार्यम्**—यदा १८८३ खिस्ताब्दे अलवरनरेश सवाई-

मंगलसिंहमहोदयो जम्बूराजधान्यां समागतस्तदा तेन महाराजश्रीरणवीरसिंहस्य पुस्तक-संग्रह-कार्यमालोच्य संपृष्टं यत् 'केन हेतुना प्रचुरधनव्ययं पुस्तकसंग्रहार्थं क्रियते ?' इति ।

महाराजश्रीरणवीरसिंहेन तदुक्तं श्रुत्वा सत्वरं प्रत्युत्तरं संश्रावितं यद्—'अहं वेश्यानर्तन-द्यूत-सुरापानादिदुर्व्यसनेषु अन्येषु च वृथाकलङ्कभूतेषु कुकार्येषु धनापव्यय-करणापेक्षया विद्यादि-प्रचारकार्येषु धनव्ययकरणं श्रेयस्करं मन्ये । एतेन हि जनवर्गस्य सुप्रवृत्तयो विधीयन्ते । समुन्नत-जीवनस्य च संविकासो जायते' इति । महाराजरणवीर-सिंहस्य तथ्यवचनैः सद्य एव अलवरनरेशस्य हृदये संस्थानं कृतम् । जम्बूनरेशस्य पुण्यैर्भावैः सम्प्रेरितेन च तेन स्वराजधान्यां गत्वा, पण्डित-संघमाहूय, स्वपुस्तकालयस्थानां बहूनां ग्रन्थानां प्रतिलिपयः कारिताः । अनन्तरञ्चासौ तं महान्तं पुस्तकसंग्रहं सहर्षं जम्बूनरेशाय समर्पितवान् । ते सर्वेऽपि सद्ग्रन्था अत्र पुस्तकालये सुरक्षिताः सन्ति । प्रायः सर्वेषामेव तत्पुस्तकानामन्तिमपत्रेषु सुस्पष्टं लिखितमस्ति यत्—'अलवरनरेश. सप्रमोदमेतत्पुस्तकोपहारं जम्बूनरेशाय समर्पयतीति ।' क्वचित्तु नरेश-प्रशंसा-श्लोकोऽपि संलिखितः समालोक्यते । तद्यथैकोऽत्र समुद्ध्रियते—

अलवरविषयेशो मङ्गलाद्याभिधानो
मृगरिपुसमसारं प्रेषयामास तुष्ट्यै ।
नृपवररणवीरस्याग्र्यवीर्यस्य भद्रं
जनयितुमिममर्घ्यं पुस्तकौघं महान्तम् ॥

अन्योऽप्येकः श्लोकः—

श्रील श्रीमङ्गलादिप्रलसदलवरेशस्तदाज्ञानुवर्ती
जोशी गङ्गाधराख्यः प्रथितगुणगणः शास्त्रशालाधिनाथः ।
तत्पुत्रः पुस्तकौघं विविधबुधवरैः शोधयित्वा श्रमेण
श्रीमत्सु प्रेषयेऽहं कृतबहुयतनो रामगोपालशर्मा ॥
(सं० १९४१, व्रतराजार्कग्रन्थस्य ४०९१ अङ्काङ्कितस्य ४८५ पत्रे)

७ जम्बू-काश्मीरराज्ये नयसंपादनकार्यम्—महाराजरणवीरसिंहेन शताधिकाः पण्डिता वैतनिकाः संनियुक्ता आसन् । तैश्च येषां संस्कृतग्रन्थानां संग्रहः कृतः, येषां च नवीनानां संपादनं कृतम्, ते सर्वेऽपि सद्ग्रन्था सदा सर्वोपयोगिनो विद्यन्ते । महाराजेन संस्कृतातिरिक्तानाम्, उर्दू-फारसी-अरबीप्रभृतिग्रन्थानामपि अनुवाद

कारित । तदर्थं च प्राज्ञा आलिम-फाजिल-मौलवीविद्वास सम्प्रेरिता । यतो हि जम्बू-नरेशो निजराज्येऽवस्थिता हिन्दू-मुस्लिमप्रजा स्वे द्वे चक्षुषी इव स्वीकरोति स्म । सभावनया विभिन्नभाषाणा ३८ सख्याया ते ग्रन्था सन्ति, येषा भाषान्तरानुवादो विहित । एवमेव नवसपादनमपि सजातम् । **नव्यचण्डीदासकविना 'रघुनाथगुणोदय.', 'धर्मसक्षिप्ताह्निककर्म'** चेति ग्रन्थद्वय विलिखितम् । पण्डितसाहिबरामेण **'नीतिकल्पलता'** विरचिता । पण्डितशिवशङ्करेण **'रणवीरव्रतरत्नाकर'** सपादित । पण्डितवासुदेवेन **'चित्तप्रदीपो'** विलिखित । गणेशशास्त्रिणा **'विषहरतन्त्रम्'** विलिखितम् । लालपण्डितेन **'प्रश्नरत्नावली'** विरचिता । पण्डितरामचन्द्रेण **'मत्स्यपुराणस्य'** टीका कृता । पण्डित-साहिबरामेण **'वीरवैद्यरत्नहारस्य'** सस्कृतेऽनुवाद कृत ।

एव हि अस्य पुस्तकालस्यामुद्रितपुस्तकेषु कतिपया एतादृशा अपि ग्रन्था सन्ति, येषा कर्तुराविष्कर्तुर्वा नामग्रामादिनिर्देशो नोपलभ्यते । २८२६ सख्याङ्कितस्य **'मुहूर्तखण्ड (ताजिकसहिता)'** पुस्तकस्य अनुवादकर्त्तार वेकटशास्त्री तैलग, पण्डित-दामोदरकाश्मीरिक, पण्डितगोविन्दकौल, पण्डितमहाडिम्ब, पण्डित ईश्वरकौल, ज्योतिर्विद् देवकृष्णो वाराणसेय, जम्बूवासी पण्डितगोविन्दाचार्य, पण्डितगङ्गाराम-श्चेति विख्याता आचार्या आसन् ।

८. *बृहत्सूचीपत्र( कैटलाग )निर्माणम्*—*अस्य पुस्तकालयस्यामुद्रितग्रन्थाना* बृहत्सूचीपत्र(कैटेलाग)निर्माण डा० एम० ए० स्टाईनमहोदयेन १८२८ खिष्टाब्दे समारब्धम् । डा० एम० ए० स्टाईनमहोदयस्यैतस्मिन् कार्ये भारतीया अपि केचन विद्वासो लेखनादिकर्म सपादयामासु । तेषा सहायक-पण्डिताना नामनिर्देशपुरस्सर धन्यवादो भूमिकाया स्टाईनमहोदयेन स्वय कृतोऽस्ति । १८९४ खिष्टाब्दे हि तन्मु-द्रितमभूत् । सर्वमेव धन्यवादादिसम्मानप्रदर्शनकार्यं तद्दर्शनेन प्रत्यक्षमायाति । विषय-रूपेण च तत्रामुद्रितग्रन्थाना नामादिपरिचयसामग्री समुपलभ्यते । पर बृहत्सूचीपत्र तदिदानी जीर्णतर सजातम् । तदनुसारमेवैक नवीन सूचीपत्र सम्पाद्य सप्रकाशनीय-मित्यधिकारिभि सविचार्यते । तदर्थमेव किञ्चित्कार्यं समारब्धमपि अन्तराल एव सन्निरुद्ध वर्तते ।

९. **पूर्वस्थानम्**—प्रथम तु अय पुस्तकालय श्रीरघुनाथमन्दिरस्य मुख्यप्रवेश-द्वारस्य वामदिशि सस्थितस्य नाकवासिनो महाराजरणवीरसिंहस्य समाधिमन्दिरस्य वामपार्श्वे एकस्मिन् विशाले भवने समासीत् । यतो हि अस्य नामापि 'श्रीरणवीर-सस्कृतपुस्तकालय' इति विनिर्धारितमासीत् । सर्वाणि मुद्रितपुस्तकानि तत्र सुरक्षितानि

आसन्, पर लिखित(अमुद्रित)ग्रन्यास्तु ततोऽप्यधिके सुरक्षिते स्थाने, भगवत श्रीरामचन्द्रस्य मन्दिरान्तिके पार्श्वस्थयो कुटीरयो सस्थापिता आसन् । तदा तु देवदर्शनमिव एतेपामपि दर्शन सुदुर्लभमेवासीत् ।

१०. **स्थानपरिवर्तनम्**—महाराज डा० श्रीकर्णसिंहमहोदय स्वपूर्वजाना सन्मर्यादामनुसरन् भारतीयसस्कृते सस्कृतस्य च समादर प्रकुरुते, समीहते च सस्कृतस्य पूर्ववत्सार्वत्रिकी समुन्नतिम् । तरुणतपस्विना अनेन नवयुवकमहाराजमहोदयेन धर्मार्थविभागस्य आधिपत्य सविभ्रता १९५७ ख्रिष्टाब्दे अस्य सस्कृतमहापुस्तकालयस्य नव-भवननिर्माण कारयित्वा सर्वाणि मुद्रितानि अमुद्रितानि च पुस्तकानि अत्र सस्थापयितु समादेश कृत । पुस्तकालयेन सहैव नवीनस्य 'श्रीरणवीरसस्कृतानुसन्धानविभागस्य' अपि समुद्घाटन कृतम् । तदिदानी प्राचीनस्य श्रीरणवीरसस्कृतपुस्तकालयस्य नामापि १९५७ ख्रिष्टाब्दत 'श्रीरणवीरसस्कृतानुसधानविभागीय श्रीरघुनाथसस्कृतमहापुस्तकालय' इति सजातम् । एतन्नवीन पुस्तकालयभवनमपि श्रीरघुनाथमन्दिरस्य पश्चिमे भागे श्रीरघुनाथसस्कृत-महाविद्यालयस्यान्तिक एव वर्तते । अत्राधुना द्वयो सुविशालयोर्भवनयो सर्वाणि मुद्रितानि अमुद्रितानि च पुस्तकानि पृथक् पृथक् सरक्षितानि विद्यन्ते ।

११. **सुधारकार्यम्**—महाराज पुस्तकालयस्य सुरक्षार्थ सवर्धनार्थं च बहु प्रयतते । अमुद्रितग्रन्थाना सरक्षणार्थमेव नवीना लोहनिर्मिता आलया (आलमारिया) सक्रीता सन्ति । सर्वेपामेवामुद्रितग्रन्थाना पृथक् पृथक् आवरणानि(कवर)सुनिर्मितानि । नूतनसूचीपत्रनिर्माणार्थमेव पुण्यपत्तनत डा० एम्०एस्० पातकरमहोदय समाकारित । डा० पातकरमहोदयेन जम्बूराजधान्यामागत्य सम्यगय पुस्तकालय समालोकित । ततश्च स्वयोजनानुसार कार्यमपि सचालितम् । पुस्तकालयविज्ञानविज्ञेन डा० पातकरमहोदयेन सह अन्त्या अपि केचन विद्वासस्तदाज्ञानुसार पुस्तकसचिका (कैटेलागलिस्ट) समलिखन् । नवीनानि क्रमाङ्कितग्रन्थसूचीपत्राणि अपि सुनिर्मितानि । डा० पातकरमहोदयेन महता परिश्रमेण बृहत्सूचीपत्र तु नवीन केवलममुद्रितानामेव पुस्तकाना विलिखितम । आवश्यकसशोधनानन्तर च तत् सम्प्रकाश्येतापि कदाचिदिति आशास्यते ।

१२ **नवप्रोत्साहनम्**—महाराज प्रतिवर्षं ३५०) रूप्यकाणि पारितोषिक दत्वा प्रतियोगितानिबन्धान् सलेखयति । निबन्धास्तु सस्कृते हिन्दीभापाया च विलिख्यन्ते । तेपु प्राधान्येन सस्कृतवाङ्मयानुसारिण एव विषया विविच्यन्ते । प्रथम

पारितोषिकं हि २००) रुप्यकाणाम्, द्वितीयं १००) रुप्यकाणाम्, तृतीयं च ५०) रुप्यकाणां विनिर्णीतम् । तृतीयपारितोषिकं केवलमष्टादशवर्षीयाणां तन्न्यूनानां वा विद्यार्थिनां कृते परिकल्पितम् । पंचसु षट्सु वा वर्षेषु शताधिका निबन्धाः संगृहीता वर्तन्ते ते सर्वेऽपि अस्मिन् पुस्तकालये एव संस्थापयितुं योग्या इति पुस्तकालयाधिकारिभिः सुनिर्णीतम् ।

१३. **स्वाध्यायकार्यम्**—भारतीयाः वैदेशिकाश्च बहवो विद्वांसः समये समये समागत्य अस्मात् पुस्तकालयाद् यथेष्टां स्वाध्यायसामग्रीं समाददुः । तेषु विद्वद्वरेषु डा० बुह्लरमहोदयः, डा० भाण्डारकरमहोदयः, सरगोपालस्वामी आयङ्गारमहोदयश्चैते विशिष्टा महानुभावा आसन्, येषां नामाङ्कनेनैवायं पुस्तकालयः सगौरवं स्वां प्रतिष्ठां जगति संप्रसारयति ।

श्रीनगरस्थानुसन्धान-प्रकाशनविभागोऽपि शैव-ग्रन्थावलीप्रकाशनेऽस्मात् पुस्तकालयान्महत् साहाय्यमाप्तवान् । द्विगर्तवासिना प्राध्यापकेन डा० श्रीविष्णुदत्तशास्त्रिमहोदयेन, प्राध्यापिकया डा० श्रीवेदकुमार्या च अस्मादेव पुस्तकालयाद् यथेष्टां लेखनसामग्रीमवाप्य स्वकार्ये साफल्यमवाप्तम् । प्राध्यापकः के० के० बालीमहोदयः प्राध्यापिका सरलाखोसलामहोदया च अद्यापि स्वलेखनकार्येऽस्मात् पुस्तकालयान्महत् साहाय्यं संलभेते ।

१४. **कर्मचारिणः**—अधुना अस्य विभागस्य कर्मचारिणस्त्रयो विद्वांसोऽत्र कार्यं प्रकुर्वन्ति, येऽधोलिखितक्रमेणात्र पदेषु संप्रतिष्ठिताः सन्ति—

| | |
|---|---|
| १. दिग्दर्शकः | पण्डितश्रीगङ्गाधरशास्त्री । |
| २. अनुसन्धाता | पण्डितकाकारामशास्त्री । |
| ३. ग्रन्थपालः | पण्डितरामकृष्णशास्त्री । |

एषु दिग्दर्शकमहोदयस्तु अवैतनिकः कार्यं संचालयति । अन्यौ द्वावेव यथानियतं शतरुप्यकपरिमितं वेतनं संगृह्णीतः । अभिनवक्रमाङ्कितग्रन्थसूचीलेखनकार्येऽस्थायिरूपेण द्वौ अपरावपि शास्त्रिणौ पण्डितकृष्णदत्तः श्रीहरिरामश्चात्र सन्नियुक्तौ स्तः । तावपि शतरुप्यकपरिमितमेव वेतनं लभेते । श्रूयते यन्निकटभविष्ये कश्चित्सेवकः (चपरासी) अपि अत्र नियुक्तो भविष्यति—इति ।

१५. पुस्तकविवरणम्—

(क) अमुद्रितग्रन्थाः (विषयक्रमेण)

| | | | |
|---|---|---|---|
| १. वेदग्रन्थाः (संहिता-ब्राह्मणादि) | २०२ | १५ वेदान्तग्रन्थाः | ४०४ |
| २. सूत्रग्रन्थाः (पद्धतिपरिशिष्टादि) | २२१ | १६. साङ्ख्यग्रन्थाः | १५ |
| ३. उपनिषद्ग्रन्थाः | ४२१ | १७. योगग्रन्थाः | २६ |
| ४. वेदाङ्गग्रन्थाः | २६ | १८. न्यायवैशेषिकग्रन्था. | ४३५ |
| ५. व्याकरणग्रन्थाः | २७९ | १९. ज्योतिषशिल्पादिग्रन्थाः | ५१० |
| ६. कोशग्रन्थाः | ७० | २०. चिकित्साग्रन्था॰ | २४१ |
| ७. छन्दोग्रन्थाः | २७ | २१. महाभारतरामायणादिग्रन्था. | ७९ |
| ८. संगीतग्रन्थाः | ३५ | २२. पुराणमाहात्म्यादिग्रन्थाः | ३०९ |
| ९. अलंकारग्रन्थाः | १०६ | २३. भक्तिग्रन्थाः | ३१३ |
| १०. काव्यग्रन्थाः | २६३ | २४. तन्त्रग्रन्थाः | १०३१ |
| ११. नाटकग्रन्थाः | ५४ | २५. जैनग्रन्थाः | ३५ |
| १२. आख्यायिकाग्रन्थाः | ३१ | २६. तामिलग्रन्थाः | ६८ |
| १३. धर्मशास्त्रग्रन्थाः | ७१८ | २७. शारदाग्रन्थाः | २० |
| १४. पूर्वमीमांसाग्रन्थाः | १५८ | | |

यद्यपि तामिलग्रन्था. शारदाग्रन्थाश्च पूर्वोक्तवेदान्तादिविषयका एव सन्ति पर सूचीपत्रे पृथङ्निर्देशविधानेन अत्र पृथगेव सलिखिता. ।

(ख) मुद्रितग्रन्थाः—

उपर्युक्तविषयाणामेव मुद्रितग्रन्था अपि ३०० सन्ति । एषु केचित् आवरणान्विताः केचित् निरावरणा एव दीर्घपत्राकारा वर्तन्ते । मुद्रितग्रन्थानां तु प्रत्यहमादानप्रदानादि कर्म सम्भवति । परममुद्रितानां कृतेऽधिकारिणां विशेषादेशस्यापेक्षा विद्यते । तत्रापि विशिष्टा विद्वांस एव साफल्यमाप्नुवन्ति, नेतरे साधारणा जनाः । नवीनग्रन्था अपि क्रीयन्ते, परमधुना ते सर्वे स्थानीये संस्कृतमहाविद्यालये एव संस्थाप्यन्ते । यतो हि तत्रत्याधिकारिणः पृथगेवैकं पुस्तकालयं निर्मातुं समीहन्ते ।

(६)

## श्रीरणवीरहाईस्कूलस्था संस्कृतपाठशाला, जम्बूनगरे

विद्याव्यसनितया प्रसिद्धो महाराज श्रीरणवीरसिंह पञ्चदशाधिकनवशतोत्तरैकसहस्रतमे १९१५ वैक्रमे वत्सरे प्रभूततरविद्वद्वरविभूषिता श्रीरघुनाथसंस्कृतपाठशाला संस्थाप्य तस्याश्चतुर्वर्णेतरमानवमाणवकप्रवेशानर्हतां च समीक्ष्य मुन्यवनीनन्देन्दुमिते १९१७ वैक्रमे हायने स्वीये श्रीरणवीरहाईस्कूलनाम्नि शिक्षणालये मानवमात्रमाणवकप्रवेशार्हामपरां श्रीरणवीरपाठशालां जम्बूराजधान्यां संस्थापितवान् । तस्याश्च न्यायनयनिपुणं साहित्यशास्त्रेऽलङ्कर्मीणं रसप्रवीणं मीमांसामांसलशेमुषीकं वैयाकरणकेसरिणं दाक्षिणात्यं विद्वांसं श्रीगोविन्दाचारिणं प्रधानाचार्यपदमध्यतिष्ठिपत् । तत्साहाय्यसम्पादकौ द्वावपरौ विद्वांसौ चात्र विन्ययुङ्क्त महाराजाधिराजः श्रीरणवीरसिंहः ।

### प्रथमः प्रधानाचार्यः

अयं श्रीगोविन्दाचारिनामधेयः प्रधानाचार्यो व्याकरणसाहित्यन्यायवैशेषिकपूर्वोत्तरमीमांसासांख्ययोगधर्मशास्त्रतन्त्रप्रभृतिशास्त्रेषु लब्धप्रतिष्ठोऽपि बाधान्तनव्यन्यायग्रन्थान् न्यायकुसुमाञ्जलिप्रभृतीन् समधीत्य पञ्चलक्षणीसिंहव्याघ्रीगादाधरीप्रभृतिग्रन्थेषु विशेषाभिलापनकौशलमध्यगच्छत् । अयं हि पण्डितप्रकाण्डः शास्त्रार्थसमरे शास्त्रार्थमहारथिनो विजेतुं शतशः पूर्वोत्तरपक्षकोटीर्जिह्वाग्रनर्तकीर्विधाय पुनःपुनरभ्यस्यन्नद्यापि शास्त्रशिष्य इव भाति स्म । महाराजः श्रीरणवीरसिंहो विदुषां परिषदि श्रीगोविन्दाचारिणं शास्त्रार्थमहारथीति व्याहार्षीत् । आचार्यः श्रीगोविन्दाचारिमहानुभावः काश्मीरान् अभ्यागतेन विद्वन्मण्डलमण्डनेन जगद्गुरुश्रीशङ्कराचार्यावतारेण, श्रीशिवकुमारशास्त्रिणा पञ्चषदिनप्रचलितशास्त्रार्थान्ते राजसभायामेव मुक्तकण्ठं प्रशंसितः, तच्छिष्यैश्च श्रीचुम्बनझा-फूदनझाप्रभृतिभिः सानन्दमभिनन्दितः । ततः प्रभृति चायं महाराजश्रीरणवीरसिंहस्यापि विशेषप्रीतिभाजनतामयासीत् । विद्वत्समाजे छात्रसंसदि च लब्धभूरिप्रतिष्ठोऽयं श्रीरणवीरसंस्कृतपाठशालायां प्रथमः प्रधानाचार्य आसीत् । दैवयोगादस्मिन् विद्वद्वरिष्ठे ब्रह्मभूयं गते महाराजः श्रीरणवीरसिंहस्तादृशस्यान्यस्य विदुषो दुर्लभतया यत्किञ्चित्कालं नैराश्यमिवानुभवन्नासीत् ।

## द्वितीयः प्रधानाचार्यः

श्रीलक्ष्मणशास्त्री भट्टिलानग्रामवास्तव्यः सर्वत्र शास्त्रेष्वप्रतिहतगतिरपि गणितफलितोभयविधज्योतिःशास्त्रे परमप्रवीणः पाणिनौ पतञ्जलिरिव समभवत्। ज्योतिःशास्त्रविषयकान् गणकजनसंशयान् प्रश्नांश्च यथासमयमनेकान् पुरस्कारान् महाराजसकाशादलभत। अयं शास्त्रार्थकरणेऽपि सिद्धहस्तः सन् विदुषां समाजे महाराजपरिषदि च सर्वत्र ख्यातिं समलभत। श्रीरघुनाथपाठशालीयप्रधानाध्यापकेन श्रीदीनानाथेन विदुषा सहास्य भागपट्टनगरे विद्यमानानां नक्षत्राणां विषये मैत्रयुद्धः शास्त्रार्थः समभवत्। महाराजे श्रीरणवीरसिंहे दिवङ्गते, सिंहासनमधिरूढो महाराजश्रीरणवीरसिंहस्य ज्येष्ठतनुजन्मा महाराजश्रीप्रतापसिंहो लक्ष्मणशास्त्रिणं राजज्योतिर्विद्पदमध्यतिष्ठिपत्। अयमपि श्रीरणवीरपाठशालां समुन्नेतुं निरन्तरं प्रयतमानः शिष्येषु महाराजपरिषदि च परं सम्मानितोऽभवत्। अस्य सहचरो द्वितीयाध्यापकः श्रीनृसिंहेशोऽपि सारस्वतपण्डितोऽन्यतमः प्राचीनाध्यापनपद्धतिप्रवीणः साभिमानो विद्वानासीत्। अनयोर्द्वयोरपि चरितमन्यत्र प्रस्तुतं वर्तते। प्रधानाचार्यः श्रीलक्ष्मणशास्त्री अवनिमुनिविहगविधुमिते १९७१ वैक्रमे वत्सरे माघशुक्लाष्टम्यां भौतिकशरीरलीलां विहाय गोलोकान्तरमगात्। अस्य विदुषो मृत्युना संस्कृतसाहित्ये महती क्षतिरभवत्। अयं लक्ष्मणशास्त्री स्वायुषोऽन्तिमदिनेषु, "प्रिन्स-आफ वेल्ज़ कालिज"ऽपि संस्कृताध्यापकपदमध्यरक्षत्। अस्य विशेषेणेतिवृत्तमन्यत्र प्रस्तुतम्।

## तृतीयः प्रधानाचार्यः श्रीदीनानाथशास्त्री

श्रीलक्ष्मणशास्त्रिणि स्वायुषोऽन्तिमदिनेषु "प्रिन्स आफ वेल्ज कालिजे" वर्तमाने-"गान्धीमेमोरियलकालिजे" संस्कृताध्यापक( संस्कृत प्रोफेसर )पदमधिरूढे महाराजश्रीप्रतापसिंहो गुरु श्रीरामसिंहस्य पण्डित साहित्यनवनीतावलेहनलोलरसनम्, काव्यरसाऽऽस्वादनात्यन्ताभ्यस्तस्वान्तम्, श्रीदीनानाथशास्त्रिणम्, श्रीरणवीरपाठशालायाः प्रधानाध्यापकपदमध्यतिष्ठिपत्। अयं विद्वद्वरिष्ठोऽपि श्रीरणवीरपाठशालासमुन्नयने महान्तं प्रयासमातन्वन् छात्रेषु विद्वत्सु च महद्यशोभाजनं समभवत्। अस्य जीवनचरितमन्यत्र प्रस्तुतं वर्तते। अस्य विदुषः सहचरा अध्यापकाः श्रीविश्वम्भरदत्तशास्त्री, श्रीरघुनाथशास्त्री, श्रीमदनमोहनशास्त्री चेत्यासन्। श्रीमदनमोहनशास्त्रिणि महाराज श्रीप्रतापसिंहसकाशात् छात्रवृत्तिं गृहीत्वा ज्योतिःशास्त्रं समध्येतुं वाराणसीं गते श्रीलब्धरामशास्त्री तत्पदमध्यतिष्ठत्। एषां चतुर्णामप्यध्यापकानां जीवनचरितमन्यत्र

प्रस्तुतम् । प्रधानाचार्य श्रीदीनाथशास्त्री रसमुनिनन्देन्दुमिते १९७६ वैक्रमवत्सरे स्वयशसा सहैव परलोकमयासीत् ।

### तुरीयः प्रधानाचार्य श्रीमणिरामशास्त्री

अय श्रीमणिरामशास्त्री जम्बूप्रान्तान्तर्गत "अखनूर"पत्तननिकटस्थ"गुढा" ग्रामवास्तव्य पूर्व हमीरपुरमण्डले हाईस्कूले सस्कृताध्यापकपदमध्यतिष्ठत् । श्रीदीनानाथशास्त्रिण्युपरते विद्याविभागाधिकारिभि समाहूय सबहुमान श्रीरणवीरपाठशालीयप्रधानाचार्यपदे न्ययुज्यत । अयमत्यन्त विनीत सुशील व्यवहारचतुरो व्याख्यानकर्मणि कुशलश्चासीत् । अस्य समयेऽपि पाठशालीयशिक्षास्तरो नावनत परीक्षापरिणामा अपि समीचीना एवासन् ।

### पञ्चमः प्रधानाचार्यः श्रीबलजिन्नाथशास्त्री एम्० ए०

अय काश्मीरिकपण्डित श्रीमणिरामशास्त्रिणि वयस्कवृत्ति (पैन्शन) गृहीत्वा मुक्तकार्ये सति श्रीवलजिन्नाथशास्त्री श्रीरणवीरपाठशालीयप्रधानाध्यापकपदमलभत । अय श्रीवलजिन्नाथशास्त्री कतिचन मासानत्र समध्याप्याधिकवेतनजिघृक्षया काश्मीरेषु सर्वकारकालिजे सस्कृताध्यापक (प्रोफेसर)पदमध्यतिष्ठत् । श्रीबलजिन्नाथसदृश. शैवशास्त्ररहस्यज्ञ सम्प्रति काश्मीरेषु नान्य कश्चिद् विद्वान् दरीदृश्यते । सौकर्येण शैवसिद्धान्तोद्बोधनक्षम स्वातन्त्र्यदर्पणनामधेय पुस्तक विरच्य काश्मीरिकाभिजनेषु विद्वत्सु शैवसिद्धान्तारविन्दविज्ञानमकरन्दपिपासुषु जिज्ञासुष्वधिकारिषु च महती ख्याति समधिगतवानय श्रीवलजिन्नाथ ।

### षष्ठ. प्रधानाचार्य्यः श्रीशुकदेवशास्त्री

श्रीवलजिन्नाथे काश्मीरान् गते श्रीशुकदेवशास्त्री श्रीरणवीरपाठशालाया प्रधानाचार्य्यपदमध्यतिष्ठत् । अय श्रीशुकदेवशास्त्री जम्बूप्रान्तान्तर्गतपाटीग्रामवास्तव्याभिजनब्राह्मणवशावतस प्राय. पदवाक्यप्रमाणपारावारपारगत कविताकामिनीकमनीयकपोलकोमलाधरविम्बचुम्बनचुञ्चु शास्त्रार्थसमरेषु प्रतिवादिभयङ्कर 'अय जितमलचरित द्विगर्तस्तुतिनामधेयञ्चेति काव्यद्वय कुलकाव्यानि च वहूनि विरच्य 'द्विगर्तेषु कालिदास' इत्युपाधिमध्यगच्छत् । अय कतिचन हायनानि छात्रजनसन्तोषपुरस्सर समध्याप्य शरनभोगगननयनसमिते २००५ वैक्रमे हायने वयस्कवृत्ति (पैन्शन) समधिगत्य स्वनिर्मापितसौधसमानसद्मनि सुखेन जीवति । अस्यापि जीवनचरितम् अन्यत्र प्रस्तुतम् ।

## सप्तमः प्रधानाचार्य्यः श्रीगौरीशङ्करशास्त्री

श्रीशुकदेवशास्त्रिणि वयस्ववृत्ति लब्ध्वा मुक्तकार्ये सति श्रीगौरीशङ्करशास्त्री श्रीरणवीरपाठशालाया प्रधानाध्यापकपदमध्यतिष्ठत् । अय पण्डितोऽपि अध्यापनकला-कुशलोऽपि लोकोत्तरप्रतिभाप्रतिपन्नोऽपि शिष्यसन्तोषणप्रवीणोऽपि सत्रसाध्यव्याधि-बाधित कतिपयमासेष्वेव दुर्दैवेनाकाल एव क्रोडीकृत । अनेन विदुषा सहैवेय श्रीरण-वीरसस्कृतपाठशालाऽपि कथाशेषता गता, यस्या स्मरणमपि सहृदयान् दु खाकरोति । तस्या समूलोच्छेदे कैर्दुश्चेष्टितमिति तदभिधानेऽपि पापमलेन लिप्यते जिह्वा, स्मरणे मनो मलिन भवतीति सर्व जलताडनवन् मोघ तदभ्युत्थाने प्रयत्नजातमित्युच्चैर्निश्वस्य विरम्यते । अस्या पाठशालाया श्रीरघुनाथशास्त्री श्रीलब्धरामशास्त्री चेति द्वावपि पण्डितवरिष्ठौ परमपरिश्रमशीलौ परोपकारिणौ, शिष्यैकपक्षपातिनौ शिष्यहिताय स्वा-त्मानमप्युपेक्षमाणौ साम्प्रतमपि तयो शिष्यास्तौ स्मृत्वा करुण रुदन्ति, रोमाञ्चं रुद्-भिद्यन्ते गद्गदीभवन्ति च २००५ वैक्रमाब्द एवास्या पाठशालाया अवसान-काल ।

(अध्ययनाध्यापनादिव्यवस्था)

(१) उत्तरायणदिनेषु प्राय सप्तवादनतो द्वादशवादनान्तोऽध्ययनाध्यापनकाल । दक्षिणायनदिनेषु प्रातर्दशवादनत चतुर्वादनपर्यन्त षड्वादनानि उभयत्र मध्ये विश्राम-घण्टिका बालखुरलीक्रीडा'ड्रिल'घण्टिका च प्रतिश्रेणीभिन्ना शुक्लकृष्णोभय-पक्षयो प्रतिप्रतिपदि पाक्षिकपरीक्षा, प्रत्यष्टमि पूर्वाधीतानुवृत्ति , सन्दिग्धस्थलाना पुनरनुशीलनम्, अध्यापकेभ्य प्रच्छनञ्च ।

प्रतिरविवासर पूर्णवकाश ।
वर्षर्तुदिनेषु मासद्वय ग्रीष्मावकाशा समभूवन् ।

(२) श्रीगोविन्दाचारिसमये स्वातन्त्र्येण व्याकरण-साहित्य-काव्य-साख्य-योग पूर्वोत्तरमीमासाज्यौतिपकर्मकाण्डधर्मशास्त्रपुराणेतिहासादयो विषया समध्या-प्यन्ते स्म ।

(३) तत्तच्छास्त्रयोग्यतापरिचायकप्रमाणपत्राणि प्रधानाचार्य्य स्वहस्ताक्षरै प्रमाणीकरोति स्म ।

(४) विद्यार्थिना शास्त्रार्थयोग्यताविषयक व्याख्यानकौशलसूचक पवित्र-चरित्रोद्बोधकञ्च प्रमाणपत्र तेभ्य पृथक् पृथक् प्रदीयते स्म ।

(५) वर्णादिविशेषता परिहृत्य मानवमात्रस्य सर्वाङ्गपूर्णा स्वस्था शास्त्र-जिज्ञासवो बाला अत्र प्रवेश्यन्ते स्म ।

(६) ज्योतिर्विद श्रीलक्ष्मणशास्त्रिण समये छात्राणा सौकर्य्यार्थम् अत्र पञ्च-नदविश्वविद्यालयीया प्राज्ञ-विशारद-शास्त्रिपरीक्षाप्रणाली प्रचालिताऽऽसीत् ।

(७) प्राज्ञपरीज्ञात पूर्वं प्रथमा द्वितीया, तृतीया, तुरीयेति श्रेणीचतुष्टयम-भवत् । एव वर्षचतुष्टयेन श्रणीचतुष्टय समुत्तीर्य छात्र प्राज्ञश्रेण्या प्रवेशमर्हति स्म । एव प्राज्ञ-विशारद-शास्त्रिश्रेणीनामपि प्रथमद्वितीयत्वेन द्वौ द्वौ विभागौ समा-स्ताम् । तत्रैकैकेन हायनेन एकैकस्य विभागस्य परीक्षणे सति षड्भिर्हायनै प्राज्ञादि-परीक्षात्रय समुत्तीर्य्यते स्म ।

(८) प्रथमवर्षीया गृहीयपरीक्षा भवति स्म, सा च पाठशालीयैरध्यापकै क्रियते स्म, द्वितीयवर्षीया च विश्वविद्यालयेऽभवत् । एव दशभिर्हायनै शास्त्रिपरीक्षा समुत्तीर्य्य छात्रो निवर्तते स्म ।

(९) प्रथमादिश्रेणीचतुष्टयेऽक्षरारम्भ विधाय, अमरकोष, लघुकौमुदी, होडाचक्रम्, हितोपदेश, पञ्चतन्त्रम्, गणितेतिहासादिकम्, अन्यानि लघुलघूनि च सस्कृतपुस्तकानि समध्याप्यन्ते स्म ।

(१०) प्राज्ञपरीक्षादित्सवे छात्राय रुप्यकद्वय प्रतिमास छात्रवृत्ति प्रदीयते स्म । विशारदपरीक्षादित्सवे रुप्यकत्रयम्, शास्त्रिपरीक्षादित्सवे च रुप्यकचतुष्टय प्रदीयते स्म ।

(११) विशेषच्छात्रावासाभावात् छात्रा दीवानमन्दिरे, रानीतालावमन्दिरे च निवसन्ति स्म । इद मन्दिरद्वयमप्यपनतिविशद छात्रावासोचितकक्षोपेत पाठ-शालाया सन्निहितञ्चास्ते ।

(१२) छात्राणा निरीक्षण परीक्षण चरित्रसरक्षणादिकञ्च यथासमय तत्तत्-कक्षेषु गामम् गामम्, तत्तदध्यापकै मन्दिराधिष्ठातृभिश्च क्रियते स्म ।

(१३) प्रतिवर्षं प्रथमश्रेण्या समुत्तीर्णच्छात्राय वार्षिकोत्सवे यथायोग्य पारितोषिकमपि श्रीरणवीरहाईस्कूलच्छात्रेभ्य एव प्रदीयत ।

## श्रीरणवीरपाठशालीयच्छात्राणा
## साहाय्यसम्पादक.
## श्रीविनायकमिश्र

जम्बूनगराद् दक्षिणस्या दिशि तौव्या नद्या लोहमयसेतुसविधे घण्टापथस्य पूर्वस्मिन् भागे विनायकमिश्रधर्मशालानामधेया, एका महती धर्मशाला विद्यते याऽद्यापि श्रमापनयनाय सुस्वादु कौप पय पाययितु पथिकान् समाह्वयतीवाराद्-दरीदृश्यते ।

एव विलाख्यायते—जम्बूवास्तव्यो द्वैगर्तो ब्राह्मण श्रीविनायकमिश्रनामधेय व्यापारकर्मणि कुशल व्यापारस्य विशद क्षेत्र समन्विष्यन् कदाचिद् व्यापाराय कालिकातायामयासीत् । तत्र व्यापारकर्मणा प्रभूततर धन समुपार्ज्य सौधसन्निभानि गृहाणि निर्माप्य सह स्वधर्मपत्न्या ससुखमवात्सीत् । कालान्तरेण च धनसमृद्धिपरिपूर्ण स्वोपार्जित धनस्य सदुपयोगाय काश्यादितीर्थस्थानेषु विशालानि प्रचुरकक्षकक्षीकृतानि धर्मशालाभवनानि निरमीमपत् । तत्र तत्र धर्मशालाभवनेषु संस्कृताध्ययनतत्पराणा विद्यार्थिना कृते भोजनादिप्रबन्ध विधाय गीर्वाणवाण्या शुश्रूषणे सर्वाग्रणी सम्बभूव । स्वजन्मभूम्या जम्बूनगर्यामपि समुचिते स्थाने बहुकक्षकलेवरामतिरमणीयामेका धर्मशाला निर्माप्य तत्र सुस्वादुपय परिपूर्णमेक कूप च खानयित्वा परमपुण्यभाजनीभूत । अस्यामपि धर्मशालाया तदानी दीनानाथेभ्योऽन्येभ्यश्च साहाय्याऽऽकाङ्क्षिभ्यो यथा भोजनायाऽऽमान्न प्रदीयते स्म-तथैव श्रीरणवीरपाठशालीयच्छात्रेभ्योऽपि । तत्र प्रतिच्छात्र द्वादशप्रस्थ(सेरक)परिमित गोधूमचूर्णम्, प्रस्थद्वय (सेरद्वय) परिमित द्विदलम् ( दाली ) पादोनप्रस्थम् ( पादत्रयम् ) घृतम्, पट्टङ्क (शटाक) लवणम् द्व पट्टङ्के वेवसार (हल्दी) पट्टङ्कपरिमितानि मिरीचकानि पञ्चदशपणाश्च दक्षिणारूपेण प्रदीयन्त स्म । एतेन श्रीरणवीरपाठशालीया अध्यापका, छात्राश्च विनायकमिश्रस्य सस्कृतभाषा प्रति महान्तमुपकार मन्यन्ते स्म । श्रीविनायकमिश्रस्याऽपुत्रत्वात् तत् पुत्रीवशीयास्तत्पत्नीपितृवशीयाश्च समस्तसम्पदमधिकृत्य धर्मशालाना प्रबन्धादिकमपि यथासम्भव विदधति ।

अस्या श्रीरणवीरपाठशालाया कतिचिद् विशिष्टा स्नातका श्रीनिक्कारामशास्त्रि-श्रीविश्वम्भरशास्त्रि श्रीरघुनाथशास्त्रि–श्रीलब्धरामशास्त्रि–श्रीसीतारामशास्त्रि-श्रीभोलानाथशास्त्रि–श्रीवामदेवशास्त्रि–श्रीहरदत्तशर्मकविराज-श्रीरमाकान्तशास्त्रि-

श्रीरूपचन्द्रवैद्य-श्रीमदनमोहनशास्त्रिज्यौतिपाचार्य-श्रीबालकृष्णशास्त्रि एम्० ए० एम्० ओ० एल्०-श्रीकेदारनाथशास्त्रि, एम्० ए० एम्० ओ० एल्०--श्रीरामनाथशास्त्रि एम्० ए० एम्० ओ० एल्०प्रभृतयो विद्यातपोम्या परिपूतभूतात्मान समभूवन्। तेषा विशिष्ट परिचयो यथावसर वितरिष्यते ।

## (७)
## धर्मार्थविभाग

स्वराज्ये सर्वत्र प्रतिपत्तन प्रतितीर्थं धर्मशाला मन्दिराणि च निर्माप्य तत्र तत्र समागताम्यागताना सभाजनार्थं भोजनादिप्रबन्धमपि महाराज श्रीरणवीरसिंह स्वयमकार्षीत्। अस्य महतो धर्मार्थविभागस्य आयतावपि सम्यक् सञ्चालनार्थं पुष्कल धन सङ्कल्प्य 'श्रीरघुनाथनिधि' ( श्रीरघुनाथ जी का खजाना ) नाम्ना कञ्चिन्निधि कल्पितवान्। तत्प्रबन्द्धुमेकचत्वारिंशदधिकैकोनविंशतिशततमे १९४१ (१८८४ ई०) वैक्रमे हायने धर्मार्थपरिपद (धर्मार्थकौन्सिल) निर्माप्य सर्वं धर्मार्थसम्बन्धि कार्यजात तस्यै समर्पितवान्। तस्यास्तदानीमेक परिपत्पतिस्त्रय पारिपद्याश्च प्रतिवर्प निर्वाच्यन्ते स्म। तस्या परिपद प्रधानो राज्यस्य राजस्वमन्त्री, गृहमन्त्री वा समभवत्। एको वैतनिक परिपद्मन्त्री, तस्य उपविभाग (महकुमा) कार्यालयश्च (दफ्तर) पृथक् सस्थापितौ। इय परिपन्महाराजश्रीरणवीरसिंहादेशेन चन्द्रयुगविहगेन्दुमिते १९४१ (१८८४ ई०) वैक्रमे वत्सरे धर्मार्थविभागस्य विवरणपुस्तक ('आयन' नामधेयम्) फारस्यामाङ्गलभापाया च सञ्चस्कार। यस्मिन् धर्मार्थविभागस्य सञ्चितमागामि च द्रव्य, सर्वमितिवृत्त, धर्मस्थाननियमा, धर्मार्थविभागाधिकारिणा राजवशोत्तराधिकारिणा च कर्तव्यम्, विरुद्धाचारिणा दण्डादिक च सर्वं प्रदर्शित वर्तते। महाराज श्रीरणवीरसिंहो विद्याविवर्धकपाठशालाविभागस्यैका परिपद पृथक् कल्पितवान्। यस्या प्रधानो मन्त्री च तदानीतनाया धर्मार्थपरिपद एवास्ताम्। इतरे चतुर्दश सदस्याश्च नागरिका विद्वास समभूवन्, ये सर्वासामपि धर्मार्थाधीनपाठशालाना प्रबन्धसामञ्जस्य व्यदधु। महाराजश्रीगुलावसिंहानन्तर महाराज श्रीरणवीरसिंहो, महाराज प्रतापसिंह, महाराजो हरिसिंहश्च एते त्रयोऽपि महाराजा यथाक्रम यथानियम आयानुरूप धर्मार्थविभागीय व्यवहारजात सम्पाद्य धर्मार्थविभाग सरक्षितवन्त ।

## (८)
## वर्तमाना धर्मार्थपरिषत्

कतिपयानि हायनानि समभूवन् महाराज श्रीहरिसिंह प्रथम स्वात्मज

महाराज श्रीकर्णसिंह धर्मार्थपरिषद प्रधानपदध्यतिष्ठिपत् । तदनन्तरमितरे त्रय सदस्या महाराजश्रीकर्णसिंहेन नियुक्ता । महाराज श्रीहरिसिंहोऽस्य धर्मार्थविभागस्य स्वय सर्वप्रधान (सोलट्रस्टी) समभवत् । किंचित्कालानन्तर महाराज श्रीहरिसिंहो धर्मार्थ-विभागस्य सर्वं कार्यभार स्वात्मजाय श्रीकर्णसिंहाय समार्पिपत् । तत प्रभृति महाराज श्रीकर्णसिंहो धर्मार्थविभागस्य सोलट्रस्टीपदमलङ्कुर्वाणो धर्मार्थविभागस्य सर्वं कार्य-जात साधु सम्पादयति । साम्प्रत धर्मार्थपरिषद प्रधानो ब्रिगेडियरश्रीघनसारसिंहो वर्तते । अय महानुभावो महाराजश्रीहरिसिंहसमयादारभ्येदानी यावदतिसौजन्येन धर्मबुद्धया धर्मार्थविभागस्य सर्वकार्यजात नि शुल्क सम्पादयन् महद्यशोभाजन सवृत्त । प्रधानस्य सहचरा सदस्या (१) श्री प०परमानन्द (एम०ए०, रिटायर्ड-अकौन्टेण्ट-जनरल) (२) श्रीरामलालखजूरिया एम०ए०, ( रिटायर्ड-चीफ-कन्सरवेटर ) । (३) श्रीरामलालगुप्त एम० ए०, (रिटायर्ड-अकौंटटेंट-जनरल ) । एते त्रयोऽपि महानुभावा स्वविचारै सद्व्यवहारैश्च यथासमय धर्मार्थविभाग श्रीरघुनाथपाठशाला च सेवमाना महान्तमुपकार कुर्वाणा आसते सुरभारत्या सुरभारतीविदा च । एषु श्रीरामलालगुप्त सदस्य सन् मन्त्रिपदमप्यलङ्करोति । महाराज श्रीगुलाबसिंहो यस्य गीर्वाणवाणीकल्पमहीरुहस्य दुर्गनिषु (द्विगर्तेषु) बीजमवाप्सीत्, तत्तस्य जीवन-दशायामेव सम्यक् प्ररूढम् । ततो महाराज श्रीरणवीरसिंहस्त 'गीर्वाणवाणीकल्प-महीरुहप्ररोहम्' स्वोत्साहमयोदकसेचनेन, द्विजजनालस्यविद्यापराङ्मुखत्वरूपतृणकण्टका-द्यावरणनिवारणेन, शास्त्रविरुद्धमन कल्पितसस्कृतवाङ्मयखण्डनरूपपशुपक्षिहिम-पातादिभ्यो रक्षणेन, विद्वद्गणमार्तण्डमण्डलस्य सद्विचारसद्व्यवहाररूपातपपातेन, स्ववसुविधोर्मुक्तहस्तनिरावरणेन, सद्व्ययरूपामृतवर्षणेन च, एक महान्त फलिन कल्पमहीरुह निरमासीत् । यस्यानन्तानि च स्नातकफलानि सर्वशो भारतेषु व्यतारीत् । महाराज श्रीप्रतापसिंहस्तमिम कल्पमहीरुह महता प्रयासेन प्रहरिकवत् सुरक्षितवान् ।

महाराज श्रीहरिसिंहो वेतनवृद्धयादिरूपविशेषदोहददानादिना त सवर्द्धय परामुन्नति समनैषीत् । भारतपाक्सङ्घर्षविग्रहेण किञ्चिन् म्लानमपि त महाराज श्रीकर्णसिंह सद्विचारसदुत्साहसत्सम्मतिसदनुभवसस्कृतसद्गुणानुरागित्वादिरूपामृत-मभिवृष्य पुन पत्रित, पुष्पित फलित च विदधान साम्प्रत युगानुरूपैर्गिलशसायसादि-रसवदनन्तस्नातकफलिन विधातु प्रयतमानो महद्यशोभाजन सवृत्त ।

यथाऽस्मिन् समाजसेवापरोपकारधर्माचरणसदाचारसद्विचारपरिचयपेशल-

त्वदानित्वादयोऽनन्ता गुणा सन्ति, तथा सस्कृतानुरागोऽप्यस्मिन् सौवर्णगन्धायते । अस्यैव महता प्रयासेन धर्मार्थविभागस्य पुनरुद्धारो भवितु प्रवृत्त ।

(६)

राजकीयविभागद्वारा सचालिता

सस्कृतप्रचारस्य कतिचित्सामान्यकेन्द्रभूता पाठशाला

काश्मीरराज्यस्य जम्बूप्रान्ते सस्कृतभाषाया अध्ययनसौकर्य विधातु राजकीय-शिक्षाविभागेन कतिचित्पाठशाला स्थापिता सचालिता आसन् । तासामद्यत्वे केवल तिस्रो नाम्ना एव निजपुरातनेतिहासस्य साक्षिभूता सन्ति । तासु सस्कृतभाषाया अध्ययन नितान्त गौणीभूत वर्तते । अनन्तेषा सस्कृतकेन्द्राणा सक्षिप्त परिचयो दीयते ।

सस्कृतपाठशाला पुरमण्डलस्था

पुरमण्डलमित्यभिधानमतिप्राचीन पुराणैरभिनन्दित 'देविका ख्यपुण्यसलिला-स्रोतस्विनीतीरप्रतिष्ठितमस्मिन्प्रदेशे बहुश्रुत तीर्थधामाऽस्ति । अद्यापि तत्परितो वास्त-व्याना जनपदाना श्रद्धाभावेन हरिद्वारतुल्य महिमानमुपभुङ्क्ते । तत्रैकनवत्यधिकैको-नविंशतितमे ( १९९१ ) विक्रमसवत्सरे शिक्षाविभागेनैका पाठशाला स्थापिता । श्रीचक्रपाणिनामैक स्थानीय पण्डितवरस्तत्राध्यापकरूपेण स्वीकृत । इय पाठशाला जनसहयोगेन विशिष्टस्थाने जनानुरोधेन निजै प्रयत्नैश्च स्थापिताऽपि शिक्षाविभागेन सस्कृतभाषाया प्रचारार्थं स्वीकृताया एकस्या योजनाया अनुसार पञ्चदशरूप्यकाणा मासिकी वृत्ति (अलौसरूपा न तु स्थायिनियुक्त्यनुरूप वेतनम्) प्रदाय सचालिताऽ-भवत् । तत्सहायिका वृत्तिरग्रे पञ्चत्रिंशद्रूप्यकाणि यावद् वर्धिताऽस्ति ।

इय पाठशाला एतद्योजनानुसारेण सचाल्यमाना अन्या अपि काश्चित् शिक्षा-विभागेन स्वीकृततयैकया शिक्षणसमित्या ( पाठशाला एक्जामिनेशनबोर्ड ) इत्य-भिधानया निरीक्षिताऽनुशासिता चाभवत् । तस्या समित्या एकोऽवैतनिक मन्त्री चाप्यभवत् । स्थानीयराजकीयमहाविद्यालयस्य सस्कृताध्यापक एव प्रायेणैन भार-मवहत् । समित्या स्थानीयनागरिकेभ्यस्त्रयश्चत्वारो वा विद्वास सस्कृतभाषाया प्रचाररुचि धारयन्तोऽवैतनिका सदस्या अभवन् ।

पुरमण्डलपाठशालायामपि तस्या प्रथम सस्थापक सचालकोऽध्यापकश्च श्रीचक्रपाणिरेव अद्यापि क्षीयमाणन पाठशालानेवरेण चिन्तामापन्न सस्कृतभाषा

प्रति क्रमशो वर्धमानं जनरुचेरौदासीन्यमवलोक्य मनसि खिद्यमानः, शरीरेण क्षीणोऽपि पुनरेकदा केनापि चमत्कारेण निजपाठशालायां संस्कृतभाषाज्ञानपिपासूनां, कर्मकाण्ड शिक्षार्थिनां च स्थानीयबालच्छात्राणां कल्पनामनोज्ञबाहुल्यं द्रष्टुमीहमानः समयवात्याचक्रस्य संस्कृतप्रतिकूलमुपद्रवं प्रति केवलं निःश्वासैर्निजप्रतिक्रियां प्रकटयन् बालानां नागराक्षरबोधलालसामेव महता प्रयत्नेन चरितार्थतां प्रापयन् कार्यं करोति ।

पाठशालायाः स्थितेर्विषयेऽसौ वदति यत् 'अस्मिन् युगे एतद्विषये जनरुचेह्रासाद् विद्यार्थिनां सख्यायामपि क्रमेण ह्रास एव वर्तते । मम स्वास्थ्यमपि यथापूर्वं नास्ति । अतो ममैव विनम्रा प्रार्थना यत् पाठशालासञ्चालनकार्यमपि अन्यस्मै कस्मैचित्तरुणाय दीयताम् । अतिदुर्बलोऽहं जात इति । श्रुत्वेदं मनस्याघात इव भवति । कालोऽयमेव निष्कृपो जातः संस्कृतभाषां प्रति यत् प्रायेण दशकद्वयं यावत् सामान्यां सहायवृत्तिमुपलभ्यापि निजोत्साहेन संस्कृतप्रचारार्थं प्रयतमानस्यैतादृशस्यापि साधोश्चेतसि अद्य केवलं नैराश्यमेव घनीभूतं वर्तते । पाठशालायाः अष्टादशवर्षीयेऽस्मिन् जीवनकालेऽतिसीमितोपलब्धसाधनसौकर्येऽप्यनेके बालाः संस्कृतशिक्षायां दीक्षिताः प्रारम्भिकज्ञानमुपलभ्य पञ्चनदविश्वविद्यालयीयसंस्कृतपरीक्षासु प्रवेशयोग्या भूत्वा निर्गताः । 'प्राज्ञ' इत्यभिधेया प्रथमकक्षामुत्तीर्य पाठशालान्तरप्रवेशयोग्या अभवन् । कर्मकाण्डशिक्षा केनापि शिक्षाविधिना सबद्धा नासीत् । एदतर्थं वृत्तिजीविना बालका होडाचक्र, कर्मकाण्डशिक्षणोपयुक्तमन्यच्च प्रारम्भिक पाठ्यक्रममधीतवन्तः । बहवस्तु देवनागरीलिपिबोधं प्राप्य राजकीयप्राथमिकविद्यालयेषु प्रवेशार्थं योग्या भूत्वा निरगच्छन् ।

एतत्तु प्रायेणानुभूतं यद् यत्र यत्रापि युत्रचित्पाठशालासमकक्षो राजकीय प्रारम्भिकविद्यालयः स्थापितोऽभवत् । तत्रैव निश्चितरूपेण पाठशालायामध्येतृणां सख्या क्रमशः क्षयाभिमुखी जाता । लोकरुचिस्तावद् बलवत्तरा । जीवनसघर्षस्य विषमतायां पाठशालीयशिक्षणापेक्षया विद्यालयीयशिक्षा जीविकार्जनलालसाकुलजनस्य उत्तरोत्तर महत्त्वहीनाऽभवत् । 'प्राइमरी परीक्षोत्तीर्णोऽपि बालकः अक्षरज्ञोऽयमिति राजकीयविद्यालयेषु अन्यत्र वा यथाचतुर्थवर्गनियुक्तियोग्यो भवति, न तथा संस्कृत शिक्षितः । उपयोगिता तावदादर्शमसृणतामलोपयत् । इत्येवाद्यत्वे मस्कृतप्रचारोत्साहक्षीणताकारणम् ।

पुरमण्डलपाठशालाया इव अन्यसंस्कृतपाठशालानामपीनिवृत्तं वर्तते, तासु चतस्र उल्लेखयोग्याः सन्ति । एका पाठशाला 'मिडी' इति नाम्नाऽन्याने स्थाने आसीत् ।

अन्या (फलायाम्) इति जम्बूनगरतो दक्षिणदिशि तवीधारान्तर्वर्तिषु ग्रामेषु प्रसिद्धे ग्रामे श्रीस्वर्गिमनीषिवररामकृष्णशास्त्रिभिः सञ्चालिताऽभवत्। एका ऊधमपुरनगरस्य समीपे (नगरोटाभिधाने ग्रामे) पण्डितवर (स्वर्गि) ठाकुरदत्तमहोदयेन सञ्चालिताऽऽसीत्। रियासीनगरेऽपि कियत्कालपूर्वं तत्रत्यवैद्यवर्यैः श्रीठाकुरदत्तमहोदयैरत्यन्तमुत्साहेन सञ्चालिता पाठशाला। आसां पाठशालानां मध्ये ऊधमपुरे नगरोटास्थानीया अष्टाधिकद्विसहस्रतमे (२००८) विक्रमसंवत्सरे श्रीठाकुरदत्तमहोदये दिवं गते स्थापिताऽभवत्।

रियासीवास्तव्यश्रीठाकुरदत्तमहोदयेनापि स्वेच्छयैव पाठशालाकार्यं परित्यक्तम्। दशरूप्यकाणां मासिकीवृत्तिस्तावदनुपयुक्ताऽऽसीत् चिकित्साकार्येऽप्यनेन कार्येण यत्किञ्चिद्व्यतिक्रमोऽभवदेव। फलायापाठशालासंस्थापके श्रीविद्वद्वररामकृष्णमहोदये देवभूयं गते श्रीजगन्नाथाभिधेयः कश्चिद्विद्वान् तत्कार्यं सम्यक्तया सञ्चालितवान्। असौ विद्वान् दशरूप्यकाणां मासिकीं वृत्तिं लभते स्म। झिडीस्थानीया पाठशाला सप्तचत्वारिंशदधिकैकोनविंशतिशततमे (१९४७ ई०) वर्षे स्थगिताऽभवत्। तत्स्थाने पञ्चाशदधिकैकोनविंशतिशततमे (१९५० ई०) वर्षे लालाचक्कनाम्नि ग्रामे श्रीविश्वनाथेनैकेनोत्साहिना पण्डितेन स्थापिता पाठशाला मासिकीं वृत्तिं लब्धुमारेभे। फलायास्थितपाठशालानन्तरं शोभाञ्जनाऽभिधेये ग्रामे सङ्क्रान्ताऽभवत्। यत्रत्यः श्रीहरिरामशर्मा तस्याः सञ्चालनं व्यधत्त। श्रीहरिरामशर्मणि क्वचिद्राजकीये विद्यालये नियुक्ते श्रीदेशबन्धुनामैक उत्साहपूर्णो नैष्ठिको वर्णी तत्र दशरूप्यकाणामत्यल्पामपि मासिकीं वृत्तिं स्वीकृत्य पाठशालाकार्यं रुच्योत्साहेन च कर्तुमारेभे। पाठशालाऽपि तत्प्रयासेन तद्वासभूमौ बदवालग्रामे सङ्क्रान्ताऽभवत्।

अस्मिन् काले उपर्युक्तानां विविधानां पाठशालानां केवलं तिस्रः पुरमण्डले लालचक्कग्रामे, नदवादग्रामे च नाम्नैव संस्कृतपाठशालेत्यभिधां धारयन्त्यो जीवन्ति। परमधुना तत्र संस्कृतस्य कर्मकाण्डस्य वाऽध्ययनं प्रायेणातीतस्य चर्चैव कथ्यते। तत्र छात्राणां संख्या तावदुत्साहवर्धिकैवास्ति। मासिकी वृत्तिरपि गतवर्षेभ्यो वृद्धिं गता। अधुना पञ्चत्रिंशद्रूप्यकमासिकवृत्तेरपि गतवर्षेभ्यश्छात्रास्तत्र संस्कृतस्य कर्मकाण्डस्य च शिक्षणार्थं नायान्ति। अधुना एतासु पाठशालासु इमे छात्राः प्रवेशिकाकक्षाणां पाठ्यक्रमं हिन्दीमाध्यमेन पठितुं प्रवेशार्थिनो भवन्ति। प्रवेशिकास्तरं समाप्य केचिच्छात्रास्तृतीयवर्गपर्यन्तं तत्रैव शिक्षां लब्ध्वा तदा समीपवर्तिनि कस्मिंश्चित्प्राथमिकविद्यालये चतुर्थश्रेण्यां प्रविशन्ति। क्वचिदेव कदाचित् कश्चिद्बालः कर्मकाण्डस्य

शिक्षामीहते । सामान्यतया ऐग्जामिनेशनवोर्डसज्ञस्य परीक्षामण्डलस्य नियन्त्रणे स्थिताना पाठशालानामियमेव करुणामयी स्थितिर्वर्तते । आसा पाठशालाना सक्षिप्तोऽप्युल्लेखोऽयमसम्पूर्ण एव स्यात् । यदि चात्र फलायापाठशालाया सस्थापकस्य स्वर्गिश्रीरामकृष्णमहोदयस्य ऊधमपुरे नगरोटाग्रामे सस्कृतपाठशालाया सचालकस्य दिवगतश्रीठाकुरदत्तमहोदयस्य च पुण्यस्मृतौ श्रद्धाया पुष्पद्वय नार्प्येत, तदा नि शुल्कसस्कृतमेवाया मूल्य नोपकल्पेत । अनयोर्द्विद्वद्वरयो साक्षात्कारो यै कृतस्तै श्रीठाकुरदत्तमहोदयाना तत्कार्यरुचि, सरलता, दैहिकदौर्बल्य, निजार्थिककृच्छ्रता चोपेक्ष्य सस्कृतस्य कृते क्रियमाण तेषा निश्छल नि स्वार्थं च परिश्रममालोक्यानुभूयते स्मैतद् यथा किल कोऽपि पुराकालीन सस्कृताश्रम एव स्यात् । दशरूप्यकाणा नगण्या मासिकी वृत्तिमपि बहुमन्यमाना पण्डितवर्या सत्यरूपेण सस्कृतभाषाया हितैषिण प्रचारकाश्चाभूवन् । तादृशी त्यागवृत्तिरेव तदानी सस्कृतभाषाया प्रचार लोकप्रिय कर्तुमलमासीत् । समयानुकूलिता तु तत्सहायिकाऽभवदेव । एवमेव श्रीरामकृष्णमहोदयानामपि वाग्मिता, कलानुरागम्, आत्मदेशीयपुरातनसास्कृतिकपरम्परागौरवम्, ऐहिकलाभोपेक्षाम् आभिरसाधारणगुणग्रामप्रभाभिश्च द्योतिता तेषा कृशामपि प्रभावशालिनी देहलता निजकल्पनालोकेऽद्यापि प्रत्यक्षामिव पश्यन्ति बहव ।

यदा च ते दारिद्र्यधाघरट्टपुटयोरन्तरे पिष्यमाणमपि परिवार परित्यज्य फलायानाम्नि स्थाने गत्वाऽऽश्रम सस्थाप्य सस्कृतस्य नि शुल्कमध्यापन प्रारेभिरे, तदा स्वाभाविकतया तत्तपस्वित्व परा काष्ठा जगाह । तदानी च जनेषु द्विविधा प्रतिक्रिया समदृश्यत । केचित्तस्य द्विजोत्तमस्य गृहस्योत्तरदायित्वान्युपेक्ष्यैव निर्गमन पलायन मत्वा निन्दामकुर्वन् । अन्ये ये तस्य वैराग्यबुद्धचा, नि स्वार्थभावनाया सस्कृतानुरागस्य चाभिज्ञा आसन्, तेषा कृते श्रीरामकृष्णमहोदयस्य कृत्यमिद सर्वथा नैसर्गिकमभूत् । मोहपाशमभङ्क्त्वा कोऽप्यस्मिन्दुर्गमे त्यागवर्त्मनि चलितु न पारयति । मोहपाशोऽय तावदतितरा लोहशृङ्खलोपमित सर्वैर्न बोद्ध्यते । तदर्थमसाधारणमात्मपौरुषमलौकिक च मनोबलमप्यपेक्ष्येते । दिवगतश्रीरामकृष्णसदृश एव मनीषी एतत्पथपान्थो भवितुमर्हति ।

## (१०)

## श्रीरणवीरसंस्कृतपाठशाला

अस्या परिचय पूर्वं 'श्रीरणवीरहाईस्कूलस्था सस्कृतपाठशाला'-नाम्ना प्रस्तुत । इति नात्रास्या विषये किमप्यवशिष्यते वक्तुम् ।

## (११)

## श्रीविद्याधरशैवाश्रमनिधिपा (ट्रष्ट संस्था) कर्णनगरम् (श्रीनगरम्)

### १ स्थापना—

श्रीविद्याधरशैवाश्रमनिधिप स्थापना २००८ वैक्रमाब्दे स्वामिनो विद्याधर-तपस्विन शिवलोकगमनानन्तरमभवत् ।

### २ उद्देश्यम्—

शैवाद्वैतमतस्य प्रचारप्रसारकरणम्, शैवग्रन्थाना पठनपाठनादिव्यवस्थापनम् आश्रमस्य सरक्षणञ्च निधिपो मुख्योद्देश्यम् ।

### ३. सस्थापकस्य परिचय —

स्वामी विद्याधरो महाराज, यस्य शुभनाम्नाऽश्रम स्थापित, स काश्मीर-प्रसिद्धयोगीन्द्रस्य स्वामिनो रामस्यान्तरङ्ग शिष्य आसीत् । ब्रह्मनिष्ठ श्रद्धेय स्वामिवर १९४२तमे सवत्सरे आषाढशुक्लत्रयोदश्या स्वजन्मना भूमण्डलमलञ्चकार स्वामिवरो वैराग्ये, तपसि, विद्वत्ताया च सर्वत्र देशे ख्यातिमलभत । तपसि श्रेष्ठोऽसौ सस्कृतस्य विद्वत्तयाऽवदातान्त करण आसीत् । स्वरचितस्तोत्रैरन्याभिश्च कृतिभिर्जनाना चेतासि मोदयाञ्चकार । महात्ममूर्धन्योऽसौ "जातस्य हि ध्रुवो मृत्यु" इति नियमानुसार २००६तमे सवत्सरे ब्रह्मसायुज्य लेभे । एतस्य तपस्विपादस्य जीवनवृत्तान्त उक्त-निधिपाद्वारा प्रकाशित हिन्दीभाषानिबद्ध पुस्तकरूपेण विराजते ।

### ४ निधिपासदस्याना नामानि—

१ श्रीकण्ठरैणा सभापति ।
२ श्रीमहेश्वरनाथतिक्कू उपसभापति ।
३ श्रीदीनानाथवारिक्कू ज्योति पत्रसम्पादक, मन्त्री ।
४ श्रीकेशवनाथतिक्कू कोषाध्यक्ष ।
५ श्रीदीनानाथभट्ट सदस्य ।
६ श्रीनीलकण्ठवाञ्च्रू सदस्य ।
७ श्रीदामोदरसराफ सदस्य ।
८ श्रीअमरनाथतिक्कू सदस्य ।
९ श्रीकेशवनाथमाव सदस्य ।

५. चलाचलसम्पत्ति.—

कर्णनगरे आश्रम , पुस्तकालयश्च ।

६ पुस्तकानां संख्या ।

आश्रमस्य पुस्तकालये ३०० शतत्रय सस्कृतपुस्तकानि, तदतिरिक्ता हस्त-लिखिता ग्रन्था २५ पञ्चविंशतिप्राया सन्ति ।

७ गतवर्षाणां कार्यक्रम·

गताब्देषु निधिपा स्वोद्देश्यानुसार कार्यं विदधान आसीत् । शैवग्रन्थाना नियतरूपेणध्यापन प्रतिदिनमर्चास्तवादिक भवति स्म । प्रतिवर्षं गुरुदिन सश्रद्ध समा-योज्यते । एतस्मिन्नवसरे यज्ञस्य समारम्भोऽपि भवति । नूतनवयसां सुकुमारमतीना स्वधर्मे श्रद्धास्नेहोत्पादनकार्यक्रम सचाल्यते । एतदतिरिक्तानि च प्राय सर्वाणि हिन्दुपर्वाणि समये सम्पाद्यन्ते ।

८ संस्कृतस्य प्रचारः—

सर्वसाधारणजनाना विशेषतो नवयुवकाना शैवागमाध्यापनेन सस्कृतस्य प्रचार-कार्यं सम्पाद्यते ।

९. प्रकाशिता ग्रन्था —

एतन्निधिपाद्वाराऽद्यावधि निम्ननिर्दिष्टा हिन्दीसस्कृतभाषामया ग्रन्था प्रकाशिता अभवन् ।

१—गुरुमहाराज का जीवन चरित्र । २—नित्यपाठ पुस्तक । ३—गुरु-स्तुति । ४—गुरुआरती । ५—स्वामीजी के रचित स्तोत्र । अर्थाभावात् कतिपयग्रन्थाना प्रकाशनमवरुद्धमस्ति ।

१० आगामी कार्यक्रमः—

१ त्रिकमतस्य व्यापक प्रचार ।
२ शिवग्रन्थानामध्यापनाय विभिन्नेषु स्थानेषु वर्गसचालनम् ।
३ शैवाचार्याणा व्यापकतया पर्वदिनायोजनम् ।
४ प्रकाशनविभागस्य विस्तर ।

(१२)

**श्रीरूपादेवी-शारदापीठम् (ट्रष्ट) श्रीनगरम् ।**

**१. स्थापना —१६५३ वर्षे ।**

**२ संस्थापक —**महागाणतिक श्रीपरमानन्दमहोदय ।

जम्बूकाश्मीरराज्यस्य भूतपूर्वेण महागाणतिकेन श्रीपरमानन्दमहोदयेन स्वकीयस्य पुरोविदन्तनिधे ( प्राविडटफण्ड ) ५५,००० पञ्चपञ्चाशत्सहस्ररुप्यकराशे 'श्रीरूपादेवीशारदापीठम्' इति नाम्ना संस्कृतप्रधानस्य महिलाशिक्षाकेन्द्रस्य स्थापना १६५३ वर्षे श्रीनगरमध्ये श्रीरघुनाथमन्दिरेऽकारि । आरम्भत एव एतया संस्थया संस्कृतस्य मूर्द्धन्यविदुषा महाराजश्रीकर्णसिंहस्य च संरक्षकत्व प्राप्तम् ।

संस्थापकेन पण्डितपरमानन्दमहानुभावेन स्वय महता परिश्रमेण संस्कृतभाषाया अध्ययन विधाय राज्ये लुप्तप्राया संस्कृतस्य महत्ता पुनर्जागरयितु महान् प्रयास कृत । सेवातोऽवकाशप्राप्त्यनन्तर स्वस्यैकमात्रपुत्र्या स्वर्गताया श्रीरूपादेव्या नामत संस्कृतप्रचारार्थमुक्तसंस्थाया स्थापना विधाय दशवर्षैस्तत्सचालनाय आदर्शकार्याणि क्रियन्ते ।

**३. उद्देश्यम्—**

(क) काश्मीरस्य प्राचीननामधेयेन सबद्धस्य श्रीरूपादेवीशारदापीठनाम्न एकस्य संस्कृतमहाविद्यालयस्य स्थापनम् ।

(२) पुरुषवर्गाणा कृते संस्कृतशिक्षार्थं रात्रिपाठशालासचालनम् ।

(ख) धर्मार्थकाममोक्षसाधकैहिकपारलौकिकोभयविधशिक्षाप्रदानम् ।

(ग) संस्कृतशिक्षातिरिक्तेष्वावश्यकतानुसारमन्येष्वपि क्षेत्रेषु शारदापीठ शिक्षाप्रदान भवेत् । एतदतिरिक्ताना पाठ्यक्रमे निम्नलिखिताना विषयाणामप्यध्यापन भविष्यति । यथा १—रामायणमहाभारतयो । २—श्रीमद्भगवगीताया ३—वेदान्तसाख्यकाश्मीरशैवदर्शनानाम् ४—सगीतस्य । ५—योगासनानाम् । ६—आयुर्वेदस्य ।

(घ) षड्वर्षीया बालिका यदा संस्थायामध्ययनाय प्रवेक्ष्यति तदा तस्यै वार्तालापक्रमेण संस्कृतशिक्षाप्रदान भविष्यति । अनन्तर तु पुस्तकादिद्वारा । प्रारम्भिकीषु हिन्दीमाध्यमिककक्षासु हिन्दी संस्कृत च, अन्तत केवल संस्कृतमेव शिक्षायामाध्यम भविष्यति ।

(ड) वैकल्पिकरूपेणाङ्गलभाषाया अपि शिक्षाप्रदान भविष्यति ।
(च) सस्थानस्य बोधचिह्न निम्नलिखितश्लोकपङ्क्तिर्भविष्यति ।

'गृहिणी सचिव सखी मिथ प्रियशिष्या ललिते कलाविधौ' इति । एतत्सस्थाया स्वचालिता निम्नलिखिता परीक्षा भविष्यन्ति ।

१ प्रज्ञावती (मैट्रिकपरीक्षासमा ।)
२ विदुषी (एफ०ए० परीक्षासमा)
३ भारती (बी०ए० परीक्षासमा)
४ सरस्वती (एम०ए० परीक्षासमा)
५ शारदा (डाक्टरेटोपाधिसमा)
६ ब्रह्मवादिनी (वासामेव कृते या यावज्जीव ब्रह्मचारिण्यस्तिष्ठयु ) कलाक्षेत्रेषु निम्नलिखिता परीक्षा भविष्यन्ति १—गृहलक्ष्मी । २—गृहमेधिनी । ३—लीलावती । ४—कलावती ।

४. पदाधिकारिण —

१ बाबाबलवन्तसिंह (भूतपूर्वो विद्यालयनिरीक्षक )
२ डा० कुलभूषण स्वास्थ्याधिकारी (हेल्थ आफिसर )
३ पठानियोपनामक डा० हरनामसिंह (भूतपूर्वो वनसरक्षणविभागाध्यक्ष )
४ ला० सुन्दरलाल (अधिवक्ता एडवोकेट)
५ श्रीमती चन्द्रमोहिनी (वजीरोपपदा)
६ प० श्रीधरभूधर (भूतपूर्वो वनसरक्षणविभागाध्यक्ष )
७ प० नन्दलाल कितरू (श्रीनगरस्थस्य श्रीगाधीस्मारकप्रशिक्षणकालेजस्याध्यक्ष ।)
८ प० गोपीकृष्ण समाजसुधारसमिते, श्रीनगरस्थाया प्रधान ।
९ प० जियालालकौलो जलाली, (प्राप्तावकाश उपराज्यपाल )
१० प० त्रिलोकीनाथमट्टू (न्यायाधीश )
११ प० विश्वम्भरनाथ नेहरू (अधिवक्ता, श्रीनगरनगरपालिकाया भूतपूर्वोऽध्यक्षश्च ।)
११ प० श्रीधरकौलो डुलू (विद्यालयाना भूतपूर्व उपनिरीक्षक )
१३ प० जियालाल सराफ (प्राप्तावकाश वस्तुप्रापणनियामक )

१४ प० श्रीकण्ठकौल (करविभागमादकवस्तुविभागयोर्भूतपूर्व उपप्रत्यवेक्षक)।

१५ प० परमानन्द (भूतपूर्वो महागाणतिक)

१६ डा० एस्० एन० पेशिन (श्रीनगरस्थस्य राष्ट्रियचिकित्सालयस्यव्यवस्थापक ।

**५. चलाचलसंपत्तय :—**

विद्यालयभवन तथा रगभूमि (द्विलक्षपरिमितधनमूल्य यदीय सरक्षण (*बीमा*) *कारितमस्ति*)

**६. पुस्तकालय —**

पुस्तकालये ८०० अष्टशत विविधविषयाणि सस्कृतस्य पुस्तकानि सन्ति ।

**७. गतवर्षाणामितिहासः—**

गतवर्षेषु उपर्युक्तोद्देश्यानुसार शिक्षाप्रदानमभूत् । जम्बूकाश्मीरविश्वविद्यालयेन सचालितासु सस्कृतप्राज्ञविशारदशास्त्रिपरीक्षासु छात्रा अध्यापिता केवलसस्कृतकक्षासु महिलाच्छात्रार्थं चत्वारिंशच्छात्रवृत्तय सरक्षिता सन्ति । समये समये विशिष्टा महानुभावा सस्थाकार्यसन्दर्शनार्थमाहूता । महाराज वर्णसिंहोऽनेकश स्वागमनेन सनाथीकृत्य महिलासस्कृतच्छात्राणा सस्कृतभाषावद्ध वार्तालाप श्रुत्वा नितान्त मोद लभते । छात्राभ्यो वितरणार्थं मिष्टान्नानि च सहैव समानयति ।

एतत्सस्थाया सुव्यवस्थात सचालनार्यकोऽवैतनिको व्यवस्थापको नियुक्तोऽस्ति । एतत् पद श्रीनगरस्थस्य श्रीप्रतापमहाविद्यालयस्य सस्कृतहिन्दीविभागाध्यक्ष *श्रीकाशीनाथदर मुशाभयति ।*

अध्यापनाय च सुयोग्यानामध्यापकाना सेवाऽधिगताऽस्ति । सस्कृतस्य नि.शुल्कशिक्षा प्रदीयते । गतेषु वर्षेषु वाराणस्या प्रसिद्धैराचार्यवर्यैरेतत्सस्थायामध्यापनमकारि १९६२, ६३ वर्षे सस्कृतशिक्षार्थं १०,००० दशसहस्ररूप्यकात्मको राशि व्ययीकृत ।

**८. सस्कृतस्यातिरिक्तानि कार्याणि—**

*गतवर्षेषु उपर्युक्तोद्देश्यानुसार शिक्षाप्रदानमभूत् ।*

सस्कृताध्ययनातिरिक्त जम्बूकाश्मीरविश्वविद्यालयद्वारा सचालितानाना

हिन्दीरत्नभूषणप्रभाकराणा तथा प्रथमश्रेणीतो बी० ए० श्रेणीपर्यन्ताना परीक्षाणा पाठ्यक्रमाध्यापनस्यापि व्यवस्थास्ति । उक्तासु कक्षासु छात्राणा कृते सस्कृताध्ययनमनिवार्यं कृतमस्ति ।

६. आगामी कार्यक्रमः

१ सस्कृतानुसन्धानकेन्द्रस्य स्थापना ।

२. सस्कृतपत्रिकाया प्रकाशनम् ।

३. सस्कृतप्रचारार्थं भारतसर्वकारयोजनानुसार काश्मीरप्रदेशे कार्यसचालनम् ।

(१३)

*श्रीरामशैवाश्रमः, फतेहकदलम्, श्रीनगरम् ।*

१. स्थापना—

श्रीरामशैवाश्रमस्य फतेहकदलस्थस्य, श्रीनगरे स्थापना १९३५ विक्रमाब्दे गुरुदेवश्रीमहामहेश्वराचार्यश्रीरामजीमहानुभावै कृता ।

२ उद्देश्यम्—

गुरुदेवाना महामहेश्वराचार्याणा श्रीमता रामजीस्वामिमहात्मना भूमण्डलेऽवतरणकाले काश्मीरप्रदेशे प्राचीनदर्शनाना शैवदर्शनस्य चाध्यापनस्य ह्रास आसीत् । राजानकाना कियताचिद् एतद्विषये यद्यपि शैथिल्य नासीत् । तथापि जीविकोपार्जनप्रसङ्गे ईर्ष्यालिवन्त करणतया ते शैवदर्शन सर्वसाधारणाना चेतसि प्रापयितुमसमर्था एवासन् । अतो गुरुदेवै श्रीरामस्वामिमहानुभावै स्वस्नातकावस्थाया श्रीनगरमध्ये शैवदर्शनप्रचारार्थतस्याश्रमस्य स्थापना कृता । गुरुदेवाना निर्वाणानन्तरमाश्रमस्य परम्परा तेषा प्रधानशिष्येण श्रीगोविन्दकौलेन स्वकीय निर्वाणसमय (२०१५) विक्रमाब्द यावत् सुचारुरूपेण विकासिन्येव रक्षिता । आश्रयस्योद्देश्य सक्षिप्तरूपेण निम्नलिखितमस्ति ।

१ शैवदर्शनजिज्ञासूना नि शुल्कमध्यापनम् ।

२ शैवदर्शनस्य पाश्चात्यदर्शनाना च तुलनात्मकमध्ययनम् ।

३ समुपलब्धशैवदर्शनग्रन्थाना हिन्द्यनुवाद प्रकाशन च ।

४ जनतासु शैवदर्शनस्य प्रचार ।

५ एतस्याश्रमस्य स्थाने स्थाने शालास्थापनम्, यत्र शैवदर्शनसम्बद्ध-प्रवचनानामायोजन भविष्यति ।

३ सस्थापकस्य परिचय

उपर्युक्ताश्रमस्य सस्थापकस्य श्रीगुरुदेवरामजीस्वामिमहानुभावस्य जन्म १६१० विक्रमाब्दे पौषकृष्णद्वादश्या मालिन्या सर्वप्रसिद्धस्य ज्ञातुर्ब्राह्मणवरस्य श्रीशुकदेवमहानुभावस्य भवनेऽभवत् ।

श्रीरामजीमहाराज १६ षोडशवर्षीयावस्थायामेव भारतदर्शनाना सर्वासा कक्षाणा पारङ्गतोऽभवत् । अनन्तर शैवदर्शनकक्षाया प्रवेशमकरोत् । शैवदर्शनस्य प्रक्रियाया अधिक ज्ञान तस्य स्वपितृव्यचरणाना श्रीमतामीश्वरदेवमहानुभावानामेव सविधेऽभवत् । शिष्टग्रन्थानामध्ययन तद्दर्शनस्याद्वितीयविद्वद्वरस्य श्रीमनकाकमुगा-महानुभावेभ्य एवाभवत् । येन शैवसिद्धान्ताना प्रकर्ष एतेषा चेतसि व्याप्तोऽभूत् । स्वकीयाष्टादशवर्षीयायुषि स्वकीयमध्ययन समाप्य स्वकीयेऽस्मिन्नाश्रमे समागत्य शैवदर्शनस्याध्यापनायैते सलग्ना जाता । (४५) पञ्चचत्वारिंशद्वर्षीयायु पर्यन्तमेव क्रम धाराप्रवाहोऽचलत् । अनन्तर कियत्कालायैभिर्महात्मभिर्मौनमासादितम् । (५०) पञ्चाशद्वर्षावस्थानन्तर स्वकीयविपुलशिष्यवर्गान् प्रत्यभिज्ञादर्शनमध्यापयामासु । (५५) पञ्चपञ्चाशद्वर्षीयावस्थापर्यन्तमेष क्रमश्चलित । अनन्तरमेष मालिन्या-ख्यावस्थायामतिष्ठत् । अवस्थेय निर्वाणसमयपर्यन्तमासीत् । (६०)षष्टिवर्षीयावस्थाया शिवचतुर्दश्या चैभिर्निर्वाण लब्धम् ।

४ निधिपा (ट्रस्टिनां) नामानि—

| | |
|---|---|
| १ प० ताराचन्द्रकौल | प्रधान । |
| २ प० प्रेमनाथनेहरू | उपप्रधानो, दर्शनाध्यापकश्च । |
| ३ प० राधाकृष्णकौल | परामर्शदाता । |
| ४ प० श्यामलालसराफ | " |
| ५ प० बालकृष्णकारिहल्लू | महासचिव । |
| ६ प० जगन्नाथबजाज | सयोजक , प्रत्यभिज्ञादर्शनाध्यापकश्च । |
| ७ प० महेश्वरनाथगजू | पुस्तकपाल , कोषाध्यक्षश्च । |
| ८ प० श्यामलालदर | गणक । |
| ९ प० काशीनाथकौल | कार्यवाहक । |
| १० प० दीनानाथमूजू | दार्शनिकपरामर्शदाता । |

५ चलाचलसम्पत्तय —

(क) आश्रमस्य कुटीरम् ।

(ख) सरस्तीरे भूखण्डम् ।

(ग) सहस्रद्वयमित सचिता धनराशि ।

६ गताब्दाना सक्षिप्त कार्यक्रम —

गतपञ्चाशीति (८५) वर्षत आश्रम स्वकीयोद्देश्यानुसार कार्यं सम्पादयति । प्रतिदिन प्रातरारम्य नववादनवलापर्यन्त शैवदर्शनस्य कक्षा प्रचलन्ति । एतासु कक्षासु नार्यो भाग गृह्णन्ति । सुविधानुसार प्रकाशनस्य व्यवस्था कारितास्ति । समये समये उत्सवादीना महता समारोहेणायोजन क्रियते ।

७ पुस्तकालय —

पुस्तकालये चतुश्शत ४०० सस्कृतदर्शनाना ग्रन्था सन्ति । तसु पञ्चाशीति (८५) शैवदर्शनस्य महत्वपूर्णा पाण्डुलेखा सन्ति । एतसु एका मुद्रिता, शिष्टा अमुद्रिता सन्ति ।

८ प्रकाशनम्—

शैवदर्शनस्य प्रचारापर्यागेन शिवरात्रिपर्वणो महत्वद्योतकस्य पुस्तकद्वयस्य हिन्दीभाषाया तथा काश्मीरप्रदेशे सुबहुप्रचलितस्य पचस्तवीनामकग्रन्थस्य भाषानुवाद-सहितस्य सस्कृतेऽस्मन्नवाब्द प्रकाशनमभवत् ।

प्रकाशनार्थं निम्नलिखिता ग्रन्था हिन्द्यनुवादसहिता प्रस्तुता सन्ति—

१ शिवसूत्रविमर्शिनी ।

२ प्रत्यभिज्ञाहृदयम् ।

३ स्पन्द ।

४ साम्बस्तुति ।

५ श्रीगीता (अभिनवगुप्ताचार्यकृतटीका सहिता)

६ तन्त्रालोक ।

मुद्रणयन्त्रालयस्यासौविध्येनार्थिकवैकल्येन चोक्तग्रन्थाना प्रकाशनमद्यावधि नाभवत् ।

६ आगामी कार्यक्रम

आगामिषु वर्षेषु स्वोद्देश्यानुसारं व्यापकरूपेण कार्यकरणाय क्रमः स्थापितोऽस्ति। तत्र विविधस्थानेषु शैवदर्शनस्याध्यापनार्थं शाखास्थापनं शैवग्रन्थानां च प्रकाशनं च प्रधाने स्तः।

## (१४)

## पाणिनीयार्यसंस्कृतमहाविद्यालयः

### जम्बू

अस्ति जम्बूराजधान्यां प्रत्नाग्लौषधालयराजमार्ग (पुरानाहस्पतालरोड) सविधे 'आर्यसमाजाभिधम्' विपुलं सत्सङ्गभवनम्, यस्मिन् प्रत्यहं श्रीदयानन्दानुयायिनः सपत्नीकाः सबालवृद्धाः प्राभातिकमग्निहोत्रं विधाय वेदोपनिषद्दर्शनानां प्रवचनानि समाकर्णयन्ति। प्रतिरविवासरमत्र सम्मेलनं भवति, यस्मिन् स्थानीयानां समभ्यागतानां च विदुषां वेदप्रवचनानि, व्याख्यानानि, साधूनां सदुपदेशाश्च भवन्ति।

आर्या इमे प्रायः सर्वे आंग्लादिभाषावेदिनोऽपि संस्कृतैकपक्षपातिनः सरलातिसरलं संस्कृताध्ययनाध्यापनविधिमन्विष्यन्तः, स्वार्यकन्यापाठशालायां प्रायस्त्रयोदशशताधिकासु कन्यासु चत्वारिंशद्भ्योऽप्यधिकाध्यापकाध्यापिकासु शृण्वन्तीषु, स्वसत्सङ्गभवने च समुपस्थितेषु शतशो व्याकरणाऽभिलापनश्रवणकुतूहलिषु विद्वत्सु व्याकरणप्रवचनप्रवीणस्य श्रीब्रह्मदत्तजिज्ञासोः पाणिनीयाऽष्टाध्याय्यध्ययनाध्यापनसौकर्यविषयकं व्याख्यानद्वयमचीकरन्। पाणिनीयव्याकरणमर्मविदोऽस्य महात्मनो व्याख्यानप्रभावप्रतिभासितान्तरात्मानो वेदैकधर्मशरणा आर्याः "यो वेद वेदवदनं सदनं च सम्यग्ब्राह्म्याः स वेदमपि वेद, किमन्यशास्त्रम्" इति भास्कराचार्योक्तिं संस्मृत्य संस्कृताध्ययनाध्यापनसौकर्यार्थम्, सारल्येन वेदानामर्थांश्चावगन्तुं स्वीयेऽस्मिन् सत्सङ्गभवने वह्निरसविहगविधुमिते १९६३ ख्रिष्टाब्दे दिसम्बरमासस्य चतुर्दशतारिकायां श्रीब्रह्मदत्तजिज्ञासोः करकमलाभ्यामिमं "पाणिनीयार्यसंस्कृतमहाविद्यालयम्" समुदजीघटन् योगेन्द्रकुमारशास्त्रिणं चात्रत्यार्यपुरोहितं प्रधानाचार्यपदमध्यतिष्ठिपन्।

अयं पाणिनीयार्यसंस्कृतमहाविद्यालयकल्पपादपश्च स्वल्पैरेवाहोभिरार्य्याणां परमौदार्य्यपरिवृत्तिपरिरक्षितो मानवप्रोत्साहनदोहददानाप्यायितः सामाजिकसाहाय्याचरणसद्व्यवहारसदाचारपयोभिरभिवृष्य वर्धितः पत्रितः पुष्पितः फलितश्च भविष्यति

इति दृढमाशास्यते । धन्याश्चेमे आर्या ये सुरगिरमेव स्वतन्त्रराष्ट्राचिता भाषा मन्यमानास्तत्प्रचारार्थं बद्धपरिकरा इव दिवानिशं प्रयतन्ते । युक्तं चैतत्, यतो हि—

मधुरा ध्वनयो यस्या वर्णा नैसर्गिकास्तथा ।
बालवृद्धैः समुच्चार्या भाषा सा राष्ट्रसम्मता ॥
संस्कृतान्नापरा भाषा तादृग्गुणगणान्विता ।
अतः राष्ट्रं समुन्नेतुमध्येयं संस्कृतं सर्वैः ॥ इति ।

(१४)

आर्यसंस्कृतकन्यापाठशाला, स्वामिदयानन्दमार्गे,

(हस्पताल रोड) आर्यसमाजमन्दिरे, जम्मूनगरे

यथा सुशिक्षिता नरा राष्ट्रपुरुषस्यैकं नेत्रम् तथैव नार्य्योऽपि सुशिक्षिता एव तस्य द्वितीयं नेत्रम् । किञ्च सन्तानस्य मातैव परमो गुरुः । गुरोरशिक्षितत्वे शिष्याणां शिक्षणं गगनकुसुमायते । इत्येवमादि सर्वं जानाना आर्य्या बाणवेदविहगवसुमतीमिते १९४५ ख्रिष्टाब्दे स्वामिदयानन्दमार्गस्थे आर्य्यसमाजमन्दिरे आर्य्यसमाजसंस्कृतकन्यापाठशालां समुदजीघटन् । तत्र श्रीमद्आरुढभानुलब्धरामशास्त्रिणौ अध्यापकपदे न्ययुज्यताम् । तौ हि जम्मूनगरस्य तात्कालिकविद्वद्वर्य सर्वश्रेष्ठौ स्वस्वप्रतिविभागकार्यालयाभ्यां लब्धपुरस्कारवयस्कवृत्तिकौ समास्ताम् । इमौ विद्वांसौ मनोयोगेन अध्यापनकलाकौशलेन स्वकर्तव्यतया दुहितृनिर्विशेषस्नेहेन च समध्यापयन्तौ श्रीवेदकुमारीप्रभृती प्रभूततराः कन्याः पञ्चनदविश्वविद्यालयीयप्राज्ञपरीक्षां समुत्तारितवन्तौ । सैव श्रीवेदकुमारी साम्प्रतम् एम०ए०पी०एच्०डी० इत्युपाधिमधिगत्य जम्मूराजधान्याम् विश्वविद्यालये संस्कृत एम० ए० श्रेणिसंस्कृतमध्यापयन्ती तत्रत्यमुख्याध्यापिकापदमलङ्करोति । इयमार्यकन्यापाठशाला वर्षद्वयं महता समारोहेण प्रचलिता । ततो धनसाहाय्याभावेनाऽभावमधिगतेति स्मारं स्मारं दन्दह्यन्ते सहृदयानाम् हृदयानि ।

(१६)

संस्कृतमहिलाविद्यापीठम्

महिलाविद्यापीठस्यास्य संस्थापनं युगवदविहगविधुमिते १९४४ ख्रिष्टाब्दे परमतपस्विनो महात्मनः श्रीदयारामशास्त्रिणोऽकार्षुः । एभिः स्वीयं सर्वमपि जीवनं

ज्ञानविज्ञानस्तन्यधापयित्री गीर्वाणवाणी मातर समुद्धर्तु समर्पितमिति धन्या इमे उभयलोकभाजो विद्वासो दूरदर्शिन । एषा चरितमन्यत्र प्रस्तुत वर्तते ।

स्मामिदयानन्दमतावलम्बिनो महाशयश्रीदयालचन्द्रस्य सुपुत्री विधवा **श्रीविद्यावती** विदुषी स्वपितु शुभलोकाप्तये स्वपितृपादै स्वय कृतान्तिमदानरूपेण रुप्यकाणा सप्तसहस्री विद्यापीठस्य प्रारम्भिक कार्य्यं सञ्चालयितु प्रदत्तवतीतीमामपि धन्या मन्यामहे वदान्या मान्याम् ।

श्रीदयारामशास्त्रिण प्रथम समकल्पियत । अस्या सदस्याश्च (१) श्रीदयारामशास्त्री (२) श्रीसुशीलातुली (३) श्रीविद्यावती (४) श्रीदीनानाथमहाजन एड्वोकेट इतीमे चत्वार समभूवन् ।

दुर्गरेष्वस्मिन् विद्यापीठ एव सर्वप्रथम कन्याजनाना सस्कृताध्ययनाध्यापनप्रवन्ध विश्वविद्यालयीयपरीक्षाप्रवन्ध च दयारामशास्त्रिण समितिसम्मत्या समकार्षु । एकैकस्मिन्नेव हायने अष्टमश्रेणी समुत्तीर्णा कन्या विश्वविद्यालयीया प्राज्ञपरीक्षा, मैट्रिकश्रेणीपरीक्षा विशारदपरीक्षा वा समुत्तरितु प्राभूवन् । विशारदपरीक्षोत्तीर्णा कन्याश्च एकस्मिन्नेव वर्षे शास्त्रिपरीक्षा समुदतरन् ।

अस्माद् विद्यापीठात् त्रिषु वर्षेषु सप्तकन्या शास्त्रिपरीक्षाम्, पञ्चदश विशारदपरीक्षाम्, प्राय' पञ्चदश प्राज्ञपरीक्षा समुदतरन् ।

*शास्त्रिपरीक्षोत्तीर्णकन्यानामानि*

(१) शान्ताशर्म्मा, (२) निर्मला, (३) शकुन्तलाशर्म्मा, (४) शकुन्तला 'सेठ' (५) ओंकारदेवी शर्म्मा, (६) आत्माअग्रोल, (७) सन्तोषअग्रोल ।

इमा सर्वा अपि यत्रतत्र स्कूलकालिजेष्वध्यापिकापदमारूढा कन्याजनान् सस्कृतमध्यापयन् ।

**विद्यापीठस्य प्रारम्भकालिकोऽध्यापकवर्ग**

(१) श्रीदयारामशास्त्री, (२) श्रीआरुढभानुशास्त्री, (३) श्रीशकुन्तला सेठ । एषा त्रयाणामपि विशेषचरितान्यन्यत्र प्रस्तुतानि वर्तन्ते ।

विद्यापीठस्यैतोऽपरमितिवृत्त वक्तु नोत्सहते नश्चेत विश्व तत्स्मरणेनापि चेतियत । दशे सर्वत्र देशविभाजनानन जाज्वल्यमाने स्वस्वगृहनीडान् विहाय स्तन-

धर्यांस्तनयान् वयस्कान् पितॄन् सर्वं सर्वस्वञ्च तस्मिन्ननले हुत्वा स्थानान्तरं गतवत्सु-जनविहगेषु अध्ययनाध्यापनसंस्थान्तरमिव विद्यापीठमपि तामेव दुर्दशां समनुभूय गत-प्राणं समभवत् ।

दयारामशास्त्रिणो विद्यापीठं पुनरुज्जीवयितुं महान्तं प्रयासमकार्षुः, परं तात्कालिकसर्वकारस्य हृदयादपगतेन संस्कृतानुरागेण वान्येन केनापि दुरदृष्टेन धरा-तलगयानं संस्कृतमहिलाविद्यापीठं पुनरुज्जीवयितुं न प्राभूवन् । परं संस्कृतमहिला-विद्यापीठस्थाने केवलं विद्यापीठमिति नामकरणं विधाय तस्मिन् संस्कृतप्राज्ञ-विशारद-शास्त्रिपरीक्षास्थाने केवलं हिन्दीरत्न-भूषण-प्रभाकरश्रेणीः प्राचीचलन् दयाराम-शास्त्रिणः ।

ततो दैवदुर्विपाकेन दयारामशास्त्रिणि देवभूयं गते तच्छात्रास्वन्यतमाः शकुन्तलासेठ-शीलातुली-मदनकुमारीनामधेया नारीसुलभसर्वगुणरत्नाकराः परम-विदुष्यो विद्यापीठस्य समस्तं कार्य्यभारं स्वयं स्वस्कन्धाभ्यामवाक्षुः ।

साम्प्रतमिमे द्वे अपि शकुन्तलासेठ-सुशीलातुल्यौ अध्यापिकान्तरसाहाय्येन विद्यापीठे रत्न-भूषण-प्रभाकरश्रेणीपर्यन्तं हिन्दीभाषाम्, दशमश्रेणी(मैट्रिक) पर्यन्त-मिंग्लिशं च पाठयन्त्यौ महान्तमुपकारं कुरुतो वर्तमानमहिलामण्डलस्य ।

श्रीसुशीलादेव्याश्चरितमन्यत्र प्रस्तुतं वर्तते ।

(१७)

## काश्मीरसंस्कृतसाहित्यसम्मेलनम्

संस्कृतस्य प्रचारप्रसारार्थं काश्मीरे (१९५६) षट्पञ्चाशदधिकैकोनविंशति-शततमे ख्रिष्टाब्दे श्रीमता **मोतीलालशास्त्रिणा** 'पुष्करेण' **श्रीत्रिभुवननाथशास्त्रिणः** 'सम्यस्य' **श्रीबदरीनाथशास्त्रिणः** कलस्य च सहयोगेन 'काश्मीरसंस्कृतसाहित्यसम्मेलन' नाम्नी संस्था स्थापिता ।

संस्थायाः सञ्चालनार्थमेकाऽस्थायिसमितिर्निर्वाचिता, यया (१९५९) ऊन-षष्ट्यधिकैकोनविंशतिशततमे ख्रिष्टसंवत्सरे **डा० शिवनाथशास्त्रि** डी० ओ० सी० महाभागानां भवने एका गोष्ठी समाहूता, यस्यां संस्थाऽधिकारिणो निर्वाचिताः । अनन्तरम् (१९६१) एकषष्ट्यधिकैकोनविंशतिशततमे हायने तृतीयं वार्षिकमधि-वेशनमभूत्, यत्र निम्नाङ्किताः सदस्या निर्वाचिताः —

| | |
|---|---|
| प्रो० श्रीजगद्धरजाडूशास्त्री एम्० ए०, एम्० ओ० एल्० | प्रधान |
| प्रो० श्रीगङ्गादत्तशास्त्री एम्० ए०, एम्० ओ० एल्० | उपप्रधान |
| श्रीलक्ष्मीनारायणशास्त्री | महामन्त्री |
| श्रीओङ्कारनाथशास्त्री | १ संयुक्तमन्त्री |
| श्रीबदरीनाथशास्त्री | २ संयुक्तमन्त्री |
| श्रीत्रिभुवननाथशास्त्री | साहित्यमन्त्री |
| श्रीमोतीलालजाडू | प्रकाशनमन्त्री |
| श्रीसोमनाथवल | कार्यालयमन्त्री |
| श्रीमोतीलालशास्त्री | कोषाध्यक्ष |
| श्रीमदनलाल | सदस्य |
| श्रीगिरिधरलाल | सदस्य |
| श्रीअमरनाथगजू | सदस्य |

अधुनावधि सम्मेलनमिदं पञ्जीकृतं नास्ति। तदर्थं प्रयासश्चलति सम्मेलनस्य वैधसचालनार्थं नियमावली निर्धारिताऽस्ति, यस्यां सम्मेलनस्य कार्यसञ्चालनपद्धतिर्विवृताऽस्ति।

प्रधानकार्यालयं श्रीनगरान्तर्गते कालखुडनाम्नि क्षेत्रे वर्तते, यत्र साप्ताहिकसाहित्यगोष्ठीनामन्तरङ्गगोष्ठीनां च आयोजनं भवति।

अस्य शाखाद्वयम् दक्षिणक्षेत्रे उत्तरक्षेत्रे चास्ति। सम्पूर्णाः सदस्याः ३०० सन्ति।

अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य अनुसरणं कुर्वतोऽस्य सम्मेलनस्य सदस्यानां श्रेणीद्वयं स्वीकृतम्। विशिष्टसदस्याः साधारणसदस्याश्च।

**साहित्यगोष्ठी—**

साहित्यगोष्ठीनां सम्पादनं सम्मेलनं प्रारम्भतः कुर्वद् आस्ते। सम्मेलनेन बृहदायोजनानामेका शृङ्खला निबद्धाऽस्ति, तत्र गणतन्त्रदिवससमारोहः प्रधानोऽस्ति। अगस्तमासस्य १५ तारिखायां श्रीपण्डितकल्हणस्य जन्मदिवससमारोहः क्रियते।

**कल्हणवाचनालय.**

सम्मेलनेन संस्थापितः कल्हणवाचनालयोऽस्ति, यत्र संस्कृत-हिन्दी-उर्दू-अंग्रेजी-पत्रपत्रिकाः पाठकानां हिताय प्राप्यन्ते। संस्कृते 'भारती'-'दिव्यज्योति'र्नामिके पत्रिके निःशुल्कमागच्छतः।

**संस्कृतशिक्षानिकेतनम्—**

सम्मेलनेन सरलसंस्कृतपाठ्यक्रमानुसारं 'संस्कृतशिक्षानिकेतन'नामिका पाठशाला संचाल्यते। अस्याः संचालनाय शिक्षणाय च श्रीत्रिभुवननाथशास्त्रिणः श्रीबदरीनाथशास्त्रिणः, श्रीमोतीलालगजूमहोदयस्य च सहयोगः श्लाघ्योऽस्ति।

**परीक्षासंचालनम्—**

सम्मेलनमिदं विशिष्टगोष्ठ्या परीक्षासंचालनं स्वीचकार। तत्रैतदपि स्वीकृतं यद् 'भारतीयविद्याभवन'संचालिता सरलसंस्कृतपरीक्षा संचालनीया इति। एतदर्थमेकोपसमितिः स्थिरीकृता यथा विद्याभवनस्य पाठ्यक्रमो निर्धारितः। भवनस्य निर्देशानुसारं परीक्षा प्रारब्धा। परीक्षाकेन्द्रव्यवस्थापकत्वस्वीकृतिः 'पुष्कराय' केन्द्रस्वीकृतिश्च सम्मेलनाय प्रदत्ता।

**शोधकार्यम्—**

'शारदापीठ रिसर्चसिरीज' नामकगवेषणाकेन्द्रस्य साहाय्यं सम्मेलनेन प्रमुखरूपेण कृतम्। एषा संस्था शैवशास्त्रस्य गवेषणायां संलग्नाऽस्ति।

**कार्यविस्तारयात्रा—**

सम्मेलनेन विविधधार्मिकक्षेत्रेषु काश्मीरक्षेत्रे स्वोद्देश्यप्रचारार्थं स्वप्रतिनिधिप्रेषणादिद्वारा जनतासमक्षे स्वकीयः कार्यकलापः प्रस्तुतीकृतः।

**अधिवेशनानि—**

अद्यावधि सम्मेलनेन त्रीणि वार्षिकाधिवेशनानि विभिन्नक्षेत्रेषु कृतानि। प्रथमं भानुमुहल्लाक्षेत्रे, द्वितीयं कालखुडक्षेत्रे, तृतीयं च खरयारक्षेत्रे सम्पादितम्। प्रथमास्याध्यक्षः डा० शिवनाथशर्मा शास्त्री आसीत्।

**भावी कार्यक्रमः—**

निकटभविष्ये एव सम्मेलनं राजसर्वकारेण सह पत्रव्यवहारं संचालयिष्यति, येन जम्बूकाश्मीरस्थाः राजकीयाः रात्रिपाठशालाः संस्कृतपाठ्यक्रमस्य प्राथमिकैच्छिकरूपेण मार्यं कुर्युः, तथा तत्रावश्यकरूपेण प्राज्ञपरीक्षापाठ्यक्रमं संचालयेयुः।

**विशिष्टं ज्ञातव्यम्—**

सम्मेलनम् अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य जम्बूकाश्मीरराज्यशाखा-

रूपेण स्वीकृतमिति अग्रेऽपि सार्वदेशिकशाखानिर्देशानुसारं कार्यं करिष्यति ।

## (१८)

## संस्कृतसाहित्यपरिषद्

इतश्चत्वारिंशद्वर्षपूर्वं काश्मीरराज्यशासनकेन्द्रे श्रीनगरस्य विख्याते क्षेत्रे संस्कृतसाहित्यपरिषत् संस्थापिताऽभूत् । हिन्दूसभाभवने अस्याः कार्यालयं आसीत् ।

**उद्देश्यम्—**

आङ्गलभाषाप्रचारेण भारतीयेषु हीनभावः एधमानः आसीत् । संस्कृतभाषा लुप्तप्राया सम्बभूव । एतादृशे संकटकाले संस्कृतस्य प्रचाराय आत्मगौरवजागर्तये चेयं परिषत् संस्थापिता ।

**संस्थापकः—**

श्रीडा०कुलभूषणो वजीरावादनामके स्थाने लब्धजन्मा १९१० ईशवीयवर्षे पी०एच०डी० उपाधिना आत्मानमलंकृत्य पञ्चविंशतिवर्षवयसि काश्मीरमागमत् । लवपुरे वसताऽनेन आर्यधर्मस्य माहात्म्यं संस्कृतभाषायाः पूर्णत्वं च श्रुतमासीत् । तेनास्य संस्कृताध्ययने रुचिर्जागरिता । शारदादेशमागत्यायं श्रीगोविन्दराजानकेभ्यः संस्कृते पाटवं प्राप ।

शारदादेशे संस्कृतभाषाप्रचाराय भारतीयसंस्कृतेः संरक्षणाय च गुरुणा राजानकेन सहानेन संस्कृतसाहित्यपरिषदः स्थापनाविषये विमर्शः कृतः । स्थानीया विद्वांसः सादरमामन्त्रिताः । परिषदोऽप्युद्घाटनं कृतम् ।

## (१९)

## संस्कृतभाषाप्रचारसमितिः

अखिलभारतीयसंस्कृतभाषाप्रचारसमितिः श्रीमद्भिः श्रीपाददामोदरसातवले-करमहाभागैः संस्कृतप्रचाराय संस्थापिता । अस्याः प्रान्तीयशाखा श्रीमद्भिर्जानकीनाथ-वानप्रस्थमहानुभावैः वि० सं० २००७ सप्ताधिकद्विसहस्रतमे हायने समारब्धा । संस्थायाः उपकेन्द्रत्वेन निम्नस्थानेषु कार्यं प्रावर्तत ।

यथा—

(१) श्रीनगरे, (२) रैवावारीनगर्याम्, (३) महनाख्ये नगरे, (४) सोपाराख्ये नगरे, (५) वारामुलाख्ये नगरे, (६) उत्तराख्ये नगरे, (७) विजयविहाख्ये नगरे, (८) चन्द्रपुरानगर्याम्, (९) धन्यहामाख्याया नगर्या च।

वर्षसप्तक यावत् अनया समित्या कार्यं सचालितम्। सहस्र विद्यार्थिन परीक्षासूपविष्टा। अस्या कार्यनिर्वाहकौ मुख्यतया दीनानाथकौलश्रीमाहेश्वरकौलौ वभूवतु।

सस्कृतविश्वपरिषद्—

मोहमय्या स्थिताया सस्कृतविश्वपरिषद काश्मीरिकशाखात्वेन वर्तते काचन समिति, या श्रीपरमानन्ददरिन्दनामकेन विदुपा दशवर्षेभ्य पूर्वं स्वाम्वासे एव कतिचन विदुष आहूय सस्थापिता। अस्या समिते किमपि प्रकाशनार्हं रूप नास्ति, न वाऽपि किमप्युल्लेखनीय कार्यमस्ति। केवल नाम्नैव तस्या सत्ता।

## उपसहारः

दर्शिता जम्बूकाश्मीरराजवशस्य सस्कृतेऽभिरुचि। उक्ता च तत्प्रयुक्ता महाराजै श्रीगुलाबसिंह–श्रीरणवीरसिंह–श्रीप्रतापसिंह–श्रीहरिसिंह–श्रीकर्णसिंहमहानुभावैविहिता उत्तरवाहिनीश्रीगदाधरसस्कृतपाठशाला-श्रीरघुनाथसस्कृतपाठशाला-(श्रीरघुनाथसस्कृत महाविद्यालय)-श्रीरघुनाथसस्कृतमहाविद्यालयीयपुस्तकालय-जम्बूकाश्मीरविश्वविद्यालय-(स्नातकोत्तर सस्कृतश्रेणीविभाग)-श्रीरणवीरसस्कृतानुसन्धानविभागीयपुस्तकालय-श्रीरणवीरहाईस्कूलस्यसस्कृतपाठशाला-धर्मार्थविभाग-वर्तमानधर्मार्थपरिषदभिधेयानाम—ष्टाना सस्थाना स्थापना पोपणा च। तत पर निवेदितश्च राजकीयविभाग-द्वारा सचालिताना सस्कृतप्रचारकेन्द्रभूताना कतीनाञ्चित् पाठशालाना, स्वामि-विद्याधरमहाराजेन स्थापितस्य श्रीविद्याधरशैवाश्रमनिधिप, महागाणतिकश्रीपरमा-नन्दमहोदयेनोपक्रान्तस्य श्रीस्पादेवीशारदापीठस्य, महामहेश्वराचार्यश्रीरामजीस्वामि-महाराजसस्थापितस्य श्रीरामशैवाश्रमस्य, आर्यसामाजिकैरुद्घाटितस्य पाणिनीयार्य-सस्कृतमहाविद्यालयस्य, तथाविधाया एवार्यसस्कृतकन्यापाठशालाया, परमनपस्वि-श्रीदयारामशास्त्रिसस्थापितस्य सस्कृतमहिलाविद्यापीठस्य, श्रीमोतीलालशास्त्रिप्रभृति-विद्वद्गणसघटितस्य काश्मीरसस्कृतसाहित्यसम्मेलनस्य, श्रीपाददामोदरसातवलेकर-महोदयै सस्थापिताया सस्कृतभाषाप्रचारसमिते, काश्मीरिकपण्डितश्रीगोविन्द-

राजानकादेशाद् दक्षतरश्रीकूलभूषणमहाभागेन स्थापिताया संस्कृतसाहित्यपरिषद, संस्कृतविश्वपरिषदश्च स्थापनपोषणसञ्चालनस्यगनादिरूप यथावस्थितमितिवृत्तम् । निरूपितं चैतेनैव क्रमेण जम्बूकाश्मीरमहाराजातिरिक्ताना संस्कृतपोषकाणामपि तत्तत्संस्थासंस्थापनद्वारा सुरसरस्वतीसेवासौभाग्यभागित्वम् ।

इह श्रीरणवीरसंस्कृतानुसन्धानविभागीयपुस्तकालयविवरणे डा० जी० बुह्लरस्य, डा० एम्० ए० स्टीनस्य, गेरार्ड एल्० एम्० क्लाजनस्य, ए० ए० मैक्डानलस्य, जे० सी० (जगदीशचन्द्र)चटर्जीमहोदयस्य च कार्याणि संक्षेपेण निरूपण कृतम् । सूचितश्च यदसौ श्रीजगदीशचन्द्रचटर्जीमहोदयोऽस्यानुसन्धानविभागस्य प्रथमोऽधिकारी न्ययुज्यत । तत पर महामहोपाध्याय श्रीमुकुन्दरामशास्त्री, पण्डितमधुसूदनकौल, श्रीरामचन्द्रकाक, पण्डितहरभट्टशास्त्री, श्रीजगद्धरजाडू, डा० नलिनाक्षदत्त, डा० शिवनाथशर्मा, श्रीदीनानाथशास्त्री, श्रीपृथ्वीनाथपुष्प, ब्रह्मचारीलक्ष्मण, श्रीनीलकण्ठगुर्टू, श्रीजियालाल, श्रीगौरीशङ्कर, श्रीकान्तिचन्द्रपाण्डेयश्चैते चान्ये च ये विद्वत्तल्लजा अत्र विभागेऽधिकारिता कार्यावसर वा प्राप्य भूयसा ग्रन्थाना सम्पादनादिकार्यं निर्वर्तितवन्त, तेषा कार्यविवरण तत्तद्विद्वत्परिचयावसरे लेखिष्यते । प्रस्तूयते त्विदानी जम्बूकाश्मीरप्रदेशेऽनुसहिताना, लिपीकृताना, अमुद्रिताना, मुद्रिताना (सम्पादित-प्रकाशिताना) च ग्रन्थानामकाराद्यनुक्रमेण पृथक् पृथक् सूचीसमुपन्यास पुरस्सर प्रत्येक ग्रन्थस्य परिचय ।

तत्रैप क्रम श्रीरणवीरसंस्कृतानुसन्धानविभागीयपुस्तकालये सगृहीतानाम् अमुद्रिताना ग्रन्थानामकारादिक्रमानुगता सूची प्रथमा । काश्मीरराज्यानुसन्धानविभागीयपुस्तकालयस्थाना विभागेनानुसहिताना प्रकाशिताप्रकाशिताना ग्रन्थविशेषाणामकारादिक्रमानुगता सूची द्वितीया । विविधग्रन्थमालासु प्रकाशिताना ग्रन्थानामकारादिक्रमानुगता च सूची तृतीया । एतत्सूचीत्रयानुसारि ग्रन्थविवरण **साहित्यनिर्माणगवेषणादय** इति शीर्षकेऽध्येतव्यम् ।



# साहित्यनिर्माणगवेषणादयः

इह खलु श्रीरणवीरसंस्कृतानुसन्धानविभागीयपुस्तकालयस्य परिचये कार्यारम्भेतिहासपूर्वकं पुस्तकाना सग्रहकार्यम्, लिपिकार्यम्, अन्वेपणकार्यम्, नवसम्पादनकार्यञ्चेत्यादिना विस्तृतं कार्यविवरणमुपन्यस्तम् । उक्तममुद्रिताना मुद्रिताना च ग्रन्थाना विषयक्रमेण सख्यामात्रम् । अथ तेपामेपाञ्च ग्रन्थाना परिचयप्रदानमुपक्रम्यते ।

## तत्र परिचेयानाम् अमुद्रिताना ग्रन्थानामकारादिक्रमानुगता सूचीयम्ः —

१ अथर्ववेदसहिता, पैप्पलादशाखीया
२ अमरकोश', हिन्दीभापानुवादसहित
३ अमरकोशनाममाला, हिन्दीभापानुवादसहिता
४ इक्लीयारातम्, हिन्दीभापायाम्
५ एकाक्षरनिघण्टु, हिन्दीभापानुवादसहित
६-७ औपधचिकित्सा (द्वे पुस्तके)
८ कल्पसार
९ चित्तप्रदीप
१० जातकगणितस्कन्धसग्रह
११ जातकफलस्कन्ध
१२ जातकसग्रह
१३ तर्कसग्रहव्याख्या-सिद्धान्तचन्द्रोदय
१४ ताजिकसहिता
१५ दशभापोदयकोप
१६ दुर्गाक्रमणरीति
१७ धनञ्जयविजय, डोगरीभापानुवाद
१८ धर्मशास्त्रसग्रह
१९ नानार्थकोप
२० नामविभागमाला
२१ नीतिकल्पलता सटीका
२२ पञ्चसायकविवरणम्
२३ पूजारहस्य सटीकम्
२४ प्रश्नरत्नावली
२५ ब्रह्मसूत्रवृत्तिसार
२६ भगवद्गीताटीकाविंशति
२७ भावप्रकाशटीका (श्रीरणवीरसिंहदेवावलोकनसर्द्वंद्यसिद्धान्तरत्नाकरमहिता)
२८ भापाकोश
२९ मत्स्यपुराणटीका भावप्रदीप
३० मार्कण्डेयपुराणव्याख्यान भावदीपकम्
३१ मुहूर्तखण्ड
३२ रघुनाथगुणोदय
३३ रघुवश (संस्कृतान्वयहिन्दीभापाटीकोपेत)
३४ रणवीरविजय
३५ रणवीरसङ्गीतमहोदधि
३६ रणवीरसिंहसदाचाररत्नाकर
३७ रामपूर्वोत्तरतापनीयोपनिपद् (हिन्दीभापानुवादसहिता)
३८ लिङ्गपुराणटीका भावार्थसङ्कुल
३९ वामनपुराणव्याख्यानम्
४० विषहरतन्त्रम्

४१ वीररत्नशेखरशिखा
४२ वीरवैद्यरत्नहारटीका-वीरहाररतिका
४३. सारस्वतप्रक्रिया (हिन्दीभाषानुवाद-सहिता)
४४. सारसग्रह. ( हिन्दीभाषानुवाद-सहित )
४५ सिद्धान्तशिरोमणि
४६. सक्षिप्ताह्निकपद्धति
४७ स्त्रीधर्मनिर्णय.
४८. फौजके लडानेकी किताब (सैनिकयुद्धाभ्यासः)

अथ महाराजश्रीरणवीरसिंहमहोदयस्य विशेषादेशेन सम्पादितानूदितसंगृहीतानाम् एतत्सूचिनिर्दिष्टानां ग्रन्थानां परिचयः (क्रमाङ्कग्रन्थाङ्कसहितः) ।

(क) अमुद्रिता ग्रन्थाः—

**१. अथर्ववेदसंहिता, पैप्पलादशाखीया–५१७५ घ ।**

२-५ पत्रेषु सुलिखितोऽयं सहिताग्रन्थो महानुपयोगी वर्तते । यतो हि नाद्य सर्वत्र वैदिकीना विभिन्नशाखाना समुपलब्धिर्जायते । अस्य महत्व तु डा० एम्० ए० स्टाईनमहोदयेनापि स्वकृतबृहत्सूचीपत्र(कैटेलाग)स्य ३ पृष्ठे वर्णित यत्—"इद पुस्तक महावेदाचार्यश्रीडाक्टररोठस्य हस्ते समर्पितात्प्राचीनभूर्जपत्रग्रन्थादवतारितम् । मूलभूतपुस्तकस्य वर्णन श्रीयुतडाक्टररोठस्य "देर अथर्ववेद इन काश्मीर द्युबिनजेन" १८७५ इत्याख्ये ग्रन्थे द्रष्टव्यम् इति । इय च प्रतिलिपि १६३२ वैक्रमाब्दे विहिता इति तत्र लिखितम् । लिपिश्च सुवाच्या देवनागरी अस्ति ।

**२. अमरकोशः हिन्दीभाषानुवादसहितः–३४८४ घ ।**

अद्य सर्वत्रैव अमरकोशस्य शतशष्टीका सस्कृते हिन्दीभाषाया च समुपलभ्यन्ते । पर शतवर्षपूर्वं सस्कृतग्रन्थाना हिन्दीटीकानिर्माणे महाराजश्रीरणवीरसिंहस्यैव प्रथमा प्रवृत्तिः सजातेति सम्भाव्यते । यद्यपि अपूर्णा एवेय टीका ७ पत्रेषु लिखिता वर्तते, पर "श्रेयासि बहुविघ्नानि" इति तन्निर्माणमपि श्रेयस्कर प्रतीयते । अस्यापि सुवाच्या देवनागरी लिपिर्वर्तते ।

**३. अमरकोशनाममाला हिन्दीभाषालद्दाखीभाषानुवादसहिता–३४२४ घ ।**

३१६ पत्रेषु विलिखिता इय टीका । अत्र च हिन्दीभाषया सहैव लद्दाखीभाषायाष्टीकानिर्माण तु महाराजश्रीरणवीरसिंहस्य सस्कृतप्रचारयोजना सम्प्रदर्शयति । सुवाच्यैर्देवनागरीवर्णैर्लिखितापीयमसमाप्ता एवास्ति ।

४ इस्तौयारातम्, हिन्दीभापायाम्–३१२४ घ ।

चिकित्सापण्डितै अरवीग्रन्थस्यानुवादोऽय कृतोऽस्ति हिन्दीभापायाम् । अस्य १५ पत्राणि सन्ति । सुवाच्या देवनागरी लिपिरस्ति ।

५ एकाक्षरनिघण्टु हिन्दीभापानुवादसहित –३२०२ घ ।

व्यासपण्डितन सम्पादितोऽय लघुग्रन्थाऽपूर्ण एवास्ति । यतो हि २४ पत्राणि एवास्य समुपलभ्यन्ते । अत्रापि सुवाच्या देवनागरी लिपिरस्ति ।

६-७ औपधचिकित्सा–८३६ ८७५ घ ।

वैद्यकपण्डितेन केनापि चिकित्साग्रन्थेभ्योऽनुभूतयागा सगृह्यात्र सलिखिता । द्वयोरेव पुस्तकयो क्रमश २३,१७ पत्रसख्या विद्यते । देवनागरीवर्णप्रयोगेण चात्र डोगरीभापा सुलिखिताऽस्ति ।

८ कल्पसागर –३३०८ घ ।

आयुर्वेदविशारदै पण्डितैर्नानाचिकित्साग्रन्थेभ्य सगृह्य कस्थीकृता अनके कल्पा अत्र वर्तन्ते । अस्य ५७ पत्राणि सन्ति । सुवाच्या देवनागरी लिपिरस्ति ।

९ चित्तप्रदीप वृत्तिसहित –१९७७ घ ।

वेदान्तसिद्धान्तप्रतिपादकोऽय ग्रन्थो वासुदेवकाश्मीरिकेण सम्पादित । मूल-वृत्त्यो कर्त्तक स एवास्ति । तेन १८८८ शकाब्देऽय विरचित । अस्य १५६ पत्राणि देवनागरीलिपिलिखितानि सन्ति ।

१० जातकगणितस्कन्धसग्रह –२८३८ घ ।

दैवज्ञपण्डितै सम्पादितोऽय जातकोपयोगी गणितसग्रह । अस्य ११९ पत्राणि सन्ति । सुवाच्या दवनागरी लिपिरस्ति ।

११ जातकफलस्कन्ध –२८२९ घ ।

अय जातकोपयोगी फलस्कन्धा ज्योतिर्विद्भि सम्पादित । ३४३ पत्रेपु लिखितोऽपि ग्रन्थोऽयमपूर्ण एवास्ति । लिपिस्तु सुवाच्या देवनागरी अस्ति ।

१२ जातकसग्रह –२८३७ घ ।

जातकशास्त्रसग्रहोऽय दैवज्ञैर्विरचित । अस्य २३५ पत्राणि सन्ति । सुख-वाच्या चास्ति देवनागरी लिपि ।

१३ तर्कसंग्रहव्याख्या सिद्धान्तचन्द्रोदय –हिन्दीभाषायाम्, ४०२१ घ ।

सरलेय तर्कसग्रहस्य व्याख्या हिन्दीभाषाया भाईगडासिहेन विरचिता। २३४ पत्रेषु सलिखिता चेय व्याख्या १६३६ वैक्रमाब्दे लिपिबद्धा सजाता । सुवाच्या अस्ति देवनागरी लिपि । अस्या पर्यालोचनेनैतत्समनुभूयते, यदस्या पूर्वं न केनापि तर्कसग्रहस्य हिन्दीभाषाया टीका कृतेति ।

१४. ताजिकसहिता–२८३४ घ ।

ज्योतिर्विद्भि सम्पादितोऽय ताजिकशास्त्रसग्रह । २६३ पत्रेषु सुलिखितोऽप्ययमसमाप्त एवास्ति । सुवाच्या देवनागरी लिपिरस्ति ।

१५ दशभाषोदयकोश, २६६ क ।

पण्डितेश्वरकौलेन विरचितोऽय कोशग्रन्थ । अत्र सस्कृत-हिन्दी-अरबी-फारसी-काश्मीरी-लद्दाखीप्रभृतीना दशभाषाणा पर्यायशब्दा सन्निबद्धा । ६७ पत्रेषु विलिखितस्यास्य ग्रन्थस्याधुना सर्वत्र उपयोगिताऽनुभूयते । तत्स्थानीया कल्चरल-अकैडमीन-सस्था अस्य कृते भृश प्रयतते, यदस्य प्रतिलिपिरेव सलभ्येत, ततश्चाय मुद्रितो भवेदिति ।

१६ दुर्गाक्रमणरीति –१०४६ क ।

अस्मिन् पुस्तके प्राचीनयुद्धविद्याया विषयो वर्णित । तत्रापि शत्रुदुर्गग्रहणार्थं कथ कैश्चोपायै प्रयतितव्यमिति सरलभाषाया सुलिखितमस्ति । अस्य पत्रसस्था ८७, सुवाच्या च देवनागरी लिपिरस्ति ।

१७ धनञ्जयविजय, डोगरीभाषानुवाद –३६४ क ।

"काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्" इति शास्त्रोक्तिं मत्वा मनोरञ्जनरीत्या च कालयापनार्थं महाराजरणवीरसिहेनास्य सस्कृतनाटकस्य डोगरीभाषायामनुवाद कारित । यतो हि अस्मिन् एकत्र पत्रप्रान्ते डोगरीभाषायाम् "एह पुस्तक महाराज रणवीरसिह दे पढने दारो ' इति स्पष्टमुल्लिखित वर्तते, अस्य पत्रसख्या ७८, सुवाच्या च देवनागरी लिपिरस्ति ।

१८ धर्मशास्त्रसग्रह –३६४६ घ ।

अय सग्रहोऽपि १२ पत्रेषु सुलिखितोऽपूर्णोऽस्ति । अस्मिन् ग्रन्थे मन्वादि-

स्मृतिपुराणवाक्यानां नानावर्णाचारस्नानादिविधिबोधकाना श्लोकानां च संग्रहो महानुपयोगी वर्तते। सुवाच्या देवनागरी लिपिरस्ति।

१६. नानार्थकोश –३४७८ घ।

अयमक्षरक्रमानुसारी कोश ५७ पत्रेपु लिखितो देवनागरीलिपिपूर्णोऽस्ति।

२०. नामविभागमाला–३४७१ घ।

३१४ पत्रेपु सुलिखितोऽय कोशसग्रह.। सुवाच्या एवास्ति देवनागरी लिपिरत्र।

२१. नीतिकल्पलता सटीका–४०३५-३६ घ।

नीतिग्रन्थोऽय पण्डितसाहिबरामेण विनिर्मित। अस्य टीकाकारोऽपि स एवास्ति। पुस्तकद्वयमिद क्रमेण १०६ पत्रेपु २०६ पत्रेपु च लिखित वर्तते। प्रथममपूर्णं, द्वितीय तु सम्पूर्णमस्ति। द्वयोरेव सुवाच्याऽस्ति देवनागरी लिपि।

२२. पञ्चसायकविवरणम्, लक्ष्यवेधनम्–६४० घ।

२१५ पत्रेपु सुलिखितमिद विवरणम्। अस्य लेखक काश्मीरिकपण्डिताग्रगण्य. श्रीसाहिबरामो महाराजरणवीरसिंहराज्ये काश्मीरिकसस्कृतपाठशालाया मुख्याध्यापक आसीत्। विवरणमिद मूलग्रन्थस्य विपय सूपपादयति। लिपिस्तु सुवाच्या देवनागरी एवास्ति।

२३. पूजारहस्यं सटीकम्–४७४३ घ।

४५ पत्रेपु सुलिखितमिदं प्रतीकोपासकानां प्रतिमादिपूजापद्धतिं समुपदिशति, नानाशङ्काना च समुच्छेद प्रकरोति। सुवाच्या देवनागरी लिपिरस्ति।

२४. प्रश्नरत्नावली–२८३५ घ।

काश्मीरिकलालपण्डितेनेय विरचिता। अस्या निर्माणकालो १६२० वैक्रमाब्दो वर्तते। १७६ पत्राणि सन्ति। सुवाच्या देवनागरी लिपिरस्ति।

२५. ब्रह्मसूत्रवृत्तिसार –२१६६-२२०० घ।

वेदान्तसारवर्णनात्मकोऽय लघुग्रन्थ पण्डितगोपालरामशर्मणा विरचित। अस्य ३० पत्राणि सन्ति। सुवाच्या देवनागरी लिपिश्चास्ति।

२६ भगवद्गीताटीकाविंशतिः २७११-२८ घ।

लेखकैः श्रीमद्भगवद्गीताया अष्टादश प्राचीनाष्टीका अन्ते च द्वे नवीने

हिन्दीटीके प्रतिश्लोकं संगृह्य एकत्र सन्निवेश्य च संलिखिता. । ता विंशतिष्टीका अत्रोपलभ्यन्ते ।

टीकानां तत्कर्तॄणां च नामानि निम्नाङ्कितानि सन्ति ।

| टीका | टीकाकारः | टीका | टीकाकारः |
|---|---|---|---|
| १. आनन्दी | आनन्दराजानक. | ११. भगवद्गीतार्थसंग्रह | अभिनवगुप्त-राजानक· |
| २. कुसुमवैजयन्ती | गिरिधारिदास. | | |
| ३. गीतातात्पर्यशुद्धिः | रामचन्द्रसरस्वती | १२ भावदीपिका | नीलकण्ठः |
| ४ गूढार्थचन्द्रिका | वनमाली | १३. भावप्रकाशः | सदानन्दव्यास. |
| ५ गूढार्थप्रकाशिका | मधुसूदनसरस्वती | १४. भाष्यम् | शङ्कराचार्यः |
| ६. तत्त्वप्रकाशिका | लक्ष्मीरामराजानक· | १५ भाष्यम् | रामानुज |
| ७. तात्पर्यनिर्णय | आनन्दगिरि | १६. माध्वभाष्यम् | आनन्दतीर्थः |
| | | १७. सर्वतोभद्रः | रामकण्ठ |
| ८. पञ्चोली | ···· (अज्ञात) | १८ सुबोधिनी | श्रीधरस्वामी |
| ९. परमार्थप्रभा | सूर्यपण्डित | १९ रणवीरसमुद्बोधिनी | ··· (अज्ञात.) |
| १०. पिशाचभाष्यम् | ·· (अज्ञात) | २०. हिन्दीभाषानुवादः | ·· (अज्ञात·) |

समग्रस्याष्टादशाध्यायोपेतस्यास्य गीताग्रन्थस्य पत्रसंख्या ३३०४ अस्ति । सुवाच्या देवनागरी लिपिर्विद्यते । प्रतिश्लोकान्ते च हिन्दी'दोहा'पद्यात्मकस्तच्छ्लोकानुवादोऽप्यस्य महद् वैशिष्ट्यं प्रतिपादयति । २०१२ वैक्रमाब्दे महामहिमराष्ट्रपतिमहोदयैरपि जम्बूनगरे पदार्पणं कृत्वाऽस्य पुस्तकालयोऽवलोकित. । तैश्चान्यान्यविज्ञापनैः सह एतदपि प्रतिपादितं यदस्य टीकासंग्रहस्य प्रकाशनं विधेयमिति । परं तदुचितार्थाभावेनैव प्रकाशनादिकं कार्यं नाभूत् । एतावतापि पुस्तकालयस्थस्यास्य ग्रन्थस्य समुपयोगिता तु प्रसिद्धा एव संजाता ।

**२७ भावप्रकाशटीका—( श्रीरणवीरसिंहदेवावलोकनसद्वैद्यसिद्धान्तरत्नाकरसंहिता)-३१०२ घ ।**

इयं टीका महाराजाज्ञया विरचिता । अस्याः निर्माता पण्डितजयदेवोऽस्ति । ७०२ पत्रेषु लिखिता अपीयं संहिता अपूर्णा एवास्ति । सुवाच्या देवनागरी लिपिर्विद्यते । अस्याष्टीकाया निर्माणप्रसङ्गेऽद्यापि अत्रत्यवृद्धेभ्य एव श्रूयते यद्-एकदा महाराजरणवीरसिंहोऽतीव रुग्णोऽभूत् । तदा बहवः सद्वैद्यास्तदारोग्यलाभाय मिलित्वा

निदानचिकित्सादिकमकुर्वन् । तेषा सम्मत्या महौषधससेवनेन च स्वल्पेषु एव दिनेषु महाराजो नीरोगोऽजायत । पश्चान्महाराजसकेतेन तेषु चिकित्सकेषु प्रधानो वैद्यराजो जयदेव एता टीका व्यरचयत् इति ।

२८ भाषाकोश –१६३ ख ।

अस्मिन्नपि कोशग्रन्थे सस्कृत-हिन्दी-काश्मीर्यादिभाषाणा पर्यायशब्दा सगृहीता । यथा हि १—फारसी, २—सस्कृत, ३—काश्मीरी, ४—अरबी, ५—हिन्दी,
अफतादन्, पतनम्, पितू, सकृत, पडना
इत्यादय । अस्य कोशस्य द्वयोर्भागयो क्रमश २४६-५५६ पत्राणि सन्ति । सुवाच्या देवनागरी लिपिश्चास्ति ।

२६ मत्स्यपुराणटीका-भावप्रदीप –३६२० घ ।

पण्डितरामचन्द्रभट्टकाश्मीरिकेणय टीका विरचिता । अस्या पत्रसख्या ६८५, लिपिश्च सुवाच्या देवनागरी अस्ति । अद्य भारतीया विविधा एवानुसन्धान-सस्था पुराणप्रकाशनादिस्वानुसन्धानसशोधनादिकर्मप्रपूर्त्यै इमा टीका समादातु समीहन्ते । अस्या रचनाकाल १६३२ वैक्रमाब्दोऽस्ति । १६६१ ख्रिष्टाब्दे अक्तूबरमासस्य १४-१६ तिथिषु सपन्ने अखिलभारतीयप्राच्यविद्यासम्मेलनाधिवेशने श्रीनगरे समागतैर्बहुभि सस्कृतमहापण्डितै , विशेषतश्च तत्सम्मेलनसभापतिभिर्महामान्यै डा०वी०राघव-महोदयै , सर्वभारतीयकाशिराजन्याससस्थाया पुराणविभागाध्यक्षै आनन्दस्वरूपगुप्त-महोदयैश्च स्वयमिह समेत्य पुस्तकालयावलोकन कृतम् । तैश्चास्या मत्स्यपुराणटीकाया विषये विशिष्टा स्वाभिरुचि सप्रदर्शिता । तेषा कार्यसाधकै सहायकपण्डितैस्तु अस्या आदिमध्यान्तपाठाशा अपि सलिख्य स्वायत्तीकृता ।

३० मार्कण्डेयपुराणव्याख्यान भावदीपकम्–३६१६ घ ।

पण्डितरामचन्द्रभट्टेन एतदपि व्याख्यान विरचितम् । अस्य रचनाकाल १६३४ वैक्रमाब्द । पत्रसख्या ३३६, लिपिश्च सुवाच्या देवनागरी अस्ति ।

३१. मुहूर्तखण्ड –२८३६ घ ।

मुहूर्तशास्त्रसग्रहोऽय देवज्ञैर्विरचित । २०७ पत्रेषु लिखिताऽप्ययमसमाप्त एवास्ति । सुवाच्या देवनागरी लिपिर्वतते ।

३२. **रघुनाथगुणोदय –६२६-२७ घ।**

श्रीरणवीरसिहमहाराजकारितमिद त्रयोदशसर्गात्मक महाकाव्यम् । अस्य कर्ताऽपि द्विगर्तदेशीय एवासीत् पण्डितदुर्गादत्तात्मज कविर्नव्यचण्डीदास । काव्यमिद द्वयो पुस्तकयोर्वर्तते । प्रथमस्य १५७ पत्राणि, द्वितीयस्य च ५८१ पत्राणि सन्ति। लिपिस्तु सुवाच्या देवनागरी एवास्ति ।

३३ **रघुवश सस्कृतान्वयहिन्दीभाषाटीकोपेत –३४८२ घ।**

महाकविकालिदासविरचितरघुवशमहाकाव्यस्य टीका सस्कृत एव लभ्यन्ते। पर महाराजश्रीरणवीरसिंहेन स्वप्रशासनकाल एव तस्यानुवादो हिन्दीभाषायामपि कारित । अद्य केवल प्रथमसर्ग एव तट्टीकायुक्त समुपलभ्यते । पर सस्कृतप्रचार-हेतुरय स्वल्पोऽपि भागो महत्त्वपूर्ण एवेति प्रतिभाति । अस्य १७ पत्रेषु देवनागरीवर्णाङ्किता सुवाच्या लिपिरस्ति ।

३४ **रणवीरविजय –६६६-७८८ क।**

श्रीरणवीरसिंहमहाराजाश्रितेन पण्डितविश्वेश्वरेण विरचितोऽय ज्यौतिषग्रन्थ । अस्य द्वे पुस्तके अत्र विद्यते । प्रथमस्य पत्रसख्या ३२५, द्वितीयस्य च २८० अस्ति। सुवाच्या अस्ति देवनागरी लिपि ।

३५ **रणवीरसगीतमहोदधि –१८८१-८३-८४-८६ क।**

शास्त्रीयसगीतविषयकोऽय ग्रन्थ सङ्गीताचार्यश्रीकाकारामगोस्वामिना विरचित । विकृतेऽपि अस्मिन् ग्रन्थे सङ्गीताङ्गभूता तालाध्याय, वाद्याध्याय, रागाध्याय, तन्त्राध्याय, नाटकाध्याय, प्रकीर्णाध्याय इत्यादयो विभिन्नावयवबोधका प्रसङ्गा सन्ति । अस्य चत्वारि खण्डितानि पुस्तकानि सन्ति । प्रथमस्य ६५०, द्वितीयस्य १०१०, तृतीयस्य २५०, चतुर्थस्य १०० पत्राणि सन्ति । सर्वेषु पुस्तकेषु सुवाच्या देवनागरी लिपिरस्ति ।

३६ **रणवीरसिंहसदाचाररत्नाकर –२६६ ख।**

ग्रन्थनाम्ना एव सप्रतीयते यदेतस्य निर्माणे महाराजरणवीरसिंहस्य कीदृशी सप्रवृत्ति सजाता इति । 'आचार परमो धर्म', 'आचारहीन न पुनन्ति वेदा' इत्यादिशास्त्रवचनानि अनुस्मरन् महाराज सर्वस्य प्रजावर्गस्य आचारशिक्षार्थं धर्माचार्यै पण्डितैश्च आचारशिक्षक ग्रन्थमिम समलेखयत् । अस्य पत्रसख्या २५६, लिपिश्च सुवाच्या देवनागरी अस्ति ।

३७ रामपूर्वोत्तरतापनीयोपनिषत्–(हिन्दीभाषानुवादसहिता) ४०१८ घ ।

उपनिषत्सु प्रसिद्धा इयमुपनिषत् । दिवङ्गतो महाराज श्रीरणवीरसिंह आत्मान सूर्यवंशीयक्षत्रिय मन्यमान स्वेष्टदेवस्य श्रीरामचन्द्रस्य विशिष्ट महत्त्व सजिज्ञासुरेवास्या महोपनिषद पूर्वोत्तरभागयोर्हिन्दीटीकां कारितवान् । ३८ पत्रेषु विलिखिता इय प्रतिलिपि । लिपिस्तु सुवाच्या एवास्ति देवनागरी । हिन्दीटीका-कारोऽपि काश्मीरिक एवासीत् कश्चित् लालपण्डित । यो हि महाराजरणवीरसिंह-राज्ये सबहुमानोऽतिष्ठत् ।

३८ लिङ्गपुराणटीका भावार्थसङ्केत –३६२१ घ ।

इय टीका पण्डितसाहिबरामात्मजेन दयारामपण्डितेन विरचिता । अस्या पत्र-सख्या ३६६, लिपिश्च सुवाच्या देवनागरी अस्ति ।

३९. वामनपुराणव्याख्यानम्–४०१२ घ ।

पण्डितरामचन्द्रभट्टेन एतदपि विरचितम् । अस्य पत्रसख्या ४०६, लिपिश्च सुवाच्या देवनागरी अस्ति ।

४० विषहरतन्त्रम् ३२६१ घ ।

१८०१ वैक्रमाब्दे एतत् लिखितम् । लेखकश्चास्य पण्डितगणेशशास्त्री निर्दिष्ट । विषदोषापहारिणोऽनेके उपाया अस्मिन् सम्प्रदर्शिता । अस्य पत्रसख्या ५६, लिपिश्च सुवाच्या देवनागरी अस्ति ।

४१ वीररत्नशेखरशिखा –४५५-५६-५७-५८-६० घ ।

अस्य विषये डा० एस्० ए० स्टाईनमहोदयेन विलिखित यत्–"अय ग्रन्थो महाराजरणवीरसिंहप्रभोराज्ञया सस्कृतपण्डितेन साहिबरामेण" "अखलाकी मोहसिनी" नामभूषितयवनग्रन्थादनुवादित । सुशीलशैली इति ग्रन्थस्यापर नाम विद्यते इति । अस्य पञ्चपुस्तकानि अत्र वर्तन्ते । प्रथम १००५ पत्रेषु लिखित पूर्णं चास्ति । अस्य लिपिकाल १९१० वैक्रमाब्द । पण्डितसाहिबरामेणास्य टीका अपि सस्कृत एव 'पद-सङ्केतविवरणम्' इति नाम्ना विरचिता । द्वितीय ५६ पत्रेषु सुलिखित प्रथमखण्ड-पर्यन्तमेवास्ति । तृतीय २ पत्रात्मकमेवास्ति । चतुर्थं ४ पत्रेषु विलिखित, पर प्रथम-श्लोकस्य पण्डितसाहिबरामकृता अपरा व्याख्या 'गहनार्थप्रकाशिका' सम्पूर्णा वर्तते ।

पञ्चम ५२१ पत्रेषु सलिखितमप्यपूर्णम् । सर्वेषु पुस्तकेषु सुवाच्या देवनागरी लिपिरस्ति ।

**४२ वीरवैद्यरत्नहारटीका वीरहारलतिका–३२१० घ ।**

पण्डितदिलारामपुत्रेण साहिबरामपण्डितेन कस्यचिदरबीग्रन्थस्यानुवादोऽयं विहित । अस्य तिस्र प्रतिलिपयो विद्यन्ते । प्रथमा ४३३ पत्रेषु, द्वितीया १०५ पत्रेषु, तृतीया च ८६ पत्रेषु लिखिता अस्ति । परमेता सर्वा अपि अपूर्णा एव सन्ति । सर्वासु च देवनागरी लिपि सुवाच्या अस्ति ।

**४३ सारस्वतप्रक्रिया हिन्दीभाषानुवादसहिता–३४७३ घ ।**

व्याकरणेषु सारस्वतव्याकरणमपि प्राचीनतम वर्तते । तद्बोधिकाया सारस्वत-प्रक्रियाया सरला इय हिन्दीटीका केनचिद् वैयाकरणपण्डितेन विनिर्मिता । यद्यपि १७ पत्रेषु विलिखिता इय टीका अपूर्णा एवोपलभ्यते, तथापि अनुसन्धानकर्तृणा-मध्येतृणा च मार्गप्रदर्शन प्रकरोति ।

**४४ सारसङ्ग्रह हिन्दीभाषानुवादसहित –३४७४ घ ।**

पुस्तकस्यास्य मूलटीकाया कर्ता न ज्ञायते । अस्य १५६ पत्रेषु सुवाच्या देव-नागरी लिपिरस्ति ।

**४५ सिद्धान्तशिरोमणि हिन्दीभाषानुवादवार्तिकसहित –३०३६ घ ।**

पण्डितवासुदेवेन हिन्दीभाषावार्तिक विरचितम् । पर १० पत्रात्मकमेव ग्रन्थ-मालोक्यैतदनुमीयते यत् कार्यमिद महता प्रयत्नेन समारब्धमपि विघ्नौघप्रभावेणान्त-राल एव सन्निरुद्धम् । स्वल्पमप्येतद्दिग्दर्शन भाविटीकाकाराणा कृते समालम्बहेतु-रित्यत्र नास्ति कापि शङ्का । सुवाच्या एवास्ति देवनागरी लिपिरत्र ।

**४६ सक्षिप्ताह्निकपद्धति –२६८६-६० घ ।**

अस्या पद्धते कर्ता रघुनाथगुणोदयमहाकाव्यस्य लेखको नव्यचण्डीदासोऽस्ति । अस्या लेखनोद्देश्यविषये तु डा० एम्० ए० स्टाईनमहोदयस्य शब्दा एवात्र समु-द्धियन्ते—'राजाधिराजश्रीमहाराजरणवीरसिंहभूपेन स्वप्रतापतापितारातिश्रीमहाराज-प्रतापसिंहाख्यराजकुमारशिक्षार्थं कारितेयम्' इति । अस्या पद्धतेर्द्वे पुस्तके अत्र विद्येते । पर द्वयोरेव महान् भेदोऽस्ति । प्रथमा केवल २४ पत्रेषु लिखिता, द्वितीया तु १२१ पत्रेषु लिखिताऽस्ति । कर्ता तु द्वयोरेवैकोऽस्ति । पूर्वं तेनातिसक्षेपेण लिखिता, ततश्च

विस्तरेण । यद्वा प्रथम विस्तृता पश्चात् सक्षिप्ता च पद्धति सम्पादिता । एव लेखकस्य लेखने लाघवगौरवसरणी स्पष्टीकरोति पद्धतिरियम् । मुवाच्या चास्ति देवनागरी लिपि ।

४७ **स्त्रीधर्मनिर्णय**—३४७६-७७ घ ।

भारतीये सामाजिकजीवने नारीणामादर्शस्थान वर्तते । अस्मिन् ग्रन्थे शास्त्रानुसारी विधिनिषेधात्मकोऽभ्युदयमार्ग स्त्रीणा कृते पर्यालोचितोऽस्ति । महाराजरणवीरसिंहेन सुप्रयत्नेन लेखितोऽय लघुग्रन्थोऽपि महत्वपूर्णोऽस्ति । अस्य द्व पुस्तके वर्तेते । प्रथमस्य १५ पत्राणि, द्वितीयस्य ४१ पत्राणि देवनागरीवर्णै सुलिखितानि सन्ति । द्वितीयपुस्तके वङ्गभाषानुवादोऽपि सदृश्यते । एतेन स्पष्टमनुमीयते यदनेन ग्रन्थेन नारीवर्गे महान् समादरो लभ्येत यदि प्रकाशित स्यादयमिति ।

४८ **फौजके लडानेकी किताब (सैनिकयुद्धाभ्यास)**—६०६ क ।

अस्मिन् ग्रन्थे सैनिकाना युद्धाभ्यासक्रिया सुवर्णिता । १४ पत्रेषु लिखितोऽय लघुग्रन्थ । डोगरीभाषान्विता देवनागरी लिपिरस्ति ।

*अथ काश्मीरराज्यानुसन्धानविभागीयपुस्तकालयस्था ग्रन्था*

महाराजश्रीरणवीरसिंहस्य शासने प्रथमेऽब्दे (१८२७ ख्रिष्टाब्दे) राज्ये सर्वप्रथम सस्कृतग्रन्थाना पुस्तकालय प्रतिष्ठापितोऽभूत् । एतत्सस्थान (१६०२ ख्रिष्टाब्दे) '**काश्मीरराज्यानुसन्धानविभाग**' इत्यस्मिन् रूपे परिवर्तितम् । एतद्विभागीये पुस्तकालये पूर्वं केवल २२५ पञ्चविंशत्युत्तरा द्विशती एव पाण्डुलिपीनामासीत् । परमधुना एकोनविंशतिशती तासा विद्यते । एतासु महत्त्वपूर्णानामेव लिपीनामिह विवरण प्रस्तुत वर्तते ।

**अनेन विभागेन यानि महत्त्वशालीनि पुस्तकानि सगृहीतानि लिपीकृतानि प्रकाशितानि वा तेषामियम् अकारादिक्रमानुगता सूची—**

१ अनुत्तरप्रकाशपञ्चाशिका
२ अमरौघशासनम्
३ ईश्वरप्रत्यभिज्ञाविमर्शिनी
४ उड्डामरेश्वरतन्त्रम्
५ कर्मकाण्डक्रमावली
६ कामकलाविकास
७ क्रमदीपिका
८ क्रमाभिज्ञापना (अप्रकाशिता)
९ गङ्गास्रोतोनिरूपणम् (अप्रकाशितम्)
१० गन्धर्वतन्त्रम्
११ गीताप्रदीप (अप्रकाशित)
१२ चित्तसन्तोषत्रिंशिका (अप्रकाशिता)
१३ चित्तानुबोध (अप्रकाशित)
१४ जन्ममरणविचार
१५ तत्त्वप्रकाशिका (अप्रकाशिता)
१६ तन्त्रवटधानिका

१७ तन्त्रसार
१८ तन्त्रालोक
१९ दुर्भिक्षतारोदयास्ते (अप्रकाशिते)
२० देवीनामविलास
२१ देवीरहस्यम्
२२ देशोपदेश
२३ नरेश्वरपरीक्षा
२४ नर्ममाला
२५ निरुत्तरतन्त्रम् (अप्रकाशितम्)
२६ नीलमतपुराणम् ( ,, )
२७ नेत्रतन्त्रम्
२८. परमार्थचर्चा
२९ परमार्थसार
३० परात्रिंशिका
३१ परात्रिंशिकातात्पर्यदीपिका
३२ पराप्रवेशिका
३३ पूर्णताप्रत्यभिज्ञा
३४ प्रत्यभिज्ञाकौमुदी (अप्रकाशिता)
३५ प्रत्यभिज्ञावृत्ति (अप्रकाशिता)
३६ प्रत्यभिज्ञाहृदयतन्त्रम्
३७ प्रासादमण्डनम्
३८ वालवोधिनी (अप्रकाशिता)
३९ बृहन्नीलतन्त्रम्
४० वोधपञ्चदशिका
४१ वोधविलास (अप्रकाशित)
४२ वोधोल्लास ( ,, )
४३ भावोपहार
४४ भुवनेश्वरीरहस्यम् (अप्रकाशितम्)
४५ भैरवनाथस्तोत्रम् ( ,, )
४६ भैरवानुकरणस्तोत्रम्( ,, )
४७ मतङ्गवृत्ति ( ,, )
४८ महानयप्रकाश.
४९ महार्थमञ्जरी
५० मालिनीविजयोत्तरतन्त्रम्
५१ मालिनीविजयवार्तिकम्
५२ माहात्म्यम् (अप्रकाशितम्)
५३ मुनिमतमणिमाला (अप्रकाशिता)
५४ मृगेन्द्रतन्त्रम्
५५ योगरत्नावलि (अप्रकाशिता)
५६ वातूलनाथसूत्राणि
५७ वासवी (अप्रकाशिता)
५८ विज्ञानभैरव (प्रथमभाग)
५९ विज्ञानभैरव (द्वितीयभाग)
६० विद्यार्णवतन्त्रम्
६१ विंशतिकाशास्त्रम् (अप्रकाशितम्)
६२ व्यवहारगीता ( " )
६३ शक्त्यनुभवस्तोत्रम् ( ,, )
६४ शाक्तविज्ञानम्
६५ शिवदृष्टि
६६ शिवसूत्रवार्तिकम्
६७ शिवसूत्रविमर्शिनी
६८ श्रीविद्याविवरणम् (अप्रकाशितम्)
६९ षट्त्रिंशत्तत्त्वसन्दोह
७० साहिबकौलजन्मचरितम् (अप्रकाशितम्)
७१ सिद्धित्रयी
७२ स्तवचिन्तामणि
७३ स्पन्दकारिका
७४ स्पन्दनिर्णय
७५. स्पन्दसन्दोह
७६ स्वच्छन्दतन्त्रम्
७७ स्वरूपप्रकाश (अप्रकाशित)
७८ स्वातन्त्र्यदर्पण ( " )
७९ स्वात्मोपलब्धिशतकम् (अप्रकाशितम्)

## सूचीनिर्दिष्टक्रमेणैषां संगृहीत-लिपीकृत-सम्पादितप्रकाशितानां ग्रन्थानां परिचयः

(ख) मुद्रितामुद्रिता ग्रन्थाः—

### अनुत्तरप्रकाशपञ्चाशिका

पुस्तकस्यास्य गवेषयिता वर्तते श्रीमुकुन्दरामशास्त्री । तेनेद जम्बू-काश्मीरराज्यस्यानुसधानविभागात् १९७५ वैक्रमेऽब्दे प्रकाशितम् । पुस्तकप्रणेता आद्यनाथोऽस्ति । तस्य स्थितिकालादिक ज्ञातु न शक्यम् । पञ्चाशत्पद्येषु आद्यनाथेन प्रकाशविमर्शरूपिण शिवस्य महिमा वर्णित । ग्रन्थस्याद्यपद्योद्धरणेन ग्रन्थविषय स्फुटीभवति, तद्यथा—

अकृत्रिमाहमामर्शप्रकाशैकघन शिव ।
शक्त्या विमर्शवपुषा स्वात्मनोऽनन्यरूपया ॥ १ ॥
शिवादिक्षितिपर्यन्त विश्वं वपुरुदञ्चयन् ।
पञ्चकृत्यमहानाट्यरसिक क्रीडति प्रभु ॥ २ ॥ इति ।

पुस्तकेऽस्मिन् पद्यानि ५०, पृष्ठानि च ८ सन्ति । पुस्तक द्वयौ सूचीपत्रयोरुल्लिखितम् ।

### अमरौघशासनम्

पुस्तकमिद श्रीमुकुन्दरामशास्त्रिमहोदयेन गवेषित प्रकाशित च १९७५ विक्रमाब्दे राजकीयानुसन्धानविभागात् । पुस्तकनिर्माता सिद्धयोगिसम्प्रदायापरनाम्नो नाथपथप्रवर्त्तकस्य श्रीमत्स्येन्द्रनाथस्य शिष्यो गोरक्षनाथ । पुस्तके त्रिकसम्बद्धसिद्धान्तनिरूपणमेव विशेषतया समुपलभ्यते । केषा चित् सिद्धाना वर्णनेन सह तेषा क्रियायोगा व्याख्याता सन्ति ।

पुस्तकेऽस्मिन् पृष्ठानि १३ सन्ति । अस्य नाम द्वयोरपि सूचीपत्रयोरङ्कितमस्ति ।

### ईश्वरप्रत्यभिज्ञाविमर्शिनी

अस्य ग्रन्थस्यानुसन्धानकर्ता श्रीमधुसूदनकौलमहोदयोऽस्ति । अनेनैव विदुषा पुस्तकमिद १९४७ वैक्रमेब्दे राजकीयानुसन्धानविभागात् प्रकाशितम् । अस्य ग्रन्थस्य रचयिता सोमानन्दशिष्य ख्रिष्टदशमशताब्दीभव उत्पलदेवोऽस्ति । स परोपकारबुद्धयैव स्वगुरोस्त्रिकदर्शनान्तर्गतप्रत्यभिज्ञाशास्त्रसिद्धान्तान् व्याख्यातु पुस्तकमिदमरचयत् । तेन विवृतिसहिता प्रत्यभिज्ञाकारिका लिखिता । ता अधुना दुर्लभता गता । काश्मीरराज्यस्यानुसन्धानविभागस्ता गवेषयितु यतमानस्तिष्ठति ।

ईश्वरप्रत्यभिज्ञाविवृतौ विमर्शिनीनाम्नी टीकाऽभिनवगुप्तस्यास्ति । तेन विवृतेः कानिचिदेव पदानि व्याख्यातानि । विमर्शिनीरहिता विवृति सम्प्रति न विद्यते । अस्मिन् ग्रन्थे दार्शनिक्या पदावल्या प्रत्यभिज्ञाशास्त्रस्य रहस्यानि विवृतानि । त्रिकदर्शनसाहित्यान्तर्गतप्रत्यभिज्ञाशास्त्रस्याऽयं प्रथम. प्रौढश्च ग्रन्थः । प्रथमभागस्य विमर्शा. ३, पृष्ठसंख्या च २९६ अस्ति । ग्रन्थोऽयं द्वयोरपि सूचीपत्रयोरुल्लिखित. ।

## उड्डामरेश्वरतन्त्रम्

अस्य पुस्तकस्य गवेषणा शास्त्री, एम्०ए०एम्०ओ०एल्० इत्याद्युपाधिधारिणा श्रीजगद्धरजाड्महोदयेन कृता । राजकीयानुसन्धानविभागेन १९४७ ख्रिष्टाब्दे चेद प्रकाशितम् । पुस्तकमिदमागमशास्त्रम् । प्रसिद्धाष्टादशशैवशास्त्रान्तर्गताद्'वीरभद्रेश्वरम्' इतिनामकतन्त्रान्निष्कासितमिद तन्त्रम् । अस्य प्रधानविषयस्तु तान्त्रिकयागादीनामौषधादीना च सविस्तर वर्णनमेव । अस्य पृष्ठसंख्या ७० अस्ति । इद द्वयो. सूचीपत्रयोरङ्कितम् ।

## कर्मकाण्डक्रमावली

इद पुस्तक शास्त्री, एम्०ए० इत्याद्युपाधिभाजा श्रीजगद्धरजाड्महोदयेन गवेपित कश्मीरराज्यस्यानुसन्धानविभागेन १९४७ ख्रिष्टाब्दे प्रकाशित च । पुस्तकनिर्माता ११३० वैक्रमाब्दभव कारमीरवास्तव्य सोमशम्भुरस्ति । शैवकर्मकाण्डयागादीना सविस्तर वर्णनमेव पुस्तकस्य प्रधानविषय' । अत्र पृष्ठानि १८७, श्लोकाश्च १८१४ सन्ति । इदपुस्तकनामोल्लेखो द्वयोरपि सूचीपत्रयोरस्ति ।

## कामकलाविकासः

ग्रन्थोऽयं श्रीमुकुन्दरामशास्त्रिणा १९७५ विक्रमाब्देऽनुसहितः काश्मीरराज्यस्यानुसन्धानविभागाच्च प्रकाशित. । अस्य पुस्तकस्य लेखकः पुण्यानन्दाचार्य. । पुस्तकविषयस्तु शिवशक्त्यो सविस्तर विवरणम् । ग्रन्थस्य प्रथम. श्लोको विषयज्ञापकः । यथा.—

सकलभुवनोदयस्थितिलयमयलीलाविनोदनोद्युक्त ।
अन्तर्लीनविमर्श. पातु महेश. प्रकाशमात्रतनुः । इति ।

पुस्तकेऽस्मिन् श्लोका. ५५, पृष्ठानि च ५२ सन्ति । पुस्तकस्य नाम द्वयो. सूचीपत्रयोर्लिखितमस्ति ।

### क्रमदीपिका

इद पुस्तक श्रीरामचन्द्रकाकमहोदयेन १९२६ ख्रिष्टाब्दे गवेपित, तस्मिन्नेव वर्षे राजकीयानुसन्धानविभागेन प्रकाशितम् । पुस्तकस्य रचयिता कोऽप्यज्ञातनामधेय काश्मीरिको विद्वान् । वैष्णवधर्ममनुसरता तेन तत्सवद्ध कृष्णगोपालादीना पूजाविधि सविस्तर विवृतोऽत्र । तेनात्र वैष्णवविधिमाश्रित्य दीक्षापुरश्चरणमन्त्रादीना वर्णनमपि कृतम् । वैष्णवमतावलम्बिना साधकाना कृते पुस्तकस्यास्य महानुपयोग । अस्याष्टौ पटलानि, अष्टाशीतिसख्यानि पृष्ठानि च सन्ति । सूचीपत्रयोर्द्वयो पुस्तकस्य नाम लिखितमस्ति ।

### क्रमाभिज्ञापना

पुस्तकमिद श्रीरामेश्वरझामहोदयेन लिखित सम्प्रत्यपि पाण्डुलिपिरूपेणैव तिष्ठति । पुस्तकविषय काश्मीरशैवदर्शनसम्बद्ध सन् क्रमाक्रमविक्रमै कथ जगन्निर्माणम् ? इति रहस्य सार्धपञ्चशतश्लोकै प्रतिपादयति । पुस्तकमप्रकाशित वर्तते ।

### गङ्गास्रोतोनिरूपणम्

श्रीवेङ्कटरामेण शास्त्रिणा कृतो गङ्गोद्गमविषये विचार ।

### गन्धर्वतन्त्रम्

पुस्तकमिद श्रीरामचन्द्रकाकेन गवेपितम् । काश्मीरराज्यस्थानुसन्धानविभागेन १९३४ ख्रिष्टाब्दे प्रकाशितम् । स हि महोदयो राजकीयानुसन्धानविभागस्याध्यक्ष आसीत् । स देशविभाजनकाले जम्बूकाश्मीरराज्यस्य प्रधानमन्त्रिपदे नियुक्तोऽभूत् । गन्धर्वतन्त्रमिदमागमशास्त्रम् । ग्रन्थोऽय शाक्तोऽपि सन् त्रिकसम्बद्धाना पट्त्रिशत्तत्वाना सविस्तर वर्णन करोति । मन्त्र-यन्त्र-मुद्राऽऽसनादीना विवरणेन सह कुण्डलिन्या शक्ते सविशेपा पूजाऽपीह निर्दिष्टा । परमसत्ताया शिवस्य सत्-चित्-आनन्द-प्रकाशविमर्शा धर्मा अपि यथास्थान विवृता । पुस्तकस्य पटलानि ४२, श्लोकाश्च ३६३ सन्ति । पुस्तकमिद द्वयो सूचीपत्रयोरङ्कितम् ।

### गीताप्रदीप

श्रीवसुदेवेन लिखिता वेदान्तमयी कविता ।

### चित्तसन्तोषत्रिंशिका

अस्याः पुस्तिकाया. पाण्डुलिपि. श्रीदीनानाथमहोदयेन २०१३ वैक्रमाब्दे प्राप्ता शारदाक्षरेषु लिखिता। सा चाधुना काश्मीरराज्यस्थानुसन्धानविभागस्था। पुस्तकनिर्माता नागः। बौद्धाचार्यो नागार्जुन एव काश्मीरेषु समागत्य अत्रत्य शैवदर्शनमधीत्य च नाग इति नाम्ना प्रसिद्धि गत इति केचिदभिदधति। पुस्तकस्य त्रीणि पृष्ठानि श्लोकाश्च त्रिंशत् सन्ति। पुस्तकविषयः प्रधानतया शैवसिद्धान्तनिरूपणमेव।

### चित्तानुबोधः

राजानकभास्करकण्ठेन योगवाशिष्ठस्य शैवमतानुसारं कृत सक्षेपः।

### जन्ममरणविचार.

अस्य पुस्तकस्यानुसन्धाता श्रीमुकुन्दरामशास्त्रिमहोदय.। तेनास्य पुस्तकस्य शारदापाण्डुलिपिः 'आगरा' नगरत. १९१२ ख्रिष्टाब्दे प्राप्ता, प्रकाशिता चानुसन्धानविभागात् १९७५ विक्रमाब्दे। पुस्तकनिर्माता काश्मीरवास्तव्यः ख्रिष्टैकादशशताब्दीभवः श्रीभट्टवामदेवोऽस्ति। सोऽयमभिनवगुप्तरचितस्य परमार्थसारनामकस्य ग्रन्थस्य टीकाकर्तुर्योगराजस्य शिष्य आसीत्। काश्मीरत्रिकदर्शनसिद्धान्तप्रतिपादनमेवास्य विषय.। द्वयोरपि सूचीपत्रयोरस्य नाम विद्यते।

### तत्त्वप्रकाशिका

श्रीलक्ष्मीरामराजानककृता भगवद्गीतायाष्टीका।

### तन्त्रवटधानिका

एतस्या. पुस्तिकाया अनुसन्धाता श्रीमुकुन्दराममहोदयोऽस्ति। तेनेयं राज्यस्थानुसन्धानविभागात् १९७५ वैक्रमाब्दे प्रकाशिता। पुस्तकप्रणेताऽभिनवगुप्त आचार्य। एतत्प्रतिपाद्यविषय काश्मीरत्रिकदर्शनसम्बद्धाऽऽभासवादव्याख्यानमेव। पुस्तकस्य पृष्ठानि ११ सन्ति। द्वयोरपि सूचीपत्रयोरस्य नाम वर्तते।

### तन्त्रसारः

अय ग्रन्थो महामहोपाध्यायेन श्रीमुकुन्दरामशास्त्रिणा गवेषितस्तेनैव च जम्बूराज्यस्थानुसन्धानविभागात् १९७४ वैक्रमेऽब्दे प्रकाशित.। अस्य पुस्तकस्य लेखकोऽभिनवगुप्तः। तेनास्य ग्रन्थस्य द्वाविंशत्याह्निकेषु तन्त्रालोकप्रतिपाद्यो विषय एव वर्णितः।

पुस्तकोद्देश्य विषयादिक च तत्रैव स्फुटतया निम्नस्थयो पद्ययोर्दर्शितम्—

वितततस्तन्त्रालोको विगाहितु नैव शक्यते सर्वै ।
ऋजुवचनविरचित वै सुतन्त्रसार तत शृणुत ॥
अज्ञान किल बन्धहेतुरुदित शास्त्रे मल तत्स्मृत
पूर्णज्ञानकलोदये तदखिल निर्मूलता गच्छति ।
ध्वस्ताशेषमलात्मसविदुदये मोक्षश्च तेनामुना
शास्त्रेण प्रकटीकरोमि निखिल यज्ज्ञेयतत्त्व भवेत् ॥

तन्त्रसारस्य आह्निकानि २२, पृष्ठसख्या च २०८ सन्ति । पुस्तकमिद द्वयोरेव सूचीपत्रयोरुल्लिखितम् ।

## तन्त्रालोक

एतन्नामको बृहत्कायो ग्रन्थो द्वादशभागेषु जम्बूकाश्मीरराज्यस्थानुसन्धानविभागाद् विविधेषु सवत्सरेषु प्रकाशित । अस्य ग्रन्थस्यानुसन्धातृलेखकादिपरिचयो नीचैर्दीयते —

तन्त्रालोकस्य प्रथमो भाग —काश्मीरवास्तव्येन महामहोपाध्याय-शास्त्र्युपाधिभाजा श्रीमुकुन्दरामेणाऽनुसहित । राजकीयानुसन्धानविभागात् १९७५ वैक्रमेऽब्दे प्रकाशितश्च । तन्त्रालोकस्य द्वितीयो भाग काश्मीरवास्तव्येन एम्०ए०, शास्त्री, एम्० ओ०-एल्० इत्याद्युपाधिभाजा श्रीमधुसूदनकौलेन गवेषित । पुस्तकमिद काश्मीरराजकीयानुसन्धानविभागेन १९७७ वैक्रमेऽब्दे प्रकाशितम् । तन्त्रालोकस्य तृतीय-चतुर्थ-पञ्चम-षष्ठ-सप्ताष्टम-नवम दशमैकादश-द्वादशभागा अपि श्रीमधुसूदनकौलेन गवेषिता, *काश्मीरराज्यस्थानुसन्धानविभागात् क्रमश १९७७, १९७९, १९७८, १९७८, १९८३, १९८५, १९९० १९९३, १९९४ वैक्रमाब्देषु प्रकाशिताश्च ।*

अभिनवगुप्तस्य कृतिस्तन्त्रालोक काश्मीरशैवदर्शनाना सारभूतत्रिकदर्शनसबद्धस्य दप्रत्यभिज्ञाख्य शास्त्रमेव सर्वात्मना विवृणोति । यद्यपि अत्र दर्शनशास्त्रस्य ज्ञानक्रियात्मक पक्षद्वयमस्ति, पर तन्त्रालोक प्रधानतया प्रक्रियाग्रन्थोऽस्तीति नात्र विदुषा वैमत्यम् । अस्य ग्रन्थस्य ५८०० श्लोका सप्तत्रिंशदाह्निकेषु विभक्ता विद्यन्ते । आह्निकपृष्ठसख्यादिनिर्देशपुरस्सरमेतद्ग्रन्थस्यविषयवैविध्यमधो दीयते —

प्रथम-द्वितीय-तृतीय-चतुर्थ-पञ्चम-षष्ठ-सप्तमाष्टम-नवम-दशमैकादश-द्वादशभागाना

क्रमशः ३१०, २६४, ४७१, २०३, ४७१, २५०, १०८, २३६, १८५, ३७०, १८४, १७२ पृष्ठसंख्याऽस्ति ।

१. प्रथमाह्निके प्रणेत्रा त्रिकशास्त्रस्य दार्शनिकपक्षमुद्घाट्य वसुगुप्तनिर्मित'शिवसूत्राणि' इति नाम्नो ग्रन्थस्याद्यं सूत्रद्वयं व्याख्यातं, साधितं चात्मनश्चेतनत्वम् ।

२-५. द्वितीयात्पञ्चमपर्यन्तेष्वाह्निकेषु त्रिकदर्शनान्तर्गतं शाम्भव-शाक्ताणवेत्युपायत्रय-विवरणं विद्यते ।

६-१०. आह्निकेष्वनेकेषां विषयाणां षड्त्रिंशत्तत्त्वानां च सविस्तरं वर्णनं वरीवर्ति ।

११-१२. आह्निकयोः षट्कञ्चुककलाध्वादिवर्णनम् ।

१३. आह्निके शक्तिपातस्य विवेचनम् ।

१४-२२. आह्निकेषु दीक्षाविस्तारनिरूपणम् ।

२३-२८. आह्निकेषु यज्ञसम्बन्धिन्यः क्रियाः पूजाविधयश्च विद्यन्ते ।

२९ आह्निके रहस्यप्रक्रिया कौलक्रियादयश्च वर्णिताः ।

३०-३७. आह्निकेषु मन्त्रविद्या-मुद्रा-विन्द्वादीना वर्णनं कृत स्त्रीणां विशिष्टं महत्वं गुप्तप्रक्रियाणां निर्देशश्च सविस्तरं विवृतः ।

अस्य ग्रन्थस्य सर्वे भागा द्वयोरेव सूचीपत्रयोरुल्लिखिता यथास्थानम् । अस्मिन् ग्रन्थे खिष्टैकादशशताब्दीभवस्य जयरथनाम्नः काश्मीरराजस्य विदुषः प्रकाशविवेकाख्ये टीके वर्तेते ।

## दुर्भिक्षतारोदयास्ते

पुस्तकपाण्डुलिपिगवेषकः श्रीदीनानाथः । पुस्तकलेखकः खिष्टैकोनविंशतिशताब्दीभवः काश्मीरवास्तव्यः श्रीईश्वरकौलः । शारदाक्षरेषु लिखिता पाण्डुलिपिः काश्मीरराज्यस्यानुसन्धानविभागे स्थिता । पुस्तकं काव्यात्मकम् । १९३४ वैक्रमाब्देषु दुर्भिक्षाक्रान्तकाश्मीरवर्णनमेव पुस्तकस्य प्रधानो विषयः ।

पुस्तके पृष्ठानि ४० सन्ति ।

## देवीनामविलासः

पुस्तकमिदं श्रीमधुसूदनकौलमहोदयेनानुसंहितं काश्मीरराज्यस्थानुसन्धानविभागात् १९९८ विक्रमाब्दे प्रकाशितं च । अस्य पुस्तकस्य प्रणेता १७२३ विक्रमाब्दे-

भव श्रीसाहवरामकौलः । देवीनामविलासविषयस्तु देवीनाम्ना काव्यात्मिकया कलया व्याख्यानमेव । पुस्तकस्य भक्तय. (सर्गाः १६) पृष्ठानि च ३२४ सन्ति । पुस्तक द्वयोरपि सूचीपत्रयोरङ्कित विद्यते ।

## देवीरहस्यम्

ग्रन्थोऽय श्रीरामचन्द्रकाकद्वितीयेन श्रीहरभट्टशास्त्रिणा गवेपित सम्पादितश्च । काश्मीरराज्यस्थानुसन्धानविभागाध्यक्षेण श्रीमधुसूदनकौलमहोदयेन तत एव विभागात् १९४१ खिष्टाब्दे प्रकाशित. । ग्रन्थोऽय भैरवभैरवीसम्वादात्मकमागमशास्त्रम् । केनापि अज्ञातनामधेयेन काश्मीरिकेण विदुषा परम्परागताद् बृहत्कायात् 'रुद्रयामल-नामकात्' तन्त्रात् पद्यानि सगृह्य निर्मितमिद निम्नोक्ते भागत्रये । पञ्चविंशत्यध्याये पूर्वार्धभागे मन्त्रयन्त्रादीना विवरणम् । पञ्चत्रिंशदध्याये उत्तरार्धे त्रिपुरादेव्या सविशेषा पूजाऽस्ति । सप्ताध्यायात्मके परिशिष्टभागे दक्षिणामूर्तेस्तस्य शिष्यस्य च मन्त्रात्मक. सवादो वर्तते । पुस्तकस्य पृष्ठानि ५७० सन्ति । पुस्तक द्वयोरपि सूचीपत्रयोरु-ल्लिखितम् ।

## देशोपदेशः

पुस्तकमिद श्रीमधुसूदनकौलमहोदयेन गवेपितम् । काश्मीरराज्यस्थानुसन्धान-विभागेन १९८० विक्रमाब्दे प्रकाशितम् । अस्य पुस्तकस्य रचयिता काश्मीरवास्त-व्यस्य धनिकवशसम्भवस्य श्रीप्रकाशेन्द्रस्यात्मज ९९० खिष्टाब्दभव. क्षेमेन्द्र. । 'देशोपदेश' नामकपुस्तकस्य प्रतिपाद्यविपय खलकन्दर्पवेश्याकुट्टिनीविटादीना सव्य-ङ्ग्य वर्णनम् ।

## नरेश्वरपरीक्षा

ग्रन्थोऽय श्रीमधुसूदनकौलमहोदयेन गवेपित प्राकाश्य नीतश्च काश्मीरराज-कीयानुसन्धानविभागात् १९८३ विक्रमाब्दे । पुस्तकलेखक सद्योज्योति । स खिष्टाष्टमशताब्दीत पूर्वमेवेमा भुवमलमकरोत् । परम्परागतेन सिद्धेन दुर्वासस आत्म-जेन अमर्दकनाम्ना स्थापितस्य शैवशास्त्रान्तर्गतद्वैतवादिनो मतस्य निरूपणमेव पुस्तक-स्य प्रधानविपय । पुस्तके यत्र तत्र बौद्धमतखण्डनादिकमपि प्रकीर्णमुपलभ्यते । पुस्तकस्य टीकाकार खिष्टदशमशताब्दीजा रामकण्ठ । पुस्तकस्य काण्डात्रय, कारिका १८३, पृष्ठानि च २७४ सन्ति । पुस्तकनाम द्वयो सूचीपत्रयोर्विद्यते ।

### नर्ममाला

अस्या निर्माता ९९० ख्रिष्टाब्दभवः प्रकाशेन्द्रात्मजः क्षेमेन्द्रः काश्मीरवास्तव्यः। क्षेमेन्द्रस्य 'देशोपदेश' नामकेनापरेण पुस्तकेन सहसम्बद्धमेवेदं सम्पादितं प्रकाशितं चाभूत्। नर्ममालायां कायस्थस्य गुणदोषादीनां व्यङ्ग्यपूर्णं चित्रणम्। इदमपि पुस्तकं गवेषकधुरीणेन श्रीमधुसूदनकौलेन गवेषितम्। प्रकाशितं चेदं १९८० विक्रमाब्दे काश्मीरराज्यानुसन्धानविभागात्। सूचीपत्रद्वयेऽपि पुस्तकस्यास्य समुल्लेखः।

### निरुत्तरतन्त्रम्

एतत्पुस्तकपाण्डुलिपिगवेषकः श्रीदीनानाथशास्त्री यक्षः। पाण्डुलिपिः शारदाक्षरेषु लिखिताऽनुसन्धानविभागे वर्तते। पुस्तकमिदमागमशास्त्रं त्रिकसिद्धान्तानेव वर्णयति। पुस्तकपृष्ठानि ५ सन्ति।

### नीलमतपुराणम्

पुस्तकपाण्डुलिपिगवेषक श्रीदीनानाथशास्त्री यक्षः। पाण्डुलिपि. शारदाक्षरेषु लिखिताऽप्रकाशितैव काश्मीरराज्यस्यानुसन्धानविभागे वर्तते। पुस्तकमागमशास्त्रम्। ग्रन्थोऽयमितिहासात्मक एतद्देशस्य प्राचीनां सामाजिकराजनैतिकादिव्यवस्थां विवृणोति। पुस्तकपृष्ठानि १०० सन्ति। अतिप्राचीना पाण्डुलिपिरियं नीलमतपुराणस्य पुनः प्रकाशने महदुपकुर्यात्।

### नेत्रतन्त्रम्

ग्रन्थोऽयं श्रीमधुसूदनकौलमहोदयेनानुसंहितः कश्मीरराज्यस्थानुसन्धानविभागेन १९८३ वैक्रमाब्दे प्रकाशितश्च। भैरवभैरवीसंवादात्मकत्वादागमशास्त्रमिदम्। भैरवनेत्रमहिमवर्णनमेव पुस्तकस्य प्रधानविषयः, स च पुस्तकस्य प्रथमे श्लोके ग्रन्थकर्त्रा सूचित एव। यथा—

यत्तदापोमयं देव चक्षुः सर्वत्र दृश्यते।
तस्मादग्निः कथं रौद्र उत्पन्नः कालदाहकः ॥१॥ इति।

पञ्चदशाधिकाराणां श्लोकसंख्या निम्नस्थाः—प्रथमे–४७, द्वितीये–३३, तृतीये–८२, चतुर्थे–१०, पञ्चमे–१०, षष्ठे–५०, सप्तमे–५३, अष्टमे–८३, नवमे–२७, दशमे–४५, एकादशे–३३, द्वादशे–१५, त्रयोदशे–५०, चतुर्दशे–११, पञ्चदशे–२९ श्लोकाः, अस्य पृष्ठानि २९६ सन्ति। द्वयोरपि सूचीपत्रयोः पुस्तकस्यास्योल्लेखोऽस्ति।

## परमार्थचर्चा

पुस्तकमिदं परममाहेश्वरेण श्रीमदभिनवगुप्तेन प्रणीतम् । श्रीहरभट्टशास्त्रिणा गवेषितम् । काश्मीरिकेण श्रीजगद्धरजाडूनामकेन विदुषा १९४७ ख्रिष्टाब्दे काश्मीर-राज्यानुसन्धानविभागात् प्रकाशितं च । अस्मिन् पुस्तके परमतत्त्वभूतस्य शिवस्यैव विवेचनं विद्यते । बोधपञ्चदशिकापुस्तकेन सहैवेदं पुस्तकं प्रकाशितं लभ्यते । बृहल्लघ्वो-र्द्वयोरपि काश्मीरिकपुस्तकसूचीपत्रयोरस्य पुस्तकस्योल्लेखो वर्तते ।

## परमार्थसार

अस्य पुस्तकस्यानुसन्धानं कलिकातानगरवास्तव्येन 'काश्मीरशैविज्म", "हिन्दुरियलिज्म" इत्यादिपुस्तकानां प्रणेत्रा काश्मीरराज्यस्थानुसन्धानविभागाध्यक्षेण श्री जे० सी० चटर्जीनामकेन विदुषा कृतम् । अनुसन्धानविभागेन तत्साहाय्यमादायैतत् पुस्तकं १९७३ वैक्रमाब्दे प्रकाशितम् । परमार्थसारप्रणेताऽभिनवगुप्त आसीत् । सोमानन्दनिर्मितशिवदृष्टेर्विषयः प्रत्यभिज्ञाख्ये प्रकरणेऽत्र प्रकारान्तरेण वर्णितः । पुस्तके श्लोकाः १०५, पृष्ठानि च १९९ सन्ति । ग्रन्थोऽयं द्वयोरपि सूचीपत्रयोरुल्लिखितः ।

## परात्रिंशिका

पुस्तकमिदं श्रीमुकुन्दरामशास्त्रिणा तिस्रः पाण्डुलिपीः परामृश्य सम्पादितम् । ताः पाण्डुलिपयोऽप्येतेनैव महोदयेन गवेषिताः । ग्रन्थोऽयं जम्बूकाश्मीरराज्यस्थानुसन्धान-विभागात् १९७५ वैक्रमाब्दे प्रकाशितः । ग्रन्थोऽयमागमशास्त्रं भैरवभैरवीसंवादात्म-कम् । अस्य टीकाकारोऽभिनवगुप्तः । त्रिकतत्त्वाभिधायिन्याः परात्रिंशिकायाः प्रधानो विषयस्तु तान्त्रिकीं सरणिमनुसृत्य वर्णमालाक्षररहस्यनिरूपणम् । वाचः-परा, पश्यन्ती, मध्यमा, वैखरी इति चतुर्णां भेदानां महिमानं संवर्ण्य तेभ्यः सकलब्रह्माण्ड-प्रादुर्भावः प्रदर्शितः । यथा लयावस्थायां शिवे सर्वं वस्तु (जगत्) विलीय तिष्ठति, एवमेवाहमिति पराहन्तावाचके शब्दे सर्वो वर्णसमुदायस्तिष्ठति । अकारादारभ्य हपर्यन्तं सर्वेषां वर्णमालाक्षराणां तान्त्रिकं दार्शनिकं च महत्त्वं दार्शनिकया दृशा विवृतम् । अनेनैव च कारणेन पुस्तकविषयो महान् दुरूहः संवृत्तः । पुस्तकेऽस्मिन् श्लोकाः ३०, पृष्ठानि च २८३ सन्ति । पुस्तकस्योल्लेखो द्वयोरपि सूचीपत्रयोरस्ति ।

## परात्रिंशिकातात्पर्यदीपिका

पुस्तकमिदं श्रीजगद्धरजाडूमहोदयेन गवेषितं काश्मीरराज्यस्थानुसन्धानविभागेन

२००४ वैक्रमेऽब्दे प्रकाशितं च । पुस्तकनिर्माता त्रिकदर्शनान्तर्गतप्रत्यभिज्ञामतस्य प्रवर्त्तकः प्रत्यभिज्ञासिद्धान्तप्रतिपादिनः शिवदृष्टिनामकस्य पुस्तकस्य लेखकः ख्रिष्ट-नवमशताब्दीभवः सोमानन्दः । सोमानन्दनिर्मिततात्पर्यदीपिकानाम्न्याष्टीकायाः प्रतिपाद्यो विषयः परात्रिंशिकया विवृतानां काद्यक्षराणां व्याख्यैव । पुस्तकस्य द्वयोरेव सूचीपत्रयो-र्निर्देशोऽस्ति ।

### पराप्रवेशिका

इयं पुस्तिका श्रीमुकुन्दरामशास्त्रिणा गवेषिता तेनैव च काश्मीरराज्यस्थानु-सन्धानविभागात् १९७४ वैक्रमेऽब्दे प्रकाशिता । अस्य पुस्तकस्य लेखकोऽभिनवगुप्तोऽस्ति । त्रिकदर्शनसम्बद्धषट्त्रिंशत्तत्त्वनिरूपणमेवास्य प्रधानविषयः । त्रिकतत्त्वस्य ज्ञानार्थं पुस्तकस्यास्य महानुपयोगः सम्भाव्यते, इति पुस्तकनाम्नैव प्रतीयते । पुस्तकस्य पृष्ठ संख्या १३ अस्ति । पुस्तिकेयमुभयोः सूचीपत्रयोरुल्लिखिता ।

### पूर्णताप्रत्यभिज्ञा

अस्य ग्रन्थस्य प्रणेतैवास्य प्रकाशकः । तस्य नाम श्रीरामेश्वरझा इति । स मिथिलावास्तव्यो व्याकरणन्यायाद्याचार्योऽस्ति । स गृहस्थोऽपि सन् सन्यस्तवदा-चरति, शास्त्राभ्यासः पर्यटनं च तस्य नैसर्गिकी वृत्तिः । काश्मीरे गत्वा तेन तत्रत्यानि प्राचीनशैवशास्त्राण्यधीत्य रचितोऽयं ग्रन्थः सम्पूर्णकाश्मीरिकशैवशास्त्ररहस्यं स्फुटतया विवृणोति । पुस्तकसरणिर्मधुरा प्रसादगुणगुम्फिता च । अयं ग्रन्थः काव्यात्मिकया भाषया लिखितो दुर्गमं दुरूहं च काश्मीरशैवदर्शनमपि सुगमं करोति ।

### प्रत्यभिज्ञाकौमुदी

आनन्दनाथकृता प्रत्यभिज्ञाकारिकाणां टीका ।

### प्रत्यभिज्ञावृत्तिः

अस्य टीकात्मकस्य पुस्तकस्य पाण्डुलिपिः श्रीदीनानाथेन शास्त्रिणानुसंहिता । शारदाक्षरेषु लिखिता पाण्डुलिपिरनुसन्धानविभागेऽस्ति । पुस्तकलेखकः श्रीउत्पल देवोऽस्ति । पुस्तकविषयः प्रत्यभिज्ञाकारिकानिरूपितानां प्रत्यभिज्ञासिद्धान्तानां सुविशदं विवेचनमेव टीकारूपेण । पुस्तकस्य पृष्ठानि २० सन्ति ।

## प्रत्यभिज्ञाहृदयतन्त्रम्

पुस्तकमिद काश्मीरराज्यस्थानुसन्धानविभागेनाऽनुसहितम् । आडियारपुस्तकालयेन मद्रासनगरात् प्रकाशित च । इद च सम्प्रति एम्० ए०, पी-एच्० डी० इत्युपाधिकेन कीट एफ्० सिडिक्करनामकेन पाश्चात्यविदुषा कृतया आंग्लभाषाटीकयाऽन्वितमेव । पुस्तकनिर्माता अभिनवगुप्तशिष्य ख्रिष्टैकादशशताब्दीभव क्षेमराज. । सोमानन्दप्रवर्तितप्रत्यभिज्ञाशास्त्रस्यैव सुविशद विवरण पुस्तकस्य विंशतिसूत्रेषु समुपलभ्यते । पुस्तकस्य प्रथम-द्वितीयसूत्रे एव विषयोद्घाटनाय उपयोगिनी । ते च 'चिति स्वतन्त्रतया विश्वसिद्धिहेतु' इति, 'सा स्वभित्तौ विश्वमुन्मीलयति' इति च । अस्य पृष्ठानि १०० सन्ति । द्वयो सूचीपत्रयोरस्योल्लेखो वर्तते ।

## प्रासादमण्डनम्

इद पुस्तक श्रीजगद्धरजाडूमहोदयेन गवेषितम् । काश्मीरराज्यस्थानुसन्धानविभागेन १९४७ ख्रिष्टाब्दे प्रकाशित च । पुस्तकनिर्माता सूत्रधारमण्डनाख्यो विद्वान् । अस्या पुस्तिकाया वास्तुशास्त्रान्तर्गतमन्दिरगृहादिनिर्माणविषय एव सविस्तर व्याख्याता । अस्यामध्याया अष्टौ, पृष्ठानि त्रयश्चत्वारिंशत् सन्ति । पुस्तकनिर्देश सूचीपत्रयोर्द्वयोर्विद्यते ।

## बालबोधिनी

जगद्धरविरचिता शर्ववर्माचार्यस्य कातन्त्रकौमुद्याख्यव्याकरणग्रन्थस्य टीका ।

## बृहन्नीलतन्त्रम्

इद पुस्तक श्रीरामचन्द्रकाकमहोदयेन गवेषित राजकीयानुसन्धानविभागेन १९३८ ख्रिष्टाब्दे प्रकाशितम् । इदमागमशास्त्रम् । विद्याधिष्ठात्र्या सरस्वत्या कथ नीलसरस्वत्या रूपेण परिणमनमिति सरसा पौराणिकी कथा एव पुस्तकस्य रोचको विषय । अस्याध्याया २४, पृष्ठानि च २५६ सन्ति । एतदुल्लेखो द्वयोरेव सूचीपत्रयोर्वर्तते ।

## बोधपञ्चदशिका

पुस्तकमिद श्रीनगरवास्तव्येन केशवभट्टज्योतिर्विद सूनुना श्रीहरभट्टशास्त्रिणा गवेषित सम्पादित च । काश्मीरराज्यस्थानुसन्धानविभागाध्यक्षेण १८९१ ख्रिष्टाब्द-

जातेन काश्मीरवास्तव्येन श्रीजदद्धरजाडुना च १९४७ खिष्टाब्दे प्रकाशितम् । अस्य लेखकोऽभिनवगुप्त । पुस्तकविषयस्तु बोधात्मकस्य शिवस्य पञ्चदशसु श्लोकेषु विवरणमेव । इद पुस्तक परमार्थचर्चानामकेनापरेण पुस्तकेन सहैव सम्बद्धमस्ति । पुस्तकद्वयस्य पृष्ठसख्या १६ अस्ति । सूचीपत्रयो पुस्तकद्वयमेवोल्लिखित विद्यते ।

पुस्तकमिद श्रीमुकुन्दरामशास्त्रिणा गवेषितम् । काश्मीरराज्यस्थानुसन्धानविभागेन १९७५ वैक्रमेऽब्दे प्रकाशित च । पुस्तकनिर्माताऽभिनवगुप्तोऽस्ति । पुस्तकेऽस्मिन् श्रीमताऽऽचार्येण स्वशिष्यान् बोधयितु परमचित्स्वभावस्यानुत्तरस्य शिवस्य बोधसज्ञया वर्णन कृतम् । पुस्तकस्याद्यश्लोकोद्धरणेन पुस्तकविषय स्फुटीभवति ।

अनस्तमितमारूपस्तेजसा तमसामपि ।
य एकोऽन्तर्यदन्तश्च तेजासि च तमासि च ॥१॥

अस्य १५ पद्यानि, पृष्ठानि च ८ सन्ति । द्वयोरपि सूचीपत्रयो पुस्तकोल्लेखोऽस्ति ।

## बोधविलास

पुस्तिकाया पाण्डुलिपि शारदाक्षरेषु श्रीयक्षदीनानाथशास्त्रिमहोदयेन २०१६ वैक्रमाब्दे गवेषिता । एतत्पुस्तिकाप्रणेता खिष्टैकादशशताब्दीभव क्षेमराज । पुस्तकविषयस्तु प्रधानतया काश्मीरशैवदर्शनविवरणमेव । पुस्तकपृष्ठानि चत्वारि सन्ति । पुस्तकमप्रकाशितमेव तिष्ठति ।

## बोधोल्लास

पुस्तक शारदाक्षरेषु लिखितमस्ति । एतत्पाण्डुलिपिगवेषक श्रीमान् यक्षदीनानाथ । पुस्तकलेखक श्रीवर्षदत्तोऽस्ति । पुस्तक कदा लिखितमिति ज्ञातु न शक्यम् । किन्तु पाण्डुलिपि २०१२ वैक्रमाब्दे लब्धा । विषयस्तु वेदान्ततत्त्वनिरूपणमेव । पुस्तकमप्रकाशितमनुसन्धानविभागेऽस्ति । काश्मीरराज्यस्थानुसन्धानविभागस्तत्प्रकाशने प्रयत्नशील । पृष्ठानि त्रीणि ।

## भावोपहार

पुस्तकानुसन्धाता श्रीमुकुन्दरामशास्त्री । तत्साहाय्येनानुसन्धानविभागेन तत् १९७५ वैक्रमाब्दे प्रकाशितम् । पुस्तकमिद ज्ञातस्थितिकालादिना चक्रपाणिनाथनामकेन केनचिद् विदुषा रचितम् । आचार्यभट्टरम्यदेवेनात्र निवृत्तिनामिका टीका कृता ।

शिवस्य रहस्यात्मिका स्तुतिरेव पुस्तकस्यास्य प्रधानो विषय, तत्सूचकौ पुस्तकस्याद्यौ श्लोकौ नीचैर्दर्श्यते—

ओम् नम सूर्यकलाजालकालदेहापहारिणे ।
आधाराधेयपीठाय भवाय भवदायिने ॥१॥
महापाशुपतोद्याने कश्चिद् विश्रम्य तापस ।
चक्रे चिच्चक्रनाथस्य शम्भोर्भाविनुतिं पराम् ॥२॥ इति ।

## भुवनेश्वरीरहस्यम्

एतत्पुस्तकगवेषक श्रीदीनानाथशास्त्री यक्ष । अस्य पाण्डुलिपि शारदाक्षरेषु लिखिताऽप्रकाशिता एवानुसन्धानविभागे वर्तते । पुस्तकमागमशास्त्र दक्षिणस्थाया कस्याश्चिद्देव्या स्तुतिमेवोपस्थापयति । पुस्तकपृष्ठानि १५ सन्ति ।

## भैरवनाथस्तोत्रम्

एतत्पुस्तकपाण्डुलिपि श्रीदीनानाथेन गवेषिता । सा चानुसन्धानविभागेऽप्रकाशितैव स्थिता । पुस्तकलेखकोऽभिनवगुप्तोऽस्ति । विषयस्तु त्रिकदर्शनरहस्यवर्णन भैरवस्तुत्यात्मकेषु पद्येषु । पुस्तकपृष्ठानि १५ सन्ति ।

## भैरवानुकरणस्तोत्रम्

अस्य पुस्तकस्य पाण्डुलिपेर्गवेषक श्रीदीनानाथ । पाण्डुलिपि शारदाक्षरेषु वर्तते । सा चाप्रकाशिताऽनुसन्धानविभागे तिष्ठति । अस्य लेखक क्षेमराज ।

## मतङ्गवृत्ति

अस्य पुस्तकस्य पाण्डुलिपि पण्डितप्रवरेण श्रीदीनानाथयक्षशास्त्रिणा लब्धा । पुस्तक काश्मीरराज्यस्यानुसन्धानविभागऽप्रकाशितमेव तिष्ठति ।

## महानयप्रकाश

ग्रन्थोऽयं श्रीमुकुन्दरामशास्त्रिमहोदयेन गवेषित, काश्मीरराज्यस्थानुसन्धानविभागेन च १९७५ वैक्रमाब्दे प्रकाशितः । पुस्तकप्रणेता श्रीमहामहेश्वराचार्यो राजानकशितिकण्ठाचार्य । तस्यैव चात्र ग्रन्थे टीकाऽपि विद्यते । पुस्तकविषयस्तु प्रधानतया शिवस्य शक्तेर्विविधरूपाणा निरूपणमेव । पुस्तक प्राकृतभाषाया लिखित तस्य च टीका संस्कृतेऽस्ति । पुस्तकस्य चतुर्दश उदया (अध्याया) १८५ पृष्ठानि च सन्ति । पुस्तकमिद द्वयोरपि सूचीपत्रयोर्निर्दिष्टमस्ति ।

## महार्थमञ्जरी

अस्य पुस्तकस्य गवेषयिता श्रीमधुसूदनकौलमहोदय । काश्मीरराज्यस्थानुसन्धानविभागेन १९७५ विक्रमाब्दे प्रकाशितमिदम्। पुस्तकस्य निर्माता टीकाकारश्च काश्मीरजो महेश्वरानन्द । पुस्तकमिद प्राकृतभाषाया लिखित, तया च सह सस्कृतच्छायाऽपि विद्यते। त्रिकतत्वस्य ज्ञानपक्षक्रियापक्षयो सुविशद विवरणमेव पुस्तकस्य प्रधानविषय । पुस्तकपृष्ठसख्या १४८ अस्ति। इद द्वयोरपि सूचीपत्रयोरुल्लिखितम्।

## मालिनीविजयोत्तरतन्त्रम्

पुस्तकमिद श्रीमधुसूदनकौलमहोदयेन गवेषित जम्बूकाश्मीरराज्यस्थानुसन्धानविभागेन १९७८ वैक्रमेब्दे प्रकाशितम्। पुस्तकमिदमागमशास्त्रम्। आगमशास्त्र चापौरुषेय मन्यन्ते काश्मीरिका विद्वास । पुस्तकस्य प्रधानविषयस्तु त्रिकसिद्धान्तविवरणमेव। काश्मीरत्रिकशास्त्रस्यायमेव ग्रन्थ आदिस्रोत इत्यभिधीयते। वस्तुतोऽभिनवगुप्तेन त्रिकसार मालिनीमतम् इत्यादिवदेवास्य ग्रन्थस्य महती स्तुतिर्गीता। पुस्तकेऽस्मिन् त्रिकशासनस्य पक्षद्वय विवृतम्। ग्रन्थोऽयमतिप्राचीन सूत्ररूपेण च श्लोकेषु लिखित । कानिचित् पदानि अस्य ग्रन्थस्य रहस्यात्मकानि अत एव दुर्ज्ञेयानि। पुस्तकस्याधिकारा २३ सन्ति पृष्ठानि च १५७। डा० स्टाईनमहोदयनिर्मितबृहत् सूचीपत्रे श्रीरामचन्द्रकाकमहोदयनिर्मिते च लघुसूचीपत्रेऽस्य पुस्तकस्योल्लेखोऽस्ति।

## मालिनीविजयवार्तिकम्

पुस्तकमिद शारदाऽक्षरेषु लिखित श्रीमधुसूदनकौलमहोदयेनानुसहित जम्बूकाश्मीरराज्यस्थानुसन्धानविभागात् १९७७ वैक्रमब्दे प्रकाशित च। पुस्तकलेखकोऽभिनवगुप्तोऽस्ति। ग्रन्थोऽयं टीकात्मको मालिनीविजयोत्तरतन्त्रविषय एवात्र च मधुरेषु छन्द सु विवृत । पुस्तकेऽस्मिन् काण्डद्वय वर्तत पृष्ठानि च १३५ सन्ति। अस्योल्लेखो द्वयो सूचीपत्रयोर्वर्तते।

## माहात्म्यम्

एतत्पुस्तकपाण्डुलिपिगवेषक श्रीदीनानाथशास्त्री पाण्डुलिपि काश्मीरराजकीयानुसन्धानविभागे वर्तते । शारिका-पुष्कर-गगा-अमरनाथ-मार्तण्ड-हर्षेश्वर-इत्यादीना महिमानोऽत्र वर्णिता सन्ति। पुस्तकपृष्ठानि ४० सन्ति।

## मुनिमतमणिमाला

वामदेवस्य तान्त्रिको ग्रन्थ , भूर्जपत्रे लिखित , ८०० वर्षप्राचीन कथ्यते।

## मृगेन्द्रतन्त्रम्

ग्रन्थोऽयं श्रीमधुसुदनकौलमहोदयेन गवेषितं काश्मीरराजस्थानुसन्धानविभागेन च १९८७ विक्रमोब्दे प्रकाशितं । पुस्तकमिदं रुद्ररुद्राणीसम्वादात्मकं मागमशास्त्रम् । पुस्तकस्य चतुर्षु विद्या-क्रिया-चर्या-योग-नामकेषु पादेषु पशु-पाश-पति-इत्याख्यं त्रिकतत्त्वं वर्णितम् । अत्रत्यं त्रिकं द्वैतप्रधानं, किन्तु काश्मीरत्रिकतत्त्वमद्वैतवादि । पुस्तकं द्वयोरपि सूचीपत्रयोरुल्लिखितम् ।

## योगरत्नावलि

नागार्जुनस्य तान्त्रिकं ऐन्द्रजालिको ग्रन्थः ।

## वातूलनाथसूत्राणि

पुस्तकमिदं श्रीमधुसूदनकौलमहोदयेन गवेषितं राजकीयानुसन्धानविभागेन च १९८० वैक्रमेऽब्दे प्रकाशितम् । अस्याः पुस्तिकाया लेखकः ख्रिष्टद्वादशशताब्दीभवः श्रीवातूलनाथोऽस्ति । अस्मिन् पुस्तके वृत्तिनाम्नी टीकाऽपि वर्तते । टीकाकारस्य नाम'अनन्तशक्तिपादाचार्य' इत्यस्ति ।शाम्भवोपायान्तर्गतमहासाहसेनैव मोक्षलाभ इति पुस्तकस्य प्रतिपाद्यो विषयः । पुस्तकेऽस्मिन् त्रयोदश सूत्राणि, पृष्ठानि च १९ सन्ति । पुस्तकस्यास्य द्वयोरपि सूचीपत्रयोरुल्लेखोऽस्ति ।

## वासवी

वसुगुप्तकृता भगवद्गीतायाष्टीका ।

## विज्ञानभैरवः (प्रथम भाग)

पुस्तकमिदं श्रीमुकुन्दशास्त्रिमहोदयेन गवेषितं प्रकाशितं चानुसन्धानविभागेन । ग्रन्थोऽयं भैरवभैरवीसंवादात्मकः । अस्मिन् टीकाद्वयं वर्तते । प्रथमटीकाकर्त्ता ख्रिष्टैकादशशताब्दीभवः क्षेमराजः । द्वितीयटीकाकृत् शिवोपाध्यायोऽस्ति । स काश्मीरभारतस्य कश्चिद् विद्वान् ब्राह्मणः । ग्रन्थप्रणेत्रात्र योगस्य ध्यानस्य च विशिष्टं महत्त्वं दर्शितम् । एतेनैव कारणेन ग्रन्थोऽयं दुरूहः सवृत्तः । पुस्तके योगस्य द्वादशाधिकशतभेदाः सुविशदं व्याख्याताः । एवं च योगस्य क्रियापक्षमेव प्रधानमत एव पुस्तकमिदमभ्यासिना साधकानां महदुपयोगीति न कोऽपि तत्र सन्देहावसरः । पुस्तकेऽस्मिन् श्लोकाः १६३, पृष्ठानि च १४४ सन्ति ।

## विज्ञानभैरव (द्वितीय भाग)

अस्यानुसन्धानमपि पूर्वोक्तेन विदुषा कृतम्। प्रकाशकोऽनुसन्धानविभाग। अस्य टीकाकर्तुर्नाम श्रीभट्टानन्दोऽस्ति। अस्य विषय पूर्वोक्त एव। अत्र श्लोका १६१, पृष्ठानि च ६२ सन्ति।

## विद्यार्णवतन्त्रम्

अयं विशालकायो ग्रन्थ श्रीहरभट्टशास्त्रिणा रामचन्द्रद्वितीयेन विविधपाण्डुलिपीना साहाय्यमादाय पाठादिक च सशोध्य सम्पादित अनुसन्धानविभागाध्यक्षेण श्रीमधुसूदनकौलमहोदयेन तस्मादेव विभागात् १९९३ वैक्रमाब्दे प्रकाशित। पुस्तकस्य रचयिता श्रीविद्यारण्यस्वामी आसीत्। अस्य पितुर्नाम प्रगल्भाचार्य इत्यासीत्। स गृहस्थ सन्नपि 'सिद्ध' इति सज्ञया परमा प्रसिद्धिमधिगतवान्। पुस्तकविषयश्च प्रधानतया महात्रिपुरसुन्दरीपूजनमेव। सा च देवी स्थूला, सूक्ष्मा, परा विद्येतिनामभिर्विभक्ता। महासरस्वती, महालक्ष्मी, महाकालीति स्त्रीदेवतात्रितयमपि सविशेष व्याख्यातम्। आसा च स्त्रीदेवताना कल्पना ब्रह्मविष्णुमहेशेति त्रयाणा पुरुषदेवानामाश्रयभूता। पुस्तकस्योत्तरस्मिन् भागे हिन्दुदेवताभि सह एकजता-तारा-नीलसरस्वती मजुघोषा-इति बौद्धाना देवतानामपि यत्र तत्र वर्णनमुपलभ्यते। मधुमती-मालिनीति मतद्वयस्यापि सविस्तर उल्लेखो ग्रन्थे विद्यते। पूर्वार्धोत्तरार्धयोरितिभागद्वये क्रमशोऽष्टादश षट्त्रिंशच्च श्वासा विद्यन्ते। द्वयोर्भागयो पृष्ठानि क्रमश ५४५, ६१६ सन्ति। पुस्तकमिद द्वयोरपि सूचीपत्रयोर्वर्तते।

## विंशतिकाशास्त्रम्

अस्य पुस्तकस्य पाण्डुलिपि सर्वतन्त्रस्वतन्त्रस्य महामहिमशालिनोऽमृतवाग्भवस्वामिन पार्श्वे वर्तते। अयं स्वामी ग्रीष्मर्तौ सर्वदैव काश्मीरान् गच्छति। स्वामिना विंशतिपद्येषु दुरूह काश्मीरशैवदर्शनसार प्रकटीकृत।

## व्यवहारगीता

गङ्गादत्तेन लिखिता राजकुमाराणा दैनिकी चर्या।

## शक्त्यनुभवस्तोत्रम्

इद पुस्तक सर्वतन्त्रस्वतन्त्रेण श्रीमदमृतवाग्भवस्वामिना लिखितम्। पुस्तकस्यास्य पाण्डुलिपिरेव वर्तते। नामैव पुस्तकविषयज्ञानार्थं पर्याप्तम्।

## शाक्तविज्ञानम्

इद पुस्तक ख्रिष्टनवमशताब्दीभवेन श्रीसोमानन्देन विरचितम् । अत्र तान्त्रिकसरणिमनुसृत्य शरीरे नयोदश चक्राणि विवृतानि सन्ति । इद गवेषित श्रीजगद्धरजाड्डमहोदयेन, प्रकाशित च २००४ वैक्रमेऽब्दे काश्मीरराजकीयानुसन्धानविभागेन । इद परात्रिंशिकातात्पर्यदीपिकापुस्तकेन सहैव सम्पादित प्रकाशित च । द्वयो पुस्तकयो पृष्ठानि ४५० सन्ति । द्वयोरेव सूचीपत्रयोरस्योल्लेख ।

## शिवदृष्टि

इद पुस्तक श्रीमधुसूदनकौलमहोदयेन गवेषित काश्मीरराज्यस्यानुसन्धानविभागेन १९३९ ख्रिष्टाब्दे च प्रकाशितम् । ग्रन्थोऽस्य ख्रिष्टनवमशताब्दीभवेन श्रीसोमानन्देन रचित । तच्छिष्यस्योत्पलदेवस्यात्र ग्रन्थे विवृतिरपि विद्यते । वस्तुत पुस्तकमिद प्रत्यभिज्ञाशास्त्रस्य बीजम् । सोमानन्देनात्र स्वाभिमतानि अन्याचार्यमतानि च प्रदर्श्य प्रत्यभिज्ञाशास्त्रसिद्धान्ता सविस्तर वर्णिता । केषाचिन्मताना खण्डनमपि तेन कृतम् । शिवाद्वैतवादिन सोमानन्दस्य केचन श्लोका स्मरणीया सन्ति ।

यथा—

शिवोऽस्मि साधनाविष्ट शिवोऽस्य याजकोऽप्यहम् ।
शिव यामि शिवो यामि शिवोऽस्य शिवसाधन ॥
भिन्नोऽप्यभिन्न एवास्मि शिव इत्थ विचेष्टनम् ।
शिवो भोक्ता शिवो भोज्य शिवेषु शिवसाधन ॥
शिव कर्त्ता शिव कर्म शिवोऽस्मि करणात्मक ।

शिवदृष्टे आह्निकानि ७ सन्ति, पृष्ठानि च २२१ । द्वयोरपि सूचीपत्रयो पुस्तकस्यास्योल्लेखोऽस्ति ।

## शिवसूत्रवार्तिकम्

श्रीमधुसूदनकौलमहानुभावेन ग्रन्थोऽस्य गवेषितस्तेनैव च काश्मीरराजकीयानुसन्धानविभागात् १९८२ विक्रमाब्दे प्रकाशित । अस्य ग्रन्थस्य निर्माता कृष्णदासापरनामा ख्रिष्टषोडशशताब्दीभवो वरदराज आसीत् । पुस्तकविषयस्तु वसुगुप्तनिर्मिताना शिवसूत्राणा श्लोकबद्धा टीकैव । अत्र त्रय उन्मेषा सन्ति । पुस्तकस्य प्रथमोन्मेषे शांभवोपायवर्णनमस्ति द्वितीयोन्मेषे शाक्तोपायविस्तार । तृतीयोन्मेष आणवोपाय सवि-

स्तर विवृत । पुस्तकस्य पृष्ठानि ४६ सन्ति । एतस्य नाम द्वयोरेव सूचीपत्रयोर-ङ्कितमस्ति ।

### शिवसूत्रविमर्शिनी

ग्रन्थोऽयं श्री जे० सी० चटर्जीमहोदयेनानुसहित काश्मीरराज्यस्यानुसन्धान-विभागेन १९६८ वैक्रमाब्दे प्रकाशितश्च । सूत्रलेखक ख्रिष्टाष्टमशताब्दीभवो वसुगुप्तोऽस्ति । विमर्शिनीलेखकश्चाभिनवगुप्तशिष्य ख्रिष्टैकादशशताब्दीभव क्षेमराजोऽस्ति । पुस्तकप्रतिपाद्यो विषयस्त्रिकशासनाङ्गभूताना त्रिविधाना शाम्भव-शाक्ताणवोपायाना सविस्तर वर्णनम् ।

### श्रीविद्याविवरणम्

पाण्डुलिपिगवेषक श्रीदीनानाथशास्त्री यक्ष । पाण्डुलिपिप्रकाशकस्त्वनुसन्धान-विभागोऽस्ति । पुस्तकलेखक काश्मीरवास्तव्य शिवोपाध्याय । पुस्तकविषय श्रीविद्याविवरणम् । पुस्तकपृष्ठानि ३५ सन्ति ।

### षट्त्रिंशत्तत्त्वसन्दोह

अस्यानुसन्धाता महामहोपाध्यायो मुकुन्दरामशास्त्री, प्रकाशकोऽनुसन्धान-विभाग काश्मीरराज्यस्य । प्रकाशनकाल १९७५ वैक्रमाब्द । अस्य रचयिता राजा-नन्द । विवरणाख्या टीकाप्यस्य विद्यते । षट्त्रिंशत्तत्त्वनिरूपणमेव पुस्तकस्य प्रधान-विषय । उदाहरणार्थं ग्रन्थस्य प्रथम श्लोकोऽध उद्ध्रियते —

यदममनुत्तरमूर्त्तिर्निजच्छयाऽखिलमिद जगत् स्रष्टुम् ।
पस्पन्दे स स्पन्द प्रथम शिवतत्त्वमुच्यते तज्ज्ञै ॥ १ ॥

पुस्तकस्य ३१ कारिका सन्ति । पुस्तक द्वयोरपि सूचीपत्रयोर्लिखितमस्ति ।

### साहिबकौलजन्मचरितम्

देवीनामविलासकल्पवृक्षस्य अनुपमस्य चित्रकाव्यस्य कर्तु साहिबकौलस्य रहस्यात्मिका उक्तय ।

### सिद्धित्रयी

इह अजडप्रमातृसिद्धि, ईश्वरसिद्धि, सम्बन्धसिद्धि, इतिपुस्तकत्रय सह-सम्बद्धमेकेन नाम्ना निगुम्फितम् । पुस्तकत्रयस्य सहसम्बद्धस्यानुसन्धाता श्रीमधुसूदन-

कौलमहोदय । तेनेद श्रीहरभट्टशास्त्रिमहोदयाना साहाय्यमादाय काश्मीरराज्यस्यानुसन्धानविभागात् १९७५ वैक्रमेऽब्दे 'काश्मीरप्रतापस्टीमप्रेस' इतिनामके मुद्रणालये मुद्रापयित्वा प्रकाशितम् । अस्य पुस्तकस्य प्रणेता सोमानन्दशिष्य स्त्रिष्टदशमशताब्दीभव श्रीउत्पलदेवोऽस्ति । सोमानन्दनिहिताधारशिलस्य प्रत्यभिज्ञासिद्धान्तस्य वस्तुतोऽयमेव प्रवर्तकोऽभवत् । अजडप्रमातृसिद्धि , ईश्वरसिद्धि , सम्बन्धसिद्धि इति त्रिभिर्नामभिरेव पुस्तकविषय स्फुटीभवति । प्रथमाया सिद्धौ शिवस्य जडत्व निरस्य चेतनत्व साधितम् । द्वितीयायाम् ईश्वरसिद्धौ शिवस्यास्तित्व विवृतम् । तृतीयाया सम्बन्धसिद्धौ च ईश्वरजीवात्मनो सम्बन्ध स्पष्टीकृत । सप्तविंशतिकारिकाया अजडप्रमातृसिद्धे पृष्ठानि १२ सन्ति । षट्पञ्चाशत्कारिकाया ईश्वरसिद्धे. पृष्ठानि ३० सन्ति । एकविंशतिकारिकाया सम्बन्धसिद्धेश्च पृष्ठानि १४ विद्यन्ते । एतत्पुस्तकसम्बद्धा सविवृतिका प्रत्यभिज्ञाकारिका अपि सन्ति । अत्र कारिका ८८, पृष्ठानि च ७४ सन्ति । पुस्तक द्वयोरपि सूचीपत्रयोरुल्लिखितम् ।

## स्तवचिन्तामणि

पुस्तकमिद श्रीमुकुन्दरामशास्त्रिणाऽनुसहित १९७४ वैक्रमेऽब्दे च काश्मीरराज्यस्यानुसन्धानविभागात् प्रकाशितम् । पुस्तकमिद विजयेश्वरक्षेत्रे (सम्प्रति 'बीजविहाडा' इतिनाम्नि श्रीनगरात् नातिदूरे स्थाने) स्त्रिष्टाष्टमशताब्दीभवेन नारायणकण्ठेत्यपरनाम्ना श्रीभट्टनारायणेन रचितम् । स्त्रिष्टैकादशशताब्द्या उत्तरभागे जातेनाभिनवगुप्तस्य शिष्येण क्षेमराजेनास्मिन् ग्रन्थे 'विवृति' इतिनामिका टीकाऽपि कृता । विंशत्यधिकशतपद्येषु शिवमाहात्म्यवर्णनमेवास्य प्रधानो विषय । यत्र तत्र श्लोकेषु त्रिकदर्शनतत्त्वसङ्केतोऽपि वरीवर्ति । पुस्तकस्य पृष्ठानि १५५ विद्यन्ते । पुस्तक च द्वयो सूचीपत्रयोरुल्लिखितम् ।

## स्पन्दकारिका

अस्य पुस्तकस्यानुसन्धान श्रीजे०सी०चटर्जीमहोदयेन कृतम्, तस्य च साहाय्येनानुसन्धानविभागेन १९६६ वैक्रमेऽब्दे प्रकाशितम् । अस्य प्रणेतृविषये सन्देहो वर्तते । केचिद् विद्वासो वसुगुप्त स्त्रिष्टाष्टमशताब्दीभवमस्य रचयितार मन्यन्ते । अपरे तु तस्य शिष्य कल्लटमस्य निर्मातार प्रतिपादयन्ति । मतद्वयपोषकाणि प्रमाणान्यपि विद्यन्ते । अस्य ग्रन्थस्य टीकाकारो रामकण्ठ आसीत् । अस्य भ्राता मुक्तानन्द स्त्रिष्टाष्टमशताब्दीभवस्यावन्तिवर्मण समकालीन आसीत् । ग्रन्थविषयस्तु वसुगुप्त-

निर्मिते 'शिवसूत्राणि' इतिनामके पुस्तके प्रतिपादितस्य स्पन्दतत्त्वस्य निरूपणमेव। पुस्तकस्य प्रथमश्लोकोद्धरणेन सूक्ष्मतमो विषयसंकेतो भवति, तद्यथा —

यस्योन्मेषनिमेषाभ्यां जगतः प्रलयोदयौ।
तं शक्तिचक्रविभवप्रभवं शंकरं नुमः ॥१॥ इति।

पुस्तकस्यास्य चत्वारो निष्पन्दाः। प्रथमे १६ श्लोकाः, द्वितीये ११, तृतीये ३, चतुर्थे च २१ सन्ति। पृष्ठसंख्या १६८ अस्ति। पुस्तकं द्वयोरपि सूचीपत्रयोरङ्कितम्।

### स्पन्दनिर्णयः

पुस्तकमिदं श्रीमधुसूदनकौलेनानुसंहितं प्रकाशितं च १९८१ विक्रमाब्दे काश्मीरस्थराजकीयानुसन्धानविभागात्। लेखकस्त्वस्य श्रीवसुगुप्तशिष्यः खिष्टाष्टम-शताब्दीभवः कल्लटो नाम विद्वान्। पुस्तकस्य सर्वासु कारिकासु श्रीरामकण्ठनाम्ना विदुषा लिखिता टीका वर्तते। प्रतिपाद्यो विषयस्त्वस्य स्पन्दतत्त्वस्य विवरणमेव। एतस्य नाम द्वयोरपि सूचीपत्रयोरङ्कितं वर्तते। पुस्तकमिदं स्पन्दसन्दोहनामकेन रच-यितुरमरेण पुस्तकेन सहैव सम्पादितं प्रकाशितं चास्ति।

### स्पन्दसन्दोहः

पुस्तकमिदं श्रीमधुसूदनकौलमहोदयेनानुसंहितं प्रकाशितं च १९८१ विक्रमाब्दे काश्मीरस्थराज्यानुसन्धानविभागात्। लेखकोऽस्य वसुगुप्तशिष्यः खिष्टाष्टमशताब्दीभवः कल्लटः। अस्मिन् पुस्तके केवलं प्रथमकारिकाया एव क्षेमराजकृता टीका वर्तते। प्रतिपाद्यविषयस्तु स्पन्दविवरणमेव। पुस्तकस्योल्लेखो द्वयोरपि सूचीपत्रयोरस्ति।

### स्वच्छन्दतन्त्रम्

अस्य गवेषयितुर्नाम श्रीमधुसूदनकौल इति। तेनैव चेदं पुस्तकं काश्मीरराज्य-स्थानुसन्धानविभागात् षड्भागेषु प्रकाशितम्। देवीभैरवसंवादात्मकं पुस्तकमिदम्। *अभिनवगुप्तशिष्यस्य खिष्टैकादशशताब्दीभवस्य क्षेमराजस्यास्मिन् ग्रन्थे 'उद्योत' इतिना-*मिका टीकाऽपि वर्तते। पुस्तकस्य पञ्चदशसु पटलेषु संक्षिप्तं विषयविवरणमित्थम्-प्रथम-पटले मन्त्रोद्धारः, द्वितीये चर्चानिरूपणम्, तृतीयेऽधिवासः, चतुर्थे दीक्षाभिषेकप्रकाशनम्, पञ्चमे तत्त्वदीक्षाप्रकाशनम्, षष्ठे पञ्चप्रणवाधिकारः, सप्तमे आभ्यन्तराधिकारः, अष्टमे अशकनिर्णयः (सम्बन्धषट्कनिरूपणम्), नवमे अभीष्टसिद्धिलक्षणम्, दशमे भुवनादि-दीक्षानिरूपणम्, एकादशे तत्त्वाध्वपृथिव्यादिनिरूपणम्, मतान्तरवादिना च तत्तत्तत्त्व-स्थितिनिरूपणम्, द्वादशे धारणादिक्रमेण तत्त्वानां साक्षात्कारनिरूपणं, त्रिंशदनुष्ठान-भेदाश्च, त्रयोदशे योगाराधनं, चतुर्दशे मुद्रालक्षणम्, पञ्चदशे कुम्भानिरूपणम्। अस्य

टीकाकारोऽभिनवगुप्तस्य शिष्यः क्षेमराजोऽस्ति, तेन स्वकीयायामुद्योतनाम्न्यां टीकायां पुस्तकस्याद्वैतवादित्वं निम्नस्थश्लोकैर्वर्णितम्—

नाम्नैव भेददृष्टिर्विधुता येनास्य तन्त्रता तत्त्वा ।
स्वच्छन्दतन्त्रमेतद् भेदास्या नैव सहते ॥१॥
भेददर्शनसंस्काररसन्ततिमादित ।
स्वच्छस्वच्छन्दनिस्वस्यसतत्त्व नेक्षते जन· ॥२॥
गतानुगतिकप्रोक्त भेदव्याख्यातमोऽपनुत् ।
तेनाद्वैतामृतस्फीत स्वच्छन्दोद्योत उज्झित· ॥३॥ इति

अस्मिन् पुस्तके ३७८० श्लोका· सन्ति । क्रमश. प्रथम-द्वितीय-तृतीय-चतुर्थ-पञ्चम-षष्ठ-सप्तम भागाना पृष्ठसख्या २५३,३३२,३५२,६१,५६०,१७२,१४८ सन्ति । पुस्तकस्य पृथक्-पृथङ् मुद्रिता भागा द्वयोरपि सूचीपत्रयो· समुल्लिखिता. सन्ति ।

### स्वरूपप्रकाशः

श्रीदीनानाथेनास्य पुस्तकस्य पाण्डुलिपि प्राप्ता । सा चानुसन्धानविभागेऽप्रकाशिता वर्तते । पुस्तकरचयिता काश्मीरवास्तव्य· सदानन्द. । तस्य स्थितिकालो निर्णेतु न शक्य. । पुस्तकविषयो वेदान्ताभिमताद्वैतवादनिरूपणमेव । पुस्तकस्य पृष्ठानि २५ सन्ति ।

### स्वातन्त्र्यदर्पणः

एतस्य पुस्तकस्य पाण्डुलिपि. श्रीमतो वलजिन्नाथस्य शास्त्रिण पार्श्वे वर्तते । अस्य रचयिता स एव महोदय । स काश्मीरप्रान्तगतानन्तनागजनपदवास्तव्यः, शास्त्री एम्० ए० इत्युपाधिभाक् । अधुना स राजकीयेऽनन्तनागविद्यालये संस्कृतस्य प्राध्यापकोऽस्ति । पुस्तक पूर्णतया मौलिक विद्यते । अस्य विषय प्रधानतया शिवस्य स्वातन्त्र्यशक्तेरार्याच्छन्दःसु विवरणमेव । लेखकेन शतद्वयसख्यकेषु आर्याच्छन्दःसु काश्मीरशैवदर्शनस्य सार स्फुटतया प्रकटीकृत । अस्य पाण्डुलिपिरद्यापि न प्रकाशमायाता ।

### स्वात्मोपलब्धिशतकम्

अस्य पुस्तकस्य पाण्डुलिपिग्राहक· श्रीदीनानाथ । पाण्डुलिपि शारदाक्षरेषु लिखिताऽनुसन्धानविभागस्या न वर्तते । पुस्तकप्रणेता सिल्हेति-अपरनामधेयः काश्मीरवास्तव्य. सिल्हणोऽस्ति । पुस्तक दार्शनिकसिद्धान्तानेव विवृणोति । पुस्तकस्य पृष्ठानि १० सन्ति ।

## काश्मीरराज्यानुसन्धानविभागीयपुस्तकालयस्थानां विविधग्रन्थमालासु प्रकाशितानां ग्रन्थानामकारादिवर्णानुगता सूची



१ अर्धनारीश्वरस्तोत्रम्
२ आनन्दलहरी
३ आह्निकपद्धति (नव्यचण्डीदासस्य)
४. औचित्यविचारचर्चा
५ कथाकौतुकम्
६ कप्फिणाभ्युदय महाकाव्यम्
७ कलाविलास
८ कविकण्ठाभरणम्
९ कालीस्तुति
१० कुट्टिनीमतम्
११. क्रमदीपिका
१२ तापीशतकम्
१३ दर्पदलनम्
१४ दशावतारचरितम्
१५ देलारामकथासार
१६ नित्यकर्मविधि
१७ पृथ्वीराजविजयमहाकाव्यम्
१८ बृहत्कथामञ्जरी
१९. मन्त्ररामायणम्
२० रणवीरप्रकाशः
२१ रामायणमञ्जरी
२२ वक्रोक्तिपञ्चाशिका
२३ विक्रमाङ्कदेवचरितम्
२४ वीररत्नशेखरशिखा
२५ वीररत्नशेखरशिखा
२६ वीरवैद्यरत्नाकर
२७ शिवसूत्रविमर्शिनीटीका
२८ शिशुपालवध (हरभट्टस्य)
२९ शिशुपालवधम्
३० शृङ्गारतिलकम्
३१ श्रीकण्ठचरितम्
३२ श्रीरघुनाथगुणोदय
३३ समयमातृका
३४ सिद्धान्तकौमुदीटीका
३५ सुभाषितावलि
३६ सुवृत्ततिलकम्
३७ स्तुतिकुसुमाञ्जलि
३८ हनुमत्स्तुति
३९ हरचरितचिन्तामणि
४० हरविजयम्



(ग) मुद्रिता ग्रन्था —

१ अर्धनारीश्वरस्तोत्रम्

महाकविना कल्हणन कृता मार्मिकी शिवस्तुति पुस्तकेऽस्मिन्नुपनिबद्धाऽस्ति । पुस्तकमिद काव्यमालायाश्चतुर्थे गुच्छके निर्णयसागरमुद्रणालये १६०६ ख्रिष्टाब्दे प्रकाशितमभवत् ।

२ आनन्दलहरी

अस्य ग्रन्थस्य निर्माता श्रीअप्पयदीक्षितोऽस्ति । ग्रन्थेऽस्मिन् शक्तिविशिष्टस्य शिवस्य जगत कर्तृत्वमीश्वरत्व च युक्तिप्रमाणं सम्यङ्निर्णीतम् । आध्यात्मिके विषयेतथेतरवेदान्तसिद्धान्ताना विषयेऽप्यत्युत्तमा विचारा अत्र प्रदर्शिता सन्ति । शक्तिविशिष्ट शिव एव परम ब्रह्म इत्येव निर्णीतो विषयोऽस्य पुस्तकस्य । पुस्तकमिद दिल्लीभारतीमन्दिरप्रकाशनमालात १६०८ ख्रिष्टाब्दे प्रकाशितमभवत् ।

३ आह्निकपद्धति

पुस्तकमिद नव्यचण्डीदासस्य रचनास्ति । आङ्गलभाषाया लिखितेन परिचयेनोपेता च । अस्मिन् राज्ञा कृते नित्यकर्मविधे प्रतिपादनमस्ति । प्रातरुत्थानादारभ्य रात्रौ शयनसमयपर्यन्त यादृक् शास्त्रोक्त नित्यकर्मविधान राज्ञा कृते विहित तस्य सर्वस्य विवरणमस्मिन् पुस्तके उपलभ्यते । अस्मिन् दश विश्रान्तय (आध्याया ) सन्ति, या स्वन्तिमा विश्रान्ति सा राजनीतिविषयिण्यास्ते ।

४ औचित्यविचारचर्चा

क्षेमेन्द्रस्य रचनय काव्यगतनवीनसम्प्रदाय वितनोति, यत्र औचित्यमेव काव्यस्यात्मत्वेनाङ्गीकृत कविना । युक्तिप्रमाणैरभिनवतर्ककलापैश्च कविना विद्वत्तापुरस्सरमौचित्यमेव काव्ये प्राधान्येन साधितम् । अस्य प्रकाशन काव्यमालाया प्रथमे गुच्छ १६६३ ख्रिष्टाब्दे निर्णयसागरमुद्रणालयेऽभवत् ।

५ कथाकौतुकम्

'मौलानाजामी' इत्यनेन विरचितस्य 'जूसुफ जुलेखा'ग्रन्थस्य संस्कृतेऽनुवादोऽयम् । अनुवादक काश्मीरिककवि श्रीवर आसीत् । काव्यमालाप्रकाशनशृङ्खलाया १६१६ ख्रिष्टाब्देऽस्य प्रकाशनमभवत् ।

## ६ कप्फिणाभ्युदय महाकाव्यम्

काव्येऽस्मिन् बौद्धाचार्यस्य कप्फिणस्य वर्णनमस्ति । काव्यकार शिवस्वामी काश्मीरिक प्रसिद्धकविरास्ते । अस्य सम्पादन डा० गौरीशङ्करमहोदयेन कृतम् ।- काव्यच्छटा वैशिष्ट्येनास्मिन् प्रस्फुटितास्ते । इद 'मेहरचन्द्रलक्ष्मणदासमुद्रणालय लाहौर' इत्यस्मिन् मुद्रणालये प्रकाशितम् ।

## ७ कलाविलास

क्षेमेन्द्रस्य रचनेय काव्यमालाया प्रथमे गुच्छे प्रकाशिताऽभवत् । अस्या रचनाया कविना दम्भलोभवेश्यावृत्तचरितमदनवर्णनगानवर्णनसुवर्णखरोत्पत्तिना-नाधूर्तवर्णनादीनि सकलकलानिरूपणानि एकैकशो दशसर्गेषु निबद्धानि । काश्मीरस्य तात्कालिकी सामाजिकव्यवस्था पुस्तकस्यास्य पठनेन प्रत्यक्षीभवति । मोहमयीस्थे 'निर्णय-सागरमुद्रणालये' मुद्रितमभवत् पुस्तकमिदम् । प्रकाशनसमय १९९३ खिष्टाब्द ।

## ८ कविकण्ठाभरणम्

आचार्यक्षेमेन्द्रस्य कृतिरिय, यस्या काव्यस्य विविधा विधा वर्णिता सन्ति । अनेन ग्रन्थेन कवीना सम्यक् शिक्षण भवति । लखकेन परम्परा-गताना काव्यनियमानामन्धानुकरण न कृतम्, परन्तु स्वरचितनवीनमार्गप्रदर्शन-पुरस्सरमेव काव्यविधाना प्रतिपादन कृतम् । विशेषेण च औचित्यविचारचर्चाया वर्णन कृतम् ।

## ९ कालीस्तुति

पुस्तिकेय भगवत्या कालीदेव्या स्तुति प्रस्तौति लेखकोऽस्या श्रीलाल-जाडूनामको विद्वान् । मुद्रण प्रकाशन च वाराणसीस्थे विद्याविलासप्रेसे । समय श्रीमहाराजरणवीरसिंहस्य शासनकाल ।

## १० कुट्टिनीमतम्

दामोदरगुप्तेन विरचितेऽस्मिन् ग्रन्थे वारविलासिनीना कामप्रसङ्ग-सम्बन्धिन्य सर्वा क्रिया निर्दिष्टा । कथ काचित् कुट्टिनी प्रिय वशीभूत कुर्यात् ? कथमनङ्गस्ता बाधते ? कथ च प्रियसमागम इत्यादय सर्वे प्रसङ्गा श्लोकेषु निबद्धा सन्ति । 'गुजराती न्यू प्रस बम्बई इत्याख्ये मुद्रणालये मुद्रितमभवत् पुस्तकमिदम् ।

## ११ क्रमदीपिका

पुस्तकेऽस्मिन् वैष्णवतन्त्रस्य विधान सम्यक् प्रतिपादितम, यस्मिन् पुरश्चरणजपहवनब्राह्मणभोजनप्राणायामप्रभृतिकर्मकलापस्यानुष्ठानविधि प्रदर्शित । लेखकस्य नाम पुस्तकेऽस्मिन् न कुत्राप्युपलभ्यते ।

## १२. तापीशतकम्

अस्य शतकस्य लेखकोऽपि श्रीलालजाडूमहोदय आसीत् । अस्मिन् पुस्तके तापीभगवत्या शतश्लोकेषु स्तुतिरुपनिबद्धा । प्रकाशन वाराणसीस्थे विद्याविलास-मुद्रणालये । समय श्रीरणवीरसिहस्य शासनकाल ।

## १३. दर्पदलनम्

क्षेमेन्द्रस्य कृतिरियम् । अस्या लेखकेन धनमदरूपगर्विताना मनुष्याणा चरित्रमुद्घाटितम् । तेषु गर्वस्याधिका मात्रा वर्धते । तेन च ते मनुष्यता विस्मृत्य नानाविधान्यनुचितानि कर्माणि कुर्वन्ति । हास्यरसपूर्ण वर्णनमिद पाठकाना चेतास्य-तितरा रञ्जयति ।

## १४. दशावतारचरितम्

क्षेमेन्द्रस्य रचनेयम्, यस्या लेखकेन हिन्दूजातेर्दशावताराणा रामकृष्णादीना कवित्वमय्या वाण्या वर्णन कृतम् । अस्मिन् ग्रन्थे भगवान् बुद्धोऽपि अवताररूप स्वीकृत, येन च क्षेमेन्द्रस्य समन्वयभावना स्फुटमुपलभ्यते । काव्यमालाया निर्णय सागरमुद्रणालये प्रकाशितमभवत् पुस्तकमिदम् ।

## १५ देलारामकथासार

त्रयोदशसर्गात्मक काव्यमिद राजानकभट्टाह्लादकेन व्यरचि । अस्मिन् काव्ये कस्यचिद्राज्ञो वर्णन कृत वर्तते । काव्यभाषातीव रमणीया अलङ्कारैश्चालङ्कृता । अथ काव्यमालाप्रकाशक निर्णयसागरप्रेसे प्रकाशित । एतद्ग्रन्थविषयप्रशमन तु स्वय निर्मातु श्लोक एव पर्याप्तोऽस्ति, यथा—

एषा कथा मौसलशास्त्रदृष्टा भूयिष्टमद्वाच्यमहाविशिष्टा ।
मनोविनोदाय सता जनाना गीर्वाणवाण्या क्रियत मयाऽद्य । इति ।

इह मौसल-माहम्मदीय । तनाय पुस्तये कस्यचिन्माहम्मदीयस्य शासकस्य

तन्महिलायाश्च काचित् कथा निबद्धाऽस्ति, यत्र शृङ्गाररसप्रसङ्गेन मृगीदर्शन, तद्धनन, सरोषकामुकानुनय, राजपुत्रगणिकादीना कथा चेत्यादय प्रसङ्गा समुपनिबद्धा सन्ति। त्रयोदशसर्गात्मक काव्यमिद काव्यमालाया १६२३ ख्रिष्टाब्दे मोहमयीस्थनिर्णयसागर-मुद्रणालये मुद्रित प्रकाशित चाभवत्।

## १६ नित्यकर्मविधि

सम्पादक श्रीकेशवरामभट्ट। अस्मिन् पुस्तके नित्यकर्मणामनुष्ठानविधि साकल्येन प्रदर्शित। प्राप्तिस्थानम् 'कृष्णाप्रिण्टिङ्गप्रेस', श्रीनगरम् इति। केशवरामभट्ट कश्मीरमण्डले १६१६ वैक्रमेऽब्दे प्रौढावस्थाया महापण्डितत्वेन प्रसिद्धिमवापेति श्रूयते। इतोऽधिक विदुषोऽस्य जीवनविषये किमपि तथ्यजात नोपलभ्यते।

## १७ पृथ्वीराजविजयमहाकाव्यम्

जयानककविकृते महाकाव्येऽस्मिन् प्रसिद्धस्य पृथिवीराजस्य यशोवर्णन कृत-मस्ति। काश्मीरिको जयानक पृथिवीराजस्य सभाकविरासीत्। अस्य काव्यस्योपरि १४४६ ख्रिष्टाब्दे काश्मीरिकेण जोनराजेन कृता टीका प्रसिद्धास्ति। अष्टसर्गात्मक काव्यमिद एशियाटिकसोसायटीद्वारा १६१८ ख्रिष्टाब्दे प्रकाशितमभवत्। १२०० ख्रिष्टाब्दे निर्मितायां जयरथविद्वत्कृतायामलङ्कारविमर्शिन्यामस्य काव्यस्योल्लेखो दृश्यते, तेन ज्ञायते—तत पूर्वमेव काव्यमिद विनिर्मितमभूदिति।

## १८. बृहत्कथामञ्जरी

क्षेमेन्द्रस्य रचनेय कथासरित्सागरस्य सक्षेपभूता कथाप्रवाहस्य सक्षिप्त रूप सारल्येन प्रस्तुत करोति। काव्यमालातो निर्णयसागरमुद्रणालये १६०१ ख्रिष्टाब्देऽस्य प्रकाशनमभवत्।

## १६ मन्त्ररामायणम्

जम्बूनगरे १६३४वैक्रमाब्दे ह्येतत् शिलाक्षरैर्मुद्रितमभूत्। अस्य पृष्ठसख्या १४६ अस्ति। वेदमन्त्रै श्रीरामावतारकथा अस्मिन् सप्रस्तुताऽस्ति।

## २०. रणवीरप्रकाश

ग्रन्थोऽय काश्मीरिकेण श्रीलालजाडुना व्यरचि। अस्मिन् ग्रन्थे लेखकेन

आयुर्वेदिकविषयो विस्तरश प्रतिपादित । अस्य प्रकाशनकाल महाराजरणवीरसिंहस्य शासनकाल ( १८५८-१८७५ ई० ) एवास्ति । विद्याविलासमुद्रणालये चायं प्रकाशितोऽभवत् ।

### २१. रामायणमञ्जरी

क्षेमेन्द्रस्य रचनेयम् । रामायणस्य कथामादाय कविना स्वशैल्यामुपनिबद्ध पुस्तकमिद रामायणकथामेव प्रस्तुतीकरोति । मुम्बईस्थे निर्णयसागरमुद्रणालये प्रकाशितमभवत् ।

### २२ वक्रोक्तिपञ्चाशिका

रत्नाकरस्य कृतिरियम् । वक्रोक्तिभाषया शिवस्य स्तुतिरुपनिबद्धा कविनास्मिन् ग्रन्थे । पुस्तकमिद काव्यमालाया प्रथमे गुच्छे प्रकाशितमभवत् । बम्बईस्थे निर्णयसागरमुद्रणालये च १९९३ ख्रिष्टाब्दे मुद्रितम् ।

### २३. विक्रमाङ्कदेवचरितम्

पुस्तकमिद काश्मीरिककविबिल्हणेन स्वाश्रयदातु श्रीविक्रमदेवस्य प्रशस्तिरूपेणोपनिबद्धमासीत् । अस्मिन् हि विक्रमदेवस्य भूभुज समग्र जीवन तदुपार्जितशौर्यकर्मणा चोत्कृष्टत्व साकल्येन कवित्वभाषया समुपवर्णितम् । डा० बुलनरमहोदयन १९२२ ख्रिष्टाब्दे निर्णयसागरमुद्रणालये प्रकाशितम् ।

### २४ वीररत्नशेखरशिखा

इय सुप्रसिद्धा विद्वत्तल्लजसाहिबरामलेखनीप्रसूता स्वविषयेऽद्वितीया कृतिरस्ति इय रत्नेसभिधभागेषु विभक्ताऽस्ति । किं च साहिबरामप्रणीतपदसकेतविवरणन सहिता वर्तते । अत एवास्या मूलविवरणयो कर्त्तैक एव । अस्या लिपिकालस्तु दशोत्तरैकोनविंशतिशततमो विक्रमाब्द । पृष्ठानि १००५ सन्ति । इयमद्य यावदप्राप्तमुद्रणा हस्तलिखितावस्थामेव भजते । श्रीरघुनाथहस्तलिखितपुस्तकालये जम्मूस्थे विद्यते । किं च 'गहनार्थप्रकाशिका'इतिनाम्नी प्रथमश्लोकव्याख्या एतद्विरचिता पृष्ठचतुष्टय इति तत्रैवोपलभ्यते ।

### २५ वीररत्नशेखरशिखा

कृतिरिय अरबीभाषाया लिखितस्य "अगानाकोमाहिसिनी" ग्रन्थस्य मस्न्-

तेऽनुवादोऽस्ति, यत्र राजनीतिविषयमादाय सुन्दरं विवरणमाविष्कृतं लेखकेन । अस्य *टीकाकारोऽस्ति काश्मीरिकः पण्डितः साहिबराममहोदयः । पुस्तकस्यानुवादकालः* १८८६-९३ ख्रिष्टाब्दोऽस्ति ।

### २६. वीरवैद्यरत्नाकरः

रत्नेयम् अरबीभाषाया लिखितस्यैकस्य ग्रन्थस्य संस्कृतेऽनुवादस्वरूपास्ति । रूपान्तरकारः साहिबराममहोदयोऽस्ति । अस्यानुवादकालोऽपि पूर्वनिर्दिष्ट एव । अस्मिन् ग्रन्थे चिकित्साविषयमादाय सर्वो निबन्धः सरलसुरगिरा समुपन्यस्तः ।

ग्रन्थयुगलमिदं साम्प्रतं प्राचीनहस्तलेखरूपेण रणवीरसंग्रहालये सुरक्षितमस्ति ।

### २७. *शिवसूत्रविमर्शिनीटीका*

टीकाकारः श्रीसुखानन्दशास्त्री । प्रकाशितेयं रचना । अस्य प्रकाशिका "रिसर्च एण्ड पब्लिकेशन डिपार्टमेण्ट, श्रीनगर (काश्मीर)" इति संस्था ।

### २८. शिशुपालवध

श्रीहरभट्टशास्त्रिणा पण्डितेन रचितोऽयं शिशुपालवधनामा ग्रन्थो वैज्ञानिक-पद्धत्या विरचितोऽस्ति ।

### २९ शिशुपालवधम्

माघकवेः कृतिरियं श्रीकृष्णस्य द्वारकायात्रासमुद्रवर्णनप्रभृतिविषयान् कवित्वपूर्णया गिरा प्रस्तौति । विंशतिसर्गात्मकं महाकाव्यमिदं निखिलैर्गुणैः परिपूर्णं वर्तते । अस्य कथा महाभारतात् संगृहीता । मुख्यविषयोऽस्य ग्रन्थस्य श्रीकृष्णद्वारा शिशुपालराजस्य वधवर्णनम् । यद्यप्यस्य महाकाव्यस्य बह्व्यष्टीका समुपलभ्यन्ते, किन्तु काश्मीरिकवल्लभदेवस्य टीका विशेषेण सरला सुमनोहरा चास्ते ।

### ३०. शृङ्गारतिलकम्

रुद्रटरचितमिदं शृङ्गाररसस्य साङ्गोपाङ्गं वर्णनं करोति । पुस्तकमिदं काव्य-*मालायास्तृतीये गुच्छे प्रकाशितमभवत्, निर्णयसागरमुद्रणालये मुद्रितं चाभवत् ।*

### ३१ श्रीकण्ठचरितम्

कविना मङ्खकेन काव्यमिदं व्यरचि, यस्मिन् श्रीमहादेवस्य चरित्रमुपनिबद्धम् ।

पञ्चविंशतिसर्गात्मकं काव्यमिदं काव्यमालातो निर्णयसागरमुद्रणालये १९०१ खिष्टाब्दे प्रकाशितमभवत् ।

## ३२ श्रीरघुनाथगुणोदयः (अप्रकाशितः)

महाकाव्येऽस्मिन् भगवतः श्रीरामस्य चरित्रमुपन्यस्तम् । त्रयोदशसर्गात्मकं महाकाव्यमिदं जम्बूकाश्मीराधिपस्य महाराजश्रीरणवीरसिंहस्य शासनकाले (१८५८ खिष्टाब्दे) निर्मितमभूत् । अस्य रचयिता राज्यस्य राजसभापण्डितमण्डल्याः सदस्यः कुरुक्षेत्ररेखामध्यान्तर्गतपुण्डरीकपुराभिजनोऽभिनवश्चण्डीदासोऽभूत् । कविना काव्यस्यास्यान्ते विरचनोद्देश्यं विस्तरशः प्रोक्तम् । तद्यथा—काव्यशास्त्रसङ्गीतकलाप्रवीणो महाराजः संस्कृतसाहित्यस्यैकानुरागी सन्नेकदा विद्वत्सभायामागत्य समग्रविदुषः प्रबोधयन् संस्कृतस्य शास्त्रस्य च महत्त्वमुपदिशन्नाज्ञापयामास । तदित्थम्—

इह लोके परस्मिन् वा पुंसामात्महितैषिणाम् ।
सदसद्वस्तुविज्ञाने शास्त्रमेव विलोचनम् ॥
शास्त्रेण वर्द्धते बुद्धिर्विद्या शास्त्रेण वर्द्धते ।
तस्मात्सर्वप्रयत्नेन कर्तव्यः शास्त्रसंग्रहः ॥ इति ।

एवमादिश्य श्रीमहाराजः पण्डितमण्डल्याः काव्यशास्त्रस्याध्ययनाध्यापनगौरवं मार्मिकैः शब्दैः प्रत्यापयामास । एवं च सरस्वत्याराधनमुपदिशन् पुनः कस्यचिन्नवीनकाव्यस्य विरचनासम्बन्धिनीमिच्छां प्रकटयामास । कीदृशं च तत्काव्यं स्यादित्यस्मिन् विषयेऽपि स्वकीयां घोषणां चकार, तद्यथा—

सुवृत्तं सरलं सम्यग् गुणालङ्काररीतिमत् ।
निर्दोषं सरलं यत् स्यात्तत्काव्यं बालबोधकृत् ॥ इति ।

ईदृशैर्गुणैरलङ्कृतं काव्यं विरचयितुमेव तदानीं श्रीमहाराजेन स्वसभापण्डितोऽभिनवचण्डीदास उपदिष्ट आसीदिति सर्वं कथाप्रसङ्गजातमेतत् कविना स्वकीयेऽस्मिन् काव्ये प्रदर्शितम् । एतस्मिन् प्रसङ्गेऽस्य श्लोकः कवेरुपन्यस्यते—

इत्यालोच्याधिपेनापि समक्षं विदुषामहम् ।
तथा तत्रानुशास्मि यथा बालोऽपि विद्भवेत् ॥ इति ।

महाराजेन देशदेशान्तरेभ्यो विदुषः समाहूय तेऽत्राश्रयदानेन प्रतिष्ठापिता, येन जम्बूनगरी काशीमप्यतिशेते स्म । यथाह स एव कविः स्वकीये काव्ये—

विद्वद्भिः सर्वदेशीयैः सर्वशास्त्रविशारदैः ।
कृता काशी पुरी येन श्रीजम्बूनगरोपमा ॥

एतादृश संस्कृतानन्यभक्त सुधारकश्च श्रीमहाराजसदृश सत्यमेव सुरभारती-भवनालङ्कारायाद्वितीय कलाकारो युगयुगान्तरेष्वप्युपलब्धु न शक्यते । एष कालो राज्येऽस्मिन् संस्कृताय "स्वर्णयुगम्" आसीदिति न तिरोहित विदुषाम् । संस्कृतस्य सर्वमभिनवसाहित्यमस्मिन्नेव काले प्रादुर्भूतमासीत् । विभिन्नविषयेषूपनिबद्धाना ग्रन्थानामतिदीर्घा सूची वर्तते । यदि महाराज कतिपयविषयग्रन्थराशेरिव वर्षाण्यधिकमजीविष्यत्तर्हि विभिन्नकाव्यक्षेत्रेऽपि समधिकमाश्रया साहित्यस्य निर्माणमभविष्यदिति ।

प्रस्तुतकाव्ये संस्कृतचच्छन्दसा विभिन्नरूपेण प्रचुर प्रयोग उपलभ्यते । कवेरुपर्युक्तप्रतिज्ञानुसारेणैवेद कालिदासकाव्यम् इव सुवृत्त, सरल, गुणालङ्कारसमन्वितम्, दोषहीन सरस चास्तीत्यस्मिन् सर्वे गुणा उपलभ्यन्ते । पर चित्रकाव्यस्याप्यनेकान्युदाहरणान्यस्मिन् समुपनिबद्धानि, यथा—सर्वतोभद्रस्वरूपम्, रावणकृतकमलबन्धपर्याय कमलव्यूह, रामकृतकमलबन्ध कमलव्यूह, वानरेन्द्रकृतव्योमव्यूह इत्यादीनि । एव चात्र महाकाव्यस्य सम्पूर्णानि लक्षणानि दृश्यन्ते । स्थाने स्थाने प्रकृते सौन्दर्यस्य वर्णनम्, गिरिवननदनदीप्रभृतीना रमणीयचित्रप्रदर्शन चैतत्सर्वं जम्बूनगर्या सह सम्बद्धम् । काव्यस्यान्ते बाणकवेर्गद्यशैलीमनुसृत्य काव्यकर्ता जम्बूनगर्या प्राकृतिकी सौन्दर्यलहरी, तत्समन्तात्प्रवहणशीला ताप्तीसरित चादाय सुललितसुरगिरा ओजोरसभरेण च सुसाधुरूपेण कल्पनापूर्णं विवरण कृतम् । अनेन वर्णनेन जम्बूनगर्या सौन्दय तस्या सास्कृतिकमावेष्टन च सम्यक् साकारता सजीवता चाधिगच्छति । गद्यसौष्ठवस्यैकमुदाहरण नीचैर्दीयते—

"अथ सकलजनमनोनमनोचितमनोरमानुभावभावभावितभावविभावानुभावहावहारीतशुकशारिकाशरणशाणतित्तिरिमयूरमार्तण्डमारीचक्रौञ्चकारण्डवकलापकोकिलकपोतचक्रवाकसारसचकोरचातकचटककलविङ्कोत्तमकपोतपोतपोतकीप्रभृतिप्रियविहगममालिका (जम्बूनगरी)" इति ।

एवमेव विहगसमुदायस्य सौन्दर्यवर्णनानन्तर कविर्जम्बूनगर्या गहनवनविहरणशीलाना पशूनामपि विविधभेदोपन्यासपूर्वक वर्णन करोति । यथा—

"शशक सिंहशार्दूलशरभमेरिभशल्यकभल्लूकव्याघ्रगोगवयगोमायुगोधगण्डकवरोन्द्र-मण्डलीतुरङ्गनीलनीललाङ्गूलमुखमहिषगोमृगविशेषवराहवृन्दवृकवनविडालकुक्कुटसमूह-चारुसङ्घातससेविता ' (जम्बू राजधानी)

एवमेवानेन गद्यशैलीमन्वेन कविना श्रीरणवीरसिंहस्य समये वर्तमानाया जम्बूराजधान्या प्रौढ वर्णन काव्येऽस्मिन् कृतमस्ति । श्रीरणवीरसिंहस्य प्रभूतगुणानुकीर्तन काव्यस्यास्य निर्माणप्रयोजन, महाराजस्य राजसभाया समुत्कृष्ट वैभव च विस्तरश कविकल्पनाकलापेन कलितम् ।

### ३३ समयमातृका

क्षेमेन्द्रस्य रचनेयम् । कुट्टिनीमतस्य सामाजिकव्यवस्थाचारविचारादीना च सम्यग्वर्णन कृतमस्मिन्ग्रन्थे । इद पुस्तक बम्बईस्थे 'निर्णयसागर मुद्रणालये मुद्रितमभवत् ।

### ३४ सिद्धान्तकौमुदीटीका

( अप्रकाशिता ) टीकाकार श्रीसुखानन्दशास्त्री (काश्मीरिक ) ।

### ३५ सुभाषितावलि

वल्लभदेवस्य रचनेयम् । स च काश्मीरिक आसीत् इति बहुना विदुषा मतम् । अस्मिन्पुस्तके विरहदूतीप्रपणहससन्देशसज्जनसमागमवृक्षलतागुल्मकादीना मनोहारि वर्णन कृतमस्ति । एजूकेशनलसासायटी बम्बई इत्याख्येयसस्थाया मुद्रणालय १८८८ ख्रिष्टाब्दे पुस्तकमिद प्रकाशितमभवत् ।

### ३६ सुवृत्ततिलकम्

छन्द शास्त्रसम्बन्धी ग्रन्थोऽय निर्णयसागरमुद्रणालये १९०० ख्रिष्टाब्दसमीपे मुद्रित काव्यमालाया द्वितीये गुच्छे प्रकाशितश्चाभवत् । अस्य पुस्तकस्य रचयिता कश्चित् काश्मीरिक एवासीत् ।

### ३७ स्तुतिकुसुमाञ्जलि

ग्रन्थेऽस्मिन् भगवत शिवस्य कवित्वपूर्णया गिरा मार्मिकी स्तुतिरुपनिबद्धा-

स्ति । यत्रोन्नतकवित्वमयकल्पनाप्रसङ्गेनापूर्वभक्तिरसनिष्यन्द प्रवहमानोऽस्ति । शब्दार्थालङ्काराणा समुचितैः सन्निवेशै, गुणरीतिध्वनिरसप्रभृतिभि. कवितोपकरणैश्च सौन्दर्यस्य पराकाष्ठाऽत्र समुत्पादितास्ति । भक्तिरसस्य यादृश उद्रेकोऽस्मिन् ग्रन्थे प्रवहति, न तादृश कस्मिन्नपि पुस्तके इति कथने नात्युक्ति. स्यात् । अस्य ग्रन्थस्य रचयिता प्रसिद्ध काश्मीरिक कवि. श्रीजगद्धरभट्टोऽस्ति । अस्य प्रकाशन च काव्यमालाया वम्बईस्थे निर्णयसागरमुद्रणालयेऽभवत् । ग्रन्थोऽय ३६ स्तोत्रात्मक ।

### ३८ हनुमत्स्तुति·

तेनैव लेखकेन लिखिता, विद्याविलासमुद्रणालये मुद्रिता । महाराजरणवीरसिंहस्य काले प्रकाशिता च ।

### ३६ हरचरितचिन्तामणिः

द्वात्रिंशत्प्रकाशात्मक काव्यमिद राजानकजयद्रथेन व्यरचि । अस्मिन् काव्ये भगवतो हरस्य जीवनचरित्रमुपनिबद्धम् । काव्यमालाया निर्णयसागरमुद्रणालयेन मुद्रयित्वा प्रकाशितमिदम् ।

### ४० हरविजयम्

राजानकरत्नाकररचनेय श्रीमहादेवस्य त्रिपुरदाहसम्बन्धिनी कथा कवित्वपूर्णया गिरा प्रस्तौति । ५० सर्गात्मक काव्यमिद काव्यमालातो निर्णयसागरमुद्रणालये १८६० खिष्टाब्दे प्रकाशितमभवत् ।



# श्रीरणवीरसंस्कृतानुसन्धानपुस्तकालयस्थाना पाण्डुलिपीनाम् अकारादिक्रमानुगता सूची



१ आह्निकपद्धति
२ ईश्वरकोश
३ ऋषिप्रवीरजीवनचरितम्
४ कानूनीटिप
५ काश्मीरशब्दामृतम्
६ काश्मीरीभाषामहाकोश
७ गणितोद्धार
८ गान्धर्वतन्त्रम्
९. गायत्रीनिर्णय
१० गायत्रीमन्त्रविवृति
११ गायत्रीमन्त्रार्थविवृति
१२ गीतासार
१३ गीताव्याख्या (साहिब्री)
१४ गीतिकाव्यम्
१५ गोत्रप्रवराध्यायव्याख्या
१६ ग्रहदशाफलम्
१७ तन्त्रसार
१८ तारातन्त्रप्रकाश
१९ तीर्थसंग्रह (दामोदरपण्डितस्य)
२० तीर्थसंग्रह (साहिबरामस्य)
२१ दशभाषोदय
२२ दशोपनिषद्व्याख्या
२३ देवीरहस्यसार
२४ धर्मसंग्रह
२५ निगाय उल्सिवियान्
२६ नीतिकल्पलता (सटीका)
२७ पञ्चसायकविवरणम्
२८ पञ्चस्तवी
२९ पञ्चस्तवीव्याख्या
३० पुरातनमन्दिरसंग्रह
३१ प्रकीर्णसुभाषितश्लोका
३२ ब्राह्मीविद्या (सटिप्पणा)
३३ भगवद्गीता (लासकी)
३४ मत्स्यपुराणटीका
३५ महार्थमञ्जरी
३६ मार्कण्डेयपुराणटीका
३७ मीमांसासार
३८ राजतरङ्गिणी
३९ राजतरङ्गिणीसंग्रह
४० राजतरङ्गिणीसम्पादनम्
४१ राज्ञीस्तुति
४२ रामायणसार
४३ लिङ्गपुराणटीका
४४ लघुशिक्षा

४५. विद्यार्णवविवरणम्
४६. विद्यार्णवसारः
४७. वीरवैद्यरत्नहारलतिका
४८. व्यवहारसमुच्चयः
४९. शारीरकसारसंग्रहः
५०. शिवरात्रिनिर्णयः
५१. शिवमाला
५२. शिवसूत्रवृत्तिः
५३. शिवस्तोत्रावलिः
५४. षट्त्रिंशत्तत्त्वसन्दोहः
५५. स्तवचिन्तामणिः
५६. स्फोटपद्धतिः
५७ स्वात्मदेवतास्तोत्रम्
५८. हरचरितचिन्तामणिः
५९. हरिहरस्तोत्रम्
६०. हायनरत्नम्
६१. होरारत्नम्



## श्रीरणवीरसंस्कृतानुसन्धानपुस्तकालयस्थानां पाण्डुलिपीनां पूर्वोक्तसूचीक्रमानुगतः परिचयः

### १. आह्निकपद्धति

आह्निकपद्धतिरियं विश्वविदितवैदुष्येण श्रीहरभट्टशास्त्रिमहानुभावेन वैज्ञानिकपद्धत्या रचिता ।

### २. ईश्वरकोशः

ईश्वरकोशोऽयं श्रीमता ईश्वरकौलेन रचित. । तेन हि काश्मीरीभाषाशब्दानां बृहत्तरोऽभिधानग्रन्थ उपक्रमिष्यमाण आसीत्, यस्मिन् सर्वेषां भाषाशब्दाना सन्निवेश. सर्वेषामुपयोगार्थं लेखकस्येष्ट आसीत् । पर दुरदृष्टवशात् कार्यमिदमपूर्णमुज्झित्वा लेखक: स्वरयात् । परस्तात् तत्कार्यं खण्डचतुष्टये विभज्य सरजार्जग्रियर्सनमहोदय: शास्त्रिमुकुन्दरामसाहाय्येन पूर्णता नीतवान्, एतत्प्रतिलिपि षोडशोत्तरोनविंशतिशततमे (१६१६) विक्रमाब्दे स 'रायल एसियाटिक सोसाइटी'त प्राकाश्यमानयत् ।

### ३. ऋषिप्रवीरजीवनचरितम्

इदमृषिप्रवीरजीवनचरितं ज्योतिर्विदा महामनीषिणा श्रीजनार्दनयक्षेण रचितायां पञ्चस्तवीघटनया लिखितमस्ति ।

### ४. कानूनोटिव

ग्रन्थोऽयं संस्कृतभाषाया कस्याप्यारव्यभाषाग्रन्थस्यानुवादरूप प्रतीयते । एतस्य निर्माता श्रीनीलाम्बरमुकर्जीमहानुभावोऽस्ति ।

### ५ काश्मीरशब्दामृतम्

'काश्मीरशब्दामृत नाम' पुस्तक काश्मीरीभाषाया सुपरिष्कृत व्याकरण गीर्वाणगिरि लिखितमस्ति । एतच्च पाणिने प्रणालीमनुस्मृत्य लिखितमस्ति । 'काश्मीरिक पाणिनि इति नाम्नाऽस्य लेखक प्रसिद्धोऽस्ति । अत्र काश्मीरिकाणां प्रातिपदिकाना, सुबन्ताना, तिङन्ताना च शब्दानां सविस्तरो व्युत्पत्तिप्रकारो वर्णितोऽस्ति । ग्रन्थोऽयं पाश्चात्यविद्वद्भि. सानुराग प्रशंसितोऽस्ति । काश्मीरिकशब्दाना साधुत्वप्रतिपादनायात्र नानादिग्ग्रामान्तरेभ्यः सायास संग्रह

कृत सयुक्तिक च व्युत्पादन कृतमस्ति । भूयमा समयेनापि ग्रन्थोऽय समाप्ति नागमत् । अस्य लेखक श्रीसाहबरामकौल ।

## ६ काश्मीरीभाषामहाकोश

महामहोपाध्यायमुकुन्दरामशास्त्रिसरजार्जग्रियर्सनमहोदयाभ्या सम्पादितस्यास्य काश्मीरीभाषामहाकोशस्य (क) भागस्य पूर्ति श्रीगोविन्दकौलेन कृता ।

## ७ गणितोद्धार.

पण्डितश्रीनीलाम्बरमुकर्जीमहानुभावेन रचितोऽय ग्रन्थो गणितसम्बन्धिज्ञानोपयोगी अस्ति, पञ्चाङ्गरचनाया प्रकार सरलसुललितश्लोकैर्वर्णितोऽस्ति ।

## ८ गान्धर्वतन्त्रम्

गान्धर्वतन्त्रमिद श्रीहरभट्टशास्त्रिणा निर्मितम् । एतद्ग्रन्थस्य निर्माणकालोऽष्टाविंशत्युत्तरैकोनविंशतिशततमख्रिष्टाब्दत एकचत्वारिंशत्तमाब्दमध्यकाल एवास्ति ।

## ९ गायत्रीनिर्णय

वेदमातुर्गायत्र्या परमप्रसिद्धमन्त्रस्याय शैवसम्प्रदायानुगामी व्याख्यानग्रन्थोऽस्ति । अस्मिन् ग्रन्थे विदुषा शिवोपाध्यायेन ईश्वरप्रत्यभिज्ञातन्त्रालोकशिवदृष्टिप्रभृतीना ग्रन्थानामुपष्टम्भकतया प्रमाणत्वेन च गद्यमये वाङ्मये निर्देश कृतोऽस्ति । किं च गूढातिगूढो गायत्र्या रहस्यार्थोऽपि दृढतरप्रमाणयुक्तिभि सुतरा प्रकाश नीतोऽस्ति ।

## १० गायत्रीमन्त्रविवृति

पण्डितप्रवरमहानन्दमहानुभावेन रचिता गायत्रीमन्त्रविवृत्ति श्रीनगरस्थे विश्वनाथस्टीमप्रेस इत्याख्ये मुद्रणालये प्रकाशिताऽस्ति ।

## ११ गायत्रीमन्त्रार्थविवृति

पण्डितशिवोपाध्यायेन रचिता गायत्रीमन्त्रार्थविवृतिर्गायत्रीमन्त्रार्थज्ञानाय परमोपयोगितामाधत्ते । परमियममुद्रिताऽस्ति ।

### १२ गीतासार

गीतासारनामक पुस्तक श्रीमता लक्ष्मीरामापरपर्यायेण लसकाकराजानकनाम्ना पण्डितेन विरचितमस्ति ।

### १३ गीताव्याख्या (साहिबी)

प्रस्तुता गीताव्याख्या वेदान्तशैवदर्शनमुपजीव्य पण्डितसाहिबरामनाम्ना विदुषा विरचिता खण्डश कतिपयेषु भागेषूपलभ्यते । टीकाया अभिधान साहिबीति प्रतीयते ।

### १४ गीतिकाव्यम्

काश्मीरीभाषाग्रथितस्यास्य गीतिकाव्यस्य पण्डितवरश्रीहरभट्टशास्त्रिणा पद्यानुवादो विहितोऽस्ति ।

### १५ गोत्रप्रवराध्यायव्याख्या

श्रीनगरे एकानविंश्या शताब्द्या लब्धजनुषा श्रीमता पण्डितवरसाहिबरामेण रचित गोत्राध्यायनामक पुस्तक याज्ञवल्क्यस्मृते मारभ्य प्रतीयते । अत्र हि याज्ञवल्क्यमुनि प्रमाणीकृत्य दायविभागविषये गोत्राणा पारस्परिक सम्बन्ध सविमर्श दर्शितोऽस्ति । किं च काश्मीरिकाणामभिजनाना समीक्षाऽपि यथायथमत्र दृश्यते । आक्सफोर्डविश्वविद्यालयस्य हस्तलिखितपुस्तकसग्रहस्योल्लेखोऽस्ति ।

### १६ ग्रहदशाफलम्

श्रीमता पण्डितवरेण ईश्वरकौलेन रचितस्य 'ग्रहदशाफलम्' इतिनामकस्य रचनाकाल ऊनविंशविक्रमशतकाब्दकाल एव प्रतीयते । दैवज्ञाना कृते पुस्तकमिद रचितमस्ति ।

### १७ तन्त्रसार

तन्त्रसाराख्य ग्रन्थ श्रीप्रतापसिंहप्रभूणा गुरुणा श्रीसुदर्शनराजानकनाम्ना महापण्डितेन काश्मीरिकतन्त्रग्रन्थाना सारभूतमया लिखितोऽस्ति । परन्तु मुद्रणस्यासौविध्यादयममुद्रितोऽस्ति ।

### १८ तारातन्त्रप्रकाश

पुस्तकमिद श्रीप्रतापसिंहप्रभूणा राज्य (१८७७ ख्रिस्टाब्दत १६२५ ख्रिस्टाब्द-

पर्यन्त) लब्धप्रतिष्ठस्य ईशपदाभिधेयस्य श्रीताराचन्द्रमहूमहोदयस्य तदानीं कृतस्य समाजसुधारस्य प्रशंसायां महामनीषिणा दार्शनिककविना पण्डितवासुदेवगञ्जूमहानुभावेन रचितमस्ति । *अत्र कविना विविधच्छन्दसां व्यवहारः कृतोऽस्ति । एतद्दशधराणां* पार्श्वे अस्यैकः एवादर्शोऽस्ति ।

## १९ तीर्थसंग्रह

तीर्थसंग्रहोऽयं श्रीमता दामोदरपण्डितेन रचितोऽस्ति । अस्मिन् ग्रन्थे प्रायः समग्राणां काश्मीरिकाणां तीर्थानां सर्वेक्षणमस्ति । संग्रहोऽयं पद्यबद्धोऽस्ति । काश्मीरिकतीर्थजिज्ञासूनां परमोपयोगी प्रतीयते । आक्सफोर्डविश्वविद्यालये लण्डने उपलभ्यते ।

## २० तीर्थसंग्रह

*एकोनविंश्यां शताब्द्यां लब्धजनुषा श्रीसाहिबरामेण निर्मितस्तीर्थसंग्रहो नाम* ग्रन्थः काश्मीरदेशे विद्यमानानामुत्तमोत्तमानां तीर्थानां सदिङ्निर्देशं वर्णनं करोति । *ग्रन्थोऽयं काश्मीरिकग्रन्थेभ्यस्तथा नीलमतपुराणभृङ्गीशसंहिताश्रीपूर्वावतारभुवन*कोशादिभ्यो विविधमहालयेभ्यश्च संगृहीतः । अस्य प्रतिद्वयं काश्मीरशोधसंस्थानेऽस्ति ।

## २१ दशभाषोदय

विविधभाषाविदेन ईश्वरकौलेनायं बहुभाषाकोशो रचितोऽस्ति । अत्रैकैकस्य पदस्य संस्कृतहिन्दीटर्किशपारस्यलामीकाश्मीरीबलतीडोगर्याङ्ग्लीषु दशसु भाषासु पर्याया दत्ताः सन्ति । लेखकस्याकाले कालकवलितत्वेन कोशोऽयं पूर्णतां न गतः । अस्य *प्रतिद्वयं काश्मीरशोधसंस्थानेऽमुद्रितमेवास्ति ।*

## २२ दशोपनिषद्व्याख्या

पण्डितप्रवरश्रीहरभट्टशास्त्रिणा प्रणीता शैवशास्त्रानुसारिणीयं दशोपनिषदां व्याख्याऽस्ति । अद्यावधि अमुद्रितैवास्ति ।

## २३ देवीरहस्यसार

*ग्रन्थोऽयं सुदर्शनराजानकनाम्ना महापण्डितेन काश्मीरिकतन्त्रग्रन्थानां साररूप*तया प्रणीतोऽस्ति । मुद्रणप्रबन्धाभावादमुद्रित एवास्ति ।

## २४ धर्मसंग्रह

धर्मसंग्रहनामाऽयं ग्रन्थः श्रीमता लक्ष्मीरामापरपर्यायेण लसकाक राजानकनाम्ना पण्डितेन विरचितोऽस्ति ।

## २५ निशाबउलिसवियान्

पण्डितनीलाम्बरमुकर्जीमहानुभावेन रचितोऽयं ग्रन्थोऽस्ति । 'करीही' प्रणीतस्य पाठ्यग्रन्थस्य हिन्दीसंस्कृतानुवादोऽयं प्रोक्तशोधसंस्थान एव लभ्योऽस्ति ।

## २६. नीतिकल्पलता (सटीका)

नीतिकल्पलतेयमेकोनविंशतितमशताब्द्या लब्धजनुषा श्रीसाहिबरामेण निर्मिता नीतिशास्त्रविषये विशिष्टं गौरवमावहतीति सार्वजनीनम् । श्रीमतो रणवीरसिंहस्याज्ञया एतस्या निर्माणमभूत् । अस्मिन् ग्रन्थे कारिकात्मकानि नीतिपद्यानि सन्ति । पश्चात् सरलसुललितदेवगिरा तेषां व्याख्याऽपि कृताऽस्ति । अस्य ग्रन्थस्यादर्शद्वयं श्रीरघुनाथ-संस्कृतहस्तलिखितपुस्तकालये वर्तते । अस्य पूर्वार्द्धोत्तरार्द्धरूपं भागद्वयमस्ति । नाद्यापि पुस्तकमिदं प्रकाशितमभवत् ।

## २७ पञ्चसायकविवरणम्

पण्डितप्रवरेण श्रीसाहिबरामेण निर्मितमिदं पुस्तकं नाद्यापि मुद्रितमस्ति । अस्य पृष्ठानि पञ्चदशोत्तरशतद्वयमितानि सन्ति । श्रीरघुनाथसंस्कृतहस्तलिखित-पुस्तकालयेऽस्यास्तित्वं वर्तते ।

## २८. पञ्चस्तवी

ज्योतिर्विदा महामनीषिणा श्रीजनार्दनपक्षेण राज्ञीशारिकाज्वालामुखी-विष्णुशिवादीनां सुभक्तिमयी नवीना पञ्चस्तवी निरमायि, या श्रीनगरे सम्मुद्रय प्रकाशिताऽभूत् । अस्मिन् ग्रन्थे प्रसिद्धसिद्धस्य ऋषिप्रवीरस्य संक्षिप्तं जीवनचरित-मप्युट्टङ्कितमस्ति । लेखकमहोदयः २००६ वैक्रमेऽब्दे स्वरयात् ।

## २९ पञ्चस्तवीव्याख्या

धर्माचार्यकृतायाः पञ्चस्तव्याः व्याख्या पण्डितश्रीहरभट्टशास्त्रिणा महानुभावेन व्योमनन्दनवेन्दुमिते (१९९०) विक्रमीयवत्सरे विहिता । यस्याः पञ्चमस्तवरूपस्तृतीयो

भागो श्रीदीनानाथयक्षसम्पादकत्वे मुद्रितो भूत्वा विक्रयाय प्रस्तुतो वर्तते । अवशिष्टं च भागद्वयं स्तवचतुष्टयात्मकं प्रकाशनाय प्रस्तुतमस्ति ।

### ३०. पुरातनमन्दिरसंग्रह.

ख्रिष्टाष्टादशशतकस्य पूर्वार्धे लब्धजनुषा पण्डितश्रीगोविन्दकौलेन डा०स्टाइनस्य कृते राजतरङ्गिणीव्याख्यासाधनोपयोगाय गवेषणपूर्वकं पुरातनमन्दिरसंग्रह इति ग्रन्थस्य निर्माणमकारि ।

### ३१ प्रकीर्णसुभाषितश्लोका.

अत्र पुष्टाङ्गाना (पठानाना) राज्यसमये काश्मीरेषु लब्धजनुषा विविधविद्यावगाहनविशदीकृतचेतसा श्रीमता श्रीगोपालराजानकनाम्ना पण्डितेन संगृहीताः प्रकीर्णसुभाषितश्लोकाः सन्ति ।

### ३२ ब्राह्मीविद्या सटिप्पणा

महाराजश्रीगुलाबसिंहसमये श्रीनगरे लब्धजनुषा महामनीषिणा दार्शनिककविना श्रीवासुदेवगञ्जू इतिनाम्ना पण्डितेन ब्राह्मीविद्यायाः साररूपा व्याख्या कृताऽस्ति । ब्राह्मीविद्यायाः काश्मीरेषु प्रचुरः प्रचारोऽस्ति । भावाभिव्यञ्जकैर्गाम्भीर्यपूर्णैश्शब्दैरियं व्याख्या सम्पादिताऽस्ति ।

### ३३. भगवद्गीता (लासकी)

ग्रन्थोऽयं 'लासकी'त्यपराभिधानया तत्त्वप्रकाशिकाख्यया टीकया सवलितोऽनुष्ठीयमानकर्मविषयबुद्धियोग, कर्मकरणयुक्तिविस्तरण, क्रियासन्यासयोगविधान, परिशीलितात्मसयमयोगिविषयदेहाहप्रत्ययपरिहारपूर्वकचित्स्थित्युपदेशन, स्वातन्त्र्याविनाभूतबोद्धव्यस्वरूपास्मच्छब्दाभिधेयविवरणपूर्वकं ज्ञानज्ञेयकथनम्, अधिकार्यनधिकारिसमुपन्यासदेवासुरविभागनिर्णय, सन्यासत्यागविभक्तत्वक्षणान्यविकलं विषयत्वेन विशदीकरोति । अस्या लेखकस्तत्रभवाल्लक्ष्मीरामापराभिधानो लसकाकनामकपण्डितोऽस्ति ।

### ३४. मत्स्यपुराणटीका

इयं टीका रामचन्द्रभट्टेन काश्मीरिकेण विदुषा द्वात्रिंशदधिकैकोनविंशतिशततमेऽब्दे कृता सम्प्रति श्रीरघुनाथहस्तलिखितपुस्तकालयेऽमुद्रिता वर्तते ।

### ३५. महार्थमञ्जरी

श्रीमता हरभट्टशास्त्रिणा अस्या महार्थमञ्जर्या सस्करण सम्पादितमस्ति ।

### ३६. मार्कण्डेयपुराणटीका

रामचन्द्रभट्टनामकेन काश्मीरिकेण विदुषा चतुस्त्रिंशदधिकैकोनविंशतिशततमे वैक्रमेऽब्दे मार्कण्डेयपुराणस्य टीका निर्मिता, याऽधुना श्रीरघुनाथहस्तलिखिता सस्कृतपुस्तकालयेऽमुद्रितोपलभ्यते ।

### ३७ मीमासासार

अस्य ग्रन्थस्य निर्माण श्रीलक्ष्मीरामापरपर्यायलसकाकराजानकेन पण्डितेन व्यधायि । अस्मिन् ग्रन्थे गीतासम्वन्धि सूक्ष्मविवेचनमस्ति ।

### ३८ राजतरङ्गिणी

जोनराजविरचितेय राजतरङ्गिणी निर्णयसागरमुद्रणालये मोहमयीस्थे १६०१,२ ख्रिष्टवत्सरासन्नकाले प्रकाशिताऽभवत् । एव च श्रीवरशुकप्राज्यभट्टद्वारा विरचिता, डा० पिटर्सनमहोदयेन प्रकाशनक्षमता नीतेय काव्यमालाया निर्णयसागरे प्रकाशिताऽऽसीत् ।

### ३६ राजतरङ्गिणीसग्रह

राजाधिराजेन रणवीरसिंहेन अकबरजलालुद्दीनस्य काश्मीरविजयानन्तर द्विर्गतीयशासनान्तमितिवृत्त पूरयितुमादिष्ट श्रीसाहिबराम काश्मीरविजय-कालादारभ्य श्रीरणवीरसिंहशासनावधि नूतना राजतरङ्गिणीमलिखत् । अस्यैव राजतरङ्गिणीसार इति नामान्तरम् । अद्यत्वेऽस्य 'भाण्डारकर ओरियण्टल रिसर्च इन्स्टीच्यूट इत्याख्ये पुण्यपत्तनस्थे शोधसस्थाने समुपलभ्यते । कि च डा० स्टाइनसकलिते आक्सफोर्डविश्वविद्यालयस्य हस्तलिखितपुस्तकसग्रहविभागेऽपि अस्या द्वितीया प्रतिलिपि समुपलभ्यते ।

### ४० राजतरङ्गिणीसम्पादनम्

पण्डितवरगोविन्दकौलमाहाय्येन डा० स्टाइनमहोदयो राजतरङ्गिणीसम्पादन तद्व्याख्यान च व्यदधात् । एतद्ग्रन्थान्तर्गताना बहूना विषयाणामनुसन्धान पण्डितगोविन्दकौलेन कृतमस्ति ।

### ४१. राज्ञीस्तुतिः

अस्य ग्रन्थस्य रचना श्रीगोपालराजानकनामकेन पण्डितेन कृताऽस्ति ।

### ४२. रामायणसार

परमभागवतेन त्रिकोपाह्वेन पण्डितमहादेवेन रामायणसारनामा ग्रन्थोऽयमलेखि । अतिसंक्षिप्तोऽप्ययं वर्ण्यविषयं नैपदपि परिहरति ।

### ४३. लिङ्गपुराणटीका

महापण्डितेन श्रीमता दयारामेण काश्मीरनरेशस्याज्ञया लिङ्गपुराणस्य भावार्थसंकेतनाम्नी टीका १८५६,८७ समये कृताऽस्ति, या श्रीरघुनाथहस्तलिखितपुस्तकालये समुपलभ्यते ।

### ४४ लेखशिक्षा

प्रस्तावादिरचनाशिक्षायामियमद्वितीया पुस्तिका स्टाइनसंकलिते हस्तलिखितपुस्तकसंग्रहे वर्तते । अस्मिन् ग्रन्थे हृदयहारीणि गद्यखण्डानि सन्ति ।

### ४५. विद्यार्णवविवरणम्

श्रीमता पण्डितेन शिवोपाध्यायेन रचितं विद्यार्णवविवरणं नाम पुस्तकं पराविद्यायाः श्रीविद्यायाः सुगूढतत्त्वभूतं मन्त्रं सुचारुतया विशदीकरोति । श्रीविद्यार्थविवरणेऽनुपमोऽयं ग्रन्थो नाद्यावधि प्रकाशितोऽस्ति ।

### ४६. विद्यार्णवसारः

श्रीमता सुदर्शनराजानकेन महापणिगतेन प्रणीतोऽयं विद्यार्णवसारनामा ग्रन्थः, काश्मीरिकतन्त्रग्रन्थानां सारप्रतिपादने प्राप्तगौरवः, सम्प्रत्यप्रकाशितोऽस्ति ।

### ४७. वीरवैद्यरत्नहारलतिका

वीरवैद्यरत्नहारलतिकाभिधा पुस्तिकेयं कस्यचिदरवीभाषाग्रन्थस्य चिकित्साविषयस्यानुवादात्मिकेति डा० स्टाइनमहोदयः । बृहद्ग्रन्थस्यास्य पृष्ठानि ४३३ सन्ति ।

### ४८. व्यवहारसमुच्चय

लक्ष्मीरामापरपर्यायेण श्रीमता लसकाकनाम्ना पण्डितेन रचितोऽयं व्यवहारसमुच्चयः समुपलभ्यते ।

### ४६ शारीरिकसारसंग्रह

संग्रहोऽयं श्रीलसकाकराजानकनाम्ना पण्डितेन रचितोऽस्ति ।

### ५० शिवरात्रिनिर्णय

पण्डितवरेण श्रीमता शिवोपाध्यायेन रचित शिवरात्रिनिर्णयो लोकप्रसिद्धस्य शिवरात्रिमहोत्सवस्य शैवागमदृशा विशद महत्त्वपूर्णं व्याख्यान बोधयति । समग्रोऽयं सन्दर्भोऽनुष्टुब्वृत्तशतद्वयेन संनिबद्धोऽस्ति ।

### ५१ शिवमाला

अस्या शिवमालाया निर्माण श्रीमता पण्डितवरेण गोपालराजानकनामकेन कृतमस्ति ।

### ५२ शिवसूत्रवृत्ति

योगिवराणा श्रीमतामीश्वरस्वामिनामन्यतमशिष्येण श्रीसौदागर इत्युपाह्वन रामजीमहोदयेन श्लोकमयी शिवसूत्रवृत्तिर्व्यरचि ।

### ५३ शिवस्तोत्रावली

त्रिकापाह्व श्रीमुकुन्दनामा महापण्डिता भक्तिरसाप्लुता शिवस्तोत्रावली जुगुम्फ । अस्मिन् ग्रन्थेऽनेकविधानि शैवाभिमतसिद्धान्ताभिधायीनि स्तोत्राणि ग्रथितानि सन्ति ।

### ५४ षट्त्रिंशत्तत्त्वसन्दोह

श्रीमता हरभट्टशास्त्रिणा अस्य षट्त्रिंशत्तत्त्वसन्दोहग्रन्थस्य सस्करण सम्पादितमस्ति ।

### ५५ स्तवचिन्तामणि

श्रीमता हरभट्टशास्त्रिणाऽस्य मुद्रणार्हं सस्करण सम्पादितमस्ति ।

### ५६ स्फोटपद्धति

श्रीमता लक्ष्मीरामापरपर्यायेण लसकाकराजानकनाम्ना महापण्डितेन रचिता स्फोटपद्धति स्फोटात्मकशब्दब्रह्मणो विवेचन करोति ।

### ५७ स्वात्मदेवतास्तोत्रम्

पुस्तकमिदं दार्शनिककविना पण्डितवासुदेवगञ्जूमहानुभावेन मन्दाक्रान्ताच्छन्दसा चतुष्पञ्चाशत्सरयकानां श्लोकानां सग्रहात्मकं स्वात्मरूपदेवतास्तवनविषये वेदान्तादिशास्त्राण्यधिकृत्य लिखितोऽस्ति । मन्दाक्रान्तास्तोत्रमित्यपरमभिधमिदमस्ति ।

### ५८ हरचरितचिन्तामणि

अस्य हरचरितचिन्तामणिग्रन्थस्य बहूना स्थानीयप्रदेशविषयाणा गवेषण श्रीमता गोविन्दकौलेन सम्पादितमस्ति ।

### ५९. हरिहरस्तोत्रम्

महामनीषिणा दार्शनिककविना पण्डितवासुदेवगञ्जूमहानुभावेन हरिहरयो स्तुतिरूप हरिहरस्तोत्रनामक पुस्तकमिद विहितम् । अत्रैकैकश पद शिवाच्युतयोर्महिमान वर्णयति । श्लोकाना चतु सप्ततिरस्या स्तुतौ वर्तते, या वात्सल्यरसाप्लुताकवेर्भक्त्युद्रेक शसति ।

### ६० हायनरत्नम्

पण्डितप्रवरश्रीमद्दामोदरमहोदयस्यात्मजेन श्रीमता बलभद्रनामकपण्डितेन शाके दशाधिकसप्तदशशतके ज्योतिश्शास्त्रसम्बन्धिहायनरत्ननामक पुस्तकमिद रचितम् ।

### ६१ होरारत्नम्

अस्यापि रचयिता अयमेव बलभद्रनामा पण्डितोऽस्ति । समयश्च पूर्वोक्त एव ।

एतानि मुद्रितान्यपि पुन सस्कारमर्हन्ति । यतो हि नाद्य खलु एतेषु एकमपि कुत्रचित्सप्राप्यते । अस्मिन् पुस्तकालयेऽपि एतेषा केवलमेकैकमेव पुस्तक विद्यते । तदपि विकृतम् । यदा कदा एतेषा सग्राहका पुस्तकान्यादातु प्रयतन्ते, पर बहुनापि मूल्येन नैकमपि पुस्तक क्वचिल्लभ्यते । अनेके हि पुस्तकप्रकाशका स्थानीयाधिकारिभ्योनुज्ञा याचन्ते, यदेतेषा मुद्रणाद्यधिकारो लभ्येत । पर समन्वयाभावेन नैतत्प्रकाशन सजायते । कैश्चित्तु पुस्तकप्रकाशकै स्वकीयपुस्तकसूच्यामपि एतेषा नामाङ्कन विहितम् । मूल्यमपि सुनिर्धारितम् । पर विवरणस्थे विज्ञापने स्पष्टमुल्लिखितमपि अप्राप्यम् इति ।

## श्रीरणवीरसंस्कृतानुसन्धानपुस्तकालयस्थाः सन्दर्शनार्हा ग्रन्थाः

१ तोव्जुम् (लद्दाखी) मुकुटधारणम् (सम्कृतम्)
२ पञ्चरत्नगीता (सचित्रा)
३ पञ्चरत्नगीता (सचित्रा) भिन्ना
४ पञ्चरत्नगीता (सचित्रा) भिन्ना
५ पुरुषोत्तमक्षेत्रमाहात्म्यम्
६ रप्चल्नम्पर्नोन्पेजूसुपा (लद्दाखी) पराक्रमविक्रमपरिपृच्छा (सम्कृतम्)
७ रागमाला (फारसी)
८ रागावली (फारसी)
९. रामायणसग्रह
१० शकुनावली (सचित्रा)
११ श्रीमद्भगवद्गीता (विंशतिटीकायुता)

### भूर्जपत्रलिखितग्रन्थावली (शारदालिपि)

१ ईश्वरप्रत्यभिज्ञासूत्राणि
२. ईश्वरप्रत्यभिज्ञासूत्रविमर्शिनी
३ ईश्वरप्रत्यभिज्ञासूत्रविमर्शिनी
४ ईश्वरप्रत्यभिज्ञाहृदयम्
५ कादम्बरी
६ काशिकावृत्ति
७ ज्योतिषरत्नमाला
८ पञ्चीकरणवार्तिकम्
९. बालबोधिनी
१० मनुस्मृति
११. महाभाष्यम्
१२ महाभाष्यम् प्रदीपोद्योतान्वितम्
१३. महार्थमञ्जरी
१४ राघवपाण्डवीयम्
१५ वेदान्तसार
१६ वेदान्तसार
१७ शारीरकमीमांसाभाष्यम्
१८ शास्त्रसिद्धान्तलेशसग्रह
१९ शिवदृष्टिवृत्ति
२० शीघ्रबोध
२१ षड्दर्शनविचार
२२ सूक्ष्मजातक लघुजातक वा



## श्रीरणवीरसंस्कृतानुसन्धानपुस्तकालयस्याः सन्दर्शनार्हा ग्रन्थाः

### तोक्जुंस् (लद्दाखीभाषा) मुकुटधारण (संस्कृतम्) १८५ ख २

बृहदाकारोऽयं ग्रन्थो लद्दाखीभाषायां सुलिखितो वर्तते । अस्य क. ख. इति द्वौ भागौ स्तः । हीनयान-महायानसमाख्यया प्रख्यातयोर्बुद्धसप्रदाययोर्विषयोऽत्र सुप्रपञ्चित इति तद्विद्वद्भिः प्रतिपाद्यते । लद्दाखविजयकाले 'खबरअलीशाह' नामकेन केनचित् सेनानायकेन 'ह्रीमीगुणपाद' इत्याख्यस्य लद्दाखवासिनः सकाशात् संगृह्य महाराज-रणवीरसिंहहस्तयोः समर्पितमेतदिति ऐतिहासिकानां मतमस्ति ।

### पञ्चरत्नगीता (सचित्रा) १८२३ क

सुमनोहरदेवनागरीलिपियुक्ता सचित्रा चेयं गीता २०८ पत्रेषु समाप्ताऽस्ति । अस्या विभिन्नावतारमूर्तयोऽपि षड् विद्यन्ते । हस्तचित्रिता एता मूर्तयो विंशतितम-शताब्दीकालस्य चित्रकला सूक्ष्मदर्शनेन च कस्यचित् काश्मीरिकचित्रकारस्य हस्तकौशलं प्रकटयन्ति ।

### पञ्चरत्नगीता (सचित्रा) १८२४ क

देवनागरीसुवर्णविलिखिता सचित्रा चेयं गीता २६५ पत्रेषु परिपूर्णाऽस्ति । अस्या विभिन्नावताराणां चतुर्दश मूर्तयो विद्यन्ते । एता अपि विंशतितमशताब्दी-कालस्यैव चित्रकलां प्रदर्शयन्ति । परमेतासां सनिरीक्षणेनैतत्प्रतिभाति, यदेताः केनचिद् द्विगर्तीयेन चित्रलेखकेन सुचित्रिताः स्युरिति ।

### पञ्चरत्नगीता (सचित्रा) । ७६३ ख

सचित्रेयं गीता ५०५ पत्रेषु समाप्ताऽस्ति । अस्या लिपिश्चित्राणि च पूर्वोक्तगीताभ्यां प्राचीनतां सम्बोधयन्ति । अस्यां च २२ चित्राणि विद्यन्ते । चित्रकलायामपि विविधं सम्मिश्रणं दृश्यते ।

### पुरुषोत्तमक्षेत्रमाहात्म्यम् ६५८ घ

स्कन्दपुराणान्तर्गतं ह्येतत्पुरुषोत्तमक्षेत्रमाहात्म्यं तालपत्रेषु सुलिखितमस्ति अस्य १५७ पत्राणि सन्ति । दक्षिणभारतीयेन केनचिद् विदुषा समानीयात्र समर्पित-मेतदिति प्रतिभाति ।

## रग्चलनम् परनोन् पेजूस् पा (लद्दाखीभाषा)

## पराक्रमविक्रमपरिपृच्छा (सस्कृतम्) १८५ ख १

## रागमाला (फारसी) १८५९ क

फारसीभाषाया मुलिखिता इय रागमाला अत्यद्भुतकलाया निदर्शनमस्ति। अधुना अस्या ६० पत्राणि समुपलभ्यन्ते। तेषु च २५ चित्राणि विभिन्नरागाणां स्वरूपध्यानादिक समुपदिशन्ति। अस्या लिपिश्चित्राणि च परस्पर सौन्दर्यप्रदर्शने सघर्षमिव प्रकुर्वन्ति। चित्रकला तु विशतितमशताब्दीकालस्य कौशल प्रकाशयति। अस्या लिपिकाल १९३०ख्रिष्टाब्द., लिपिकारश्च पण्डितराजो रामकौल 'तोता' अस्ति। फारसीभाषाया विभिन्नरागेषु प्रयुक्तानि सूरतुलसीप्रभृतिभगवद्भक्तकवीना पद्यानि अनूदितानीति पाठदर्शनेन सप्रतीयते।

## रागावली (फारसी) १८६० क

उपर्युक्ताकारप्रकारा एवेयमपि वर्तते। अस्या ५९ पत्राणि समुपलभ्यन्ते। तेषु २९ चित्राणि पूर्ववद् रागवर्णन प्रकुर्वन्ति। चित्राणि तु पूर्वापेक्षया लघूनि अस्या सदृश्यन्ते। चित्रकला च यथोक्तमेव काल प्रबोधयति। अनुमानत. 'बसोहली' समाख्यद्विगर्तीयप्रदेशस्य केनापि प्रवीणेन चित्रकारेणैतानि चित्राणि सुचित्रितानीति अन्वेषकाणा मतमस्ति।

## रामायणसंग्रहः ७८९ ख

बृहदाकारोऽय रामायणसग्रह सुमनोहरेषु स्थूलाक्षरेषु विलिखितोऽस्ति। अस्मिन् सग्रहे योगवासिष्ठम् (महारामायणम्), अध्यात्मरामायणम्, रामचरितमानसम् एतानि त्रीणि सगृहीतत्र सन्निविष्टानि। अस्य लिपिसन्दर्शनेन एतत्प्रत्यक्षमायाति यदद्यतनैर्मुद्राक्षरैरपि तादृशी वर्णाकृतिर्नाभिव्यज्यते, यादृशी प्राक्तनीषु लिपिषु लेखकैर्लिखिताऽस्ति। ग्रन्थराजोऽय १९९५ वैक्रमाब्दे धर्मार्थविभागाधीनात् 'मुई मिम्वली' इत्याख्याद् देवस्थानात् तत्रत्याधिकारिभिरस्मिन् पुस्तकालये सप्रेषित। अस्य ६५२ पत्रसख्या वर्तते।

## शकुनावली (सचित्रा) ६६७ क

इय शकुनावली ६७ पत्रेषु समाप्ताऽस्ति। अस्या च ६७ सर्घुचित्राणि सन्ति।

तेषु देवनरपशुपक्षिप्रभृतय सुचित्रिता । प्रातरुत्थाय कस्य दर्शनेन किं फलमफल वा सम्भवतीति शकुनोक्तरीत्याऽत्र प्रवर्णितम् । सुस्पष्टैर्देवनागरीवर्णैर्डोगरीभाषाया सक्षेपेण सर्वशकुनाना च प्रदर्शन कृतम् । चित्रसदर्शनेन तु विंशतितमशताब्दीकालिकी एव चित्रकला प्रत्यक्षमायाति ।

### श्रीमद्भगवद्गीता ( विंशतिटीकायुक्ता ) २७११,२८ घ

अस्य ग्रन्थस्य विस्तृत विवरण पूर्वं सुलिखित द्रष्टव्यम् । दर्शनार्हग्रन्थगणनायात्र पुनर्नामनिर्देशो विहित ।



### भूर्जपत्रलिखितग्रन्थावली (शारदालिपि) १ २० घ

अस्या ग्रन्थावल्या पुरातनेषु भूर्जपत्रेषु शारदाक्षरैर्विलिखिता इमे ग्रन्था सन्ति । काश्मीरमडण्लादिय ग्रन्थावली अत्र समाविष्टा इति तु निर्विवादमेवास्ति ।

| पुस्तकम् | पत्राणि | कर्ता | वैक्रमाब्द | लिपिकाल |
|---|---|---|---|---|
| १. ईश्वरप्रत्यभिज्ञासूत्राणि ३ घ, | १२ | उत्पलदेव } | " | १६७६ |
| २ ईश्वरप्रत्यभिज्ञासूत्रविमर्शिनी २ घ, | १५१ | अभिनवगुप्त } | " | १६७६ |
| ३ ईश्वरप्रत्यभिज्ञासूत्रविमर्शिनी १६ घ, | १२० | अभिनवगुप्त | " | १६८० |
| ४ ईश्वरप्रत्यभिज्ञाहृदयम् १७ घ, | १६ | क्षेमराजराजानक | " | १६८० |
| ५ कादम्बरी ६ घ, | २७६ | बाणभट्ट | " | १७०५ |
| ६ काशिकावृत्ति २० घ | ५२२ | जयन्त | " | १६६० |
| ७ ज्योतिषरत्नमाला ६ घ, | ६ | महादेवदैवज्ञ | " | १६७६ |
| ८. पञ्चीकरणवार्तिकम् १३ घ, | ५ | अनन्तरामयति | " | १६८० |
| ९. बालबोधिनी १४ घ, | ३ | शङ्कराचार्य | " | १६८० |
| १० मनुस्मृति ४ घ, | १०७ | मनु | " | १६७६ |

११ महाभाष्य कैय्यटविवरणेन प्रदीपोद्योतेन सहितम् १८१, ८३ ।

एतत् पातञ्जलमहाभाष्य कैय्यटकृतप्रदीपेन नागेशकृतप्रदीपोद्योतेन च समन्वित बृहत्कायमस्ति। अस्य पञ्च भागा अत्र विद्यन्ते। एतत्तु लन्दनस्थ'इण्डिया म्युजियम'-इत्याख्यसंग्रहालयादादाय श्रीमता 'प्रिंस आफ वेल्ज'महोदयेन स्वयमत्रागत्य १९३२ ख्रिष्टाब्दे महाराजरणवीरसिंहहस्तया समर्पितमिति सर्वं सुस्पष्टाक्षरैरस्यादिमे पृष्ठे सुलिखितमस्ति। अस्य लिपिस्तु प्राचीना देवनागरी एवास्ति। पृष्ठसंख्या च सहस्राधिका वर्तते।

१२ महाभाष्य प्रदीपोद्योतान्वितम् १३० क

१८५५ ख्रिष्टाब्दे मुद्रितमेतदपि महाभाष्य प्रदीपोद्योतसमन्वित महाकाय चास्ति। अस्य पृष्ठसंख्या तु ८०८ अस्ति। सुमनाहराणि च स्थूलानि देवनागरी-मुद्राक्षराणि सन्दर्शनार्हाण्येव सन्ति।

| पुस्तकम् | पत्राणि | कर्ता | वैक्रमाब्द | लिपिकाल |
|---|---|---|---|---|
| १३. महार्थमञ्जरी १६ घ, | १८ | महेश्वरानन्द | " | १६८० |
| १४ राघवपाण्डवीयम् ८ घ, | ५७ | कविराजपण्डित | " | १७०५ |
| १५ वेदान्तसार १३ घ, | ७ | सदानन्द | " | १६८० |
| १६. वेदान्तसार १५ घ, | १६ | सदानन्द | ' | ,६८० |
| १७ शारीरकमीमांसाभाष्यम् १ घ, | ५०७ | श्रीशङ्कराचार्य | ' | १६६० |
| १८ शास्त्रसिद्धान्तलेशसंग्रह १ घ, | ८४ | अप्पयदीक्षित | ' | १६७९ |
| १९ शिवदृष्टिवृत्ति ११ घ, | ७१ | उत्पलदेव | " | १६८० |
| २०. शीघ्रबोध ७ घ, | २५ | काशीनाथ | " | १६७९ |
| २१ षड्दर्शनविचार १८ घ, | ६ | अज्ञात । | | १६८० |
| २२ सूक्ष्मजातक लघुजातक वा ५ घ, | १२ | वराहमिहिर | ' | १६७९ |



## श्रीरणवीरसंस्कृतानुसन्धानपुस्तकालयस्था मुद्रिता अपि पुनः संस्कारार्हा ग्रन्था:

१ गीतापञ्चरत्नम्
२ धातुरूपावली
३ नचिकेतोपाख्यानम्
४. मन्त्ररामायणम्
५. रघुवंश
६ रणवीरचिकित्साप्रकाश
७ रणवीरचिकित्सासुधासार
८ रणवीरज्योतिर्महानिबन्ध
९ रणवीरप्रायश्चित्तप्रकरणम्
१० रणवीरप्रायश्चित्तप्रकरणम्
११ रणवीरव्रतरत्नाकर
१२. वर्णमाला
१३ श्रीमद्भागवतम्
१४. सेनाशिक्षा
१५ हरिसहस्रनामस्तोत्रम्

## दानार्थं मुद्रापिता ग्रन्था:

१ अद्वैतमार्तण्ड
२ कालीस्तोत्रम्
३ भागवतप्रथमस्कन्ध
४ भागवतद्वितीयस्कन्ध
५ रामानुजोक्तिध्वान्तभास्कर
६ लहरीवाडवानल
७ वाल्मीकिरामायणम्
८ शालग्रामार्चनचन्द्रिका
९ शिक्षा
१० श्रीमद्भागवतम्
११ सत्योपाख्यानम्
१२ सामवेदगानम्
१३ संस्कृतविद्योपाख्यानम्



## श्रीरणवीरसंस्कृतानुसन्धानपुस्तकालयस्था मुद्रिता

## अपि पुनः सस्काराही ग्रन्थाः

### १ गीतापञ्चरत्नम्

गीतापञ्चरत्नमिद जम्बूनगरे शिलाक्षरैर्मुद्रितमभूत् । अस्य पृष्ठसख्या ११३ अस्ति ।

### २ धातुरूपावली

डोगरीभापाया मुद्रिता इय धातुरूपावली सस्कृतानुसारिणो धातुप्रयोगान् सशिक्षयति । अस्या पृष्ठसख्या २२४ वर्तते ।

### ३ नचिकेतोपाख्यानम्

पण्डितगङ्गारामेणैतत् सम्पाद्य जम्बूस्थे श्रीरणवीरयन्त्रालये मुद्रापितम् । अस्य पृष्ठसख्या १४१ वर्तते ।

### ४ मन्त्ररामायणम्

जम्बूनगरे १९३४ वैक्रमेऽब्दे ह्येतत् शिलाक्षरैर्मुद्रितमभूत् । अस्य पृष्ठसख्या १४६ अस्ति । वेदमन्त्रै श्रीरामावतारकथा अस्मिन् सप्रस्तुताऽस्ति ।

### ५ रघुवश

सटीकोऽय ग्रन्थ श्रीरणवीरमुद्रणालये १९३० खिष्टाब्दे मुद्रितोऽभूत् । अस्य पृष्ठसख्या १८४ वर्तते ।

### ६ रणवीरचिकित्साप्रकाश

जम्बूनिवासिना पण्डितनीलकण्ठेन विरचितोऽय चिकित्साग्रन्थ । अस्य द्वौ भागौ स्त । प्रथमस्य ४३४, द्वितीयस्य च ७७१ पृष्ठसख्या विद्यते । श्रीरणवीरयन्त्रालयेऽयमपि १९३१ वैक्रमाब्दे मुद्रितोऽभूत् । आयुर्वेदस्य हि वहवो ग्रन्था पूर्वाचार्यैविरचिता सन्ति । पर हिन्दीभापाया दोहा-चौपाई-कवित्त-प्रभृतिपु लौकिकेपु छन्द सु चिकित्सोपम कठिन विपय सनिवध्य सुखचिकरग्रन्थप्रणयनेऽस्य कर्तुर्महान् परिश्रम प्रशसार्ह एवास्ति । कतिपयाश्चात्र सुपरीक्षिता योगा अपि समुपलभ्यन्ते ।

### ७. रणवीरचिकित्सासुधासारः

अयमपि सुपरीक्षितयोगयुक्तश्चिकित्साग्रन्थश्चिकित्सकपण्डितैर्विरचितः । अस्य पृष्ठसंख्या ५४ अस्ति । श्रीरणवीरमुद्रणालये चायमपि १९३१ ख्रिष्टाब्दे मुद्रितोऽभूत् । अस्य लिपिस्तु डोगरी एवास्ति । यद्यपीदानीं डोगरीलिपिलेखनमपि सुदुष्करम्, परं महाराजरणवीरसिंहराज्ये तु तन्मुद्रणमपि संभवति स्म ।

### ८. रणवीरज्योतिर्महानिबन्धः

दैवज्ञपण्डितानां सस्नेहसाहाय्येन ज्योतिर्विन्महेशपण्डितेन पूर्वाचार्यकृताननेकज्योतिःशास्त्रग्रन्थान् पर्यालोच्य सर्वसारभूतोऽयं ज्योतिःशास्त्रग्रन्थः सम्प्रणीतः । अस्मिन् संस्कृतेन सह हिन्दीटीकाऽपि सम्पादिता । अस्य पृष्ठसंख्या ६७४ अस्ति । श्रीरणवीरमुद्रणालयेऽयं १९३१ ख्रिष्टाब्दे मुद्रितोऽभूत् ।

### ९. रणवीरप्रायश्चित्तप्रकरणम्

बहूनां धर्माचार्यपण्डितानां साहाय्येन पण्डितेन गङ्गारामेण नानाधर्मशास्त्रसद्ग्रन्थालोचनपूर्वकं संपादितमेतद् बृहत्कायं प्रायश्चित्तप्रकरणम् । अस्य ५ भागाः सन्ति । प्रथमस्य २८४, द्वितीयस्य ३१६, तृतीयस्य २६३, चतुर्थस्य २०९, पञ्चमस्य च २९० पृष्ठसंख्या वर्तते । देवनागर्या सुवाच्याक्षरैश्चैतद् १९३२ ख्रिष्टाब्दे जम्बूस्थे श्रीरणवीरमुद्रणालये मुद्रितमभूत् ।

### १०. रणवीरप्रायश्चित्तप्रकरणम्

उपर्युक्तस्य ग्रन्थस्योत्तरार्द्धभूतमेतदपि तद्वदेव संप्रकाशतां गतम् । अस्य तु त्रयो भागाः सन्ति । प्रथमस्य २६३, द्वितीयस्य २०९, तृतीयस्य च २९० पृष्ठसंख्याऽस्ति ।

### ११. रणवीरव्रतरत्नाकरः

धर्माचार्यपण्डितैः सुनिर्मितोऽयं धर्मशास्त्रग्रन्थः । प्रधानसम्पादकस्तु पण्डितशिवशङ्करोऽस्ति । अस्य पृष्ठसंख्या ६५० वर्तते । १९४१ ख्रिष्टाब्दे चायमपि श्रीरणवीरयन्त्रालये मुद्रितोऽभूत् ।

### १२. वर्णमाला

डोगरीभाषाशिक्षणार्थमियं देवनागरीवर्णैर्मुद्रापिता । मध्ये मध्ये डोगरी-

लिपिरपि सदर्शनार्हा विद्यते । श्रीरणवीरमुद्रणालये मुद्रितायामस्या वर्णमालाया डोगरीभाषाशिक्षार्थिना विद्यार्थिना च कृते सरला व्याकरणपद्धतिरपि सप्रदर्शिता । सा च संस्कृतानुसारिणी एवास्ति । अस्या. पृष्ठसख्या १६६ विद्यते ।

### १३ श्रीमद्भागवतम्, (हिन्दीटीकोपेतम्)

इद हिन्दीटीकोपेत भागवत १९३३ वैक्रमाब्दे श्रीरणवीरयन्त्रालये मुद्रितमभूत् । अस्य पृष्ठसख्या २१३० अस्ति । खण्डितमपि पुस्तकमिद विदुषा कृते परमोपयोगि वर्तते । अद्य तु यत्र तत्र सर्वत्र एव पुराणाना सस्कृते हिन्दीभाषाया च टीका समुपलभ्यन्ते । पर शतवर्षपूर्व पुराणग्रन्थाना हिन्दीसस्कृतटीकालेखने महाराजश्रीरणवीरसिंहस्यैव प्रवृत्ति. सञ्जाता ।

### १४ सेनाशिक्षा

सुरचितेऽस्मिन् डोगरीलिपियुक्ते लघुग्रन्थे सैनिकशिक्षापद्धति सुवर्णिताऽस्ति । अस्य कर्ता एच० वाई० वार्स्टनमहोदयोऽस्ति । अय ग्रन्थ १८९२ वैक्रमाब्दे श्रीरणवीरमुद्रणालये मुद्रितोऽभूत् । अस्य पृष्ठसख्या १७० अस्ति ।

### १५. हरिसहस्रनामस्तोत्रम्

स्तोत्रमेतत् १९२९ खिष्टाब्दे मुद्रितमभूत् । अस्य पृष्ठसख्या ३६ अस्ति ।

---

## दानार्थं मुद्रापिता ग्रन्थाः

महाराजरणवीरसिंहस्य ज्येष्ठसुतेन महाराजश्रीप्रतापसिंहमहोदयेनापि यथापूर्वं विद्यानुराग सप्रदर्शयता कतिपया ग्रन्था मुद्रापिता, ये विद्याप्रचारार्थं विद्वद्भ्यो वितीर्यन्त स्म । अधुनापि तेषु केचन विद्यन्ते । विद्वास समागत्य पत्रादिक वा सप्रेष्यैतेषा ग्रहणाय प्रयतन्त । तेषा नामानि तु निम्नस्थानि सन्ति—

१ अद्वैतमार्तण्ड । १९९६ व
२ कालीस्तोत्रम् । १८८० व
३ भागवतप्रथमस्कन्ध । १८८
४ भागवतद्वितीयस्कन्ध । १८९ ग
५ रामानुजोक्तिध्वान्तभास्कर । १९१३ व
६. सहर्षवाडवानल । १९१४ व
७ वाल्मीकिरामायणम् । १८७ ख
८ शालिग्रामार्चनचन्द्रिका । १९१ ख
९ शिक्षा । १९२ ख
१० श्रीमद्भागवतम्
११ सत्योपाख्यानम् । १९० ख
१२. सामवेदगानम् । १९४ ग
१३ सरहनविद्योपाख्यानम् । ३६५ ग

## रणवीरसंस्कृतानुसन्धानपुस्तकालयस्यावशिष्टः परिचयः

अग्रिमयोजना—पूर्वमेव वर्णितं, यदधुना अनुसन्धानविभागोऽस्य वर्तमान-महाराजमहोदयेन समुद्घाटित इति । परं तत्संचालनार्थं प्रचुरार्थस्यावश्य-कताऽस्ति, तदर्थं महाराजमहोदयः संप्रयतते, यद्भारतीयसर्वकारकृपया अन्यस्थानीय-संस्थानामिव अस्या अपि संस्थाया आर्थिकसाहाय्यप्रदानपुरस्सरं संरक्षणं संवर्धनं च संभवेदिति । तत्साहाय्यप्राप्त्यनन्तरमेवास्या संस्थाया अग्रिमा योजना संप्रचलिष्यति । इदानीं तु साधारणरीत्या एवास्याः संचालनं परिपालनं च भवति । प्रकाशनादि-सर्वमपि कार्यं विचाराधीनमेवास्ति ।

जम्बूप्रान्तीयान्यविद्यानुरागिसज्जनानां कृपया प्राप्तानि पुस्तकानि—महाराज-रणवीरसिंहस्यात्मजाः प्रतापसिंहामरसिंहरामसिंहप्रभृतयः राजानोऽपि महान्तो विद्यानुरागिण आसन् । तेषु ज्येष्ठस्य प्रतापसिंहस्याज्ञया मुद्रापितानां केषाचित् सद्ग्रन्थानां परिचयः पूर्वं सुलिखितोऽस्ति । कनिष्ठस्यामरसिंहस्यादेशेनापि कतिपया एतादृशाः सद्ग्रन्था यत्र तत्र विद्वद्भ्यः प्रदत्ताः श्रूयन्ते, येषां संग्रहः पुस्तकालये नास्ति । परं प्रयत्नेनान्विष्य तमपि संस्थापयितुं पुस्तकालयाधिकारिभिः सुनिर्णीतम् । मध्यमस्य रामसिंहस्य तु निज एव पुस्तकालय आसीत् । तस्य निर्वाणानन्तरं तदीयग्रन्थाः विभिन्नस्थानेषु संविभक्ताः । तेषु बहवोऽमुद्रिता ग्रन्थाः स्वल्पाश्च मुद्रितग्रन्थाः पुस्त-कालये समुपलभ्यन्ते । प्रायः पुस्तकेषु यत्र तत्र रामसिंहस्येदं पुस्तकम् इति हस्ताक्षर-सहितं, क्वचिच्च मुद्रामुद्रितं संदृश्यन्ते । अस्मिन् विषये सशोकमेतत् संश्रूयते यद् राज्ञो रामसिंहस्य केचिद् हस्तलिखिता उत्तमोत्तमाः संस्कृतग्रन्थाः स्थानीये राज्यपुस्त-कालयेऽपि सुरक्षिता आसन् । परं १९४७,४८ ख्रिष्टाब्दयोस्ते सर्वेऽपि बलात् प्रगृह्य शेखसर्वकारेण श्रीनगरे संप्रेपिताः । तत्र च ते कुत्र स्थापिता इति तु नाद्यापि विज्ञायते । जम्बूस्थश्रीरघुनाथसंस्कृतमहाविद्यालयस्य भूतपूर्वप्रधानाचार्यराजपण्डित-जगदीशशर्मणः पौत्रेण, उपप्रधानाचार्यश्रीचन्द्रशर्मणः पुत्रेण पण्डितवाचस्पतिशर्मणाऽपि स्वपूर्वजसंस्मरणहेतोरत्र बहवो मुद्रितग्रन्थाः १९५२ ख्रिष्टाब्दे संप्रदत्ताः । श्रीनगर-स्थानुसन्धानप्रकाशनविभागेनापि अस्य पुस्तकालयस्य साहाय्येन ये तन्त्रग्रन्थाः शैव-ग्रन्थाश्च मुद्रापितास्तेऽत्रापि समर्पिताः ।

भारतविभाजनतः प्राग् द्विगर्तदेशेऽपि यत्र तत्र अनेकाः संस्कृतपाठशाला आसन् । परमद्य ताः सर्वा एव विलयं गताः । जम्बूतः पूर्वोत्तरदिशि स्रवन्त्याः पुराण-

प्रसिद्धाया देविकानद्यास्तटे 'पुरमण्डलोत्तरवाहिनी इति नाम्ना विख्यात महातीर्थ-स्थान वर्तते । उत्तरवाहिनीस्थानेऽपि एका प्राचीना सस्कृतपाठशालाऽऽसीत् । तस्या सञ्चालनमपि धर्मार्थविभाग एव करोति स्म । पर परिस्थितिवशात्साऽपि भग्ना जाता । तत्रत्यो लघुपुस्तकालयोऽपि समग्रो महापुस्तकालये सन्निविष्ट ।

एव धर्मार्थविभागस्य क्रयविधानेन, अन्यैर्बहुभि सस्कृतानुरागिभिर्यदाकदा पुस्तकप्रदानेन च सर्वधितोऽय पुस्तकालयो विशालता गत ।

### पुस्तकालयनिरीक्षकपाठकाना निदर्शनम्

बहुधा सम्प्रयतितेऽपि पुस्तकालय गत्वा पुस्तकाध्येतृणा पुस्तकालयावलोकनकर्तृणा च सख्यादिप्रदर्शनेऽशक्तत्वैवाभूत् । यतो हि कैरपि अज्ञातहतुभिस्तन्नामनिर्देशादि-साधनानि नोपलब्धानि । एकदा तत्र ७००० सख्या सञ्जाता । तत पूर्व तु नून सख्याधिक्यमेवाभविष्यदित्यनुमाननैवावगन्तव्यम् । विशेषावसरे पुस्तकालयनिरीक्षकेषु त्वेते महानुभावा सविशेष स्मरणार्हा सन्ति—

| | |
|---|---|
| सर्वश्रीराष्ट्रपति (प्रथम ) डा०राजेन्द्रप्रसाद , | नूतना देहली । |
| सर्वश्रीराष्ट्रपति (द्वितीय ) डा०श्रीराधाकृष्णन्, | नूतना देहली । |
| श्रीसुनीतिकुमारचट्टोपाध्याय , | कलकत्ता । |
| श्रीआर०एन०दाण्डेकर , | बम्बई । |
| श्रीजी०एच०दवमहोदय , | बम्बई । |
| श्रीडा०वी०राघवनमहोदय , | मद्रास । |
| श्रीटी०आर०वी०मूर्ति , | वाराणसी । |
| श्रीठा०जयदेवसिंह , | नूतना देहली । |
| श्रीडी०ए०पुलस्कर , | पूना । |
| श्रीपी०एन०शाण्डिल्य , | सागर । |
| श्रीए०डी०पुष्कर , | पूना । |
| श्रीसी०एच०कुलकर्णी, | पूना । |
| श्रीडा०सी०जी०गुप्त | नूतना देहली। |
| श्रीहरीशचट्टोपाध्याय | कलकत्ता । |
| श्रीअयोध्यानाथ | कलकत्ता । |
| श्रीसिद्धेश्वरचट्टोपाध्याय | कलकत्ता । |

| | |
|---|---|
| श्रीसवितामिश्रा, | कलकत्ता । |
| श्रीकृष्णासाहु, | कलकत्ता । |
| श्रीजे०वी०चौधरी, | कलकत्ता । |
| श्रीआर०के०शर्मा, | नूतना देहली । |
| श्रीवीरमणिरुपाध्याय, | पटना । |
| श्रीआनन्दस्वरूपगुप्त, | वाराणसी । |
| श्रीएन०अग्निहोत्री, | कानपुर । |
| श्रीप्रेमनारायणशुक्ल, | कानपुर । |
| श्रीमंगलाप्रसादोऽग्निहोत्री, | कानपुर । |
| श्रीडा०मण्डनमिश्र शास्त्री, | देहली । |
| श्रीडा०रामलालवर्मा, | नूतना देहली । |

अन्येऽपि त्रयश्चत्वारो वा आंग्लविद्वांसोऽत्र समायाता: परं तैरस्य यन्नामाङ्कनं विहितम्, तद् दर्शनार्हमेव नास्ति अपितु समुद्धरणार्हमप्यस्ति । अत्र निम्नस्था महानुभावा यथाकालं पुस्तकाध्यक्षपदेषु कार्यमकुर्वन् । (१) पण्डितश्रीपुरुषोत्तमशर्माण, (२) पण्डितश्रीदीनानाथशर्माण, (३) पण्डितश्रीजगद्रामशर्माण, (४) पण्डितश्रीकृष्णदत्तशास्त्री, (५) पण्डितश्रीचन्द्रमणिशास्त्री, (६) पण्डितश्रीद्वारिकानाथशास्त्री, (७) पण्डितश्रीमोतीरामशास्त्री चेति ।

**पुस्तकालयसंचालिकायाः धर्मार्थपरिषदः संक्षिप्तपरिचयः**—जम्बूकाश्मीरस्थधर्मार्थविभागस्य सर्वसंरक्षको महाराजः डा० श्रीकर्णसिंहः मधुरभाषी, लोकरञ्जकः विद्यानुरागी, नीतिनिपुणः, दानशीलः, सर्वसहिष्णुः, परमास्तिकश्चास्ति । धर्मार्थविभागस्य लक्ष्यपूर्त्यै महाराजः सुप्रयतते, संस्कृतवाङ्मयस्यालौकिकसंग्रहालयस्य संरक्षणं संवर्धने च अहर्निशं संलग्नो वर्तते । स्वपूर्वजानां महापुरुषाणां सत्कार्यपद्धतिमङ्गीकृत्यानेन महाराजेनापि धर्मार्थविभागस्यैका परिषत् संस्थापिताऽस्ति । अस्याः परिषदः सदस्याः प्रतिवर्षं नवीना भवन्ति । अधुना हि भूतपूर्वो द्विगर्तसेनापालः (ब्रिगेडियर) श्रीघनसारसिंहोऽस्याः परिषदः प्रधानोऽस्ति । अयं महानुभावः स्वर्गवासिनो महाराजश्रीहरिसिंहस्य समयादेव धर्मार्थविभागस्य निःशुल्कं सेवां प्रकरोति । अस्यापूर्वं कर्मकौशलं धर्मप्रेम च धर्मार्थविभागस्य कृते वरदानमिव संजातम् । अस्य सहयोगिनः सदस्याः भूतपूर्वार्थविभागीयप्रधानपरीक्षकः पण्डितपरमानन्दमहोदयः, तद्विधश्च राम-

लालगुप्तमहोदय', भूतपूर्ववनविभागाध्यक्ष पण्डितरामलालमहोदय एते त्रयोऽपि यथेष्ट प्रशसार्हं कार्यं कुर्वन्ति ।

एते महानुभावा समये समये स्वयमिह समेत्य पुस्तकालयावलोकन कृत्वा तदर्थं स्वस्वमत सप्रदर्शयन्ति । अन्येऽपि बहव संस्कृताध्यापका संस्कृताध्येतार संस्कृतानुरागिणश्च प्रत्यह समागत्य पुस्तकानि सपठन्ति । स्वाभिमतविषय लिखित्वा स्वायत्तीकुर्वन्ति । सर्वेऽपि अतिथयोऽत्र समागत्य पुस्तकालयविषये यथेष्ट स्वसम्मति सप्रदर्शयेयुरिति पर्यालोच्यात्रैक 'सम्मतिपुस्तकम्' सस्थापितमस्ति । तस्मिन् विलिखिता विभिन्नविद्वज्जनसम्मति महाराजमहोदयोऽपरे चाधिकारिण सपठन्ति, तदुचितसाधन-सपादनाय च विचारयन्ति ।

स्थानान्तरग्रन्थादानप्रयत्न —ग्रन्थान्वेषणकर्मणा सप्रति सविज्ञात यत् 'श्रीहर्ष-चरितम्' 'दानमाला', 'नवग्रहशान्ति', 'रणवीरदण्डविधि', 'सेनाशिक्षणम्', 'पदाति-शिक्षा', 'रयन्त्रशिक्षा', 'रयन्त्राभ्यास', 'रामुदायशिक्षा', 'योगवाशिष्ठसार', स्वन्धास्थि-प्रभ', 'रणवीरसिंहचरितम्' इत्यादयो बहवो ग्रन्था महाराजरणवीरसिंहराज्यकालेऽत्र मुद्रिता अभूवन् । तत्प्राप्तिकाले तु ते सर्वेऽपि अस्मिन् पुस्तकालये सुरक्षिता अभविष्य-न्निति पुस्तकालयाधिकारिभिर्विनिर्णीतम् ।

जम्बूस्थडोगरामण्डलसस्थाया सचालकैरपि महता परिश्रमेण कतिपये सुदुर्लभा अमुद्रितग्रन्था सगृहीता सन्ति । यदि धर्मार्थविभागाधिकारिणो मण्डलाधिकारिभि सह समन्वय सविधाय तममुद्रितग्रन्थसग्रहमपि अस्मिन् पुस्तकालये सस्थापयेयुस्तर्हि तत्रत्यग्रन्थाता द्विगुणा सख्यावृद्धिर्नून सजायेत । पुस्तकालयाधिकारिभिरस्मिन् विषये विचारविमर्श समारब्ध एवास्ति । अत एव मण्डलाधिकारिभि स्वसपादितसस्कृत-ग्रन्थयोर्डोगरीभाषानुवादोपेतयोरेकैक पुस्तक पुस्तकालये निशुल्क सम्प्रेषितम् । तौ च ग्रन्थौ 'पञ्चतन्त्रम्' 'सत्यनारायणकथा' चेति सुप्रसिद्धौ स्त । अनयोर्डोगरीभाषानुवादस्तु श्रीअनन्तरामशास्त्रिभिर्महता परिश्रमेण कृतः ।



## भाषान्तरेष्वनूदितानां सर्वत्र जगति प्रसिद्धानां च काश्मीरिक-ग्रन्थानां सूची



१ अभिनवगुप्त
२ अलङ्कारसर्वस्वम्
३ अलङ्कारसारसंग्रह
४ अलङ्कारसारसंग्रहविवरणम्
५ इण्डियनएस्थेटिक्स
६ कथासरित्सागर
७ काव्यप्रकाश
८ काव्यालङ्कार
९ काव्यालङ्कारवृत्ति
१० काश्मीरस्य प्राचीनभूगोलम्
११ काश्मीरशैववाद
१२ गिलगित्तपाण्डुलिपय
१३ ध्वन्यालोक
१४ ध्वन्यालोकलोचनम्
१५ न्यायमाला
१६ परमार्थसार
१७ भारतमञ्जरी
१८ मिलिन्दपन्हो
१९ रणवीरप्रायश्चित्तनिबन्ध
२० कल्हणकृता 'राजतरङ्गिणी'
२१ जोनराजकृता 'राजतरङ्गिणी'
२२ प्राज्यभट्टकृता 'राजतरङ्गिणी'
२३ शुककृता राजतरङ्गिणी'
२४ श्रीवरकृता 'राजतरङ्गिणी'
२५ राजतरङ्गिण्या आलोचनात्मक आङ्ग्लभाषानुवाद
२६ लल्लेश्वरवाक्यानि
२७ व्यक्तिविवेक
२८ शिवसूत्रविमर्शिन्या आङ्ग्लभाषानुवाद
२९ शैवदर्शनपारिभाषिकशब्दकोष
३० सविवरणा सूची
३१ हिन्दुरिअलिज्म



## भाषान्तरेष्वनूदिताः सर्वत्र जगति प्रसिद्धाश्च काश्मीरिका ग्रन्थाः

### १. अभिनवगुप्तः

'अभिनवगुप्त' इति ग्रन्थ. अभिनवगुप्तस्य सिद्धान्तान्प्रकटयति । विद्वद्वरेण श्रीकान्तिचन्द्रपाण्डेयेनास्य रचना कृता । काश्मीरप्रदेशस्यैतिहासिकदार्शनिकादयो विविधा विचारा ग्रन्थेऽस्मिन्निबद्धा. सन्ति ।

### २. अलङ्कारसर्वस्वम्

'अलङ्कारसर्वस्वम्' श्रीरुय्यकेण विरचितमस्ति । प्रकाशितमुपलभ्यते ।

### ३ अलङ्कारसारसंग्रहः

'अलङ्कारसारसंग्रह.' श्रीमदुद्भटेन रचितोऽस्ति । प्रकाशित उपलभ्यते च ।

### ४ अलङ्कारसारसंग्रहविवरणम्

'अलङ्कारसारसंग्रहविवरणम्' श्रीमता भामहेन कृतमस्ति । प्रकाशितमुपलभ्य चास्ति ।

### ५. इण्डियन एस्थेटिक्स ('भारतीयं काव्यशास्त्रं' नाम)

'इण्डियन एस्थेटिक'नाम्ना प्रसिद्ध ग्रन्थो भारतीयकाव्यशास्त्रात्मकोऽस्ति ।

### ६. कथासरित्सागर.

'कथासरित्सागर' श्रीसोमदेवेन रचितोऽस्ति । प्रकाशित. सुलभश्चास्ति ।

### ७ काव्यप्रकाशः

'काव्यप्रकाश.' श्रीमम्मटेन विरचितोऽस्ति । प्रकाशित. प्राप्यश्च ।

### ८. काव्यालङ्कारः

'काव्यालङ्कार.' श्रीरुद्रटेन विदुषा रचितोऽस्ति । प्रकाशित उपलभ्यश्च ।

### ९. काव्यालङ्कारवृत्तिः

'काव्यालङ्कारवृत्ति ग्रन्थ श्रीवामनेन विदुषा रचितोऽस्ति । प्रकाशितः समुपलभ्यश्चास्ति ।

## १०. काश्मीरस्य प्राचीनभूगोलम्

काश्मीरभूभागस्य भूगोलज्ञानोपयोगी काश्मीरस्य प्राचीनभूगोलात्मको ग्रन्थोऽस्ति। अयमपि प्रकाश प्राप्तोऽस्ति। इय कृति श्रीमत एम्०ए०स्टीनमहोदयस्यास्ति, या सुचिर स्मरणार्हा।

## ११. काश्मीरशैववादः (आग्लभाषायाम्)

'काश्मीरशैववाद' श्रीजे०सी०चटर्जीमहोदयेन लिखितोऽस्ति। अय ग्रन्थ इतिहासस्य, साहित्यस्य, काश्मीरप्रदेशस्य, अद्वैतशैवमतस्य च भूमिकास्वरूप प्रकाशित उपलभ्यते।

## १२. गिलगित्तपाण्डुलिपयः

गिलगित्तपाण्डुलिपीना पञ्चसु त्रिभागेषु विभक्ता ग्रन्था अपि प्रकाशिता सन्ति।

## १३. ध्वन्यालोक

'ध्वन्यालोक' श्रीमदानन्दवर्धनेन धीमता विरचितोऽस्ति। प्रकाशित। विविधस्थानेषु सुप्राप्य।

## १४. ध्वन्यालोकलोचनम्

'ध्वन्यालोकलोचनम्' श्रीमदभिनवगुप्तेन रचितमस्ति। प्रकाशित प्राप्य चास्ति।

## १५. न्यायमाला

'न्यायमाला' श्रीमता क्षेमेन्द्रेण रचिताऽस्ति। प्रकाशिता समुपलभ्या च।

## १६. परमार्थसार.

'परमार्थसार' विद्वन्मूर्धन्येन श्रीमदभिनवगुप्तेन रचितोऽस्ति। अस्य प्रकाशन षोडशाधिकैकोनविंशतिशततमे (१९१६) अब्देऽभवत्। एतस्य टीकोपेतसस्कृतग्रन्थस्य प्रकाशनाद् बहुपूर्वम् एल०डी० बारनेटमहोदयेन कृतस्तस्याग्लभाषानुवाद, बृहद्ब्रिटेनदेशस्य 'रायलएशियाटिकसोसाइटी' सस्थाया· पत्रिकाया (७०७–७४७ पृ०) १९१० वर्षे सस्कृतशोधविभागेन प्रकाशित.।

## १७. भारतमञ्जरी

'भारतमञ्जरी' श्रीक्षेमेन्द्रेण रचिताऽस्ति। अस्याः प्रकाशितायाः काश्मीरेऽन्यत्र चोपलब्धिर्भवति।

## १८. मिलिन्दपन्हो (मिलिन्दप्रश्नः)

'मिलिन्दपन्हो' ग्रन्थः काश्मीरिकेण श्रीनागसेनेन विदुषा रचितः। बौद्धसिद्धान्तानुसारी महत्त्वपूर्णोऽस्य विषयोऽस्ति। काश्मीरप्रदेशे त्वहिश्चायमुपलभ्यते।

## १९. रणवीरप्रायश्चित्तनिबन्धः

'रणवीरप्रायश्चित्तनिबन्धः' प्राचीनहिन्दुस्मृतिग्रन्थेषु अन्यतमोऽस्ति। अद्यावधि चास्य प्रकाशनं नाभूत्।

## २०. कह्लणकृता 'राजतरङ्गिणी'

श्रीकह्लणकृताया राजतरङ्गिण्या आंग्लभाषानुवादयुतस्य श्रीजे०सी० दत्तकृतस्य संस्करणस्य प्रथम-द्वितीय-तृतीयग्रन्थाः प्रकाशिताः सन्ति।

## २१. जोनराजकृता 'राजतरङ्गिणी'

श्रीजोनराजकृताया राजतरङ्गिण्या आंग्लभाषानुवादयुतस्य श्रीजे०सी०दत्तकृतस्य संस्करणस्य प्रथम-द्वितीय-तृतीयग्रन्थाः प्रकाशिताः सन्ति।

## २२. प्राज्यभट्टकृता 'राजतरङ्गिणी'

श्रीप्राज्यभट्टेन कृताया राजतरङ्गिण्या आंग्लभाषानुवादयुतस्य श्रीजे०सी० दत्तकृतस्य संस्करणस्य प्रथम-द्वितीय-तृतीयग्रन्थाः प्रकाशिताः सन्ति।

## २३. शुककृता 'राजतरङ्गिणी'

श्रीशुकेन कृताया राजतरङ्गिण्या आंग्लभाषानुवादयुतस्य श्रीजे०सी० दत्तकृतसंस्करणस्य प्रथम-द्वितीय-तृतीयग्रन्थाः प्रकाशिताः सन्ति।

## २४. श्रीवरकृता 'राजतरङ्गिणी'

श्रीवरेण रचिताया राजतरङ्गिण्या आंग्लभाषानुवादयुतस्य श्रीजे०सी० दत्तकृतसंस्करणस्य प्रथम-द्वितीय-तृतीयग्रन्थाः प्रकाशिताः सन्ति।

## २५. राजतरङ्गिण्या आलोचनात्मक आंग्लभाषानुवादः

काश्मीरनरेशानां वंशावल्या राजतरङ्गिण्या आलोचनात्मकं संस्करणं विस्तृत-

टिप्पणैर्युतमांग्लभाषाऽनुवादरूपं प्रकाशितमस्ति । अनुवादोऽसौ श्रीमता एम्०ए० स्टीनमहाशयेन कृतः । कल्हणकृताया राजतरङ्गिण्या अर्वाचीनानां जोनराज-श्रीवर-प्राज्यभट्ट-शुकैः कृतानां राजतरङ्गिणीनाम् आंग्लभाषायुतस्य श्रीजे०सी० दत्तकृतस्य संस्करणस्य त्रयो ग्रन्था अपि प्रकाशिताः सन्ति ।

## २६. लल्लेश्वरवाक्यानि

काश्मीरप्रदेशस्य महात्मनो लल्लस्य लल्लदेवस्य वा आध्यात्मिकानि वाक्यानि प्रकाशितानि सन्ति ।

## २७. व्यक्तिविवेकः

'व्यक्तिविवेकः' श्रीमहिमभट्टेन विरचितोऽस्ति । प्रकाशितः प्राप्यश्चास्ति ।

## २८. शिवसूत्रविमर्शिन्या आंग्लभाषानुवादः

श्रीपी०टी०श्रीनिवास अय्यंगार इत्युपाह्वेन कृतः, शिवसूत्रविमर्शिन्या आंग्लभाषानुवादात्मको ग्रन्थः प्रकाशितोऽस्ति ।

## २९. शैवदर्शनपारिभाषिकशब्दकोशः

शैवदर्शने प्रयुक्तानां पारिभाषिकशब्दानां संग्रहाय श्रीचटर्जीनाम्ना ख्यातेन विदुषा शैवदर्शनपारिभाषिकशब्दकोशात्मको ग्रन्थो व्यरचि, यस्य चतुरधिकैकोन-विंशतिशतम(१९०४)वर्षीयविवरणानुसारमुद्घोषितमासीद् यत् पाण्डुलिप्यास्त्रिंशत पृष्ठानि मुद्रणार्थं प्रस्तुतान्यासन्, परन्तु तत्प्रकाशनं नाभवदिति ।

## ३०. सविवरणा सूची

महामहिम्नः काश्मीरराजस्य स्वीये पुस्तकालये विद्यमानानां चतुस्सप्तत्यधिक-द्विशतपाण्डुलिपीनाम् एम्०ए० स्टीनमहोदयेन चतुर्नवत्यधिकाष्टादशशततमे (१८९४) अब्दे निर्मिता 'सविवरणा सूची' प्रकाशमगमत् ।

## ३१. हिन्दुरिअलिज्म

नव्यवैशेषिकदर्शने भूमिकारूपः जे०सी०चटर्जीमहोदयेन द्वादशाधिकैकोनविंशति-शततमे (१९१२) अब्दे कृतो 'हिन्दुरिअलिज्म'नामा ग्रन्थः प्रकाशितोऽस्ति ।

# संस्कृतपत्रपत्रिकाः

## अस्यां शताब्द्यां प्रकाश्यमानाः संस्कृतपत्रपत्रिकाः

१ श्री पत्रिका—

वीरविक्रमाङ्कस्य अष्टाशीत्युत्तरैकोनविंशे १९८८ सवत्सरे श्रीनाम्न्या पत्रिकाया प्रकाशनमभूत् । डाक्टर(पी० एच० डी०)कुलभूषणेन प्राध्यापक-नित्यानन्दस्य सम्पादनसाहाय्ये पत्रिकाया अस्या स्थापना कृता । सस्कृतभाषाया, आर्य(ऋषि)-सभ्यतायाश्च प्रचार, रक्षण च व्यपदिश्य त्रैमासिकीय पत्रिका अष्टाशीत्युत्तरैकोनविंशात् वैक्रमाद् वर्षादारभ्य द्विसहस्रमितवैक्रमाब्द यावत् श्रीकुलभूषणस्य सचालकत्वे सम्पादने च निर्बाध प्राचलत् प्रासारयच्च भारतीय-ज्ञान-विज्ञान-पाथोनिधेरमृतकल्लोलान् सहस्रशोऽध्येतॄणाम्मन सु । इय पत्रिका सौरवर्षस्य चैत्राषाढाश्विनपौषमासेषु प्रकाश्यते स्म । अस्या वार्षिक शुल्क रूप्यकमेकमासीत्, शतद्वयपरिमिता च ग्राहकसख्या आसीत् ।

२ रिसर्च-पत्रिका—

त्रिक-दर्शनस्यानन्योपासकेन श्रीमता हृदयनाथकौलमहानुभावेन अष्टपचाशदुत्तरैकोनविंशे (१९५८) आग्लवर्षे 'रिसर्च'नामधेयाया पत्रिकाया स्थापन व्यधायि । आग्लभाषाया माध्यमेनाधुनिकवैज्ञानिकशब्दावलीभिश्च त्रिकदर्शनस्य प्रचारमुद्दिश्य प्रकान्ताया पत्रिकाया अस्या द्रविणसाहाय्याभावादेक एवाङ्क प्रकाशितोऽभूत् । अस्या पृष्ठसख्या चत्वारिंशत् ४० । पण्डितप्रेमनाथनेहरू-हरिकृष्णमिर्जा-बदरीनाथनाजिर-मास्टरजिन्दकौल-त्रिभुवनशास्त्रिणोऽस्या पत्रिकाया. साहाय्यकर्मणि मुख्या अभूवन् । कतिभिश्चनोत्साहशीलैरधुनापि पुनरस्या प्रकाशनाय प्रयासो विधीयते ।

३ 'शारदापीठ-रिसर्च-सिरीज'—

शैवशास्त्रनिष्णातेन विदुषा डा०राधाकृष्णकावमहोदयेन शारदापीठरिसर्च-सिरीज-नाम्न्या पत्रिकाया स्थापना ऊनषष्ट्युत्तरोनविंशख्रिष्टाब्दस्य १९५९ जनवरीमासे विहिता । आग्लगिरो माध्यमेन विश्वस्मिन् प्राच्यविद्याया प्रसार, भारतीयज्ञान-विज्ञानयोर्गवेषणा, पाश्चात्यदेशेषु भारतीयसस्कृते प्रत्यभिज्ञादर्शनस्य च प्रचार-इत्येतान्यस्या उद्देश्यानि । आग्ल्या सस्कृते चार्धं विभज्य पत्रिकैषा सम्पाद्यते । सस्कृत-भागस्य सम्पादने श्रीयुतो जगद्धरजाडू, डा०शिवनाथशर्मा, श्रीबदरीनाथशास्त्री च साहाय्यकरा सन्ति । पत्रिकैषा त्रैमासिकी । एकचत्वारिंशत्सख्यातान्यस्या पृष्ठानि । दशमुद्राश्च वार्षिक शुल्कम् ।

---

## जम्बूप्रदेशे लब्धजनुषां विशिष्टविदुषां परिचयः

### श्रीमदम्बरढभानुशास्त्रिण

इमे जम्बूराज्यान्तर्गत'पल्सी'ग्रामवास्तव्या, 'त्रिलोचनदत्त'तनूजन्मानो नेत्राग्निग्रहेन्दुमिते (१९३२) वैक्रमे वत्सरे समाविरभवन्। इमे राजाधिराज-महाराज-श्रीगुलाबसिंहसंस्थापितोत्तरवाहिनीपाठशालीयानां विदुषां सविधे चिरमधुष्य व्याकरण-न्यायशास्त्रे प्राचीननवीनरीत्या अभ्यास्यन्। परं लोकोत्तरप्रतिभाप्रतिभासमानानामेषाम् उत्तरवाहिनीपाठशालीयाध्यापकेभ्योऽधीयनानामपि न मनस्तोषः समभूदिति पिपठिषया जम्बूनगरस्थश्रीरघुनाथपाठशालां प्राविशन्। तत्र गङ्गाधर-काशीनाथप्रभृति-पण्डितेन्द्रसविधेऽध्येतुमारभन्त। तत्रत्या विद्वांस एषां सूक्ष्मबुद्धिवैभवसन्तुष्टा कुशाग्र-धिषणं सुज्ञेयान् व्याकरणशास्त्रपरिष्कारान्, शब्दखण्डे च व्युत्पत्तिवादशक्तिवादौ, धर्मशास्त्राणि, शास्त्रान्तराणि चैनानध्यापयामासु। प्राप्तयौवना इमे लवपुरे (लाहौर) ओरियण्टलकालेजे वर्षद्वयमध्यापकपदमध्यतिष्ठन्। केनापि कारणेन तदध्यापनकार्यं परित्यज्य सनातनधर्मकालेजे पञ्चवर्षाणि अध्यापनकार्यमकार्षुः। तदनन्तरम् उदयपुरा-धीशेन सम्मानिता इमे तत्पाठशालायां प्रधानाध्यापकपदमलमकार्षुः। तत्रापि वसु-(८)वर्षाणि व्याकरणादिकमध्याप्य पुनर्द्विगर्तानाययुः। तत्र श्रीरणवीरहाईस्कूलस्यसंस्कृत-पाठशालायां वर्षमेकमध्यापयामासुः। ततो राजाधिराजो महाराज श्रीप्रतापसिंह कर्णोपकर्णिकया एषां विलक्षणं वैदुष्यं, लोकोत्तरां शिष्यसन्तोषिणीमध्यापनप्रणालीं च समाकर्ण्य श्रीरघुनाथपाठशालायामिमान् व्याकरणाध्यापकपदमध्यतिष्ठिपत्। व्याकरण-न्यायादिशास्त्रजातं सर्वमप्येषां जिह्वाग्रस्थमेवाभवत्। पुस्तकं विनैव सिद्धान्तकौमुदी, महाभाष्यम्, लघुशब्देन्दुशेखरादिकं चाध्यापयन्त इमे शिष्यान् परं समतोषयन्। शिष्याश्च तेषामध्यापनशैलीम्, विबोधनप्रकारम्, शास्त्राणां निगूढवेदित्वम्, सर्वत्र शास्त्रेषु साम्राज्यम्, कर्मण्यताम्, लोकोत्तरवक्तृत्वम्, शिष्याणामपराधे सत्यपि क्षमाशील-त्वम्, प्रसन्नवदनत्वम्, शिष्येषु निरुपमं वात्सल्यं चानुभूय विस्मिताः सन्तः परममोदन्त, प्रीतिपरवशाश्च तच्चरणरजांसि स्वशिरसि लिम्पन्ति स्म। एवमेकोनविंशतिवर्षाणि श्रीरघुनाथपाठशालायामध्याप्य लब्धवयस्कवृत्तिका इमे उच्चाधिकारिभिरन्तःपुरे कर्म-काण्डं कारयितुं राजपण्डितपदे न्ययुज्यन्त। तत्र पञ्चवर्षाणि कर्मकाण्डमचीकरन्। ततो विमुक्ता वर्षद्वयं विद्यापीठनाम्नि हिन्दीसंस्कृतमहाविद्यालये संस्कृताध्यापकपदमल-मकार्षुः। तदध्यापिता प्रभूततराः कन्यकाः पञ्चनदीय'शास्त्रि'परीक्षां समुत्तीर्णास्तत्र तत्र विद्यालयेषु अध्यापयन्त्यो दरीदृश्यन्ते। संस्कृतसाहित्यस्य संवर्द्धने पोषणे च

परमोपकारिण इमे वेदखशून्याश्विमिते (२००४) वैक्रमे वत्सरे माघशुक्लैकादश्यां सायं सप्तवादनवेलायां भौतिक शरीरं विहाय परे ब्रह्मण्यलीयन्त। एषां त्रिषु पुत्रेषु अवशिष्ट एक एव सुपुत्रो 'विश्वेश्वरशास्त्री' पितृचरणाननुसरन् स्वकुलानुरूपमेव सर्वमध्यनाध्यापनादिकं सम्पादयतीति।

---

### श्रीकाकारामशास्त्रिणः

(१८२३-१९०७ वैक्रमाब्दाः)

'जम्मू' प्रान्तान्तर्गते 'भव्वर'नाम्नि ग्रामे कश्चित् 'कृष्णदेव'नामा न्यायनय-कुशलो ब्राह्मणः समभवत्। श्रूयतेऽसौ तदानीन्तन-जम्बूनरेशस्य महामात्यपदमलमकार्षीत्। तदात्मजः श्रीदिलारामशर्मा सर्वशास्त्रनिष्णातः, पुराण-धर्मशास्त्रादिप्रवचनप्रवीणः, परमेश्वर-परायणः, यथासमयं कृतपरिणयोऽपि षष्टिवर्षवयःपर्यन्तं स्वात्मजाननदर्शनसुखं नान्वभवत्। ततोऽन्तर्दूयमानः कस्यचित्सिद्धस्याऽऽदेशेन स्वायुषः एकषष्टितमे वत्सरे पुत्रकाम्यया वैदिकैर्विद्वद्भिः पुत्रेष्टिमकारयत्। एवं किलाख्यायते यत्—पण्डितप्रवराः श्रीदिलारामशर्म्माणोऽपुत्रत्वादतिविरक्ताश्चन्द्रभागातीरमासाद्य मृण्मयीं वेदव्यासप्रतिमामुपासांचक्रिरे। कदाचित् प्रातरेव स्नानसन्ध्यादितो निवृत्य षोडशोपचारैः प्रतिमां समभ्यर्च्य रहो जपन्तोऽकस्मादेव समाधिस्थाः सम्बभूवुः। समाधावेव कञ्चित् तपःकृशं, बृहद्वासं, लम्बश्मश्रुं, वर्षीयांसं पुमांसं ददृशुः। श्रूयतेऽसौ स्वयं भगवान् द्वैपायन एवासीत्। स समवादीद्-"ब्राह्मण! मा शोकमनुभव, समुत्पत्स्यते ते सर्वलक्षणोपेतोऽखिलसंशयनिरसनक्षमो ब्रह्मनिष्ठः सुतः। बाल्ये एव यस्मै साङ्गाः, सरहस्याः, सर्वे वेदाः, सर्वाणि शास्त्राणि च स्वयमाविर्भविष्यन्तीति। पुत्रेष्टिविधिना यज देवान्" इत्यभिधायासौ तिरोबभूव। एतदुपदेशेन पुत्रेष्टिं कृत्वा तत्प्रभावेणाय स्वायुषो द्विषष्टितमे हायने पुत्ररत्नं लेभे। जन्मतो ह्येकादशेऽह्नि 'काकाराम' इति तस्य नाम चकार। समस्तशास्त्रपारङ्गतपितृचरणसविधे समुपस्थाय व्याकरणन्यायकाव्यादीनि समधीत्यासौ षोडशवर्षदेशीय एव त्रिगर्तेषु महतीं पाण्डित्यख्यातिं समध्यगच्छत्। तादृशवरप्रभावेण नैसर्गिकप्रतिभया, जन्मान्तरसंस्कारैर्वा, देवानुग्रहेण वा, सर्वं पाणिनीयं सूत्रजालम्, अक्षरशः पातञ्जलं महाभाष्यं, सर्वाणि च दर्शनानि, किं बहुना, सर्वाण्यपि शास्त्राणि तेषां जिह्वाग्रस्थान्यासन्निति। कदाचित् षोडशवर्षवयसि वर्तमानमेनं काकारामशास्त्रिणं तत्पिता समवादीद्, यद् "अहं चरमे वयसि वाराणसी

केवल सरस्वत्यैवानुगृहीतोऽस्य, किन्तु लक्ष्मीरपि गुणं. प्रमोहितैवास्य नित्य पार्श्ववर्तिनी समभवत् । स्वजीवने पञ्चलक्षरूप्यकपरिमित धन ब्राह्मणेभ्यः, पण्डितेभ्यो, दीनेभ्यश्चार्य दत्तवान् । स्वय भोजनाच्छादनादिष्वसाधारणव्ययस्याप्यस्य गृहाद् राजानो महाराजाश्चापि आतिथ्यसत्कारमनवाप्य न गच्छन्ति स्म, अन्येषा विदुषा भिक्षूणाञ्च कि वक्तव्यम् ? ।

जम्बू-काश्मीराधिपतेर्महाराजश्रीगुलाबसिंहमहोदयस्याग्रहेण बहुतर धनं स्वीकृत्यापि प्रयाणावसरे पञ्चचत्वारिंशत्सहस्रपरिमितमृणमवशेषित तेन । तत्र षोडशसहस्रं भीमसेननाम्ना भक्तेन, अवशिष्ट च तत्पुत्रैः प्रादायि । इमे महानुभावाः श्रीकाकारामशास्त्रिणः १९०७ वैक्रमाब्दे भाद्रकृष्णजन्माष्टम्यां मध्याह्नोत्तर द्विवादनवेलायां चतुरशीतिवर्षात्मके वयसि गङ्गाया मणिकर्णिकाघट्टे पद्मासनासीना विश्वनाथ ध्यायन्तः प्राणान् योगेन तत्यजुः । एषां सहस्रशः शिष्याणा कुलपरम्परा विद्यासन्तानं निरवच्छिन्नमिच्छन्त्यः काकारामशास्त्रिणां प्रतिभा समभ्यर्चयन्त्यो दृश्यन्ते, इत्यहो ! । तादृशलोकोत्तरप्रतिभाशालिनः पुण्यात्मानो विद्वांसो दुर्लभदर्शना भवन्ति । अद्यापि तद्वंशजा वाराणस्यां तन्नाम्ना स्वगुणैरपि विद्वत्सदसि प्रचुर सम्मानमाप्नुवन्तीति श्रूयते ।

---

## कृष्णदत्तशास्त्री

श्रीकृष्णदत्तशास्त्री व्यासोपाधिकपरशुरामपण्डिततनूजो ग्रहशरनन्देन्दुमिते (१९५९) वैक्रमाब्दे स्महलपुरग्रामे जनिमग्रहीत् । असौ जम्बूनगरस्थश्रीरघुनाथपाठशालात. पञ्चनदविश्वविद्यालयीयशास्त्रिपरीक्षा समुदतरत् । अयं प्रायः काव्य-न्याय-व्याकरणचुञ्चुरपि व्याख्यानप्रवचनादावतीव प्रवीणोऽभूत् । प्रथममय राजपूतस्कूलाध्यापकोऽभवत् । तदनन्तर श्रीरघुनाथमन्दिरस्य प्रबन्धकपदमलङ्कृत्य सदुपदेशादिभिर्भक्तानन्वग्रहीत् । पश्चात् लब्धवयस्कवृत्तिकः पुराणोपनिषत्प्रवचनद्वारा लोकानुग्रहे प्रवृत्तः ।

---

## कविवरः श्रीगङ्गारामः

जम्बूनगरात् प्रायः पञ्चदशक्रोशदूर शिवपुरोपनामक पुराणादौ प्रसिद्धं पुरमण्डलनामधेयं तीर्थं विद्यते । यत्र गङ्गेव सर्वप्राणिसन्तारिका 'उत्तरवाहिनी'नाम्नी

महानदी गुप्त वहति । तत्तीरेऽतिप्राचीन शिवमन्दिर वर्तत । तस्मिन् भगवत स्वयम्भुव स्वयमुद्भूत सिकतिलपाषाणमयमतिरमणीय लिङ्गमस्ति । प्रतिवर्षं सहस्रशो जना श्रद्धालवो गत्वा मृतकास्थीनि गङ्गायामिवास्यामुत्तरवाहिन्या क्षिपन्ति, तत्तीर पितृश्राद्धादिक विधाय षोडशोपचारविधिना शिवलिङ्ग स्नापयन्ति च । शिवलिङ्ग-स्नानाय शिवलिङ्गोपरि न्यस्त प्रभूततरमपि जलमधस्तात् क्व गच्छतीति नाद्यावधि कश्चिदवोधि ।

एव किल श्रूयते—भारतसम्राजाऽकवरेणमामन्या च काचित् चमत्कृतिमनुभूय तन्मन्दिर सुवर्णपत्रजटितमकारि । तादृशेऽस्मिन् परमपावने तीर्थे माध्यन्दिनशाखीयाना कातीयसूत्राणा सारस्वतब्राह्मणानामासीन्महान् वशो यस्मादजायन्त धर्मधुरन्धरा, परमशुचयो, महान्तो महान्तो विद्वास । तत्र ब्रह्मणो मुखाद् वेदा इव बालरामविदुष सकाशात् देवीदत्त, श्रीनिवास, व्रजवासी, राघुश्चेति चत्वार पुत्रा अजायन्त । तेषु कनिष्ठास्त्रयोऽनपत्या बभूवु । देवीदत्तस्य तु गङ्गाराम, रघुनन्दन, जगद्राम, हीरानन्द इति चत्वार पुत्रा अजायन्त । तेषु सर्वज्येष्ठो गङ्गारामो खवसुप्रकृतीन्दुमिते (१८८०) वैक्रमाब्दे वैशाखशुक्लपञ्चम्या द्रौपद्या जनन्या जनिं जग्राह । अथ जम्बूप्रान्तान्तर्गत'साम्बा-नगर' वास्तव्याना मिश्रपादाना शिष्यत्व शैशव एवाप्तवान् । क्रमेण सर्वशास्त्रेषु लब्धप्रस-रोऽय शक्तिर्व्युत्पत्तिरभ्यासश्चेतत्काव्यकारणत्रयसम्पन्नो भूत्वा महाकविरभवत् । श्रूयते-अय स्वगृह एव विना शुल्क छात्रानध्यापयति स्म, छात्रससदि, लोकसभाया, राज-परिषदि च लब्धप्रतिष्ठ पर सम्मानितश्चासीत् । शरनेत्रनन्देन्दुमिते (१९२५) वैक्रम-वत्सरेऽसौ वैदुष्यपूर्णां नासिकेतटीका सल्लिलेख, सा च मुद्रिता वर्तते । एक 'देविका'-नामधेय काव्यमपि रचितवान् । पर तदिदानी नोपलभ्यते । अथ सप्ततिवर्षवयसि पञ्चाशदधिकैकानविंशतिशततमे (१९५०) वैक्रमे वत्सरे शिवसन्निधौ प्राणान् मुमोच ।

नासिकेतटीकाग्रन्थस्यान्तिमपृष्ठेषु स्वयमय स्वीयवशपरम्परा, स्वीय कवित्व च विस्तरेण समुल्लिखितवान् । तत कतिपयपद्यानि समुदाह्रियन्ते—

बालरामसुता वेदा देवीदत्तमुखा किल ।
श्रीनिवासो व्रजेवासी राघुश्चापि कनिष्ठक ॥
सर्वे कनिष्ठा ह्यसुता देवीदत्तसुता कृता ।
गङ्गाराममुखा प्रोक्ता अनुजो रघुनन्दन ॥
जगद्रामस्तत्कनिष्ठो हीरानन्दस्ततोऽप्यनु ।
सर्वेऽपि कुशला शास्त्रे धर्मे वशक्रमागते ॥

गङ्गाराम कविर्जातो गुरुपत्पङ्कजाश्रयात् ।
नानाशास्त्रमते किञ्चिज्ज्ञानवांस्तत्प्रसादतः ॥

गाथाप्रवन्धधरणी जननी नयानाम्,
गृह्योपकारकरणी हरिणी कथानाम् ।
वस्मोत्तरीयपुरुपोत्तमरामजाता,
सा द्रौपदी विजयते कविगङ्गमाता ॥ इति ।

---

### श्रीगणेशपण्डितः

श्रीमहेशदैवज्ञस्य ज्येष्ठः सहजः श्रीगणेशशर्म्मा सर्वशास्त्रेष्वव्याहतप्रवेशोऽपि कर्मकाण्डकर्मणि विशेपरुचिरासीत् । महाराजश्रीरणवीरसिंहपारिपद्यपण्डितेष्वन्यतमोऽय स्ववैदुष्येण, सद्व्यवहारेण, कर्मकाण्डचातुर्येण च महाराजश्रीरणवीरसिंहस्य कृपाभाजन भूत्वा महान्त सम्मानं परां सम्पदञ्चाप्तवान् । अय व्रजलालनन्दलालाभिधौ रामलक्ष्मणा-विवाभिन्नहृदयौ, वासुदेववलरामाविवान्योन्यगुणस्पर्धिनौ द्वौ तनूजौ जनयामास । तयोः प्राप्तयौवनयो स्वयमय परसुखासहिष्णुना दुर्दैवेनापहृतो नेत्रवेदविहगेन्दुमिते (१९४२) वैक्रमाब्दे ज्येष्ठकृष्णैकादश्यां शनिवासरे सर्व परिहायानिच्छन्नपि दिव नीतो दुर्दैवेन । श्रूयतेऽय ग्रन्थसङ्ग्रहमनुवादञ्चाप्यकार्पीत् । के ग्रन्था अनेन सङ्गृहीता के चानूदिताः ? इति न ज्ञायते, न वा तेऽद्यावधि समुपलभ्यन्ते ।

---

### श्रीगोपालरामः

तान्त्रिकसिद्धनौनिहालस्यात्मजो गोपालरामोऽभवत् । तन्त्रशास्त्रे कर्मकाण्डे च स्वभावत पैतृकमम्पत्तिमानपि विशेपतया दर्शनशास्त्रेष्वस्य प्रवृत्तिरासीदतो लोकैर्दर्शन-शास्त्री इत्युच्यते स्मासौ । अय शून्यनेत्रवस्विन्दुमिते (१८२०) ख्रिष्टाब्दे स्महल-पुरग्रामे जनवरीमासस्य पञ्चतारिकाया गृहीतजन्मा स्वीयवैदुष्यगुणैर्महाराजाधिराज श्रीरणवीरसिंहमावर्जितवान् । महाराजप्रेरणया तात्कालिकान् सैनिकान् तदुचित संस्कृतमध्यापयच्च । अय पञ्चनवतिवर्पवयसि स्वीय स्थूल शरीर विहाय लोका-न्तरमगात् ।

---

### श्रीगोपालरामशर्म्मा

जम्बूराज्यान्तर्गत'वसुस्थली'( वसोली )वास्तव्योऽय श्रीगोपालरामशर्म्मा पण्डितो वेदान्तेषु विशेषरुचिरासीत् । असौ महाराजश्रीरणवीरसिंहसमये तत्पण्डितेष्वन्यतमोऽभवत् । तस्य वशपरम्परा महतानुसन्धानेनापि नोपलब्धा, परमय ब्रह्मसूत्रवृत्तिसारस्य चतुर्थाध्यायस्य चतुर्थपादान्ते स्वीय परिचय स्वय प्रत्तवान् । तान्यक्षराणि यथावत् सलिख्यन्ते—

लाहौरपुरवास्तव्य श्रीयतीशविचक्षण ।
गुरुर्यस्य निजस्थान 'वसोली'सञ्ज्ञिका पुरी ॥१॥
निवासो देविकातीरमुपकण्ठमुमापते ।
गुलाबसिंहराजन्यप्रभृतिप्रार्चिताङ्घ्रिणा ॥२॥
तेन गोपालरामेण काश्मीरीत्यभिधाजुषा ।
परोपकृतये रम्यो वृत्तिसारो मया कृत ॥३॥ इति ।

---

### श्रीनव्यचण्डीदास

जम्बूनगरात् प्राय षोडशक्रोशदूरस्थित शिवपुरोपनामक पुण्डरीकपुरनामकम् एक तीर्थं वर्तते, यत्र श्रीपार्वतीस्वेदसम्भवोत्तरवाहिनीगङ्गा स्वय गुप्त वहति । पार्वतीप्रार्थनया देविकातीरे स्वयम्भुव स्वयमुद्भूत सिकतिल लिङ्ग वर्तते । सुवर्णपत्रजटित तन्मन्दिरश्चैक तत्रातिसुन्दर विद्यते । पुण्ये देविकोत्तरवाहिन्यनुगृहीते शिवप्रसादप्रसादिते तस्मिन् पुरमण्डलपुरेऽभिजातसवालवशावतसात् श्रीदुर्गादत्तपण्डितात् तद्धर्मपत्न्या कविशिरोमणिरय शून्यवेदनन्दभूमिते(१९४०)वैक्रमाब्दे समजनि । अय प्रायेण सर्वशास्त्राप्रतिरुद्धगतिरपि विशेषतया काव्यकलाकुशल समभवत् । अस्य त्रयोदशसर्गात्मक 'श्रीरघुनाथगुणोदय' नाम महाकाव्य सर्वविधमहाकाव्यलक्षणान्वितम् । प्रसादगुणगुम्फित वीररस-शृङ्गाररस-प्रधानमपीद काव्य नैतिकतामेव लक्ष्यीकृत्य प्रावर्तत । परमोपयोगित्वादवश्य मुद्रणार्हमिदम् । अस्य विशेषसमालोचनान्यत्र विस्तरेण कृतेति नात्र समालोच्यते । कानिचित्तु पद्यानि उदाह्रियन्ते—

विद्यया वर्द्धते बुद्धिर्बुद्धया विद्या प्रसर्पति ।
भवेद् धर्मार्थससिद्धिस्तया मवर्द्धमानयो ॥

धर्मात् सुकर्मभाव स्यादर्थ सत्कर्मणो भवेत् ।
अर्थाद् राज्य सुख राज्यात् राज्यवृद्धिस्तु विद्यया ।।
सुवृत्त सरल सम्यग् गुणालङ्कारतिमत् ।
निर्दोषं सरस यत् स्यात्तत्काव्य बालबोधकृत् ।।
यद्यप्यस्तीह सा वृद्धनयी वापि लघुनयी ।
तयोरपेक्षितत्वान्मे, मध्यनय्यन्तरेऽस्त्विदम् ।।
तत्पदार्थाविनोक्तिर्मे कथ नापेक्षिता तयो ।
मध्ये सखीव सरसा सती सापेक्षयोर्द्वयो ।।
स रावणो लोकविरावणस्ततो निलीय शैलूष इवान्यरूपधृक् ।
जहार जेताऽपि जवेन जानकी निजाश्रमाद् राहुरिवैन्दवी कलाम् ।।

इत्यादीनि पद्यानि बालबोधाय सौकर्यमुत्पादयन्ति अस्य काव्यस्य त्रयोदशसर्गस्यान्तिमो भागो गद्यमयो वर्तते । तद्विषये च स्वय कविनोक्तम्—'अथ बालाना चूर्णकोत्कलिकाज्ञानार्थगद्यम्' इति । गद्यानि तानि चातिलम्बानि वर्तन्ते इति नात्र सलिख्य दर्श्यन्ते । अय नव्यचण्डीदासो महाकवि महाराजश्रीप्रतापसिंहाय धर्मशास्त्रविषयिकामेकामाह्निकपद्धतिमपि महाराजश्रीरणवीरसिंहनिर्देशेन समलेखीत्, तदुक्त तेनैव चण्डीदासेन—"अथ प्रात स्मरणीयादिपद्यपरिष्कृता, क्वचित् स्मृतिपुराणपूर्वकविधाना, सरससरलपेशलमनोहरपदा, जम्बूकाश्मीराद्यनेकदेशाधिपतिश्रीमन्महाराजाधिराजश्रीरणवीरसिंहवर्मप्रभुवर्योदितविधिविशेषभासुरा, सक्षिप्ताह्निकपद्धति श्रीमत्प्रतापसिंहयुवराजाद्यनुष्ठानाय मया नव्यचण्डीदासेन निबध्यते" इति ।

---

### श्रीचूडामणिपण्डित

श्रीपतिपण्डितात्मज , परमतान्त्रिक , कर्मकाण्डिप्रकाण्डम्, श्रीचूडामणि पण्डितो राजपण्डितोऽभवत् । परन्तु राज्ञो व्रजराजस्यावगुणैर्मथ्यमानमानसो राजकार्ये ताटस्थ्यमेवावालम्बत । सर्वं राज्य शत्रुभिराक्रान्तम् । घटेन घटो भग्न । स्वयञ्चाय व्रजदेव शत्रुभिर्गृहीतो हतश्च । प्रजाना कर्णकण्डूतिर्निवृत्ता । चूडामणिपण्डितोऽपि दामोदरनामधेयमेक सुत जनयित्वा तपोभि क्षीणकायो ब्रह्मभूय गत ।

---

### जनार्दनपण्डित

पण्डितप्रवरश्रीदामोदरस्य तनुजन्मा जनार्दनपण्डित कर्मकाण्डस्य प्रकाण्डपण्डितोऽपि तन्त्रशास्त्रे विशेषरुचिरासीत् । अयमेव सर्वं कर्मकाण्डकार्यं राजाऽवरोधनेऽ-

चीकरत्। तन्त्रशास्त्रविषयिण्योऽस्य प्रभूततरा आख्यायिका आसन्। पर विस्तरभयादत्र नोल्लिख्यन्ते । अस्य जनार्दनपण्डितस्यापि दिवाकरपण्डित, गोस्वामिपण्डितश्चेति द्वौ पुत्रौ बभूवतु, तयोर्दिवाकरपण्डित सर्वशास्त्रनिष्णातोऽपि ज्योतिःशास्त्रे पर प्रवीण सन् फलिते हस्ते सर्षप वपति स्म । एव किलाख्यायते—महाराजश्रीगुलाबसिंहस्य जन्मसमये जन्मलग्नकुण्डली निर्माय तस्य भाव्यभ्युदयविषयक सर्वं कार्यजातमभिधायासौ तस्य क्रमोन्नतिकालस्यैकैक दिन पृथक् पृथङ् निर्दिष्टवान्। जन्मलग्नचक्रे तत्तत्स्थानस्थितग्रहफल श्रुत्वा गुलाबसिंहस्य पिता किशोरसिंह सपादरूप्यक दक्षिणारूपेण दिवाकरदैवज्ञाय प्रादात्। दिवाकरो गृहीत्वा समवादीद्यत्—"इदानीमिदमेव पर्याप्तम्। परन्तु अस्य शिशोर्जन्मकुण्डलीस्थग्रहाणा फलश्रवणस्य सपादलक्षपरिमिताऽपि दक्षिणा पर्याप्ता न भवेत्। यद्ययमेव कदाचित् शासक स्यात्, तदानी सा लभ्येत, अयमस्य देशस्य सार्वभौमो भविष्यति । स्वभुजाभ्यामेवानेकान् देशान् विजित्यैकच्छत्र राज्य करिष्यति, तदाऽस्मादेव ग्रहीष्यन्ति पुष्कला दक्षिणामस्माक भाविनो वश्या" इत्येवमभिधाय प्रीतमना निर्जगाम किशोरसिंहगृहाद् दिवाकरपण्डित ।

---

## परमनीतिज्ञो महापण्डितो जल्लामल्ल

जम्बूनगरात्सप्तक्रोशान्तराले पश्चिमाया दिशि 'रायपुर(रैंपुर)'नाम्नि ग्राम कश्चित्पुरुषोत्तमनामधेय सदाचारपरायणो निर्धनोऽपि स्वाभिमानवान् ब्राह्मण कर्मकाण्डादिभि स्वजीविका कुर्वाणो यजमानेभ्यो राजपुत्रेभ्यो लब्धादर स्वबन्धुभि सह ससुखमवात्सीत्। प्रौढावस्थाया वर्तमानोऽपि पुत्राभावेन खिन्न कृतानेकव्रतनियम, दैवयोगाद् अश्विनन्दमुनीन्दुमिते (१७९२) ख्रिष्टाब्दे वैशाखमासे शुक्लत्रयोदश्या प्रात पञ्चवादनवेलाया स्वधर्मपत्न्या यमलौ सुतौ जनयामास । तयोर्ज्येष्ठस्य 'जल्ला' इति, कनिष्ठस्य च 'रामकृष्ण' इति नामधेयमकार्षीत्। तत्र ज्येष्ठो जल्लापण्डितो बाल्य एव महापुरुषलक्षणैरुपेत स्वाकारव्यवहारादिभि स्वीय भाविन शुभोदर्कमाविष्कुर्वाणस्तर्कतरला मेधावी चासीत्। अथ कस्मिंश्चिद्विद्यालये प्रविश्याधीतवानिति न श्रूयते। प्रतिग्राम प्रतिनगर च यत्र कुत्रापि कश्चिद् विद्वान् श्रूयते स्म, तत्रैव गत्वा तत्सविधेऽध्युष्य विद्यामग्रहीत्। एवमय व्याकरण-दर्शनपुराणादिषु निष्णातोऽपि आन्विक्षिकी-त्रयीवार्ता दण्डनीतिषु पर प्रावीण्यमवापत्। युगानुरूपमसिचालनम्, अश्वारोहणम्, कुन्तयुद्धञ्चापि सम्यक् शिक्षितवान्। एव विद्यावीर, युद्धवीर चैन परीक्ष्य महाराज

श्रीगुलाबसिंहो महामात्यस्य स्वभ्रातु श्रीध्यानसिंहस्य सविधे लवपुर प्राहिणोत्। महाराजश्रीरणजीतसिंहो दृष्ट्वैवैत ध्यानसिंहस्य पुत्र श्रीहीरासिंहमध्यापयितु न्ययुङ्क्त। स्वय च तन्मुखात्पौराणिकी कथा श्रोतु प्रारभत। अथ श्रीजल्लामल्ल-पण्डितो गणितशास्त्रेऽप्यद्वितीयोऽभवत्। यत्प्रभावेणेम श्रीरणजीतसिंह प्रधानगणनाध्यक्ष(अकौण्टैण्ट जनरल)पदमध्यतिष्ठिपत्। अयं जल्लापण्डितो न्यायनयनिष्णात, लोकोत्तरप्रतिभावान्, परमोदार, दृढप्रतिज्ञ, सर्वशास्त्रार्थमर्मज्ञ, मेधावी, न्यायशील, क्षमाशील, लोकहितैषी, निरपेक्षशासकश्चाभूत्। एकदैव शतशोऽधिकारिणा वचासि तत्प्रश्नाश्च समाकर्ण्य तत्कालमेव यथोचित व्यवहरन्त, समादधान, समुत्तरन्त चैन लोका 'शताऽवधानोऽयम्' इत्याहु। पञ्चनदराज्यमहामन्त्रिण श्रीध्यानसिंहस्य मृत्योरनन्तर तत्पुत्रो हीरासिंह, या हि महाराजश्रीरणजीतसिंहस्य पुत्रेभ्योऽप्यधिक प्रिय समभूत्, स एव महामन्त्रिपदमध्यतिष्ठत्। महामन्त्री हीरासिंह स्वगुरो श्रीजल्लामल्लपण्डितेन्द्रस्य साहाय्येन सर्व राज्यकार्यं सञ्चालयति स्म। अथ जल्लापण्डित सर्वकार्यकुशलत्वात्, राजनीतिज्ञत्वात्, शस्त्रास्त्रविद्याविशारदत्वात्, न्यायशीलत्वाच्च, सर्वत्र पञ्चनदराष्ट्रे महती ख्यातिमाप्तवान्। अनौचितीमाचरतोऽधिकारिणो, वार्षिक नियतमुपायन करमाददतोऽधीनसामन्तांश्च बहुशोऽदण्डयत्, अभर्त्सयच्च, येन सर्वेऽप्यन्यायशीला अनौचित्यकारिणश्चास्माद्बिभ्यतोऽस्य विरुद्ध महत् षड्यन्त्रमकार्षु। गृहे गृहे, चत्वरे चत्वरे, प्राङ्गण प्राङ्गण, बाल-वृद्धेषु, युवक-युवतिषु च सर्वत्र तद्विरुद्धानेव प्रलापान् प्राचीचरस्ते। सभाधिवेशनेषु च तद्विरुद्धानि मन्तव्यानि समुदतीतरन्। किं बहुना, लोकेष्वियं किंवदन्ती प्राचलत्—

ऊर्ध्वमस्तीश्वरश्चासौ जल्लामल्लो ह्यध स्थित।
एतदेव जगत्सर्वं शेष किञ्चिन्न विद्यते॥ इति।
'ऊपर अल्ला, नीचे जल्ला, बाकी सब खैर सल्ला'॥

इति तस्याभाणकस्य भाषिक रूपम्।

एतादृशे विरोधे सत्यपि महाराजश्रीरणजीतसिंहे दिवगते सति यत्र भृत्या वर्षं यावद् वेतन नालभन्त, अवकाशमिषेण च भृतिं त्यक्त्वा निर्गता पुनर्नागच्छन्ति स्म, व्यापारिणो बुभुक्षितभृत्यैरपहृतपण्याश्चोरितधना दुर्व्यवहारै पीडिताश्च पलाय्य देशान्तर जिगमिषन्ति स्म, कृषकाणामन्न खलेभ्य एवापह्रियते स्म, तत्र जल्लापण्डितप्रबन्धेन सैनिकास्तदितरभृत्याश्च प्रतिसप्ताह, प्रतिमास च वेतनमलभन्त, व्यापारिणश्च निर्भय व्यापारान् कुर्वाणा यथोचिता व्यापारेषु धनवृद्धि प्राप्नुवन्।

कृषकाश्च यथासमय यथोचितकरदानेन अधिकारिणामत्याचाराभावेन च पर मुमुदिरे । एव सर्वोत्तमप्रबन्धक परमीतिनिपुणोऽपि जल्लापण्डित समयस्य परिस्थितिमबुद्ध्वैव स्वेच्छया प्रवर्तमानो 'ममादेश विना महाराज्ञी (दिवगतस्य महाराजश्रीरणजीतसिंहस्य धर्मपत्नी 'जिन्दा') अपि राज्यकोशात्पणमपि ग्रहीतु न शक्नोति' इति स्वाज्ञा ददौ । तामाज्ञामुपश्रुत्य क्रुद्धा महाराज्ञी उपजाप्य सैनिकान्, सेनापतीन्, इतराधिकारिणश्च जल्लापण्डितस्य तच्छिष्यस्य महामात्यपदमधिरूढस्य हीरासिंहस्य च विरुद्धानकार्षीत्, यथा तैराक्रम्य बाणवेदवसुवसुमतीमिते (१८४५) खिष्टाब्दे दिसम्बरमासस्यैकविंशतितारिकाया हतौ तौ गुरुशिष्यौ जल्लापण्डित-हीरासिंहौ । तयोर्जल्लापण्डितस्तीक्ष्णखड्गेन खण्डश कृत । नेद केवल तयोरेव दौर्भाग्यम्, अपितु सर्वस्यैव राष्ट्रस्य, यन्मूलतश्छिन्न योग्यशासकाभावात् ।

---

## तपस्विन श्रीदयारामशास्त्रिण

परमभागवता श्रीदयारामशास्त्रिणो जम्बूनगरस्य प्रतोल्या 'पक्की ढक्की'-नामधेयाया वैदिकशिरोमणे श्रीरामलालशर्मण पुण्य भवन वह्निग्रहेन्दुमिते (१६९३) वैक्रमाब्दे जन्मग्रहणनालमकार्षु । इमे बाला एव प्रकृत्या आकृत्या चेष्टाभिश्च परमसुन्दरा, दीर्घबाहव, पीनासा, सुघटितसन्धिबन्धा, नीलोत्पलनयना, पूर्णेन्दुवदना, स्मितपूर्वाभिभाषिणो, दर्शकमनोमोहका, सर्वजीवहितैषिण, कमलदलकोमलहृदया, दयामया, पुण्यमयाश्चासन् । श्रीरामलालशर्मण स्वपितु सकाशादधिगतप्राथमिकाक्षरशिक्षादीक्षा, प्रवर्धमानविद्याधिगमाभिनिवेशा, पितृपादादेशेन श्रीरणवीरसंस्कृतपाठशालाया ते प्राविशन् । तत्र श्रद्धेयचरणाना श्रीरघुनाथशास्त्रिणा, श्रीदीनानाथशास्त्रिणा च सकाशात् प्राय समस्तशास्त्रजातमध्यगच्छन् । क्रमेण च पञ्चनदविश्वविद्यालयीया प्राज्ञ-विशारद-शास्त्रिपरीक्षा समुदतरन् । प्राक्तनसंस्कारपरम्परावशात् परमेश्वरकृपया च भगवद्भक्तिप्रवणमानसा प्रारम्भादेव लब्धभगवद्भक्तसाधुसङ्गा शिथिलितलौकिकव्यापारप्रसङ्गा परमविरक्ता समभवन् । अनिच्छन्तोऽपि ज्ञातीयाभिजनप्रेरणया क्व क्वमपि राजकीयस्थाने संस्कृताध्यापकपदमध्यतिष्ठन् । कदाचित् परमवैराग्यमापन्ना अध्यापनकार्यं परित्यज्य योगसरणिमनुशासितार कञ्चित् कर्मयोगिनमन्वेष्टुमारब्धवन्त । अकस्मादेव वेदमन्दिरमागताना सिद्धयोगिना श्रीसियाराममहात्मना शरणमयासिषु । तत्कृपया प्राणायाम धारणा ध्यान-समाधिप्रकार स्वल्पेनैव कालेनाधिगत्य तदभ्यासितुम् ऊधमपुरनगरोपशल्यमेकान्तमगच्छन् । तत्र चत्वारि-

द्विवर्षपर्यन्तमेकं चान्द्रायणव्रतमकार्षुस्तेन क्षीणकाया व्रतसमाप्तिदिनेषु किमप्यनिर्वचनीयं ज्योतिः प्रतिभासं साक्षात्कृतवन्तः। कतिपयवर्षाणि योगमभ्यस्यन्तोऽपि जिज्ञासुशिष्यान् लघुकौमुदी, सिद्धान्तकौमुदी, रघुवंशादिकाव्यानि चाध्यापिपन्। किञ्चित्कालानन्तरं जम्बूनगरवास्तव्यानां लोकानामनुरोधेन ऊधमपुरतः पुनर्जम्बूनगरमयासिषुः। तत्रागत्य पुरानीमण्डीस्थार्यसमाजकन्यापाठशालायां संस्कृताध्यापकपदमलमकार्षुः। अस्यां पाठशालायां श्रीदयारामशास्त्रिणां सकाशात् प्राप्तशिक्षाः प्रभूततराः कन्यकाः क्रमेण पञ्चनदविश्वविद्यालयीयाः प्राज्ञ-विशारद-शास्त्रिपरीक्षाः समुदतरन्। तदनन्तरमिमे विद्यापीठनाम्नीं स्वतन्त्रां संस्थां समुद्घाट्य तस्यां सुयोग्याध्यापकैः सह हिन्दीं संस्कृतं चाध्यापिपन्। तेषां सकाशात् प्राप्तशिक्षा बह्व्यः कन्यकाः भूषण-प्रभाकर-परीक्षे, संस्कृते प्राज्ञ-विशारद शास्त्रिपरीक्षाश्च समुत्तीर्णास्तत्र तत्र राजकीय-विद्यालयेषु स्वातन्त्र्येण च हिन्दीभाषां संस्कृतञ्चाध्यापयन्त्यो दरीदृश्यन्ते। प्रायो दशवर्षाणीमे विद्यापीठेऽध्यापिपन्। ततो विद्यापीठकार्यभारं स्वशिष्येभ्यः समर्प्य तपस्तप्तुं पुनरूधमपुरनगरोपशल्यमेकान्तप्रदेशमयासिषुः। तत्र प्राक्तनं स्वीयं तृणकुटीर-मध्युष्य भूयश्चान्द्रायणव्रतमाचरितुमारभन्त। स्वधर्मपत्नीसाहाय्येन पूर्णव्रतविधाना इमे तत्र कञ्चित् कालं ब्राह्मणबटून्, ब्राह्मणतरकुमारान्, हरिजनशिशूनपि च संस्कृतमध्यापिपन्। कलिकालप्रभावेण विगताचारप्रसारम्, परिलुप्तविद्यासञ्चारम्, विस्मृतपरमेश्वरम्, ऊधमपुरप्रदेशं पुनः प्रसृतसदाचारं, सलब्धविद्याप्रचारं, संस्मर्यमाण-परमेशञ्च व्यदधुः। काश्मीरिकपण्डिता गणकाध्यक्षा (एकौटेण्ट जनरला) एम्०ए० उपाधिविभूषिता श्रीपरमानन्दाख्या दिवं गतायाः स्नेहमय्याः स्वतनूजायाः श्रीरूपा-देव्याः स्मारकं 'रूपाविद्यापीठ'नामकमेकं संस्कृतविद्यालयं काश्मीरेष्ववास्थापयन्। ते वर्णाकर्णिकया दयारामशास्त्रिणां सदाचारपरायणतां परमतपस्वितां वैदुष्यञ्चाकर्ण्य कथ-चिदनुनीयेमान् तस्मिन् विद्यालये प्राध्यापकपदमध्यतिष्ठिपन्। विद्यालयसम्बन्धि सर्वं कार्यजातमेभ्यः समार्पिपश्च। कञ्चित् कालं तत् कार्यं सम्पाद्योदरव्याधिना पीडिताः समभूवन् श्रीदयारामशास्त्रिणः। ततश्च काश्मीरान् विहाय स्वीयं पर्णकुटीरमेवाधि-श्रियन्। तत्र पुनरपि यथासम्भवमुपदेशपरिपूर्णाध्यापनकलया जिज्ञासून् स्वभक्तान् निर्पाठपून् शिष्यांश्चान्वग्रहीषत। एषां सकाशात् प्राप्तशिक्षा महिला विदुषीतमाः समपद्यन्त। तासु श्रेष्ठा सुश्री शकुन्तलाशास्त्रिणी, बी०ए०, प्रभाकरी साम्प्रतं विद्या-पीठविद्यालयप्रधानाध्यापिकापदमधितिष्ठति। सुश्री सुशीला तुली विशारदा, प्रभाकरी श्रीनगरे सदि लब्धप्रतिष्ठा प्रोपाध्यापकपदमलङ्करोति। मदनवर्म्मा, एम्०ए० सर्व-कारानेजे प्रोफेसरपदं मण्डयति। श्रीमकुन्दनानम्मा, शास्त्रिणी, एम्०ए० नवाब-

दल(श्रीनगर)कालेजे प्रोफेसरपदमधिष्ठाय संस्कृतमध्यापयति। इमा स्तेषा मुख्या शिष्या सन्ति। वह्नीन्दुशून्यादिवमिते (२०१३) वैक्रमवत्सरे वियोगकातरान् बन्धून् विहाय स्वर्गलोकमध्यशिश्रियन् दयारामशास्त्रिण । अद्यत्वे चैतादृशानामाचारसम्पन्नाना, तपस्विना, सर्वजनहितैषिणा, सुयोग्यविदुषा विद्वत्समाजे प्रायोऽभाव एव दृश्यते।

---

## दामोदरपण्डित

महाप्रतिभाशाली पण्डितोऽय श्रीसाहिबरामवर्याणा सूनुरासीत्, यो रणादित्य-वाटिकानिवासिना स्वमातुलेन दत्तकत्वेन पुत्रीकृत आसीत्। वास्तविकजनकेन सुस-स्कृतोऽय बाल्य एव महाव्युत्पन्न सन्नखिलानि शास्त्राण्यधिजगे। स्वगुणगरिम्णा पाण्डित्येन च श्रीरणवीरसिंहप्रतिष्ठापिताया श्रीनगरस्थाया संस्कृतपाठशालाया प्रधानाध्यापकपदवीञ्च भूषयामास। महाभागेनानेन संस्कृतसाहित्यस्य विकासे महान् सहयोगोऽदायि। एषा लेखनपरिपाटी प्रौढा समासबहुला गौडीरीतिमाश्रिता श्लेषबहुला चासीत्। अत एवामी महानुभावा 'अभिनवकाश्मीरबाण' इति पदव्या भूषिता आसन्, क्वाचित्कतया वैदर्भीरीतिमप्याश्रयन्ते स्म। स्टाइनमहोदयेन राजतरङ्गिणीभूमि-काया साम्रडमय प्रशसितोऽस्ति। अस्यापि चत्वार सुता आसन्, येभ्यो बलभद्रेण दशाधिकसप्तदशशतके ज्योतिश्शास्त्रसम्बन्धि होरारत्न तथा हायनरत्न चेत्येनद्ग्रन्थ-द्वयमलेखि। श्रीदामोदरमहोदयस्य प्रौढनेय, तीर्थसंग्रहश्चेत्येनयोरतिरिक्ता नान्या कृतिरुपलभ्यते।

---

## पण्डितप्रवरा श्रीमद्दीनानाथशास्त्रिण

एषा महानुभावाना जम्बूनगर जन्मस्थानमासीत्। जम्बूनगरे 'व्रजवासी' इतिनामधेय कश्चित् सत्कुलप्रसूतो ब्राह्मणश्चन्द्रकौरलामिकया भार्यया सह समुप-सन्नासीत्। तया श्रीदीनानाथशास्त्रिण शराश्विनन्देन्दुमिते (१९२५) वत्सरे पौष-कृष्णनवम्या जन्म गृहीतवन्त। बाल्य एव शुभलक्षणैर्व्यवहारैश्च स्वीय भावि पाण्डित्य महापुरुषत्वञ्चाभिव्यञ्जितवन्त एत। प्रथम पितृपादाना सविधे लघुकौमुदीमरकोषादीनि लघूनि पुस्तकानि समधीतवन्त। तदनन्तर विशेषपाण्डित्यलाभे श्रीरणवीरसंस्कृत-पाठशालाया प्रविश्य श्रीलक्ष्मणशास्त्रिणा श्रीगोविन्दाचार्याणाञ्च सविधे समधीत्य क्रमेण प्राज्ञ-विशारद-शास्त्रि-परीक्षा समुत्तरन्। इमे साहित्यशास्त्रे विशेषरुचयो

भवन्। एषा साहित्यविषयकं वैदुष्यं परिचित्य महाराजश्रीप्रतापसिंहस्य मध्यमो भ्राता राजा श्रीरामसिंहोऽमूं स्वसविधे राजपण्डितपदे न्ययुङ्क्त। कतिपयवर्षाणि राजपण्डितकार्यं सम्पादयत्स्वेषु राजा श्रीरामसिंहोऽकस्मादेव सर्वं राज्यं शोकाब्धौ निमज्ज्य दिवमगात्। तदनन्तरं महाराजः श्रीप्रतापसिंहः 'प्रिंस आफ वेल्स कालेजे' संस्कृतमध्यापयितुमिमान् संस्कृताध्यापकपदे न्ययुङ्क्त। वर्षमेकं तत्राध्याप्य पुनरिमे श्रीरणवीरसंस्कृतपाठशालायां प्रधानाध्यापकपदमध्यतिष्ठन्। तत्र स्वसहचरान् पण्डितान् सहानुभूत्या विद्यार्थिनश्च स्वाध्यापनकलया साहाय्येन च परं समतोषयन्। इमेऽतीव सहृदयाः, सभ्याः, संस्कृतभाषिणः, शास्त्रमर्मज्ञाः, विशेषतया काव्यनाटकमर्मज्ञाः, कायेन, वचसा, वेशेन, परिचयेन, व्यवहारेण च जनमनोरञ्जकाः परमभागवताश्चासन्। इमे रसमुनिग्रहेन्दुमिते (१९७६) वैक्रमाब्दे रुदतो बन्धून् विहाय लोकान्तरमगुः। एषां कनीयान् भ्राता श्रीउदयचन्द्रः संस्कृते एम्०ए० उपाधिं पञ्चनदविश्वविद्यालयतोऽधिजग्मिवान्। अस्य सौशील्येन, सौजन्येन, सौमनस्येन, सौष्ठवेन, वैदुष्येण च परं सन्तुष्टो महाराजोऽमुं मण्डलेश्वर(गवर्नर)पदे न्ययुङ्क्त। अयं पञ्चपञ्चाशद्वर्षवयस्येव सर्वं विरहय्य दिवं गतः। श्रीदीनानाथशास्त्रिणा तनूजः श्रीचन्द्रनाथः संस्कृते एम्०ए० इत्युपाधिमधिगत्य हाईस्कूले मुख्याध्यापक(हैडमास्टर)पदमलमकार्षीत्। इदानीं विमुक्तभृतिकोऽपि संस्कृतप्रसारप्रचारार्थं यायत्यते।



## महामहोपाध्याय श्रीदुर्गाप्रसाद

जम्बूनगरवास्तव्योऽखिलशास्त्ररहस्यज्ञो महाराजयोः श्रीगुलाबसिंहरणवीरसिंहयोः सभारत्नं व्रजलालनामधेयः कश्चित् कुलीनो ब्राह्मण आसीत्। तस्माद् वह्निशून्यनन्देन्दुमिते (१९०३) वैक्रमाब्दे कार्तिकशुक्लप्रतिपदि सोमवासरे पुत्ररत्नमजायत। यस्यैकादशेऽह्नि पिता 'दुर्गाप्रसाद' इति नामधेयं चकार। बाल्येऽसौ प्रारम्भिकशिक्षां पितृपादादग्रहीत्। कृतोपनयनसंस्कारश्च महाराजेन प्रतापसिंहेन सह तस्य गुरोः श्रीसोमनाथस्य सविधे व्याकरणन्यायादिशास्त्राण्यध्यगीष्ट। वाराणसीतः समाहूतात् श्रीकृष्णदेवज्योतिर्विदः सकाशाज्ज्योतिःशास्त्रं गणितं च समध्यैत। अन्येभ्योऽपि विद्वद्भ्यो व्याकरणन्यायकाव्यादीनि शास्त्राणि समधीत्यासौ प्रथमे वयस्येव प्रायः सर्वशास्त्रप्रतिपत्तिमान् समभवत्। अभिनवगुप्तपादाचार्यस्य प्रत्यभिज्ञादर्शनम्, शैवदर्शनञ्च पृथगधीतवान्। महाराजस्य श्रीप्रतापसिंहस्य जननी महाराज्ञी अस्मिन् पुत्रवत्

स्निह्यति स्म । अथ तस्मै पुराणानां कथा स्तोत्राणाञ्च रहस्यमाशुश्रवत् । दैवयोगात् पितरि उपरते स विरक्तोऽभवत् । 'विपद् विपदमनुधावति' इत्याभाणकानुसारमस्य प्रेयान् कनीयान् भ्राताऽपि लोकान्तरमगात् । ततो मातुः प्रेरणया पूर्वजानां निवासभूमिं 'हमजापुर'पत्तनं गच्छन् मार्गे जालन्धरनगरे सिद्धपीठे कूर्माचलपण्डितोपदेशेन महता तपसा कालीं समाराध्य स्वानुकूलां सिद्धिं प्राप । एवमपि कर्णोपकर्णिकया श्रूयते यत्-पितृमरणानन्तरमयं बहुत्र काश्मीरेषु बभ्राम । तत्र कल्हण-बिल्हण-क्षेमराज-मम्मट-प्रभृतीनां साहित्यकाराणां साहित्यं सूक्ष्मेक्षिकया पर्यालोच्य महतीं साहित्य-सर्जनयोग्यतामवाप । स्वपूर्वजानां निवासभूमौ 'हमजापुर'पत्तने कञ्चित् कालमध्युष्य 'संस्कृतसाहित्यस्य काचित् सेवाऽवश्यं विधेया मया' इति चासौ मनसि कृतवान् । अथ निर्णयसागरमुद्रणालयाध्यक्षाणां सविधे समुपस्थाय काव्यमालायाः सम्पादनमकार्षीत्, यद् हि संस्कृतसाहित्यस्य महद्गौरवावहम् । संस्कृतसाहित्यस्य तादृशपुस्तकसंघसम्पादनमन्योऽपि कश्चिदकार्षीदिति नानुभवः । सुभाषितावली, कथासरित्सागर, कामसूत्राणि चाप्ययमेव सम्पादितवान् । 'शारदातिलक'स्य टीकामप्ययमेवाकार्षीत् । अस्यैतादृशं वैदुष्यं विलोक्य तात्कालिकेन भारतसम्राजाऽस्मै 'महामहोपाध्याय'पदवी वितीर्णा, परं दौर्भाग्येन तन्मृत्योरनन्तरं सा प्रकाशिताऽभूत् । (वस्तुतस्त्वयं राजस्थानीय इति तत्प्रसङ्गे वक्ष्यते) ।

---

## वैद्यशिरोमणिर्नत्थूराम

श्रीरामकृष्णशर्मा चतुर्नवत्युत्तराष्टशताधिकैकसहस्रतमे (१८९४) वैक्रमाब्दे 'नत्थूराम'नामधेयं सुतं जनयामास । स च नत्थूरामः स्वल्पेनैवानेहसा पितृप्रेरणया जन्मान्तरसंस्कारैरंदचेतस्ततः आयुर्वेदविदां सविधे गत्वा प्रायस्त्रिस्वन्धात्मकं समस्तमायुर्वेदशास्त्रमधीत्य पितृतोऽप्यधिकगुणवान् भूत्वा गृहीयपाठशालायामध्यापयितुं प्रारभत । प्रान्तीयाः सर्वे वैद्यास्तदानीतनाः प्रायोऽस्य शिष्या अभवन् । अतस्तत्रत्यैः सर्वैः सम्भूयास्मै 'वैद्यशिरोमणि' इत्युपाधिः प्रादायि । धन्या एतादृशा महानुभावा ये कृच्छ्रेणाप्तविद्या अपि निरमूल्यं लोकानुपचिकीर्षन्ति । अयं वैद्यशिरोमणिश्चतुःपञ्चाशदधिकैकोनविंशतिशततमे (१९५४) वैक्रमाब्दे यशःशेषतामयासीत् ।

---

## श्रीनन्दलालपण्डित

श्रीगणेशपण्डितस्य कनीयान् तनयो नन्दनभोग्रहेन्दुमिते (१९०९) वैक्रमाब्दे भाद्रपदे २० तारिकाया गुरुवासरे श्रीमनभरूदेव्या जनुरग्रहीत् । अयमक्षरारम्भादारभ्य क्रमेण व्याकरणादिशास्त्रकलापमधीत्य ज्योतिश्शास्त्रे कर्मकाण्डकर्मणि च विशिष्टा प्रौढि समधिगतवान् । ज्योतिश्शास्त्रनैपुण्येन, कर्मकाण्डकौशलेन, परिचयपाटवेन, व्यवहार-चातुर्येण च महाराजश्रीप्रतापसिंहस्य सदसि राजपण्डितपदमध्यतिष्ठदसौ । प्रतिवर्षं राजकीयपञ्चाङ्ग निर्माय च स्वसम्पादितपञ्चाङ्गविधया सर्वं राजान्त पुरीय कार्यजात कर्मकाण्डादिक समपादयत् । स्ववैदुष्येण सद्व्यवहारादिभिश्चाय राजपरिषदि प्रजाजनेषु च महती सम्मानना समध्यगच्छत् । किञ्चाय लवकुशाविव परस्परानुरागिणौ, वश-परम्परागतसन्मर्यादापरिपालकौ, सदाचारसद्विचारपरायणौ, मदनमोहन बाङ्केविहारि-नामधेयौ सुतौ जनयित्वा तौ चोपनीय स्वस्वरुच्यनुसार प्राच्या प्रतीच्या च विद्या-मध्यापितौ । कृतदारपरिग्रहयो स्वस्वकर्म कुर्वाणयो पितृभक्तयोस्तयो सुखानुभव-समये कालगतेरवश्य भावितयाऽसौ नन्दशास्त्रग्रहेन्दुमिते (१९६१) वैक्रमाब्दे चैत्र-कृष्णत्रयोदश्या सर्वं परित्यज्य लोकान्तरमगात् ।

---

## पण्डितप्रवरा श्रीनिक्कारामशास्त्रिण

इमे शरवह्निवस्विन्दुमिते (१८३५) खिष्टाब्दे आश्विनकृष्णपञ्चम्या प्रात सप्तवादनवेलाया पण्डितप्रवरश्रीशामोदासशर्म्मणो धर्मपत्न्या जनिमग्रहीषु । पितृपादै कृतोपनयनादिक्रियाकलापाश्च तेषा सविधेऽक्षरारम्भ वेदारम्भञ्च विधाय श्रीरघुनाथ-संस्कृतमहाविद्यालये शास्त्राणि समध्येतु प्राविशन् । तत्र पण्डितप्रकाण्डेभ्य श्रीगोकुल-चन्द्रशास्त्रिभ्यो भाष्यान्त व्याकरणम्, श्रीगोविन्दाचार्येभ्य सिद्धान्तलेशम्, चित्सुखीम्, वेदान्तदर्शनम्, अद्वैतसिद्धिञ्च, लक्ष्मणशास्त्रिभ्य नैषधीयचरितम्, शिशुपालवधम्, किरातार्जुनीयम्, बृहज्जातकम्, ताजिकम्, निरुक्त, पूर्वमीमासासूत्राणि च समधीत्य पर वैदुष्यमाप्नुवन्, पञ्चाम्बुविश्वविद्यालयीयशास्त्रिपरीक्षा प्रथमश्रेण्या समुदतरश्च । तत श्रीरघुनाथसंस्कृतमहाविद्यालये वेदान्ताध्यापकपदमधिकृत्य स्वायुषश्चत्वारिंशद्वर्षाणि वेदान्तशास्त्रम्, व्याकरणकाव्यसाहित्यादि च शास्त्रजातमध्यापिपन् । इमे पण्डितप्रवरा विशालस्थूलकाया, आजानुलम्बितभुजा, तजस्विन, प्रभावशालिन, प्रत्युत्पन्नमतय,

कर्मकाण्डिप्रकाण्डम्, फलितज्योतिषि सिद्धहस्ता, शास्त्रार्थमहारथाश्चासन्। इमेऽशीतिवर्ष-वयसि स्वीय भौतिक कलेवर विहाय ब्रह्मभूय जग्मु ।

---

## श्रीनीलकण्ठपण्डितः

अथ जम्बूनगरप्रतोलिकाया 'पक्कीढक्की'नाम्न्यामभिजाते कुले शरनन्दव-स्विन्दुमिते (१८६५) वैक्रमाब्दे माघकृष्णतृतीयाया समाविर्बभूव। तस्या प्रतोलिकाया ब्राह्मणगुणसम्पन्न प्रख्यातवश कमलनयनो नाम पण्डितोऽभवत्। तत्सुत पितृगुणानु-गुणो देवीदत्त, तस्य भवनाथ, भवनाथाच्चायमुत्पन्नो महाकविर्नीलकण्ठ। काव्य-व्याकरणादिषु निष्णातोऽप्यसौ विशेषतया आयुर्वेदरचिरासीत्। अनेन महाराज-श्रीरणवीरसिंहस्य निदेशेन हिन्दीभाषामय श्रीरणवीरप्रकाशाख्यो भागद्वये विभक्तो महानायुर्वेदग्रन्थो निरमायि। विधुगुणाङ्कवसुमतीमिते (१९३१) वैक्रमाब्देऽसौ मुद्रा-पयित्वा प्रकाशितो महाराजेन श्रीरणवीरसिंहेन। तदुक्तमनेनैव—

जम्बूपुरवासी, महा-विद्वज्जन-सिरमौर ।<br>
कमलनयन पण्डित यहा जासम दूज न और ।।

तिनके देवीदत्त सुत, तिन्हको श्रीभवनाथ ।<br>
नीलकण्ठ तिन्हको भयो सो नित नावत माथ ।।

आज्ञा श्रीमहाराज की पायो भाषा-सार ।

अस्यैक सस्कृतपद्यमपि सल्लिख्यते अक्षरसमोजकाना सस्कृतानभिज्ञत्वादशुद्धि-बाहुल्यमस्मिन् पद्य समायातम्। तत्सशोध्य योज्यते—

यावत्सूर्यशशाङ्कदीपसरिताधीशा धराधारिणो,<br>
यावन्नीरसमीरवह्निनभसा भूमेश्च शक्ति स्थिरा।<br>
तावच् श्रीरघुराजवशतिलक त्वत्कीर्त्तिमन्नावनौ,<br>
श्रीकाली परमेश्वरी च त्रिकुटा सवर्धयन्त्वाशिषा ।।

---

## श्रीनौनिहालचन्द्र

पञ्चनदकेसरिणि श्रीरणजीतसिंहे मही शासति तद्गुरुपदमारूढो विद्वद्वरिष्ठो विशेषतस्तन्त्रशास्त्रेषु सिद्धहस्तो नौनिहालपण्डित शरविहगमुनीन्दुमिते (१७६५) वर्षे स्महलपुरग्रामे गोस्वाम्युपाधिविभूषितेऽभिजातब्राह्मणवंशेऽजनि। बाल्येऽसौ स्वगृह एव व्याकरणकाव्यादिक स्ववंशानुरूप कर्मकाण्डादिक च सर्वं समधीत्य पितृप्रेरणया तन्त्रशास्त्रमजिज्ञासत, तन्त्रशास्त्रिणा च शरण ययौ। गुरुकृपया स्वप्रतिभया च तन्त्रशास्त्रेषु परम प्रावीण्यमलभत। किं बहुना, तन्त्रशास्त्रप्रभावेणायमसम्भवमपि सम्भव कर्तुं प्रभवतीति बुद्ध्वा लोकैरय 'सिद्ध' इत्यभाणि। कदाचित् पञ्चनदीयरावीनदप्रवाहेणोह्यमान 'मिण्डिया' ग्राम दृष्ट्वा तद्ग्रामवास्तव्यै सम्भूयाय प्रार्थितो यद् 'रक्षास्मान् वहतोऽस्मिन् प्रवाहे' इति। सिद्धोऽपि कतिपयैरेव क्षणैस्तन्त्र निर्माय समाधिस्थीभूय च प्रवाहवेग ततो ग्रामाद् व्यावर्त्य ग्राम, ग्रामस्थान् सर्वान् प्राणिनश्च प्रवाहवेगाद् रक्षितवान्। इमामन्याश्च भूयसीश्चमत्कृतीरनुभूय पञ्चनदसिंह श्रीरणजीतसिंह इम स्वगुरुमकार्षीत्। अय नवनवतिवर्षवयसीद भौतिक शरीर परित्यज्य दिवमगात्।

---

## श्रीपरशुरामपण्डित

नौनिहालचन्द्रस्य पौत्रो गोपालरामात्मज श्रीपरशुरामपण्डितो मुनिनेत्रविहगेन्दुमिते (१६२७) वैक्रमाब्दे स्महलपुरग्रामे जनिमधत्त। अय काव्यपुराणाभिज्ञत्वाल्लोकैर्व्यासनाम्ना सम्बोध्यते स्म। अस्य प्रवचनशैलीप्रभाविता सहस्रश श्रोतार प्रवचनश्रवणसमकाल करुणादिरसास्वादनप्रमुग्धाश्चित्रलिखिता इवाभवन्। अय पञ्चपञ्चाशद्वर्षवयस्येव नेत्रवसुग्रहेन्दुमिते (१६८२) वैक्रमाब्दे ससारासारतामनुभूय लोकान्तरमगात्।

---

## श्रीपुण्यशील

पुण्यशीलो महान् तान्त्रिकोऽभवत्। राष्ट्रमलान् महामार्यादिरोगान् शत्रुकृताक्रमणादिविप्लवाश्च तन्त्रद्वारा न्यवारयत्। अय 'सिद्धतान्त्रिक' इति लोकैरुच्यते स्म। दूरदूरतोऽस्य तन्त्रचमत्कारान् द्रष्टुमनुभवितुञ्च तान्त्रिका अपि पुण्यशीलसविधे समायान्ति स्म।

---

## तार्किकशिरोमणि श्रीबोधराज

जम्बूनगरादुत्तरस्यां दिशि चत्वारिंशत्क्रोशदूरे रामनगर नाम नगरमस्ति । तत्र कश्चिद्बोधराजाभिधो ब्राह्मणश्चतुर्विंशत्यधिकैकोनविंशतिशततम (१९२४) वैक्रमाब्दे समाविर्भूय जम्बूनगरस्थगणेशशास्त्रिणा सविधे नूतन-प्राक्तनन्यायशास्त्रमधीत्य शास्त्रार्थसमरविजयी विद्वानभवत् । अथ सर्वप्रान्तीयब्राह्मणवटून् तर्कसंग्रह-मुक्तावली-व्युत्पत्तिवादादिग्रन्थानध्यापयन् लोकैस्तार्किकशिरोमणिरित्युच्यते स्म । अथ नवनवत्यधिकैकोनविंशतिशततमे (१९९९) वत्सरेऽतर्कितोपनतव्याधिना कालकवलितोऽभूत् ।

---

## श्रीमणिरामपण्डित

सर्वेश्वरतनुजन्मा श्रीमणिरामपण्डितो महाराजश्रीप्रतापसिंहस्य सभापण्डितोऽभवत् । अथ व्याकरण-न्याय-वेदान्त-पुराण-प्रभृतिशास्त्रेषु परमप्रवीणोऽपि कर्मकाण्डविषये तन्त्रशास्त्रविषये च बहूनत्यशेत । अथ वस्त्रभूषादिभिराचारभङ्गीभिश्चापरो राजकुमार इव प्रत्यैयत । महाराजस्य सौधसम्बन्धि सर्वं कर्मकाण्डादिक कार्यजातमस्यैव तन्त्रमासीत् ।

---

## श्रीमहेशदैवज्ञ

अस्ति जम्बूराजधानीमधिवसन् 'सारस्वत पण्डिता' (तलावचान पण्डित) इत्युपाधिक प्रतिष्ठितो ब्राह्मणवंश । तस्मिन् क्रमेण समुत्पाद्यमानेषु विद्वत्सु समुत्पेदे कर्मकाण्डपरिपाटीप्रवीण, पण्डितमण्डलीमण्डनो गणपतिपण्डित । स च बुद्धिदेव्या स्वधर्मपत्न्या गणेशमहेशौ जनयामास द्वौ तनूजौ । तयो कनीयान् महेशो बाल्य एवाङ्कगणनाया लब्धप्रसरा स्वशेमुषी व्याकरण-न्यायादिनिकषघर्षणेन कुशाग्रा तीक्ष्णा च विधाय गणित-फलितोभयविधज्योतिश्शास्त्रसूक्ष्मेक्षिकया चतुर्दशसिद्धान्तोपेत चतुःषष्टिविध ज्योतिश्शास्त्र समधीत्य तत्र पर प्रावीण्यमधिगतवान् । राजसदसि लोकसभासु च पर सम्मानितोऽयं विद्वद्भ्यो दैवज्ञोपाधिमधिगतवान् । महाराजश्रीरणवीरसिंहादेशेन श्रीरणवीरज्योतिर्महानिबन्धाभिध चतुर्षु खण्डेषु विभक्त ग्रन्थ निर्माय महान्तमुपकारमकार्षीज्ज्योतिश्शास्त्रजिज्ञासूना विदुषाम् । तत्र आत्मपरिचायकं पद्यद्वयम्—

प्राक्तानि होरागणितानि पूर्वैर्वशिष्ठगर्गात्रिपराशराद्यैः ।
वराहलल्लप्रमुखैश्च, तेषु फलक्रमो नैव कृतो हि यस्मात् ॥३॥
सारावली-जातकशास्त्रतोऽपि होराप्रदीपादपि जन्मदीपात् ।
आदाय सारं यवनादिशास्त्रात् फलक्रमार्थं विहितो निबन्धः ।

अयं जातकखण्डश्चतुर्विंशतिसर्गात्मकश्चतुःसप्तत्यधिकषट्शतसंख्याकैरेकस्फुटदीर्घैर्नवेश्चविस्तृतैः पत्रैः सङ्कलितः सटीको महान् ग्रन्थो मुद्रितो वर्तते । अन्यदपि खण्डत्रयमस्यैतादृशं विद्यते, परन्तु तत् महता गवेषणेनापि नोपलब्धम् ।

---

## श्रीरघुनाथशास्त्रिणः

जम्बूप्रान्तान्तर्गतो घृतपुर(घओ)नामधेयः कश्चिदतिरमणीयो ग्रामोऽस्ति । यत्रत्या ब्राह्मणाः राजपुत्राश्चेतरे च घृतव्यवसायिनोऽतिसमृद्धा वर्तन्ते । तत्र विश्रुतस्य पुरोहितजातीयस्य श्रीसन्तरामशर्म्मणो धर्मपत्न्यां लक्ष्मीदेव्यां भूवेदनन्देदुमिते(१९४१) वैक्रमाब्दे श्रावणकृष्णतृतीयायां श्रीरघुनाथशास्त्रिणो जनिमग्रहीषत । दैवदुर्विपाकेनेमे बाल्य एव मातापितृभ्यां वियुक्ता अभवन् । एतेषां ज्येष्ठभ्राता भाविनी शास्त्रार्थरहस्यग्रहणधारणसमर्थां प्रतिभामनुमाय तादृशमेव कर्मणि कौशलं च बुद्ध्वा श्रीरघुनाथसंस्कृतमहाविद्यालये दशवर्षदेशीया इमे प्रावेश्यन्त । तत्रेमे बाल्ये वयसि वर्तमाना अपि शुभोदर्केण भाविनि समये भविष्यता शास्त्रानुग्रहेण, सौशील्येनातिप्रश्रयेण वा तदानीन्तनद्वैर्गतिकपण्डितमण्डलीमण्डनानां श्रीगङ्गाधरशास्त्रिणामन्तेवासित्वं समुपलभ्य महतीं प्रीतिमापन्नाः । तेषां चरणयोर्मूलं समध्युष्य स्वल्पेनैव कालेन लघुसिद्धान्तकौमुद्यध्ययनानन्तरं सिद्धान्तकौमुदीप्रयोगसाधनप्रक्रियायां फक्किकासु च परं प्रावीण्यमापन्नाः । सिद्धान्तमुक्तावली-साहित्य-काव्यादीनि चेमेऽन्येभ्यः सर्वशास्त्रार्थतीर्थनिष्णातमतिभ्यः श्रीकाशीनाथप्रभृतिभ्यो विद्वद्भ्योऽधीत्य विदुषां परिषदि निश्शङ्काः प्रवक्तारोऽभूवन् । कदाचिदेषां चेतसि पञ्चाम्बुविश्वविद्यालयीयशास्त्रिपरीक्षादित्सा अभवत् । तदा श्रीरणवीरपाठशालामुख्याध्यक्षाणां श्रीलक्ष्मणशास्त्रिणां शरणं समागताः । तेभ्यः पातञ्जलं महाभाष्यं, लघुशब्देन्दुशेखरमन्यानि च परीक्षोपयोगीनि पुस्तकानि समधीत्य लेखनकलां च सम्यगधिगत्य परां प्रौढिमापन्नाः प्रथमश्रेण्यां शास्त्रिपरीक्षां समुदतरन् । एते स्वायुषः षट्त्रिंशद्वर्षाणि श्रीरणवीरपाठशालायां काश्मीरेषु च उच्चविद्यालयान्तर्गतसंस्कृतपाठशालायां स्वगृहे च छात्रानौरसपुत्रानिव लालनपुरस्सरं समध्याप्य

परमविदुषोऽकार्षु । अद्याप्येषामन्तेवासिना गुरुगुणान् सम्मृत्य सरामाञ्जा, अश्रुपूर्णनयना सम्भवन्तो दरीदृश्यन्ते । नेमे केवलमध्यापका एव समभूवन् अपि तु शास्त्रसरणिमाश्रित्य पुस्तकनेखनेऽपि एषा वैदुष्य विदुषा हृदयान्यावर्जयतीति 'अहो ! शास्त्रान्त प्रवेशपाण्डित्यम्, लोकोत्तराभिलापनप्रकारश्च' इति परस्पर तान् वादयति च । 'रचनाप्रयोगविधि'नामधेयमेकमन्वर्थं पुस्तक निर्मायेमे सस्कृतसाहित्यस्य महान्तमुपकार चक्रु । परन्तु दौर्भाग्येनाद्यावधि न तत्पुस्तक प्रकाशमागतम् । इमे सहृदया प्रवक्तार कवयोऽप्यासन् । एषा प्रभूततरा मुक्तककविता विद्यन्ते, या साम्प्रतमपि सहृदयहृदयान्यावर्जयन्ति । एषा षट् पुत्रा सर्वेऽपि स्वस्वकर्मणि प्रवीणा केचिदुच्चपदाधिकारिणो विद्यन्ते । परमेषा तृतीय पुत्रो देवरत्न पितृचरणान्तिकमध्युष्य सर्वं पैतृक विद्याकलाप पितृसकाशात् स्वस्मिन्नाधाय सगीतशास्त्रे नाट्यकलाया च परम प्रावीण्यमलभत । अय पितृवत् सर्वगुणसम्पन्नत्वात्स्वल्पेनैवाऽऽयुषा सहृदयहृदयान्यध्यतिष्ठत् । क्रमेण च पञ्चाम्बुविश्वविद्यालयीया प्राज्ञ-विशारद-शास्त्रिपरीक्षा समुत्तीर्यांग्लभाषायामपि लब्धप्रसर एम०ए० परीक्षा प्रथमश्रेण्या समुदतरत् । साम्प्रतमय जम्बूराजधान्यन्तर्गते कठुआप्रान्ते कालेजे सस्कृतमध्यापयन् छात्रान् पर तोषयति । स्वातन्त्र्येणापि सस्कृत समध्यापयन् सस्कृतसाहित्यस्योन्नत्य चिकीर्षति । श्रीरघुनाथशास्त्रिणा चरणचिह्नान्यनुसरन्तमिममपि वय धन्य मन्यामहे । श्रीरघुनाथशास्त्रिणस्तूदरव्याधिना क्रमेण क्षीणकाया बहूपवासानन्तर बाह्याभ्यन्तरत पवित्रीभूता वस्विन्दुव्योमनेत्रमिते (२०१८) वैक्रमे वत्सरे आषाढकृष्णतृतीयाया प्रातरेव रुदतो बन्धून् विरहय्य परे ब्रह्मण्यलीयन्त ।

---

## श्रीरामकृष्णपण्डित

सुप्रसिद्धश्रीजल्लापण्डितानुज श्रीरामकृष्णोऽपि स्वज्येष्ठभ्रातृवत् स्वातन्त्र्यी मतिमानासीत् । तस्मिन् काले बालाना शिक्षाया कश्चित्सुप्रबन्धो नासीत् । एतयो (जल्लापण्डितरामकृष्णयो) जनको महान् गणितज्ञोऽभवत् । पितृगुणसक्रमणवशात्, नैसर्गिकप्रतिभया वा यथैवेमौ भावणशक्तिसमन्वितावभूताम्, तथैव गणिताभ्याम विशिष्टपच्चाङ्कुरनाम्, तत्र पर प्रावीण्यञ्चालभेताम् । पर शिक्षाविषये लोकाना रुचि मद्य एव प्रवर्तमानाऽभवत् । रायपुर(रैपुर)ग्राम कश्चिदध्यापक उर्दूभाषा पाठयति स्म, यस्माज्जल्लापण्डितोऽपि पारस्यभाषाम् उर्दूभाषा च पठित्वा तत्र पर वैदुष्यमापत्, यत्प्रभावेण काबुलकन्धारगुरासानादिदेशेभ्य समागतानि तदधिपतीना पत्राणि

पठितुं जल्लापण्डितं पञ्चनदकेसरिणः श्रीरणजीतसिंहस्य सभायां प्रथममासनं प्राप्नोत्। तत्सविधे ऽपैर्बालिकैः सहायं रामकृष्णोऽपि तस्मादुर्दूभाषां पठितुमारब्धवान्। किञ्चित्कालानन्तरं संस्कृताध्ययनोत्सुको रामकृष्णः स्वग्रामाद् ग्रामान्तरं जगाम। तत्र कस्यचिद् गोविन्दाचार्यस्य विदुषः सविधे संस्कृताध्ययने प्रावर्तत। तीव्रबुद्धिप्रभावादयं स्वपाठं शीघ्रतया सावधानतया चाभ्यास्यत्। स्वल्पैरेव दिनैः समुचितां संस्कृतशिक्षां समध्यगच्छच्च। सिद्धान्तकौमुदी, नवाह्निकमहाभाष्यम्, रघुवंशकुमारसम्भवाभिधे पद्यकाव्ये, दशकुमारचरितश्रीहर्षचरिताभिधे गद्यकाव्ये च समधीतवान्। तदनन्तरं विदुषां निवासभूमिं वसुस्थलीं (बसोली) गत्वा तत्रत्यानां विदुषां सविधे पिङ्गलसूत्र-स्वरप्रकरण-चन्द्रालोक–ध्वन्यालोक-काव्यप्रकाश–शिशुपालवध–किरातार्जुनीय-नैषधीयचरितादीन् ग्रन्थान् समधीत्य दर्शनग्रन्थाध्ययने संलग्नोऽभवत्। एवं प्रायः सिद्धसमीहितः स्वग्रामं प्रतिनिवृत्त्य तत्काले सद्योलब्धराज्यं महाराजं श्रीगुलाबसिंहं समगच्छत्। महाराजः श्रीगुलाबसिंहोऽपि जल्लापण्डितप्रभावेण तद्वैदुष्येण च परं प्रभावितस्तमन्वग्रहीत्। पण्डितवरश्रीरामकृष्णस्य तादृशं वैदुष्यं सभाचातुर्यं प्रत्युत्पन्नमतित्वं चानुभूय प्रीतमानसो गुणग्रहिलो महाराजः श्रीगुलाबसिंहस्तं स्वसदसि प्रधानपण्डितपदमध्यतिष्ठिपत्, राजप्रासादकल्पं किञ्चिद्विशालं सौधं निर्माप्य बहुसम्मानपुरःसरं तस्मै समार्पिपच्च। सर्वत्र विदुषां सभासमाजेषु राजपण्डितरूपेण तमेव प्राहिणोत्। स च शतशः शास्त्रार्थेषु महतो महीयसो विदुषः पराजित्य पुरस्कारानलभत। कालगतेरनिवार्यतया सर्वराजगुणोपेतं श्रीरणवीरसिंहं राज्यकार्यसम्पादनदक्षं परिज्ञाय सर्वं राज्यभारं तस्मै समर्प्य महाराजे श्रीगुलाबसिंहे दिवं गते गुणग्रहिलो महाराजः श्रीरणवीरसिंहो गणितशास्त्रमर्मज्ञं श्रीरामकृष्णं प्रधानकोशाध्यक्षपदमध्यतिष्ठिपत्। रामकृष्णस्तु लक्षशो मुद्राणामपहर्तॄनधिकारिणश्चाय चायं छिन्नवृत्तीन्कारयित्वा तदुपरि राज्यद्रव्यापहारतद्दुरुपयोगाभियोगान्प्राचीचलत्। एवं राजकीयकोशदशां समुद्धार्य महाराजश्रीरणवीरसिंहस्य परप्रेमास्पदं बभूव। अभियुक्ताधिकारिणां षड्यन्त्रेण वैमनस्येनान्येन वा केनापि कारणेनायं ते सर्वं परित्यज्य काशीमयासीत्। तत्रापि विद्वत्समाजेषु प्रचुरं सम्मानं समाप्नोत्। श्रूयते—काश्यां रामकृष्णस्य सद्मनि प्रत्यहं विदुषां गोष्ठी समभूत्। तस्यां बाबूश्रीहरिश्चन्द्रोऽपि प्रत्यहं नियमेन समुपातिष्ठत्। काश्मीरिकाणां पण्डितानामिदं कथनमस्ति यत् कदाचित् श्रीहरिश्चन्द्रं गोष्ठ्यां यथासमयमनागतं दृष्ट्वा कश्चिद् गोष्ठीस्थः सभ्यः समवादीद्यदद्य हरिश्चन्द्रो यथासमयं गोष्ठ्यां कथं नोपस्थित इति। तच्छ्रुत्वा श्रीरामकृष्णमहानुभावः सस्मितमचकथद् यदसौ भारतेन्दुरस्ति, यदास्मै रोचिष्यते, तदा समेष्यति, कोऽस्य स्वातन्त्र्यमपहर्तुं प्रभुरस्तीति। ततःप्रभृत्येव बाबूहरिश्चन्द्रस्य

लोकमगु । एभि 'विवाहसंस्कारपद्धति', 'दानविधि' इत्येतत् पुस्तकद्वयमपि संलिख्य प्रकाशितम् ।

---

### श्रीलब्धरामशास्त्रिण

पञ्चनदप्रान्तान्तर्गते आजिआलानाम्नि ग्रामे वास्तव्य कश्चित् कृष्णचन्द्रनामधेयो विद्वान् वृत्तीश्वरकर्मणा स्वजीविका कुर्वाणो हरकौराभिधया स्वधर्मपत्न्या सह सुखेन कालमत्यवाहयत् । षट्त्रिंशदधिकनवशतोत्तरैकसहस्रतमे (१९३६) वैक्रमे वत्सरे आषाढकृष्णदशम्यां ताभ्यां श्रीलब्धरामशास्त्रिणो जनिमग्रहीषु । दुर्दैवाद् बाल्य एव ते मातापितृभ्यां व्ययुज्यन्त । ईश्वरप्रेरणया शुभोदर्केण वा कदाचित्ते परया पिपठिषया जम्बूराजधानीमाययु । तत्रत्यविद्वद्वृन्दपरिपालितश्रीरघुनाथसंस्कृतमहाविद्यालयदिदृक्षया कदाचित् तत्र गत्वा छात्राणामध्ययनाशनपानवसननिवसनपारस्परिकव्यवहारादिकम्, अध्यापकानां लालनपुरस्सरामध्यापनशैलीं च समवलोक्य प्रीयमाणमानसा प्रधानाध्यापकानुग्रहेण विद्यालयं प्राविशन् । तत्र श्रीगङ्गाधरकाशीनाथादीनां विदुषामनुग्रहेण स्वल्पैरेव वत्सरैर्न्यायव्याकरणकाव्यादिषु परमं प्रावीण्यमाप्नुवन् । पुन पञ्चनदीयशास्त्रिपरीक्षादित्सया श्रीरणवीरहाईस्कूलस्थसंस्कृतपाठशालायां प्राविशन् । तत्र लक्ष्मणशास्त्रिसकाशाल्लेखनकलां परीक्षापद्धतिं च सम्यगवगत्य पञ्चनदीयशास्त्रिपरीक्षायां प्रथमा समभवन् । शास्त्रिपरीक्षोत्तरं न्यायनयनिष्णातानां दण्डिस्वामिश्री१०८मद्विश्वेश्वरानन्दानां सविधे कञ्चित्कालमध्युष्य युगपत् प्राचीननव्यन्यायग्रन्थान् समध्यगीषत । एवं विद्याभ्यासार्थं रात्रिन्दिवं परिश्राम्यन्तो गुरुशुश्रूषणपरास्ते पञ्चविंशतिवर्षवयसि शास्त्रवैदुष्यमशेषमध्यगच्छन् । तदनन्तरं तै स्वयोग्यतानुसारं वैतनिकी भृतिर्लब्धा । श्रीरणवीरसंस्कृतपाठशालायां तैर्बहुकालमध्यापितम् । प्रभूततरास्तेषां शास्त्रिणस्तथा बी०ए०,एम०ए० पदवीविभूषिता शिष्या सन्ति ।

अयं तेषां विशेषो यत् जम्बूस्थविदुषां मध्ये तेषामेव गृहे यीशुमुहम्मदजिनबुद्धप्रभृत्यवैदिकमतावलम्बिनोऽप्यवारितप्रवेशा आसन् । श्रीदयानन्दिप्रभृतिवैदिकमतावलम्बिनस्तु सर्वेऽपि तेषां श्रीमतां सद्व्यवहारेण सुप्रसन्ना आसन् । लब्धवयस्कजीविकास्ते कानिचिद् वर्षाणि आर्यकन्याशालायामध्यापिपन् । बह्व्य कन्यकास्तेषां सविधेऽधीत्य पञ्चनदविश्वविद्यालयीयां मैट्रिक एफ०ए०-बी०ए०-प्राज्ञ विशारद-शास्त्रिपरीक्षा समुदतरन् । प्रतिरविवासरमार्यसमाजसिंहासनमारुह्य वेदप्रवचनमप्यकार्षुस्ते । दैवयागान्

मुनीन्दुशून्याश्विमिते(२०१७) वैक्रमाब्दे आश्विनमासस्य तुरीयतारिकाया प्रायश्चतुर्वादनवेलाया भौतिकशरीरलीला विहाय दिवमयासिषु । तेषा चत्वार पुत्रा वर्तन्ते । तेष्वेक पञ्चनदविश्वविद्यालयीया शास्त्रिपरीक्षा मैट्रिकपरीक्षा च समुत्तीर्य इन्द्रप्रस्थे (दिल्ल्याम्) क्वापि वैतनिकी भृति कुर्वाणो वर्तते । कनिष्ठो विशारद-मैट्रिक-परीक्षे समुत्तीर्य श्रीलक्ष्मरामशास्त्रिभि सस्थापिते मुद्रणालये कार्यं कुर्वन्नास्ते । अपरौ द्वौ पाश्चात्यविद्याविशारदौ, ययोरेको दिल्ल्यामपरो जम्बूनगरे सर्वकारकार्यं सम्पादयति । एका शक्तिनाम्नी परमविदुषी सुपुत्री वर्तते । साऽपि जम्बूकाश्मीरविश्वविद्यालयीया प्राज्ञ-विशारद-शास्त्रिपरीक्षा क्रमेण समुत्तीर्याऽऽङ्गलभाषाया मैट्रिक-एफ०ए०-परीक्षे अपि सन्तीर्य च आर्यकन्यापाठशालायामध्यापनकार्यं साधु सम्पादयति ।

---

### श्रीवासुदेवपण्डित

असौ विप्रवशाऽवतस श्रीवासुदेवपण्डितो जम्बूप्रान्तान्तर्गतरामनगरनाम्नि पत्तने त्रिशत्यधिकैकोनविंशतिशततमे(१६२०) वैक्रमे वत्सरे सम्भूत । अमुना स्वपित्रोर्नामनिर्देशो नाकारि । अमुष्य वशजोऽपि कश्चित् नावशिष्ट । परमसौ 'सिद्धान्तशिरोमणे'विवरण हिन्दीभाषाया सलिख्य स्वनाम स्थिरीकर्तु प्रायतत । पर दैवदुर्विपाकेन-तद्विवरणमपि नष्टप्रायम् । कानिचिदेव तस्य पत्राणि समुपलब्धानि, यानि श्रीरणवीर-पुस्तकालये सम्यग् रक्षितानि सन्ति । 'सिद्धान्तशिरोमणे' प्रारम्भिक पद्यद्वयमत्रोल्लिख्यते—

नत्वा गणेश जगदम्बिका मुहु श्रीभास्कर भास्करभास्वर परम् ।
श्रीदेवकृष्णाख्यगुरु स्तथाविधान् यत्पादसेवालवभाक् कृती भवेत् ॥१॥

तेषा पादयुग निधाय हृदये लब्ध्वा तदीया दया,
शास्त्रे भास्करनिर्मितेऽतिगहने प्राप्तप्रवेशोऽस्म्यहम् ।
श्रीमच्छ्रीरणवीरसिंहनृपतेराज्ञावशाद् भाषया,
सत्सिद्धान्तशिरोमणेर्विवरण सद् वासुदेवा ब्रुवे ॥२॥ इति ।

---

## श्रीविश्वम्भरनाथशास्त्रिण

जम्बूनगराद्दशक्रोशान्तराले 'भटयाल'नाम्ना प्रसिद्ध कश्चित्सस्यसमृद्धो ग्रामो विद्यते । तत्र मणिरामनामधेय कश्चिदतिसमृद्धो ब्राह्मण स्वधर्मपत्न्या सह सुखमत्रासीत् । तस्मादमी श्रीविश्वम्भरशास्त्रिणो गुणाग्निनन्देन्दुमिते (१९३३) वैक्रमहायने भाद्रपदशुक्लदशम्या कुजवासरे धनुर्लग्नोदये जनुरग्रहीषु । अक्षरारम्भादिकमुपनयनसस्कारञ्च विधाय तत्पितृपादो विशपशास्त्राणि समध्येतु तान् श्रीरघुनाथपाठशालाया प्रावेशयत् । अमी तत्र श्रीगङ्गाधरशास्त्रिप्रभृतिविदुषा सविधे भाष्यान्त व्याकरणम्, मुक्तावली न्यायदर्शनम्, काव्यप्रकाशरसगङ्गाधरादिग्रन्थाश्च समधीत्य क्रमेण प्राज्ञ विशारद-शास्त्रिपरीक्षा समुदतरन् । अमी विद्यार्थिदशायामेव स्वसतीर्थ्यानध्यापयन्तोऽध्यापनकलाया परमप्रवीणा समभवन् । वर्षैककालत श्रीरघुनाथसस्कृतमहाविद्यालयीयसरक्षकपरिषदो महामन्त्रिण समभूवन् । श्रीरणवीरहाईस्कूलस्थसस्कृतपाठशालाया द्वितीयाध्यापकपदमधिष्ठाय शतशो विद्यार्थिन पञ्चाम्बुविश्वविद्यालयीयशास्त्रिपरीक्षा समुदतीतरन् । सस्कृते लिखितास्तेषा निबन्धा सरसा सालङ्कारा भावपूर्णाश्चासन् । तेषामध्यापनसमये चपलाश्चञ्चला अपि विद्यार्थिनश्चित्रलिखिता इव, मन्त्रमुग्धा इव, तन्त्रकीलिता इव च तन्मुखाभिमुख निर्निमेष पश्यन्तस्तन्मया समभूवन् । अमीषा यादृशमदूष्य वैदुष्यमासीत्, तादृशमेव सौजन्य सौशील्यमपि च सहृदयहृदयान्यावर्जयति स्म । यावज्जीव सस्कृतसाहित्य समुन्नेतु यतमाना गृहेऽपि स्वतन्त्ररूपेणाध्यापयन्तस्ते सस्कृत विपठिषूणा छात्राणा परममुपकारमकार्षु । एकदाऽप्यमीषा स्वभावपरिचित पुरुषो भूयो भूय सान्निध्यमिच्छति स्म । बहुधा वसनाशनपुस्तकादिसाहाय्यप्रदानेनापि विद्यार्थिन समुपचिकीर्षन्ति स्म ते । त सुघटितशरीरा, लम्बबाहव, व्यूढोरस्का, वर्णेन गौरा, पूर्णचन्द्रानना, मृदुलस्वभावा, पुण्यमया, दयामया, परोपकारिण, वेशभूषादिभिश्च राजान इव प्रतीयन्ते स्म । महाराजादेशानुरोधेन ते हम्मीरपुर-चामक-राजौरी-भिम्बर-ऊधमपुरादिप्रान्तेष्वपि गाम गाम तत्रत्यहाईस्कूलस्थच्छात्रान् सस्कृतमध्यापिपन् । अध्यापितास्तेषामन्तेवासिनस्तान् स्मार स्मारमश्रूणि विमुञ्चन्ति स्म । विहगवसुनन्देन्दुमिते (१९८९) वैक्रमाब्दे वैशाखमासे दाहज्वरेण पीडितास्तेऽकस्मादेव विरहविह्वलामनपत्या स्वधर्मपत्नी रुदन्तमेक दत्तकपुत्र च परित्यज्य लोकान्तरमगु ।

---

## श्रीविश्वरूप

श्रीजनार्दनविद्वदात्मजस्य विदुषो गोस्वामिन पुण्यशीलो विश्वरूपश्चेति द्वौ सुतौ समभूताम् । तत्र विश्वरूप पर मन्त्रतन्त्रकुशल कर्मकाण्डालङ्कर्मीणश्चासीत् । असौ स्वीयवैदुष्यप्रभावेण सर्वस्यापि राजवशस्य गुरुपदमारूढवान् । स ज्यौतिपशास्त्रेऽपि लब्धप्रतिष्ठोऽभवत् । स्वसमयेऽमुष्यै९ पञ्चाङ्ग द्विगर्त्तेषु प्रचलति स्म । असौ पष्ट्यधिकैकोनविंशतिशततमे (१९६०) वत्सरे द्विपष्टिवर्षवयसि दिव गत ।

---

## श्रीविश्वेश्वरशास्त्री ज्यौतिपाचार्य

द्विगर्तेषु वसुस्थली(वसौली)नाम्नी काचिदतिप्राचीना राजधानी वर्तते, या सर्वशास्त्रेष्वप्रतिहतगतीना विदुषा ब्रह्मनिष्ठाना ब्राह्मणाना वासभूरिति लोकैरुच्यते, यत्रत्या ब्राह्मणास्तीर्थयात्राव्याजेन वाराणसी गत्वा तत्रत्यान् पण्डितप्रकाण्डान् साधारणवेषा मलमल्लकावशेषा अपि शास्त्रविचारे आश्चर्यचकिताश्चक्रु । ईदृशे परम्पराप्राप्तोत्कृष्टपाण्डित्य एकस्मिन् ब्राह्मणकुल व्रजनन्दनशर्मण पण्डितस्य धर्मपत्न्या श्रीतपावतीदव्या श्रीविश्वेश्वरशर्म्मा पाण्डवनन्दवसुभूसमिते (१८९५) वैक्रमे वर्षे वैशाखशुक्लैकादश्या जन्म लेभे । अथ मौहूर्तिकैर्विचारितेऽस्य प्रादुर्भावसमये तत्क्षण शुभोदग्रग्रहाणा प्राचुर्यं सुदुर्लभ चतु सागरयोग च वाढ पश्यन्तो ज्यौतिर्विदो राजसम्मानितता शुभोत्तरकाल च निशङ्क निरधारयन् 'विश्वेश्वर' इति च तस्य सज्ञा व्यधु । क्रमेण कृतसंस्कारोऽसौ लघुकौमुदीहोडाचक्रप्रभृतीनि लघुपुस्तकानि गृहे एव स्वपितृसकाशादपठत् । तस्य पितृपादा नवनवोन्मेषशालिनी लोकोत्तरा प्रतिभामनुमाय श्रीविश्वेश्वर विदुषामाश्रयभूता पण्डितकुलसङ्कुला जम्बूराजधानी प्रति प्राहिण्वन् । तत्रस्थविदुषा शिष्यत्व श्रद्धया स्वस्मिन्नाधाय तेभ्यो न्यायशास्त्रम्, काव्यप्रकाशादीन् अलङ्कारशास्त्रग्रन्थान् बाहुल्येन गणितफलितोभयविध ज्योति शास्त्र च समधीतवानयम् । नैषधीयचरितादीनि त्वस्य जिह्वाग्रस्थान्येवासन्निति तात्कालिका विदन्ति । महाराजेन श्रीरणवीरसिंहेन तस्य गुणान् परीक्ष्यासौ महानुभाव स्वाश्रयी ज्यौतिषी ज्योतिर्विद पदे प्राड् नियुक्त । तदनन्तरमस्याध्यापनपटुत्वम्, प्रबन्धप्रावीण्य च वीक्ष्य स्वसस्थापितपाठशालाप्रबन्धसौकर्याय तासा पाठशालाना निरीक्षकत्वेन (इन्सपक्टर) नियुक्त । एव क्रमेण महाराजस्य मन प्रमोदहेतु सन्नसौ जम्बूकाश्मीरस्यधर्मार्थविभागस्याध्यक्षाधिकारिपद स्वात्मनाऽनडकृतवान् । अथ महानुभाव श्रीविश्वेश्वरशर्मा त्रिशिर्मंत्रा-

राज्ञै श्रीरणवीरसिंह-प्रतापसिंह-हरिसिंहै सम्यक् समभ्यर्चित सम्मानितश्च । तादृशी सम्मानना लभमानोऽप्ययं स्वगृहे महता प्रेम्णा शिष्यान् औरसपुत्रानिव लालयन्नध्यापयत् ।

नन्दलालशास्त्रि मदनमोहनशास्त्रि-काकारामशास्त्रिप्रभृतय प्रकाण्डविद्वासोऽस्यासन् शिष्या । तेषु केचनाद्यापि विद्यन्ते । प्रतिवर्षमस्य पञ्चाङ्ग निर्गच्छति स्म । प्रश्नमार्ग, प्रश्नकुतूहल, रणवीरविजय, जातकरहस्यमित्येवमादयो ज्योतिर्निबन्धा अप्यमुना प्रकाशिता आसन् । पर नाधुना ते सर्वे समुपलभ्यन्ते । केवल रणवीरविजयाख्यो महाग्रन्थ श्रीरणवीरसंस्कृतपुस्तकालयेऽमुद्रितो वर्तते । राजाधिराजमहाराजादिभि समभ्यर्चितपादपद्मो विदुषा मूर्ध्नि सस्थितोऽसौ विश्वेश्वरशर्मा वह्निवसुग्रहेन्दुमिते (१९८३) वैक्रमाब्दे स्वायुषोऽष्टाशीतितमे वर्षे आषाढकृष्णषष्ठ्या दु खत्रयाद् विमुक्तोऽभवत् ।

---

### ब्रजलालपण्डित

असौ गणेशपण्डितस्य ज्येष्ठ पुत्रो बाणनभोविहगेन्दुमिते (१९०५) वैक्रमाब्दे मनभरुदेव्या समाविर्बभूव । स्थालीपुलाकन्यायेन सर्वशास्त्ररहस्यमधिगत्य ज्योति-शास्त्रे कर्मकाण्डकर्मणि च पर प्रावीण्यमवाप । ततश्च जम्बूकाश्मीरान्तर्गतपुञ्छराज्ये राजपण्डितपदमध्यतिष्ठत् । प्रतिवर्षं राजकीय पञ्चाङ्ग निर्माय राजान्त पुरीय सर्वं कर्मकाण्डकलाप चाचीकरत् । नभोवसुविहगेन्दुमिते (१९८०) वैक्रमाब्दे भाद्रशुक्लतृतीयायामपुत्रो दिवमगादसौ । तस्य सर्वमौर्ध्वदैहिक कर्मकाण्डकलाप कनिष्ठभ्रातु श्रीनन्दलालस्य तनूजन्मा श्रीमदनमोहनोऽकार्षीत् ।

---

### श्रीपतिपण्डित

वैक्रमाष्टादशशताब्द्या (१८००) राज्ञ श्रीध्रुवदेवस्य कनीयांस्तनय श्रीरणजीतदेवो द्विगर्तभुव शशास । असौ श्रीरणजीतदेव पुण्यमय, प्रेममय, दयामय, धर्मात्मा, कर्मण्य, नीतिज्ञ, लोकहितैषी, न्यायशील, निरपेक्षशासकश्चासीत् । तस्मिन् राजनि शासति द्विगर्तराज्य लोके रामराज्य कथ्यते स्म । तस्य राज्ये चौराणा, विलुण्ठकानामसत्याचारिणा, व्यभिचारिणा, धर्मविमुखानामशिक्षिताना, मिथ्याभाषिणा च

प्रायोऽभाव एवासीत् । मङ्गलकृत्येषु, महोत्सवेषु, देवालयेषु, ब्राह्मणगृहेषु च वेदध्वनिभिर्गगनं पूर्यते स्म । यज्ञधूमैर्नभो मेघैराच्छादितमिव दरीदृश्यते स्म । सर्वं प्रजामण्डल सुखसौभाग्यसमृद्धिं समन्वभवत् । तस्य राज्ञ. सर्वतन्त्रस्वतन्त्र्, नीतिज्ञ, धर्मज्ञ, महात्मा श्रीपतिनामधेयो याज्ञिको ब्राह्मणो गुरुरासीत् । विशेषतया तन्त्रशास्त्रन्तु तस्य करामलकीभूतमिवाऽऽसीत् । ज्योति.शास्त्रमपि गणितफलितोभयरूपमस्य न केवल जिह्वाग्रस्थमासीत्, अपि तु सर्वमनुभवगोचरमभवत् । तत्र तस्य चमत्काराननुभूय महाराजः श्रीरणजीतदेवोऽमुष्य चरणानुचरो भूत्वा धर्मसम्बन्धि कार्यजात तदादेशानुसारमेवाकार्षीत् । महाराज. स्वय श्रीपतिसकाशादधीत्य प्रतिग्राम प्रतिनगर च बालाना सस्कृताऽध्यापनप्रबन्धमकार्षीत् । तद्राज्ये प्रायः सर्वेऽपि प्रजा-जना. शिक्षिताः, विनीता., धार्मिका., राजभक्ताश्चासन् । कदाचित् तात्कालिको लवपुराधीश. शाहवलीखान काश्मीरविजयाय महाराजश्रीरणजीतदेवं प्रार्थितवान् । श्रीरणजीतदेवः मियारत्नसिंहेन सेनापतिना सह युवराज व्रजदेव काश्मीरान् पराजेतु प्राहिणोत् । युवराज. श्रीव्रजदेवोऽपि बनहालमार्गेण गत्वा कतिपयैरेव दिनैः काश्मीरान् विजित्य स्वायत्तीकृतवान् । एव सप्तपञ्चाशद् (५७) वर्षाणि श्रीपतिपण्डितसाहाय्येन निष्कण्टक राज्य कृत्वा वसुवह्निवसुवसुमतीमिते (१८३८) वैक्रमाब्दे नेत्रवसुमुनीन्दुमिते (१७८२) च ख्रिष्टाब्दे चैत्रमासस्य द्वाविंश(२२)तारिकाया सर्वं विहाय श्रीरणजीतदेवो लोकान्तरमगात् । श्रीपतिपण्डितोऽपि श्रीरणजीतदेववियोगदुःखित. सर्वं परित्यज्य तपस्तप्तुमेकान्तमसेवत, श्रीरणजीतदेवस्य मृत्योरनन्तर तृतीये वर्षे प्राणान् मुमोच च । श्रीरणजीतदेवानन्तर व्रजदेवो जम्बूराज्याधिपतिर्बभूव ।

---

### श्रोत्रियवर्याः श्रीसन्तराममहानुभावाः

अमी कर्मकाण्डधुरीणा, पाणिनीयव्याकरणप्रक्रियाप्रवीणा. समभूवन् । जम्बूराजधान्या गव्यूतिमात्रान्तराले कश्चित् प्रौढपुराभिधो ग्रामोऽस्ति । तत्र सारस्वतब्राह्मणश्रेष्ठो नारायणाभिधो ब्राह्मण सह भार्यया सुखमवसत् । तस्य ज्येष्ठस्तनूजः श्रीचक्रपाणि कर्मकाण्डकर्मणि कुशलः सर्वत्र प्रान्ते स्वकर्मणा ख्यातोऽभवत् । तस्यैतस्य श्रीचक्रपाणिब्राह्मणस्य धर्मपत्न्या श्रीसन्तरामशर्म्माणो भूनेत्रग्रहेन्दुसमिते (१९२१) वैक्रमाब्दे माघपूर्णिमाया जन्म लेभिरे । पित्रा स्वय लघुकौमुदीमध्याप्य वेद वेदाङ्गानि चाध्येतु जम्बूस्थश्रीरघुनाथसस्कृतमहाविद्यालये प्रवेशितास्ते । तत्र श्रीगोकुलचन्द्र-

प्रभृतिभ्यो विद्वद्भ्य सम्पूर्णां सिद्धान्तकौमुदी समधीत्य दाक्षिणात्येभ्यो वैदिकविद्वद्भ्यः पारस्करगृह्यसूत्रम्, मीमासादर्शनम्, यजुर्वेदसहिता सम्पूर्णाम्, मैथिलज्योतिर्विदश्च ज्योति शास्त्र समध्यगीषत । सकलानि पुराणानि स्मृतीश्च ते स्वय परिशीलितवन्त । इमे श्रीरघुनाथसस्कृतमहाविद्यालये यजुर्वेदाध्यापकपदमलङ्कुर्वाणा शतशो ब्राह्मण-कुमारान् कर्मकाण्डधुरीणान् वेदपारायणपराश्च चक्रु । धर्मावतारो महाराज श्रीप्रताप-सिंहस्तन्महामात्यो लक्ष्मणश्चैतेषा परमभक्तावभवताम् । सर्वत्र पञ्चाम्बुप्रान्ते स्वदेशे चैते प्रधानतमा श्रोत्रिया सभभूवन् । सर्वत्र यज्ञादिकर्मसु समाहूयन्ते स्म । सर्वं वेदादि-कर्मभि स्वहस्तेन सल्लिख्याधीतम् । अक्षराणि चैषा मौक्तिकानीवातिसुन्दराणि, अद्यापि यानि दर्शं दर्शं दर्शकाना चेतासि पर मोदन्ते । श्रीमद्भागवतप्रवचनपुण्यैरेभि सहस्रशो नास्तिका अपि भागवतीकृता । एव भारतीयसस्कृतिप्रचारपरायणा इमे परमभागवता स्वायुप सप्तनवतितमे (९७) वर्षे षोडशाधिकद्विसहस्रतमे (२०१६) वैक्रमाब्दे वैशाखपूर्णिमाया भृगुवासरे प्रातर्ब्राह्मे मुहूर्त्ते परे ब्रह्मणि लीना अभूवन् ।

एषा द्वयोस्तनूजयोर्ज्येष्ठ श्रीविश्वम्भरशास्त्री पितृवद् वैदिक, कर्मकाण्डनिष्णाता भृतकाध्यापको वर्तते, सस्कृतमेवाध्यापयति च । कनीयान् पीताम्बरशास्त्री स्वतन्त्रप्रज्ञ कविकर्मणि कुशलो मनस्वी चास्ते । द्वावपि पितृचरणसरणिमनुसरन्तौ गीर्वाणवाण्या महान्तमुपकार कुरुत. ।

---

## सर्वेश्वरपण्डित

पुण्यशीलस्य विदुष आत्मज सर्वेश्वरपण्डितो राजनीतिनिष्णातो ज्योति-शास्त्रे कर्मकाण्डेषु च विशेषज्ञोऽभवत् । राज्ञ, महाराज्ञ्यश्च सर्वास्तस्य शिष्या आसन् । असौ महाराजान्त पुरे प्रत्यह पौराणिकी कथा श्रावयति स्म । प्रजास्वपि तस्य प्रभूततमा शिष्या आसन् । असावेकाशीतिवर्षवयसि नन्दग्रहविहगेन्दुमिते (१९९९) वैक्रमाब्दे लोकान्तरमगात् ।

---

परिचय —२२७ पृष्ठे



प० श्रीसन्तरामश्रोत्रिय

परिचय —२२८ पृष्ठे





राजपण्डित श्रीसर्वेश्वर सपुत्र.

## जम्बूप्रदेशे जातानां तत्र विहितसंस्कृतकार्यकलापाना वा विदुषाम्
## अकारादिक्रमानुगता द्वितीया सूची



१ ईश्वरदास
२ काशीनाथ
३ कुलभूषण
४ कृपाराम
५ कृष्णकुमारवर्मा
६ केदारनाथशास्त्री
७. गङ्गादत्तशास्त्री
८ गङ्गाधरशास्त्री
९ गङ्गाराम
१०. गोकुलचन्द्रशास्त्री
११ गोविन्दाचारी
१२ गौरीशङ्करशर्मा
१३ घनश्यामशर्मा
१४ घनसारसिंह
१५ चन्द्रमौलिशास्त्री
१६ जगदीशचन्द्रशर्मा
१७ जगदीश्वरशास्त्री
१८ जगन्नाथो वासिष्ठ
१९ जगन्नाथशास्त्री
२० जयरामशास्त्री
२१ ज्वालासहाय
२२ दामोदरपण्डित
२३. दामोदरवैद्य
२४ दुर्गादत्तशास्त्री
२५ देवराजशास्त्री
२६ धूर्जटि, तद्द्राजाश्च❀
२७ नन्दलालवैद्य
२८ नन्दलालशास्त्री
२९ नित्यानन्दब्रह्मचारी
३० नीलकण्ठपण्डित
३१ पद्मनाभपण्डित
३२ परशुरामपण्डित
३३ परशुरामो वैद्यराज
३४ पूर्णचन्द्रशास्त्री
३५ बलदेवोपाध्याय, तत्पुत्राश्च❀
३६ बालकृष्णशास्त्री
३७ बालकृष्णशास्त्री एम्०ए०
३८ बैजनाथशर्मा
३९ भक्तरामशर्मा
४० भोलानाथशास्त्री
४१ मदनमोहनशास्त्री
४२. मूलचन्द्रशास्त्री
४३ मूलराजमल्हण
४४ मौलिराम
४५ रघुनाथशर्मा
४६ रघुनाथशास्त्री
४७ रमाकान्तशास्त्री
४८ रामकृष्णशास्त्री
४९ रामनाथशास्त्री
५० रामप्रपन्नशास्त्री
५१ रूपचन्द्रकविराज
५२. लक्ष्मणदत्तवैद्य

५३ लक्ष्मणशास्त्री
५४ लक्ष्मीदत्त
५५ लालचन्द्र
५६ वनमाली पण्डित
५७ वामदेवशास्त्री
५८ विद्यासागर
५९ विश्वनाथशास्त्री एम्०ए०
६० विश्वेश्वरशास्त्री
६१ विष्णुदत्तशास्त्री एम्०ए०
६२ विहारीलालशास्त्री
६३ श्रीवेदकुमारी एम्०ए०
६४ श्रीशकुन्तलाशर्मा
६५ श्रीशकुन्तला (सेठ)
६६ शम्भुनाथ
६७ शान्ता एम्०ए०
६८ शिवरामपण्डित
६९ शिवशङ्कर
७० शुकदेवशास्त्री
७१ शुद्धश्वरवर्मा
७२ श्यामलाल
७३ श्रीचन्द्रशर्मा
७४ सत्यपालशास्त्री
७५ श्रीसरला खोसला
७६ सीतारामशास्त्री
७७ सुनाकी कवि
७८ सुशीला तुली
७९ संसारचन्द्रमगोत्र
८० संसारचन्द्रशास्त्री
८१ हरदत्तशास्त्री
८२ हरिरामशास्त्री




*(२) धनदेवोपाध्यायपुत्राश्चत्वार —
(क) पीताम्बर । (ख) नरोत्तम । (ग) जगदीश । (घ) निधिपति ।



## श्रीमान् ईश्वरदास

जम्बू-राजधानीस्थाया मलह्वोत्राप्रतालिकाया कश्चित् परमधार्मिको महाराजश्रीरणवीरसिंहस्य कृपापात्र लालाश्रीदेवीदत्तामल्ल समभूत्। असौ वैदिकसाहित्ये संस्कृतभाषायाञ्चाऽतीवाऽऽस्निह्यत्। राजकार्यातिरिक्तसमये गोकुलचन्द्रप्रभृतिप्रकाण्डविदुषा सङ्गेन तदुपदेशैश्च दैनिकसन्ध्यावन्दनादिकर्मसु परमेश्वरोपासनायां च परमश्रद्धावान् समभवत्।

वेदसिद्धान्तवेत्ता लालाश्रीदेवीदत्तामल्लो वाणवदविहगवसुमतीमिते (१९४५) वैक्रमे वत्सरे चैत्रमासस्य प्रथमदिने प्रतिपदि स्वधर्मपत्न्या ठाकुरीदेव्या पुत्ररत्नं जनयामास। यस्यैकादशेऽह्नीश्वरदास इति नामधेयमकार्षीत्। षष्ठे वत्सरेऽक्षरारम्भं विधाय पिता स्वयमेव वर्णमालामध्यापिपत्। यथासमयं वेदमन्त्रानधीयान पुनः पुनरभ्यस्यन्तेषु बहून् कण्ठे कृतवान्। ततः सर्वकारस्कूले प्रविश्य क्रमेण प्रथमादिकक्षा समुत्तीर्य पञ्चनदविश्वविद्यालयीयां मैट्रिकपरीक्षां प्रथमश्रेण्यां समुदतरत्। सर्वकारपाठशालाध्ययनसमये प्रत्युत्सवं संस्कृतेऽधिकाङ्कलाभविषयवान् संस्कृतस्य सम्यगुच्चारणभाषणविषयकांश्च पुरस्कारान् ससाधुवादमलभत। ततो महाराजश्रीप्रतापसिंहादेशेन विशेषन्यायाधीशस्य सेशनजजस्य प्रस्तोतृ(सिरस्तेदार)पदमलङ्कुर्वाण क्रमेण अधीक्षक(सुपरिण्टेण्डेण्ट)पदमध्यतिष्ठत्। ततः उच्चन्यायालय(हाईकोर्ट)-कार्यालयेऽपीदं पदमलमकार्षीत्।

श्रूयते—तत्रापि स्वाधिकारिणाऽधीनाश्च सति समये संस्कृतमहत्त्वं बोधयन् तत्रत्यैर्न्यायनयनिष्णातैरधिकारिभिरयं निगमागमानुरागी 'महापण्डित' इति परस्परमभाणि। सर्वकारकार्यालयात्लब्धविश्रामावकाशो द्विसहस्रतमे वैक्रमाब्दे जम्बूनगरस्थायामार्यकन्यापाठशालायां प्रबन्धकपदमधिष्ठाय स्वहृदयान्तर्निहितानि सूक्ष्माणि संस्कृतसाहित्यसमृद्धिबीजानि सर्वार्यकन्यानां संस्कृतिसम्पृक्तसाहित्यस्नेहसंसिक्ताविलेषु स्वान्तोर्वरकेदारेषु वप्तुं प्रायतत। शतशः सहस्रशश्चार्यकन्या अस्माद् विद्यालयादधीत्य पञ्चनदविश्वविद्यालयीयां मैट्रिकपरीक्षां समुत्तीर्णा गार्हस्थ्यकर्मणि प्रवृत्ताः स्वीयं दैनंदिनं सर्वमपि नित्यनैमित्तिकं कर्मजातं सम्पादयन्त्यः स्वशिशून् धार्मिकान् विधाय भारतवर्षं समुद्धर्तुं प्रवृत्ता भवन्ति। साम्प्रतमस्यामार्यकन्यापाठशालायां चतुर्दशशतं कन्याः पठन्ति। सर्वा अपि घोषाविश्ववाराप्रभृतीर्विद्याम्बुधिपारङ्गताः प्राचीना भारतीयनारीः स्मारयन्ति। संस्कृतमनधीयाना न काचिदपि कन्याऽस्यां पाठशालायां प्रवेशमर्हति। संस्कृताध्ययनम्, आर्यमहिलादर्श, चरित्रसंरक्षणम्, वैदिकधर्माचरणम्,

देशसेवा इत्येवमाद्यस्या शालाया प्रधानाद्देश्य सर्वं लालाश्रीमदीश्वरदासप्रयासेनैव सम्पाद्यते । अय बहुधाऽऽर्यसमाजपरिषद प्रधानोऽप्यभवद्, अतोऽय 'प्रधान इत्युपनाम्ना लोकं सम्बोध्यते । अस्य सस्कृतसाहित्ये विशिष्ट स्नेह । सम्प्रति पञ्चसप्ततिवर्षवयसि वर्तमाना अपीमे श्रीमदीश्वरदासमहाभागास्तरुणवत्सोत्साहा दिवानिश सस्कृतसाहित्यप्रचार प्रसारार्थं प्रयतमाना न विश्राम्यन्ति, न च श्रममनुभवन्ति, नापि ग्लानिं भजन्ते, प्रत्युत पर मोदमाना सर्वान् स्वसहचरानधिकारिणोऽपि च सस्कृतसेवायै समुत्साहयन्ति । एषा मुल्कराज, तिलकराज, बलराज इति त्रय पुत्रा अपि वैदिकधर्माऽऽचरणा दिल्लीसर्वकारकार्यालयेषूच्चोच्चपदान्यलङ्कुर्वाणा सन्ति ।



## श्रीकाशीनाथशास्त्री

अस्ति पञ्चनदेषु 'लूठडे नामधेय कश्चिद् ग्राम । तत्रत्य कश्चित् पाठकान्वयोद्भव **हरिदासशर्म्मा** सूरिकेसरिण केसर नाम तनय जनयामास । **केसराच्च 'जौहूशर्म्मा** ऽजायत । सोऽखिलविबुधलोकलोचनानन्द सहृदयहृदयकमलमुकुलविकासभास्कर काशीनाथनामधेय **राजकुमारी**नाम्न्या निजधर्मपत्न्या तनयमजीजनत् । स चायमेकविंशत्यधिकैकोनविंशतिशततमे (१९२१) वैक्रमाब्दे सहस्यसितदलीयप्रतिपदि गुरौ कुम्भलग्नोदये उदियाय । तज्जन्मनो द्वितीय एव मासे सुताननावलोकनसुखाद् वञ्चितोऽम्रियत स विद्वद्वरो **जौहूशर्म्मा** । श्रीकाशीनाथो निजनिलये जनन्युत्सङ्गे सवर्धमान कञ्चित् कालमत्यवाहयत् । ततश्च सञ्जाते पदक्रमणसामर्थ्ये स्वग्रामत क्रोशसप्तकदूरे शतद्रुतटीनिकटावस्थिते राजपुर(रायपुर)ग्रामे मातु कुल सदाचारादिभिर्महर्षिकल्पैर्मातामहै **पण्डितवरदिलाराम**शर्मभिर्लालित पालित कृतोपनयनसस्कारश्चासीत् । तत्रैव विद्वद्वर्य्यैर्मातुलैर्मायारामैर्वर्णाभ्यामुपक्रम्य क्रियमाणशास्त्रशिक्षोपक्रम क्रमश प्रतिभादि कारणकलापानुकूल्यात् सिद्धान्तकौमुदीमुक्तावल्यादिविभिन्नशास्त्रविषयप्रतिपादकान् निबन्धानसाधारणानपि साधारणानिव प्रतिभाहापोहशतैस्तत्त्ववत्ता वशीकरणन निजायुषो नवम वत्सर यापयामास । ततश्चोपक्रान्ते दशमे हायने तत्रैव मातामहानुज्ञा शिरस्युद्वहन् साप्ताहिक श्रीमद्भागवतपारायण निर्वर्त्य निखिलागमागाधाम्बुधीना पारदिदृक्षयाऽऽकुलितचेता, मुक्तये वाराणसीमधिवस्तुकामैर्मातामहै पण्डितदिलारामै साक काशीमयासीत् । तत्र चाहोरात्र यतमान आगमरहस्यतत्त्वान्वेषणे चोद्बुद्धसस्कारस्तदानीतनतत्रत्यविद्वद्रत्नमालिकानायकाना, पटवर्धनोपनामकाना तात्याशास्त्र्यपराभिधान**श्रीरामकृष्णदाक्षिणा** ब्रह्मचारिवर्यबूटारामकैलासचन्द्रशिरोमणिभट्टाचार्यज्यातिवि-

तजोभानुप्रमुखाना च चरणसरसिरुहयुगलानि सेवमानो निजप्रतिभालीलाभिस्तेषा प्रत्यह परमा मुदमातन्वानोऽल्पीयसैवाऽनेहसा व्याकरणन्यायज्योतिःशास्त्राम्बुधीना सततस्पर्श पर पारमगमत् । एवमन्यान्यपि शास्त्राणि ततस्तत्त्वोपसङ्ग्राह सगृह्य पर पाण्डित्यमवाप्नोत् । वाराणसीमेवाधिवसन् षोडशवर्षवयसि वर्तमानोऽय बडोदाराज्ये-व्याकरणपरीक्षा दत्त्वा सम्मानपारितोषिकातिशयोपलब्धिपुरस्सर वार्षिकवृत्तिमपि समध्यगच्छत् । तत सप्तदशे वर्षे निजपाणिग्रहनिमित्त गृहमगमत् । विलासपुरराज्ये-परमानन्दप्रज्ञाचक्षुर्मध्यस्थताया **राजगुरुपण्डितकेशवानन्दै** सम नूतनप्रलम्भीतोम्या व्याकरणस्य प्राचीनार्वाचीननिबन्धेषु विचारेण सम्मानातिशय लेभे । तस्मिन्नेव हायने त्रिगर्तदेशीयमण्डीराज्ये पूर्वोक्तप्रज्ञाचक्षु परमानन्दपण्डितान् राजसदसि विजित्य सम्मानधनादिभी राजपूजितोऽभूत् । पुनरेकविंशतितमे स्वायुषो वत्सरे बडोदाराज्य-विश्वविद्यालयीयसाहित्यशास्त्रिपरीक्षाम्बुधिमुदतरत् । तत स्वातन्त्र्येण सर्वत्र भारते परिभ्रमन् निजानन्यसाधारणाऽवबोधप्रथिम्ना सहस्रशो धनानि समुपार्ज्य स्वकुटुम्ब-पोषणादिकमकार्षीत् । एव गच्छति काले एकपञ्चाशदुत्तरैकोनविंशतिशततमे (१९५१) वैक्रमे वत्सरे राजस्थाने ( राजपूतानादेशे ) गत्वा तत्रत्यविभिन्नराज्येषु यथेच्छ विहरन् वर्ष यावत् सहस्रशो धन समचिनोत् । तत्रैक हास्यादिरसपूर्ण **'मरुशतक'** काव्यमपि व्यरचयत् । अश्विशरग्रहेन्दुमिते (१९५२) वैक्रमवत्सरे महीशूर-(मैसूर) राज्यमगमत्, तत्रत्यैर्विद्वद्भिर्व्याकरणन्यायसाहित्यज्योतिश्शास्त्रेषु परीक्षितो मध्येसभ प्रशसितोऽभूच्च । तत्रत्यो महाराजोऽपि सहस्रशो धन समर्प्यात्मनो देशस्य कुलस्य च तत्पदाम्बुजस्पर्शेन पुण्यतमत्व स्पष्टमाचष्ट । तत स्वेच्छया समयमतिवाह-यन्, स्वगृह एव वसन्, पूर्वजन्मकर्मवैगुण्याद् मुनिशरनन्देन्दुमिते (१९५७) वैक्रमाब्दे ज्येष्ठे मासे गृहभित्तिनिपातेन जङ्घाभङ्गव्यथामन्वभवत् । जम्बूस्थश्रीरघुनाथसस्कृतमहा-विद्यालयप्रधानाध्यापकश्रीगङ्गाधरशास्त्रिषु १९५८वैक्रमाब्दे तपसि मासि स्वर्ग प्रस्थितेषु तादृगविद्वद्नरगुणानुरागिणा महाराजश्रीप्रतापसिहनामादेशेन नन्दशर-विहगेन्दुमिते(१९५९)वैक्रमहायने माघस्य सप्तदशे (१७) दिवसे जम्बूपुरमेत्य श्रीरघु-नाथपाठशालाप्रधानाध्यापकपदमलमकार्षीत् । अत्र चाहर्निश निजालौकिकाखिलागम-गूढतररहस्याना करस्थामलकवत् प्रकाशनेन सर्वेषा विदुषामन्तेवासिना च मुद प्रवर्ध-यन् श्रीमन्महाराजाधिराजाना विशेषतया प्रियतमोऽभूत् । इह **'पीयूषगङ्गा'**नामक पर-मेश्वरस्तुतिपरक काव्य निर्माय महाराजश्रीप्रतापसिहाय समार्पयत् । पञ्चमतरङ्गीय-पञ्चविंशतितमपद्यपर्यन्त व्याख्यामपि चाकार्षीत् । गुणग्रहिणो महाराज श्रीप्रताप-सिंहोऽस्य काव्यस्य वैलक्षण्यमतिगम्भीरत्व च पर्यालोच्य स्वीये रणवीरप्रकाशनामके

मुद्रणालये १९६१वैक्रमाब्दे मुद्रापयितुं समादिदेश। मुद्रितश्चाभवत् तस्मिन्नेवाब्दे। परं धिक् परोदयाऽसहिष्णुं कृतान्तहतकं यो हि चतुष्षष्ट्युत्तरैकोनविंशतिशततमे (१९६४) वैक्रमाब्दे पौषशुक्लतृतीयायां सोमवासरे (तपस्य त्रयोविंशतितमे दिवसे) अत्रत्यान् विद्वद्वरानन्तेवासिनो गुणगृध्नून् महाराजाधिराजादिकांश्च सकलान् शोकसागरे निमज्ज्य स्ववयसश्चतुश्चत्वारिंशत्तमाब्दस्य पञ्चदशेऽह्नि जम्बूस्थश्रीरघुनाथचरणाधिकरण-पीठालङ्करणमणिं तं श्रीकाशीनाथं प्रसभमपाहरत्। पीयूषगङ्गाया अन्तिमपद्ये स्वपरिचयमयं स्वयमभ्यदधात्—

पञ्चापवक्त्रायितवीतनीवृद्वास्तव्यविद्वद्वरजौहुशर्म्मा।
आधत्त यं रामकुमारिकायां सोऽस्याः कविः पाठककाशिनाथः॥ इति।

---

## डा०श्रीकुलभूषणः

डा०श्रीकुलभूषणमहाभागः पञ्चनदप्रान्तस्थे 'वजीराबाद'नाम्नि नगरे १९४१-वैक्रमाब्दे जन्म गृहीतवान्। सर्वां शिक्षां भारते समाप्य, स्नातकीभूय च १९१०-ख्रिष्टाब्दे इंग्लैंडदेशीयलन्दननगराद् 'पी० एच० डी०' इत्युपाधिनाऽऽत्मानमलङ्कृत्यासौ पञ्चविंशतिवर्षवयस्कः काश्मीरान् प्राप्तवान्। काश्मीरसर्वकारेण चासौ स्वास्थ्याधिकारि-(हेल्थआफिसर)पदे नियुक्तः। शारदादेशं प्राप्य तस्य रुचिः संस्कृताध्ययनेऽङ्कुरिताऽभूत्। भगवत्याः शारदायाः प्रसादात् तस्य संस्कृतविदुषा गोविन्दराजानकेन सह सम्पर्कः समजनि। विद्वदनुचरेण श्रीकुलभूषणेन पण्डितोऽयं स्वनिवासस्थाने समामन्त्र्य संमानितः, यतस्तेनासौ बहुमूल्यरत्नवदासादित आसीत्। राजानकस्य तस्य गुरोरनुग्रहेण स्वान्तःप्रेरणया च कुलभूषणः संस्कृतभाषायाः पूर्णं ज्ञानम्, संस्कृते भाषणपटुताम्, तल्लेखने कौशलं चापि लब्धवान्। अनन्तरं च शारदादेशे (काश्मीरे) संस्कृतभाषा-प्रचाराय, भारतीयसंस्कृतेः संरक्षणाय च संस्कृतसाहित्यपरिषदः स्थापनाविषये गुरुणा राजानकगोविन्दपण्डितेन सह तस्य विमर्शोऽभूत्। ततश्च स्थानीयान् विदुषः समामन्त्र्य संस्कृतसाहित्यपरिषदः समुद्घाटनं श्रीकुलभूषणेन कृतम्। अस्याः परिषदः एव 'श्री'नाम्नी पत्रिका प्रकाशयितुमारब्धा, या सौरवर्षस्य चैत्रे, आषाढे, आश्विने, पौषे चेति मासत्रयेणैकस्याङ्कस्य प्रकाशनात् 'त्रैमासिकी' समभूत्। १९८८विक्रमसंवत्सरादारभ्य द्वादशवर्षपर्यन्तं पत्रिकासौ शुक्लपक्ष-ज्योत्स्नेव ववृधे।

१९९४विक्रमाब्दे 'श्री पत्रिकाया सम्पादक श्रीकुलभूषणमहाभाग स्वपदाद् विरतोऽभूत् । अत पत्रिकाया अग्रे सचालनस्य सर्वाणि द्वाराणि अवरुद्धान्यभूवन् । तथापि वर्षद्वयपर्यन्त पत्रिका सचालिता डा०कुलभूषणेनैवैकाकिना । परमेकाकिना कियत् कर्त्तु पार्यते ? । अनन्तर २०००विक्रमवत्सरे सहयोगिपण्डितानामौदासीन्यात् पत्रिकाया सचालनमवरुद्धमभूत् ।

---

### श्रीकृपारामशास्त्री

विहगाश्विनन्देन्दुमिते (१९२९) वैक्रमाब्दे चैत्रकृष्णपञ्चम्यामधिजम्बूनगर श्रीकृपारामशास्त्री प्रादुरभूत् । एतस्य पितृपादा श्रीबलदेवशर्म्माणो जम्बूप्रान्तीय-'प्लावाला'पत्तनवास्तव्या कुलीनब्राह्मणवशप्रसूता स्वविद्याबुद्धिबलेन महाराजश्रीरणवीरसिहस्य प्रीतिभाजनीभूय तत्प्रसादोपलब्ध श्रीरघुनाथमन्दिरस्थस्य महत सस्कृतपुस्तकालयस्याधिष्ठातृपदमध्यतिष्ठन् । इमे श्रीबलदेवशर्म्माण परमधार्मिका सर्वजीवहितैषिण प्राय सस्कृतसाहित्ये विशेषरुचयोऽभवन् । इमे बहूनि सस्कृतपुस्तकानि भाषान्तरेऽन्ववादिषु । इमे ज्येष्ठ स्वतनूज श्रीकृष्णराम पञ्चवर्षवयस्येव कृतोपनयनसस्कार स्वाङ्क निधाय लालनपुर सर पाणिनीयाष्टाध्यायीसूत्राणि यजुर्वेदमन्त्रानमरकोषानुष्टुप्पद्यानि च कण्ठीकर्तुमभ्यासिसन् । अष्टवर्षदेशीयमिम स्वात्मज श्रीकृपाराम श्रीरघुनाथसस्कृतमहाविद्यालये प्रधानाचार्यश्रीगङ्गाधरशास्त्रिणा तत्रत्यानामन्येषा विदुषा चान्तेवासित्वमानैषु । तत्राय श्रीकृपारामशास्त्री सौशील्यसौजन्यमौजात्यादिभिर्निजगुणैर्विदुषा स्वान्तान्त प्रविश्य तत्तच्छास्त्राणा गूढाभिप्राय बोद्धु प्रायतत । पितृप्रेरणया क्रमेण पञ्चनदविश्वविद्यालयीयप्राज्ञविशारदशास्त्रिपरीक्षा समुदतरत् । ज्योतिर्विदा श्रीलक्ष्मणशास्त्रिणा सकलशास्त्रपारङ्गताना परमतपस्विना श्रीकाशीनाथशर्म्मणा च सकाशात् गणितवेदान्तादिक समधीत्य सस्कृतसाहित्य परा प्रौढिमापन्न आग्लभाषामपि समध्येतु प्रायतत । क्रमेण मैट्रिक-एफ० ए०परीक्षे समुदतरत् । तत सर्वकारकार्यालये कार्यं कुर्वाण स्वसहचराणामन्येषाञ्च सविधे समागताना सस्कृतसाहित्ये रुचिमभिवर्धयन्नान् सस्कृतमपीपठन् । इमे परमतपस्विनस्त्रिकालसन्ध्योपासिन श्रीमद्भागवतादिभक्तिप्रधानग्रन्थाना परिशीलनेन भक्तिरसपयोधौ मग्ना भगवद्गुणकीर्तनेन नयनजलनिर्झरै स्वात्मन स्वसहचराणा चान्तर्मनामल प्रक्षालयन्त कमपि लोकोत्तरानन्दमनु-

भवन्तो दृष्टा केश्चित्सहृदयै । दैवात् स्वधर्मपत्न्या श्रीयमुनादेव्यामुपरतायां तु स्वयपाकिनो नक्तभोजिनश्च सवृत्ताः । इमे स्वधर्मपत्न्या सहैव प्राय. सर्वाणि तीर्थानि यथासमय यथाविधि समसेवन्त । सर्वकारकार्यालयकार्यकालेऽपि सति समये स्वसहचरान् भगवद्भक्तिविषयकसदुपदेशादिनाऽनुगृह्णन्ति स्म । सता समागमो, विदुषामुपासना, तपस्विना सेवा, देवप्रतिमाना पूजनम्, यथासम्भव पञ्चमहायज्ञानामनुविधानञ्चैषा दैनन्दिन कर्म समभवत्, व्रतोपवासदेवपूजानित्यनैमित्तिककर्माणि त्वातुराऽवस्थायामपि नाहासिषु । चलन्तोऽवतिष्ठमानाश्शयाना. कार्य कुर्वाणा अपीमे मनसा परमेश्वर सस्मरन्त "मन परमात्मनि करौ कर्मणी"त्याभाणक समार्थयन्त। इमे **देविकालहरी, गीतासार॰, स्तोत्रपञ्चामृतं, स्तोत्रत्रयी, पञ्चायतनदेवमानसपूजा, "सत्यं परं धीमहि", समस्याप्रकाशः, पीयूषगङ्गा** इत्यादीनि बहूनि भगवत्स्तुतिप्रधानानि लघुलघूनि पुस्तकानि समर्पीपदन् । किञ्च—**शिवमहिम्न स्तोत्रम्, दुर्गासप्तशतीति** पुस्तकद्वय दौर्गरभाषायामनूद्य प्राचकाशन् । वेदोपनिषत्स्मृतीतिहासपुराणरामायणमहाभारतश्रीमद्भागवतादिग्रन्थान् परिशील्य तेभ्य सदुपदेशप्रदवाक्यानि सङ्गृह्य "**धर्मसारसंग्रह**"नामधेय ग्रन्थ समचीकलन्, स चाद्यावध्यमुद्रित एव वर्तते । इमे श्रीकृपारामशास्त्रिण षोडशाधिकद्विसहस्रतमे (२०१६) वैक्रमे वत्सरे पौषमास्यवस्याया हरि स्मरन्तो वेदोपनिषद्वाक्यानि च समुदाहरत पुत्रादीनितरबन्धूश्च विहाय शिवसायुज्यमवाप्नुवन् ।

---

### श्रीकृष्णकुमारवर्मा धवनः शास्त्री

अस्ति दुर्गरेषु विद्या-बुद्धि-दया-दाक्षिण्यादिगुणचणा काचित् क्षत्रियाणा धवनाभिधा जाति । तस्या क्रमेण तुलसीरामाभिधो महामना जन्म लेभे । अयमार्यो वैदिक धर्ममनुसृत्य सर्वं नित्यनैमित्तिक कर्मजात विदधानोऽवशिष्ट काल स्वाध्यायाध्ययनसद्विचारपरामर्शसत्सङ्गसमाजसुधारादिभिरुत्कृष्टमानवकर्मभिर्व्यतियापयति । साम्प्रतमय लब्धवयस्कजीविक पूर्व जम्बूकाश्मीरसर्वकारसेवा कुर्वाणो वर्षस्यैक मासषट्क दुर्गरेषु, अपर च काश्मीरेषु सर्वकारकार्यालये कार्यमकार्षीत् । अयमस्माक चरितनायक. श्रीकृष्णकुमार काश्मीरेषु श्रीनगरे रसाश्विविहगवसुमतीमिते (१९२६) ख्रिष्टाब्दे तदीयनवम्बरमासस्य त्रयोदश (१३) तारिकाया श्रीतुलसीदासाज्जनिमग्रहीत् ।

श्रीतुलसीदास प्रथममिमं स्वतनूजं कृष्णकुमारं संस्कृताक्षराण्यशिक्षिक्षत्। ततो जातबोधोऽयं कृष्णकुमारः श्रीरणवीरहाईस्कूलसंस्कृतपाठशालीयाध्यापकेभ्यः श्रीकाकारामशास्त्रिप्रभृतिभ्यो विद्वद्भ्योऽधीत्य क्रमेण पञ्चनदविश्वविद्यालयीयप्राज्ञविशारदशास्त्रिपरीक्षाः समुदतरत्। आङ्गलभाषां राष्ट्रभाषां चाधीत्य क्रमेण समग्रविषये पञ्चनदविश्वविद्यालयीय-मैट्रिक-एफ० ए०-बी० ए० परीक्षाः समुदतारीत्। तदनन्तरं संस्कृते एम्०ए०परीक्षां समुत्तीर्य हिन्द्याम् एम्०ए०परीक्षां प्रभाकरपरीक्षाञ्च पञ्चनदविश्वविद्यालयीयां समुदतरत्। पञ्चदश हायनान्यस्य यत्र तत्र कालेजेष्वध्यापयतोऽतीतानि। कतिपयवर्षाणि लुधियानार्यकालेजे, अम्बालास्थे डी०ए०वी० कालेजेऽप्यध्यापिपत्। सम्प्रति पञ्चाम्बुराजधान्यां चण्डीगढे डी०ए०वी०कालेजे संस्कृतमध्यापयति। पञ्चाम्बुविश्वविद्यालयीयसंस्कृतविभागस्य (बोर्डस्य) तथाऽखिलभाषाविभागस्य च सदस्यतामावहति। किं चायं कुन्दमालानागानन्दनाटिकयोः, दूतवाक्यस्य च क्रियाकारकाद्यन्वयदुरूहपदव्याकरणव्युत्पत्तिगूढाभिसन्धिसूक्ष्मेक्षिकालङ्काररसाद्यभिनिर्णयोपेते संस्कृतहिन्दीटीके अपि सम्पाद्य संस्कृतसाहित्ये भक्तिं प्रदर्शितवान्। अयं सहृदयो विनयावनतः, सुशीलो विद्याव्यसनी, सदाचारसद्विचारवान्, ग्रहणधारणधनो लेखनकलाकुशलः, कर्मण्यः, समुदारः, परिचयपेशलः, सरसमधुरमितभाषी, अध्यापनपरिपाटीपटुः, परमपितृभक्तश्च वर्तते।

---

### श्रीकेदारनाथशास्त्री, एम्०ए०, एम्०ओ०एल्०

योगाचार्यस्य श्रीरघुनाथशास्त्रिणः पराशरस्य व्यास इव लेखनकलाकुशलः, बृहस्पतिरिव प्रवचनपटुः, पुरातत्त्वानुसन्धानविचक्षणः केदारनाथो नाम सुत आसीत्। स्वज्येष्ठपितृव्यश्रीहृषीकेशसाहाय्येन श्रीकेदारनाथोऽष्टवर्षदेशीय एव श्रीरणवीरपाठशालायां प्रविश्य, अक्षरारम्भत एव क्रमेण प्रथमादिश्रेणीः समुत्तीर्य क्रमेण पञ्चनदविश्वविद्यालयीयाः प्राज्ञ-विशारद शास्त्रिपरीक्षाः समुदतारीत्। जन्मान्तरसंस्कारैः परमेश्वरार्पितप्रतिभया, पूर्वजन्मकृतकर्मफलैः, परमतपस्विनां पितृपादानां शुभाशीर्भिर्वा, समुद्बुद्धसंस्कारोऽयं श्रीकेदारनाथशास्त्री संस्कृते एम्०ए०, एम्०ओ०एल्० इति परीक्षाद्वयमपि समुत्तीर्णवान्। पूर्वं जम्बूस्थश्रीरघुनाथसंस्कृतमहाविद्यालयस्य प्रबन्धकपरिषदां मन्त्रिपदमध्यतिष्ठत्। ततः समागते स्वप्रतिभोन्मेषावसरे भारतसर्वकारस्य केन्द्रीयशासनान्तर्गतपुरातत्त्वविभागे उपसञ्चालक (डिप्टीडायरक्टर) पदमधिकृत्य महता प्रयत्नेन

तत्र बहूनि प्रत्नतत्त्वानुसन्धानकार्याणि समकार्षीत्, पुस्तकानि च बहूनि यथाधोनिर्देशं समलेखीत्—

१. सिन्धु-संस्कृति-समीक्षा (संस्कृते)
२. सिन्धुसभ्यता का आदिकेन्द्र हड़प्पा (हिन्दीभाषायाम्)
३. भारतीय सांस्कृतिक परम्परा (हिन्दीभाषायाम्)
४. न्यू लाईट आन दि इंडस सिविलाइजेशन (आंग्लभाषायाम्)

आंग्लभाषातो हिन्दीभाषायां तदनूदितानि पुस्तकानि—

| | | | |
|---|---|---|---|
| १. अजन्ता | (पथप्रदर्शिका) | ६. कुशीनगर | (पथप्रदर्शिका) |
| २. इलोरा | ,, | ७. साची | ,, |
| ३. श्रावस्ती | ,, | ८. नालन्दा | ,, |
| ४. खजुराहो | ,, | ९. भारतीय पुरातत्त्व ( 'इंडियन आक्यालोजी' इति ग्रन्थस्यानुवाद.) | |
| ५. राजगृह | ,, | | |

अन्तिमस्य पुस्तकस्य लेखकौ डा० वासुदेवशरणाग्रवाल-केदारनाथशास्त्रिणौ समवेतरूपेण स्तः। असौ केदारनाथशास्त्री प्रत्नविदामग्रगण्यः पुरातत्त्वानुसन्धानेन सप्रमाणनिर्देशं सोपपत्तिकं च भारतीयसंस्कृतेर्वैशिष्ट्यं संसाध्यास्या विश्वसंस्कृतिभ्यः प्राचीनतमत्वमपि सुष्ठु व्याकरोत् । एवं भारतीयसंस्कृतिविषयकमज्ञातसत्यालोकं विद्वज्जनेषु प्रकाश्य स्वकर्तव्यपालनेन देशस्य महान्तमुपकारमकार्षीत् । एवमयं महानुभावो बहून्यनुसन्धानविषयकाणि पुस्तकानि संलिख्य पारितोषिकाणि समलभत। साम्प्रतमनुसन्धानकार्यात्पुष्कलवयस्कवृत्त्या मुक्तिं समधिगत्य स्वजन्मभुवं जम्बूनगरं स्वकर्मभिः प्रत्युपकरोति ।'डोगरा आर्ट गेलरी'संस्थायाः संरक्षकसमितेः सदस्यो भूत्वा महाराजश्रीकर्णसिंहस्य संरक्षकतायां समुद्घाटितायाः 'डोगरी रिसर्च इन्स्टीच्यूट'-संस्थायाः प्रधानपदमधिकृत्य चानुसन्धानकार्यं सम्पादयन् सुखेन जीवति ।

——

## गङ्गादत्तशास्त्री ऋग्वेदाचार्य, एम्०ए०

जम्बूनगरादुत्तरस्या गव्यूतित्रयदूरे 'अम्वगढोटा' नामकोऽतिप्राचीनो ग्रामो विद्यते । तत्र हाकिमचन्द्रनामधेयो ब्राह्मणो ब्राह्मचा वृत्या जीविका निर्वहन् सुखमवात्सीत् । स च भूनेत्रनन्देन्दुमिते (१६२१) खिष्टाब्दे पुत्ररत्नमजीजनत्, 'गङ्गादत्त' इति च तस्य नाम व्यधत्त । गङ्गादत्त प्रतिदिनमुपचीयमानावयव पित्रोर्हर्षप्रकर्षमकार्षीत् । पर बाल्य एव तेनातिवत्सलेन पित्रा व्ययुज्यत । तदनन्तरमस्य जननी लक्षणै शुभोदर्कमनुमाय कृतोपनयनसस्कारमिम सस्कृतमध्येतु श्रीरघुनाथ-सस्कृतपाठशालाया प्रावेशयत् । श्रीगङ्गादत्तो गुरुशुश्रूषया, प्रतिभावैभवेन, स्वशुभा-यत्या वा पञ्चनदविश्वविद्यालयीया प्राज्ञविशारदशास्त्रिपरीक्षा. क्रमेण समुदतरत् । ततो विहगगुणनन्देन्दुमिते ( १६३६ ) खिष्टाब्दे जम्बूकाश्मीरस्थराजकीयधर्मार्थ-विभागतश्छात्रवृत्ति लब्ध्वा विशेषशास्त्राण्यध्येतु वाराणसीमध्यवात्सीत् । तत्र हिन्दू-विश्वविद्यालये प्रविश्य ऋग्वेदाचार्यपरीक्षा प्रथमश्रेण्या समुदतरत् । पुन कञ्चित् काल श्रीरघुनाथसस्कृतमहाविद्यालये वैतनिकी भृतिं कृत्वा महाराजश्रीकर्णसिंहसकाशाद् भूयसी छात्रवृत्तिमादाय पुनर्वाराणस्या हिन्दूविश्वविद्यालये प्रविश्य सस्कृते एम्०ए०-परीक्षा प्रथमश्रेण्या समुदतारीत् । अथ दश वर्षाणि काशीहिन्दूविश्वविद्यालयमध्य-तिष्ठत् । तत्रत्यकाग्रेससस्थाया सत्यग्रहान्दोलनेषु विशेषतया द्विचत्वारिंशदधिकैकोन-विंशतितमे (१६४२) खिष्टाब्दे 'भारत त्यजत' (भारत छोडो) इतिनाम्नि आन्दोलने तनुमनोभ्या सहयोगमदात् । वर्षद्वय तत्रत्यसाहित्यिकसमिते प्रधानपद-मप्यध्यतिष्ठत् । अस्य विदुषो ज्योतिष्मती-रत्नाकरपत्रिकयो सस्कृतभाषामया प्रभूता लेखा प्रकाशिता अभवन् । अथ हिन्दूविश्वविद्यालयीयसस्कृतच्छात्रसभामण्डलेषु बहुधा सस्कृतभाषणै, प्रतियोगितानिबन्धै, शास्त्रार्थैश्च पुरस्कारग्रहणपुर सर सफलोऽभवत् । स्वर्गीयैर्महामनोभि श्रीमदनमोहनमालवीयैर्बहुधा साधुभिराशीर्भिश्चान्वग्राहि । अनेन पञ्चनदीयमासिकचरित्रनिर्माणाङ्क तथा जम्बूस्थ'भारतीदीपकयोजना'भिध-मासिकपत्रे च प्रभूततरा लेखा कविताश्च प्रकाशिता । जम्बूकाश्मीरिकाऽऽकाश-वाण्या प्रभूततराणि कवितावार्तारूपकभाषणानि प्रसारितानि, ऐतरेयब्राह्मणविषये च दीर्घकायो निबन्धोऽप्यलेखि । 'पद्याञ्जलि'नाम्नि समाचारपत्रेऽभिनवगुप्तमम्मटोव्वटाना काश्मीरिकविदुषा साहित्यिकजीवनविषयका गद्यनिबन्धा कविताश्च प्रकाशिता । अस्य 'कहानीसग्रह', 'कवितासग्रह' 'उपन्यासदर्शक' एतत् पुस्तकत्रय प्रकाशित वर्तते ।

श्रीगङ्गादत्तशास्त्री अङ्गवेदविहङ्गवसुमतीमिते (१६४६) खिष्टाब्दे लवपुरे

दयानन्दब्राह्ममहाविद्यालये कतिपयमासानाचार्यपदमध्यतिष्ठत् । सप्तचत्वारिंशदधिकैकोनविंशतिशततमख्रिष्टाब्दाद् ( १९४७ ) आरम्य पञ्चपञ्चाशदधिकैकोनविंशतिशततमाब्द(१९५५)पर्यन्त श्रीरघुनाथपाठशालायाम् ऋग्वेदाध्यापकोऽभवत् । सप्तपञ्चाशदधिकैकोनविंशतिशततमात् (१९५७) ख्रिष्टाब्दादारभ्य काश्मीरेषु सर्वकारकालेजे संस्कृतप्राध्यापकपदमध्यतिष्ठत्, हिन्दी संस्कृत चाध्यापिपत् । वर्षमेक काश्मीरेषु हिन्दीसाहित्यसम्मेलनस्यापि प्रधानोऽभवत् । साम्प्रतमपि काश्मीरसंस्कृतसाहित्यसम्मेलनस्य प्रधानो वर्तते । अयमतीव विनीत , सुशीलो, विद्याव्यसनी, कर्मण्य , अध्यापनचातुरीधुरीण , लेखनकलाकुशलो विद्यागुणैरधिकारिणोऽन्तेवासिनश्च तोषयति । एतस्य विशेषेण प्रशसनीया निम्नाङ्किता शिष्या सन्ति—

१ श्रीमहाराज्ञी यशोराज्यलक्ष्मी , जम्बूकाश्मीरराज्यस्य ।

२ श्रीसत्यपालशास्त्री एम्०ए०, प्रभाकर , संस्कृतप्राध्यापको राजकीयकालजे पुञ्छस्थे ।

३. श्रीशम्भुनाथशास्त्री एम्० ए०, संस्कृतप्राध्यापको जम्बूकाश्मीरविश्वविद्यालये चेति ।

---

## श्रीगङ्गाधरशास्त्री

श्रीगङ्गाधरशास्त्रिणो जीवन महत्त्वपूर्णम्, आदर्शभूत चात एव सर्वेषामनुकरणीय वन्दनीय चाभूत् । एतस्य जनिर्जम्बूमण्डलान्तर्गतशोभाञ्जन(सुहाञ्जना)-ग्रामवास्तव्याना तदानी श्रीरघुनाथमन्दिराधिष्ठातृपदमधितिष्ठता श्रीगोकुलचन्द्रविदुषा भवने शून्यनेत्राङ्कभू(१९२०)मिते वैक्रमाब्दे, आश्विनशुक्लाष्टम्या प्रात पञ्चवादनवेलाया समभूत् । पञ्चमे वर्षे यथाशास्त्रमुपनीत पितृपादानामेव सविधे सम्पूर्णयजुर्वेदस्याध्ययनमकार्षीत् । शतपथ-गोपथब्राह्मणे अप्यधीतवान् । तदनु स्वपितृचरणेभ्य , तात्कालिकेभ्योऽन्येभ्यश्च विद्वद्भ्यो भाष्यान्त व्याकरणम्, लघुशब्देन्दुशेखर-परिभाषेन्दुशेखर लघुमञ्जूषाप्रभृतिनव्यव्याकरणग्रन्थान्, पूर्वमीमासोत्तरमीमासे, साख्य योगन्याय वैशेषिकदर्शनानि च समध्यगीष्ट । इमा सम्पूर्णा शास्त्रसम्पत्तिमधिगम्य, तात्कालिकाना सुप्रसिद्धाना वैदिकशिरोमणीना सकाशात्साङ्ग सविस्तर कर्मकाण्डशास्त्र समधीत्य, जम्बूराजधानीस्थविद्वद्गणेषु वैदिकेषु च प्राथमिकी प्रतिष्ठा समवाप्य च प्राय

समस्ते भारते विद्वन्मान्य समभूत्। पठनानन्तर सर्वसौभाग्यसम्पन्नोऽप्यय जीवन-पर्यन्त छात्रेभ्यो वेदवेदाङ्गकर्मकाण्डधर्मशास्त्रादिशिक्षा प्रयच्छन् सर्वथा स्वाध्याय-निरत एवासीत्। अस्य वैदुष्येण प्रीतमानसैं राजाधिराजश्रीप्रतापसिंहमहानुभावै श्रीरघुनाथपाठशालायामय व्याकरणाध्यापकपदे नियुक्तो महता गौरवेण कार्यं सञ्चा-लयति स्म । सिद्धान्तकौमुद्यादिमहाभाष्यान्तानामन्येषा च व्युत्पादकाना काव्य-साहित्यदर्शनग्रन्थाना पाठने परमविख्यातकीर्ति समभवत्। विद्वद्वरस्यास्य वेदार्था-ध्यापने, व्याकरणस्य प्रयोगसाधने, फक्किकाग्रन्थिविश्लेषणे, कर्मकाण्डस्य जटिल-विषयाणा मर्मोद्घाटने च पर कौशलमासीद्। अतएव तस्य जम्बूराजधान्या सस्कृत-विद्वत्सु अद्वितीय साम्राज्यमासीत्। यादृश पाण्डित्य तादृशमेवौदार्यम्, सहृदय-त्वम्, परोपकारिता, दयालुता चास्मिन्नासीत्। प्रायो जम्बूनगरवास्तव्या प्रधानश्रेष्ठिनो महाराजाधिराजश्रीप्रतापसिंहस्तन्मन्त्रिणश्च तात्कालिका एतदादेशपरायणा पादानुरक्ता शिष्याश्चासन्।

एव श्रूयते—कदाचिद्धर्मावतारा महाराजश्रीप्रतापसिंहस्तीर्थस्नानोद्देश्येन वाराणसीमगमत्। इम पण्डितप्रकाण्ड श्रीगङ्गाधरशास्त्रिणमपि सह निनाय। असौ तत्रत्याना विदुषा परिषदमचीकरत्। तस्या प्रधानपद महामहोपाध्यायान् श्रीशिव-कुमारशास्त्रिणोऽध्यतिष्ठिपत्। विदुषा शास्त्रार्थशुश्रूषया महाराज स्वयमपि ता परिषद-मध्यतिष्ठत्। प्रवृत्ते शास्त्रार्थे महाराजश्रीप्रतापसिंहो य स्वयमपि न्यायव्याकरणादिषु पर निष्णातो गुरुमुखादधीतशास्त्र सप्रश्रय परिषद प्रधानपदमारुढान् श्रीशिवकुमार-शास्त्रिणोऽवादीत्—"भगवन्! अय गङ्गाधरशास्त्री अद्यापि बाल्ये वर्तमानो भवता शिष्यकल्पोऽस्माक पण्डितो वर्तते। य कमपि विषयमवलम्ब्य किञ्चित्प्रष्टव्यो येनास्य पाण्डित्य सुपरीक्षित स्याद्" इति। शिवकुमारशास्त्रिणोऽवादिषु—"राजन्! अह समुत्तरीतुमेव जानामि न प्रष्टुम्, अतो यदय प्रक्ष्यति तदह समुत्तरिष्यामि। गङ्गाधरशास्त्रिन्! पिप्रच्छिषसि चेत् किञ्चित् पृच्छ" इति। ततो गङ्गाधरशास्त्री—'अर्थवदधातुरप्रत्यय प्रातिपदिकम्' इति पाणिनीयसूत्रमवलम्ब्य होराद्वय यावत् श्रीशिवकुमारशास्त्रिमहोदयै सह व्यवदत, येन प्रीता शिवकुमारशास्त्रिणो "नाय बाल, अपि तु पाणिनिकात्यायनपतञ्जलिष्वन्यतम इव प्रतिभाति" इति साधुवादपुरसरम-वादिषु। जम्बूस्था प्राय सर्वेऽपि वृद्धपण्डिता गङ्गाधरशास्त्रिणा साक्षात् परम्परया वा शिष्यानुशिष्या सन्ति तेषु केचिद्दिव गता। एषा बलरामकृष्णाविव द्वौ सुतौ देवराज-बालकृष्णावास्ताम्। द्वावपि दैवदुर्विपाकेन मध्यायुष्येव कालकवलितावभूताम्।

तयोर्बालकृष्णस्य सुतः श्रीशङ्करशास्त्री साम्प्रतं श्रीरघुनाथमन्दिरस्याधिष्ठातृपदमधितिष्ठति । इमे श्रीगङ्गाधरशास्त्रिणोऽकस्मादेव महामारीरोगग्रस्ताः समभूवन्, वसुबाणाङ्कभूमिते (१९५८) वैक्रमाब्दे च फाल्गुनमासे भौतिकशरीरलीलां समाप्य स्वात्मनि स्थितिमकार्षुः ।

---

## महाकविः श्रीगङ्गारामः

जम्बूनगरस्थदेवीदत्ततनुजन्मा कविवरः श्रीगङ्गारामो राजाधिराजमहाराज'श्रीरणवीरसिंहे जम्बूकाश्मीरमहीं शासति तत्पण्डितेष्वन्यतमोऽभूत् । असौ पण्डितवरिष्ठः प्रायः सर्वशास्त्रनिष्णातोऽपि विशेषतो धर्मशास्त्ररुचिरासीदिति तत्सङ्गृहीतादेकनवत्यधिकषोडशशत(१६९१)पत्रात्मकाद् धर्मशास्त्रमहानिबन्धात् प्रतीयते । तेन हि आह्निक-प्रायश्चित्त-संस्कार-दान-श्राद्धात्मकः श्रीनृपवररणवीरसिंहनिर्मापितो' धर्मशास्त्रप्रपञ्च'ख्योमहाग्रन्थो निर्मितः । तस्य प्रथमो विषयः-आह्निकम्, द्वितीयः-प्रायश्चित्तम्, तृतीयः-संस्कारः, चतुर्थः-दानम्, पञ्चमः-श्राद्धम् इति । अयं वर्णाश्रमधर्माणामपि निरूपणमकार्षीत् । अस्य महाकवेः समयादिकं तु नाधिगम्यते ।

---

### *श्रीगोकुलचन्द्रशास्त्री*

अयं विद्वद्वरो जम्बूप्रान्तान्तर्गतशोभाञ्जन(सोहाञ्जना)नाम्नि ग्रामेऽनुमानतोऽशीत्युत्तराष्टादशशततमे ( १८८० ) वैक्रमेऽब्दे सुदर्शनपण्डितात् सरस्वतीदेव्यां समुद्भूतः । षष्ठे वत्सरेऽक्षरारम्भं विधायास्य पितृचरणास्त्रयोदशवर्षवय.पर्यन्तं स्वयमेतमध्यापयामासु.।. दैवयोगात् पितृपादैर्वियुक्तोऽयं [illegible] वर्षे [illegible] वाराणसीमयासीत् । तत्र व्याकरणादीनि वेदाङ्गानि यजुर्वेदसंहितां च सम्पूर्णां गुरुमुखात् सस्वरमधीतवान् । निशि मृण्मयं दीपकमपि नैतेन लब्धं ! कुतस्तैलं, प्रकाशो वा ? अतो निशि प्रकाशार्थं शुष्कपत्राण्यादाय कस्मिंश्चिद् भग्नदेवालये याचितवह्निना गोमयान् सन्दीप्य तस्यैकस्मिन्पार्श्वे स्वासनासीनो द्वित्रपत्राणि संधुक्षितगोमयेषु निक्षिप्य वक्त्रवायुना तानि प्रज्वाल्य तत्प्रकाशेन स्मरणीयविषयपद्धतीः, मन्त्रान्, सूत्राणि वा दृष्ट्वा कण्ठस्थीकरणाय पुन.पुनरावर्तयति स्म । एवं महता कष्टेन सर्वत्र शास्त्रेषु निष्णातोऽयं व्युत्पत्तिवादादिव्युत्पत्तिप्रधानग्रन्थान् समधीत्य विद्वत्परिषदि

परिचय —११२ पृष्ठे



प० श्रीरामस्वामी

परिचय —२४२पृष्ठे



प० श्रीगोकुलचन्द्रः

परिचय —२१५ पृ ठे



पं० कृपारामशास्त्री

महतो महतो विदुष परिजिगाय । अध्यापनकौशल त्वमुष्य लोकोत्तरमेवासीत् । मासेन मासद्वयेन वा बोध्यान् विषयान् पञ्चषैरेव दिवसैश्छात्रान् बोधयितु प्राभवत् । सप्ताधिकैकोनविंशतिशततमे (१९०७) वैक्रमाब्दे पुन स्वजन्मभूमिमागच्छन्तमध्वनीम कश्चित् तेज सिंहाभिध सामन्त सविनयमनुनीय स्यालकोटनगरे छात्रानध्यापयितु स्वीयपाठशालाया प्रमुखाध्यापकपदे न्ययुङ्क्त । तत कस्यचिच्चूडसिंहनाम्न सामन्तस्य प्रार्थनया महाराजश्रीगुलाबसिंहेनाहूतश्चन्द्रभागातटस्थेऽग्ननूरनाम्नि नगरे पाठशाला निर्माय्याध्यापयितु प्रमुखाध्यापकपदे न्ययुज्यत । ततस्तत्प्रेरणया 'चिडयाई' नाम्ना प्रसिद्धे ग्रामे कञ्चित्कालमध्युषित । पुनर्महाराजगुलाबसिंहो गुरोर्वेदान्तिनो दाक्षिणात्यब्रह्मचारिणो निर्देशेन सादरमाहूय दुर्गासिंहप्रासादैकदेश एव पाठशाला विधाय तत्राध्यापयितुमिममध्यापकपदे न्ययुङ्क्त, छात्राणा भोजनवस्त्रादिप्रबन्धमप्यकार्षीत् । द्वादशाधिकैकोनविंशतिशततमे (१९१२) वैक्रमवत्सरे महाराजश्रीरणवीरसिंहस्य राज्याभिषेकवेद्यामसावाचार्योऽभवत् । शतशो विद्वासस्तस्यानुचरा आसन् । तस्मिन्नेवाब्द श्रीरघुनाथमन्दिरारम्भायाधारशिलास्थापनमकारयत् । पौषे च श्रीरणवीरसिंहस्य पौष्य स्नानमकारयत् । स्नानस्थाने कुटीर निर्माय तत्रैवातिष्ठत् । पञ्चदशाधिकैकोनविंशतिशततमे (१९१५) वैक्रमवत्सरे वैशाखमासे श्रीरघुनाथमन्दिरप्रतिष्ठामप्ययमेवाचीकरत् । तदानी श्रीरघुनाथमन्दिराधिष्ठातृपदमाप्तु सर्वशास्त्रपारदृश्वा श्रीगणशशास्त्री स्वीयवैदुष्याविष्करणायैभि सह विवाद कर्तुमैच्छत् । गोकुलचन्द्रशास्त्रिणोऽपि विद्वत्परिषदि तत्पराजिगीषा चक्रु । शुकदेवादिषु मध्यस्थेषु तयो सप्त दिनानि शास्त्रार्थ समभूत् । ततोऽष्टमेऽह्नि 'जित गोकुलचन्द्रेण' इति शुकदेवादयो विद्वासो निर्णिन्यु । ततो न केवल *श्रीरघुनाथमन्दिराधिष्ठातृपदमपि तु श्रीरघुनाथसंस्कृतमहाविद्यालयस्य प्रधानाचार्य*पदमपीम एवापु । एव लब्धालौकिकवाग्विभवा इमे संस्कृतसाहित्यस्य महान्तमुपकार चिकीर्षन्तो दिवानिशमध्यापनपरा एव बभूवु । एषा शतशो विद्यार्थिन सर्वत्र भारते लब्धप्रतिष्ठा आसन् । *मन्ये सर्वत्र पञ्चनदेषु पाणिनीयव्याकरणमिम एव प्राचीचरत् ।* अन्ते बृहस्पतिकल्पस्य गङ्गाधरनामधेयस्य पुत्रस्य विरहेण दूयमानचेतस क्रमेण क्षीयमाणा स्वायुषो नवतितमे हायने भौतिकशरीरमपहाय शिवसायुज्यमापु ।

एवमप्याख्यायते—"विद्यैव परम तप " इत्याद्याप्तवचासि हृदि निधायाध्ययनव्यवच्छेदो न भवेदित्यतस्तत्रतत्र क्षेत्रेष्वयत्नप्राप्तमपि अध्ययनकालव्यवधायक भोजन विहाय तस्यैव भग्नदेवालयस्यैकदेशे स्थापितस्वयम्भूलिङ्गप्रतिमामर्चितु तदुपरि भक्तप्रवरैर्न्यस्तान्कतिपयतण्डुलकणान् आदाय लघुनि करके गोमयाग्निना पक्त्वा प्रतिदिन बुभुक्षाव्याधि ते शमयन्ति स्म इत्यहो तपस परा काष्ठा ! । तस्यैवोग्रतपस फलमिदम् ।

किमधिकेन काश्या यथा दौर्गरा काकारामशास्त्रिणस्तात्कालिकविद्वत्सु सर्वोच्चपदं तदर्चां च लेभिरे, तथैवेमेऽपि समभूवन् ।

---

## श्रीगोविन्दाचार्यः

विद्याव्यसनितया प्रसिद्धो महाराज श्रीरणवीरसिंह पञ्चदशाधिकैकोनविंशतिशततमे (१९१५) वैक्रमे वत्सरे प्रभूततरविद्वद्वरविभूषितामेका श्रीरघुनाथपाठशाला संस्थाप्य तस्या चतुर्वर्णेतरमानवमाणवकप्रवेशानर्हत्व दु खेन समीक्ष्य मुन्यवनिनन्देन्दुमिते (१९१७) वैक्रमे हायने स्वीये श्रीरणवीरहाईस्कूले मानवमात्रमाणवकप्रवेशार्हामपरामपि श्रीरणवीरपाठशाला जम्बूराजधान्या संस्थापितवान् । तस्या न्यायनयनिपुण, साहित्यशास्त्रेऽलङ्कर्मीणं, रसप्रवीण, मीमासामासलशेमुषीक, वैयाकरणकेसरिण, दाक्षिणात्य विद्वास **श्रीगोविन्दाचारिण** प्रधानाचार्यपदमध्यतिष्ठिपत् । तत्साहाय्यसम्पादकौ द्वावपरौ विद्वासौ च न्ययुङ्क्त । असौ श्रीगोविन्दाचारिनामधेय प्रधानाचार्यो व्याकरणसाहित्यन्यायवैशेषिकपूर्वोत्तरमीमासासाख्ययोगधर्मशास्त्रतन्त्रप्रभृतिशास्त्रेषु लब्धप्रतिष्ठोऽपि बाधान्तनव्यन्यायग्रन्थान् न्यायकुसुमाञ्जलिप्रभृतीन् समधीत्य पञ्चलक्षणी-जागदीशी-गादाधरी-सिंहव्याघ्रप्रभृतिग्रन्थेषु विशेषाभिलापनकौशलमध्यगच्छत् । असौ पण्डितप्रकाण्ड शास्त्रार्थसमरमहारथान् विजेतु शतश पूर्वोत्तरपक्षकोटीर्जिह्वाग्रनर्तकीर्विधाय पुन. पुनरभ्यस्यन्नद्यापि शास्त्रशिष्य इव भाति स्म । महाराजो विदुषा परिषदि त 'शास्त्रार्थमहारथ' इति व्याहरति स्म । तदानी दूरदूरतो महान्तो महान्तो विद्वास. स्वगुणानाविष्कर्तुं स्वविद्यावैभव च दर्शयितु गुणग्रहिल विद्याव्यसनिन महाराज शरणमयासिषु ।

कदाचिद् द्वारवङ्गा(दरभङ्गा)धीशेन **महाराजश्रीलक्ष्मीश्वरेण** काश्या संस्थापिताया द्वारवङ्गपाठशालाया प्रधानाचार्यपदमधिष्ठाय समध्यापयन्, सर्वतन्त्रस्वतन्त्र , पण्डितराजो, महामहोपाध्याय , **श्रीशिवकुमारशास्त्री** महाराजश्रीरणवीरसिंहस्य विद्यानुरागित्व, विद्वद्वृन्दपादपद्माभ्यर्चनस्वभावत्व, शास्त्रार्थश्रवणकुतूहलित्व, शास्त्ररहस्यावबोधनक्षमप्रतिभाप्रतिभासितान्तरात्मत्व च तत्सङ्गतेभ्यो विद्वद्भ्य कर्णोपकर्णिकया समाकर्ण्य साक्षाद्धर्ममिवावतीर्णं, दर्शनमात्रेण कलिमलापह त महाराज द्रष्टु जातस्पृहो महामहोपाध्याय **श्रीजयदेवमिश्रं**, न्याय-वेदान्त-मीमासामासलमति त्रिपाठिन **श्रीमदच्युतानन्दं**, महामहोपाध्याय सर्वशास्त्रमर्मविद **श्रीचुम्बेशशर्माणं**, शास्त्रार्थसमर-

विजयिन श्रीफूदनचौधरिणञ्चेति चतुर स्वान्तेवासिन सार्धमादाय द्विगर्तान् प्रति प्रस्थित । द्विगर्तेपु तोपीपरिखापरिवेष्टिता, विपुलप्राचीरपरिवारिता, सौवर्णमन्दिर-मण्डिता, जम्बूराजधानी समागत्य श्रीरघुनाथमन्दिरे विद्वत्सम्मानार्हकक्षे कृतविश्रम "सशिष्योऽह महाराज दिदृक्षे" इति पत्र महाराजसविधे प्रेपितवान् । प्रात परमेश्वर-पूजनव्यग्रमानसोऽपि महाराज "पण्डितेन्द्र. शिवकुमारोऽत्र नो नगर समागत" इति परिज्ञाय प्रीतमानस "त्वरितमत्रैव (पूजामन्दिरे) समानयध्व शिवकुमारम्" इति समीप-स्थितानधिकारिण समादिदेश । ततोऽधिकारिभि समभ्यर्च्य प्रार्थित श्रीशिवकुमार सशिष्य समाजगाम महाराजाधिष्ठित पूजामन्दिरम् । "अय सर्वतन्त्रस्वतन्त्र, पण्डितराज, साक्षाच्छङ्कराचार्य इव चतुर्भि शिष्यैरुपेत, श्रीशिवकुमारशास्त्री भवत्सु विराजते । स्वस्वाधीतशास्त्राक्षरैरेव स्वस्वपरिचयदाने विधीयता प्रयत्न समस्तै" इति राज्ञोक्ते श्रीगोकुलचन्द्र-गणेशदत्त-रामकृष्ण-गङ्गाराम-गोपालराम-शिवकुमार-जनार्दनभट्ट-नव्यचण्डीदास-चूडामणि-श्रीपति-सर्वेश्वर-पुण्यशील-दामोदर-जगद्धर-विश्वरूपप्रभृतिभि-र्विद्वन्मूर्धन्यैर्दत्ते परिचये, "गोविन्दाचारी क्वास्ते ? नाद्यावधि समायात, समाहूय-ताम् । स खलु राजप्रसादसविधे शौल्कसद्मनि सन्निहितस्तत्रैवाकी वसति" इति समावर्णनसमकालमेव गतो दूतस्त्वरित तमाह्वातुम् । गृहस्य बहिर्द्वार पिहितमासीत्, गोविन्दाचारी च गृहान्त किञ्चिदुच्चैरराटीत् । "द्वारमुद्घाटयताम्, उद्घाट्यता द्वारम्" इति पौनपुन्येन व्यहारतोऽप्यस्य दूतस्याह्वान राट्यमानो गोविन्दाचारी नाशृणोत् । तत किमिद जल्पतीति तद्भापामनवबुध्यमानो दूत "नूनमय दैवदुर्विपा-केनान्येन वा केनापि कारणेनाध्ययनाध्यापनाऽधिकाभ्यासेन वा क्षीवतामापन्नो येनैव प्रलपति, अत्युच्चैर्भापमाणस्यापि मम न किञ्चित् शृणोति, न किञ्चित् प्रत्युत्तरयति" इति चिन्तयन् गतो महाराजस्य शरणम् । करौ सम्पुटीकृत्य विभ्रान्त इव, भीत इव च गद्गदस्वरेण समवादीत् "देव ! विक्षिप्त पण्डितप्रवर" इति । महाराजोऽपि परम-ब्रह्मण्य, पण्डितप्रिय "कथ क्षीवनामापन्न पण्डित !" इत्याश्चर्यमिव मन्यमानो विद्वद्रत्नमलतपाऽन्तर्दूयमानस्तत्क्षणमेव सपरिजन प्रचलितो गोविन्दाचारिण द्रष्टुम् ।

अनुव्रजन्त सशिष्य श्रीशिवकुमार च सादरमवादीत्-'अत्रैवास्यतामत्रभवद्भि, अयमागच्छाम्यह पण्डित निभाल्य, तदौषधादिप्रबन्ध च विधाय । श्रीशिवकुमारस्तु— "भूपते ! भवादृश दयासागर महाराज निरीक्ष्य पापाणा अपि द्रवीभवन्ति, कालाय-समपि सलिलायते, कोऽह मक्षिकाकल्पो ब्राह्मणो यो हि ब्राह्मणापद निशम्यापि, भवन करुणार्द्रहृदयता समनुभूयापि परदु खेन दु खमनुभवन्त भवन्त कतिचन पदान्यनुगन्तु-मपि नोत्सहेय" इत्यभिधाय महाराजेन सहैवागमद् गोविन्दाचारिण द्रष्टुम् ।

शतशोऽनुचरैरनुगतो महाराजो गोविन्दाचारिण सद्मनो बहिर्द्वारमधिष्ठाय दूतोक्त सर्वं स्वयमप्यश्रौषीत् । पण्डितप्रकाण्ड श्रीशिवकुमारोऽपि द्वारस्थो दत्तावधानो नव्यन्यायविधया समभिधीयमानानवच्छेदकाऽवच्छिन्नादिशब्दान् तदभिलापनभङ्गी च समुपश्रुत्य "अहो धारणा ! अहो अभिलापनप्रकारा ! यत्र क्षीवतामापन्नोऽपि बृहस्पतिरिव सवितर्कं पौर्वापर्यमनुसन्धाय भाषते, तत्र स्वस्थस्य तु वार्तैव का ? एतादृशैर्लोकोत्तरप्रतिभाप्रतिभासितान्तरात्मभि सह शास्त्रार्थकथा गगनकुसुमायमाना मन्ये" इति मनसि निश्चित्य चकितचकित क्षण तूष्णीमास्त ।

"कथमन्तर्गृह प्रविशाम" इति महाराजाभिप्राय बुद्ध्वा सर्वे सम्भूयानुचरै कपाटद्वयमपि बहिर्द्वारस्यारयोत्पाटितम् । गतोऽन्तर्गृह सपरिचरो महाराज । अपश्यच्च तत्र प्रच्छदपटाच्छादिता स्थूलस्थूणा प्रतिवादिन मत्वा नव्यन्याये पक्षतान्तानुमानखण्डस्य कमपि विषय पूर्वोत्तरपक्षीकृत्य सिंहनादेन व्याहरन्त, वीरासनाऽऽसीनम्, उभाभ्यामपि हस्ताभ्या वक्तव्यविषयार्थमभिनयन्त, प्रतिवादिविधा स्थूणा तर्जन्या तर्जयन्त, मौक्तिकपङ्क्तिभिरिव स्वेदबिन्दुभिरलङ्कृतकलेवर, महताऽभिनिवेशेन भूताविष्टमिव प्रतीयमान गोविन्दाचारिणम् । गोविन्दाचारी च शतशोऽनुचरैरनुगतमकस्मादेवागत्य पृष्ठे स्थित महाराज निभाल्य "अहो पृथिवीनाथ ! महाराज ! किमिद ? किमर्थं कीटकुटीरे परमेश्वरागमनम् ? कथमद्य पश्चिमेऽभ्युदितो भास्कर ? किमय परोऽनुग्रह, महान् क्रोधो वा ?" इति हर्षसाध्वसे अभिनयन् सप्रश्रयमवादीत् । महाराजस्तु "नाय क्षीवो, यथावस्थित एव' इति प्रीतमानस सनोनमवादीद् "भगवन् ! किमिद नाटक समारब्ध भवता महत आश्चर्यस्य कारणम् ? आरम्भत सर्वमभिधेहि, समवहिता स्मो वय सर्वमिदमभिनव श्रोतुम्' इति । किञ्चिल्लज्जितो गोविन्दाचारी समब्रवीत्— "भूपते महता प्रयासेनाधिगतानि कतिचित् शास्त्राक्षराणि विस्मृतानि मा भूवन् इत्युद्देश्येन प्रतिपक्षिणोऽभावादिमा स्थूणामेव प्रतिपक्षिण कल्पयित्वा पूर्वोत्तरपक्षविधया किञ्चिदभ्यस्यन्नासम् । मत्कृतेऽनीते कतिपये काललवैर्यत् कष्टमनुभूत श्रीमद्भिस्तदपि न हृदि विधेयम्" एवमादिभिरुक्तिप्रत्युक्तिभिर्विदितरहस्यो महाराज —"अहो धन्या इमे तपोनिष्ठा ब्राह्मणा, ये सर्वमैहिक सुख परिहृत्य शास्त्राणा सरक्षण महान्त प्रयास विदधते, महानय योगो यद् विद्याभ्यसन नाम, यस्मिन् स्थितस्तन्मयीभूय स्वात्मानमपि विस्मरति, सर्णशष्कुलीस्फोटकमपि शब्दजात लाकवानाहल च न शृणाति, वैषयिक सुख च तृणमिव लघु मन्यते । विद्यैव परम तप' इति स्वयमनुभूय त्रिकालाबाध्य सत्य समभिहित केनापि विद्याभ्यासयोगिना विद्याव्यसनिना" । एव बहुविधमभि-

धाय धृतामलवसन गोविन्दाचारिण स्वेन सह सदसि समानैषीत् । तस्मिन्नहनि केवल परिचयमात्रमेवाभूत् । सम्यक् समभ्यर्च्यता सशिष्य श्रीशिवकुमारो महत् कष्टमनुभूतमद्यानेनेति सेवाधिकारिण समादिश्य सभा विसर्जितवान् महाराज । पुनरपरेऽह्नि अहपूर्विकया क्ष्मापतिसदसि समापतत्सु विद्वत्सु, अभ्यर्हणार्हासनासीने सशिष्ये श्रीशिवकुमारे, स्वोचितासनमधिरूढे भूभुजि श्रीरणवीरसिंहे स्वस्वाधिकारोचितस्थानमधिश्रितेषु सर्वाधिकारिषु स्वस्वशास्त्रनिर्देशपुर सर समारब्धे विदुपा शास्त्रार्थे सस्कृतसम्भाषणमयमिव समभूत्तदानी तत् सदस सौधम् ।

एव पञ्चषदिनानि समभवद् विदुपा शास्त्रार्थो येन परा मुदमापन्न सर्वतन्त्रस्वतन्त्र , पण्डितराज , श्रीशिवकुमार "अहो धन्योऽयमहाराज श्रीरणवीरसिंहो देवेन्द्रस्येव यस्य परिपदि बृहस्पतिकल्पा सर्वशास्त्रसारपारदृश्वानो विद्वास समभ्यर्च्यन्ते, धन्यश्चाय त्रिगर्तभूभागो यस्मिन् ब्रह्मण्याना, दर्शनमात्रेण कलिमलापहर्तृणा, साक्षात् धर्ममूर्तीना, शास्त्रैकशरणाना श्रीरणवीरसिंहसदृशभूपतीना समाभिर्भाव शासन च वर्तते" इत्येव बहुविधानि प्रशस्तिपदानि पौन पुन्येनाभिदधानो महाराजेन पुष्कलधनदानमानादिना समभ्यर्चितो महाराजानुरोधेन श्रीचुम्बेझाशर्माण श्रीफूदनझाचौधरिण चेति शिष्यद्वय श्रीरघुनाथपाठशालाध्यापकपदद्वये प्रतिष्ठाप्य गृहीतादेशोऽपरेण शिष्यद्वयेन कतिपयै राजपुरुषैश्च ससेव्यमान पुन काशीमयासीत् ।

असौ गोविन्दाचारी श्रीशिवकुमारशास्त्रिणा तच्छिष्यैश्च मुक्तकण्ठ प्रशसितस्तत प्रभृति महाराजस्य विशेषप्रीतिभाजन समभवत्, श्रीरणवीरपाठशालायाश्च प्रथम प्रधानाचार्य । दैवयोगादामुष्मिन् विदुषि ब्रह्मभूय गते महाराजस्तादृशस्य विदुषोऽभावेन दूयमानोऽपर तत्सदृश विद्वासमन्वेष्टु विशेषाधिकारिण समादिदेश ।

---

### श्रीगौरीशङ्करशर्मा

श्रीकृपारामशास्त्रिणा ज्येष्ठस्तनूजन्मा **श्रीगौरीशङ्करशर्मा**, एम्०ए०, बी०लिट् (आक्सन), पी०इ०एस्०, सस्कृतेङ्ग्लिशोर्दू हिन्दीडोगरीपञ्जाबीभाषाभाषणप्रवीण । सस्कृते एम्०ए० इत्युपाधिमधिगत्यासौ लवपुरे गवर्नमेण्टकालेजे सस्कृतविभागीयमुख्याध्यापकपदमधिष्ठायाङ्गलभाषाविदिनश्छात्रान् सस्कृतमध्यापिपत् । ततो धर्मशालात्रिगर्त (काँगडा) प्रान्तीयगवर्नमेण्टकालेजेऽध्यक्षपदमध्यतिष्ठत् । तदनन्तर लब्धपुष्कलवयस्कवृत्तिकोऽसौ कुरुक्षेत्रविश्वविद्यालये विशेषाधिकारिपद तत्रत्यसस्कृतविभागा-

ध्यक्षपदं चालमकार्षीत् । साम्प्रतं चण्डीगढराजधान्यां स्वनिर्मापितसद्मनि निवसन् विद्वद्गोष्ठीषु, सज्जनसमाजेषु, राजसभासु, पण्डितपरिषत्सु च ग्रामं ग्रामं शास्त्रचर्चया देशसेवया च कालं गमयति । असावध्ययनाध्यापनाभ्यां बहुविधलेखनकर्मणा च संस्कृतसाहित्यं सेवितवान् । अयं विद्वद्वरश्रीकाशीनाथकृतस्य **'पीयूषगङ्गा'**नामधेय-शिवस्तवकाव्यस्य पितृपादादेशेन संस्कृतहिन्दीमयं टीकाद्वयं श्रीजगन्नाथवासिष्ठद्वारा कारयित्वा स्वानुजश्रीघनश्यामसाहाय्येन सुमुद्राप्य च शिवभक्तानामुपकारं कृतवान् ।

---

## श्रीघनश्यामशर्मा

श्रीकृपारामशास्त्रिणां द्वितीयः कनिष्ठस्तनयः **श्रीघनश्यामशर्मा** एम्०ए० जम्बू-नगरस्थसायंसकालेजे प्रिन्सिपलपदमधितिष्ठति । अयं विज्ञानशास्त्रे(सायंसे) परं वैदुष्यमावहन्नपि परमेश्वरभक्तिं न जहाति । विज्ञानमध्यापयन्, तत्सम्बन्धिकर्माणि च कुर्वन्नपि प्रत्यहं संस्कृतसाहित्यं स्वयमधीते, संस्कृतमध्येतुं वृद्धानपि प्रेरयति च । अयं परमविनीतः, सभ्यः, स्वाश्रितेषु शिष्येषु च सद्व्यवहारवान्, लोकसंग्रहे यतमानो भ्रातृभक्त्या भरतमप्यतिशेते ।

---

## ब्रिगेडियरश्रीघनसारसिंहो जम्बवालः

अस्ति त्रिगर्तेषु जम्बूप्रान्तान्तर्गतो 'रैपुर' (रायपुर) नामधेयो जम्बवालोपाह्व-रघुवंशीयक्षत्रियाणां वंशपरम्परापरिरक्षितः, शस्यश्यामलः कश्चिन्महान्, ग्रामः । यस्मिन् सनातनधर्मरक्षणसक्षणः, युद्धविद्यानिष्णातः, जम्बवालकुलकमलदिवाकरः, ठाकुर-श्रीसूर्मसिंहाभिधो राजपुत्रक्षत्रियः पतिपरायणया स्वधर्मपत्न्या श्रीमत्या भगवतीदेव्या सह सुखं चिरमवात्सीत् । स महाराजश्रीरणवीरसिंहस्य श्रीप्रतापसिंहस्य च परिषदि वीरजनोचितं, सम्मानार्हं पदममुपलभ्य तदक्षिसकेतमनुवर्तमानः क्रमेण तयोः प्रीतिभाजनं समभवत् । वीरवरस्याऽस्य धर्मपत्नी श्रीमती भगवतीदेवी नन्दवेदवसुवसुमतीमिते (१८४९) वैक्रमे वत्सरे सौराषाढमासे शुभे मुहूर्ते क्षत्रियोचितसर्वशुभलक्षणोपेतं सुतममूत । एकादशेऽह्नि पिता तस्य 'घनसारसिंह' इति नामधेयमकार्षीत् । प्राप्ते षष्ठे वर्षे ग्रहणधारणादिभिर्गुणैः पितास्य प्रतिभोन्मेषाऽवकाशं भाविनं शुभोदर्कं चानुमाय जम्बूस्थे श्रीरणवीरहाईस्कूले पठितुं प्रावीविशत् । तत्राय तत्तदध्यापकमन्तोष-पुरःसरं क्रमेण प्रथमश्रेणीतो दशम(मैट्रिक)श्रेणीं यावत् समुदतरत् । ततः कालेजे

प्रविश्य क्रमेण पञ्चनदविश्वविद्यालयीये एफ्०ए०, बी०ए० परीक्षे अपि समुदतरत् । अध्ययनसमय एवाय व्यायामककर्कशकाय', सुदृढसन्धिवन्ध, आजानुलम्बित-प्रचण्डबाहुदण्ड, हाटकशिलासङ्कटविकटवक्षस्थल, अनवरतशस्त्रास्त्राभ्याससलग्न-मानस, वीराणा कथाश्रवणे कुतूहली, शत्रून्मूलनोद्भूतहुताशदेदीप्यमानरक्तोत्पल-लोहितलोचन, सर्वदा धर्मगोष्ठीषु, विद्वत्परिषत्सु शौर्यसवादेषु, शास्त्रव्याख्यानेषु, पूर्वजानामितिहासेषु, वृद्धसेवासु, गुरुपितृवचोऽमृतपानेषु च दत्तावधान, चतुर्णामपि धर्मार्थकाममोक्षाणा मूलभूताम्, सर्वस्वत्यागेनापि रक्षणीयाम्, प्राणाधिकमूल्याम्, परम्परागता द्विगर्तदेशस्वतन्त्रतामेव परा सम्पत्तिममन्यत । ततो वीरोचितसमस्तगुण-गणालङ्कृत सिंहसहननमिम गुणग्रहिलो महाराज श्रीप्रतापसिंह समुचिते सेनापतिपदे न्ययुङ्क्त । असौ तिब्बत-लद्दाख-लेह-भूटान-असकर्दू-गिलगित्तादिषु, रूस-चीन-काम्बोज-सम्बद्धेषु देशेषु सेना सञ्चालयन्, रणाङ्गणविपोथितप्रत्यर्थिसार्थरुधिररञ्जितासिधार', दुन्दुभिघोषगम्भीरस्वरेण रिपुबलाऽबलाविलोललोचनोदकशीकरासारदुर्दिन जनयन्, शत्रूर कपाटपातितनिष्ठुरनिस्त्रिशप्रहारः, तन्मस्तकस्तम्भविकारानपहरन्, कुलिश-कर्कशभुजपरिघप्रहरणै., शिखरिशिखराण्यप्युत्पाटयन् सुभटेषु समररसमजीजनत् । एव सर्वत्र समरेषु स्वयमग्रणीभूय युध्यमान सैनिकेषु, समग्रसेनासु, सेनापतिषु, राजनि, मन्त्रिमण्डले, आबालवृद्धासु च सर्वप्रजासु महद् यशोभाजन सवृत्त । भारत-विभाजनसमये काश्मीरसीमासु प्रसह्य समागतान्, पशुवृत्तीन्, शलभवदापततो, विप्लव-कारिणो विलुण्ठकान् कतिपयैरेव सैनिकै सह तेषा दन्तान् समुत्पाट्य लोहचणकचर्वण-मचीकरत् । ततो यथासमय लब्धपुष्कलवयस्कवृत्तिक, परमेश्वरपरायण, कर्त्तव्यपालन पर धर्म मन्यमानमालस्यादिदोषलेशेनाप्यनाघ्रातम्, तत्कालकार्यकर्तारम्, धर्ममर्मविदम्, परम कर्मण्य बहुधा सुपरीक्ष्य रसगगननभोनयनमिते (२००६)वैक्रमे हायने गुणैक-पक्षपाती, न्यायनयनिपुणो, महाराज श्रीहरिसिंहो जम्बूकाश्मीरधर्मार्थविभागसरक्षक-समिते (ट्रस्टस्य) प्रधानपदमिममध्यतिष्ठिपत् । तत प्रभृति नि शुल्क निष्काम च कर्म कुर्वाणोऽय धर्मार्थविभागस्य परा सेवा कुरुते । तत्रापि शतशो मन्दिराणि, सर्वत्र तीर्थेषु विद्यमानानि पथिकविश्रामस्थानानि (धर्मशाला) च निरन्तर दत्तावधानतया सेव-मानोऽपि धर्मार्थविभागस्य श्रीरणवीरसस्कृतमहाविद्यालयम्, श्रीरणवीरसस्कृतपुस्त-कालयम्, श्रीरणवीरसस्कृतानुसन्धानविभागम् (श्रीरणवीरसस्कृतरिसर्चइन्स्टीच्यूटम्) च "विद्यैव परम तप" "विद्यया वर्धते धर्मो ह्यज्ञानेन विलुप्यते" इत्यादिशास्त्रवचोभि-र्विद्यामेव धर्ममूल मन्वानो विशेषरुच्या सेवते ।

अस्य भ्रातर, पुत्रा, दुहितर, इतरे सम्बन्धिनश्च सर्वेऽपि सकलभाषाजनन्या

गीर्वाणवाण्या परमभक्ता सन्ति । ईदृशान् विग्लान्, अनीदृशाश्चाधिकान् वीक्ष्यैव सुरभारतीत्थं विलपति—

> वसनाशनैर्मदीयैरुपजीविता सदा ये,
> कथयन्ति हन्त ! ते मा हतभागिनी मृतेयम् ।
> तदहं हि किं करोमि स्वसुता विरोधिनो मे,
> चिरकालतो नियुक्ता जननी न ये स्मरन्ति ।
> न कृतघ्नता तदीया हृदि चिन्त्यते मयेयम्,
> समयं निरीक्ष्य हीनं दरमूकता वहेयम् । इति ।

---

## चन्द्रमौलिशास्त्री

श्रीचन्द्रमौलिशास्त्री वेदबाणविहगवसुमतीमिते (१९५४) वैक्रमे वत्सरे सौराषाढस्याष्टमे दिने वक्ष्यमाणस्य श्रीनीलकण्ठशर्म्मणः पतिपरायणायां धर्मपत्न्यां श्रीयमुनादेव्यां जनुरग्रहीत् । आकृत्या ग्रहगणितेन पैतृकगुणैर्वाऽस्य भाविशिवोपासकत्वमनुमाय द्वादशेऽहनि पितृपादाश्चन्द्रमौलिरित्यन्वर्थं नामधेयमकार्षुः । चन्द्रमिव क्रमेण वर्धमानं पित्रोर्मनोविनोदिनं पञ्चवर्षवयसि कृतोपनयनसंस्कारं पितृपादा गृहीयपाठशालायामेव वैतनिकैः पण्डितैः संस्कृतमध्यापिपन् । लघुकौमुदीम्, पञ्चतन्त्रम्, अन्यानि च संस्कृतबोधकानि लघूनि पुस्तकानि समधीत्य जातबाधोऽयं श्रीरणवीरपाठशालायां प्रविश्य तत्र क्रमेण पञ्चनदविश्वविद्यालयीयप्राज्ञ विशारदशास्त्रिपरीक्षाः समुदतारीत् । ततः क्रमेण मेट्रिक-एफ्०ए०परीक्षे समुत्तीर्य्य श्रीरघुनाथसंस्कृतमहाविद्यालयप्रबन्धकपरिषदो महामन्त्रिपदमलमकार्षीत् । तत्र महता कौशलेन कार्य्यं कुर्वाणोऽयमध्यापकेषु छात्रेषु च परां ख्यातिं समवाप्नोत् । अस्य तादृशं वैदुष्यं कर्मण्यताञ्चानुभूय श्रीरघुनाथसंस्कृतमहाविद्यालयपरिषद् पारिषद्याः श्रीरघुनाथपाठशालीयाध्यापकेष्वन्यतमाऽध्यापकपदमध्यतिष्ठिपन्नेनम् । तत्राप्ययं कतिपयहायनान्यध्यापनकार्यं विदधानः स्वाध्यापनचातुर्येण छात्रेषु परां प्रीतिं समुदपीपदत् । सम्प्रति भृतिविरतो लब्धपुष्कलवयस्कवेतनः काश्मीरगिरिशिखरगह्वरमधिवसन्तं पार्वतीपतिं परमेश्वरं श्रीअमरनाथं सम्मरन् तच्चरितपयोधिं स्वप्रतिभोन्मेषमन्दराद्रिणा प्रमथ्य "अमरामृति" नामधेयमकं सरसं काव्यं निर्माय पार्वतीपरमेश्वरयोः सान्निध्यमीप्सति ।

किञ्चायममराङ्कतेरेकैकं पद्यमस्वरमुदाहरन् परमानन्दपयोधौ मज्जति, मज्जयति च सहृदयान् परमेश्वरभक्तान्। तत्काव्यस्येदमादिमं पद्यम्—

प्रभो प्रयाणं प्रति काश्यपी भुवं विचिन्त्य नन्दी स्ववपुर्विधूय स।
द्वारे प्रधाने निजहर्पनिस्वनैः प्रबोधयामास गणान् सुखस्थितान्॥

अथ श्रीचन्द्रमौलिशास्त्री सहृदयः, सज्जनः, परमविनीतः, लोकापवादभीतः, कर्मकाण्डपरायणः, कुलमर्यादापरिपालकः, परमेश्वरभक्तो दिवानिशं परमेश्वरप्रतिमा पोपूज्यते स्म।

---

### श्रीजगदीशचन्द्रशर्मा

मणिरामस्य विदुषो भवानीदत्तजगदीशचन्द्रौ द्वौ सुतौ समभूताम्। भवानीदत्तो ज्येष्ठः परमविनीतो लौकिकव्यवहारज्ञोऽपि शास्त्राभ्यासशून्य एवासीत्। अयं सर्वं विहाय चत्वारिंशद्वर्षवयस्येव लोकान्तरमगात्। जगदीशचन्द्रस्तु पाणिनीयव्याकरणपण्डितः कर्मकाण्डधुरीणः साहित्यसङ्गीतयोरपि विशेषपरिचिरस्मिन्। महाराजश्रीहरिसिंहसमये सर्वं कर्मकाण्डादिकं तदवरोधनस्यैवाचीकरत्। इदानीं केनापि कारणेन तत्सर्वं परित्यज्य स्वतन्त्रीभूतः स्वगृहे शास्त्रीयसङ्गीतं शिक्षयति बालान् संस्कृतं चाध्यापयति। अयं परमविनीतः, सभ्यः, सर्वजीवहितः, परमात्मपरायणो लोकोत्तरप्रतिभावान्, धर्मात्मा च वर्तते। संस्कृताध्ययनाध्यापनयोरस्य विशेषरुचिर्विद्यते।

---

### श्रीजगदीश्वरशास्त्री

असौ १९२३विक्रमाब्दे ज्येष्ठशुक्लनवम्यां जम्बूराजधानीपार्श्ववर्तिनि शोभाञ्जना(सुहाञ्जना)नाम्नि ग्रामे सुप्रसिद्धे राजपण्डितवंशे जन्म लेभे। अस्य पितृपादाः श्रीगोकुलचन्द्रशास्त्रिणस्तदानीं श्रीरघुनाथमन्दिराधिष्ठातृपदमलङ्कुर्वाणा अपि श्रीरघुनाथसंस्कृतमहाविद्यालयस्य प्रिंसिपलपदमधितिष्ठन्तः स्वात्मजस्य जन्मकुण्डल्यां शुभस्थानस्थितशुभग्रहान् विलोक्य परं मुमुदिरे। अयं च श्रीजगदीश्वरः स्वायुषः पञ्चमे वर्षे कृतोपनयनसंस्कारो दाक्षिणात्यात् श्रीमदम्बारामभट्टाद् यजुर्वेदमध्यैष्ट। स्वल्पेनैव कालेनाष्टविधान् पदक्रमजटावल्ल्यादीन् पाठप्रकारान् पूर्णरूपेण विज्ञाय व्याकरणन्यायवेदान्तादीनां शास्त्राणामध्ययनं प्रारभत।

असौ १९४०वैक्रमाब्दे सर्वतन्त्रस्वतन्त्रेषु श्रीब्रह्मानन्दस्वामिषु जम्बूराजधानी-मागतेषु पितृपादादेशेन तेषां सविधे समुपस्थाय शारीरकभाष्यव्युत्पत्तिवादादिषु व्युत्पन्नोऽभवत्। अस्य कुशाग्रां बुद्धिमनुभूय प्रत्यक्षचमत्कारकारिणीनां मन्त्रतन्त्र-विद्यानां गूढं तत्त्वमधिगन्तुमवगमयितुं चास्मात् परं नान्यं योग्यतमं शिष्यं लप्स्ये इति विचिन्त्य "ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत।" इति वचोऽनुरूपं स्वामि-चरणाः स्वल्पैरेवाहोभिरेनं मन्त्रतन्त्रादिष्वपि प्रवीणं चक्रुः। धर्मशास्त्राणि प्रायोऽस्य जिह्वाग्रे स्थितानीवासन्। तदानीं सर्वा अपि राजसम्बन्धिनीर्धर्मव्यवस्था एभिरेव व्यवस्थापिता प्रमाणीभवन्ति स्म। अथ वेदकोविदो द्विचत्वारिंशदधिकैकोनविंशति-शततमे (१९४२) वैक्रमाब्दे श्रीरघुनाथपाठशालायां यजुर्वेदाध्यापकपदमध्यतिष्ठत्। वैदिककर्मकाण्डेषु सोमयागादिपद्धतिषु चास्य महती ख्यातिरासीत्। किशनगढ-राज्ये समायोजिते सोमयागे तत्रत्यैः सादरं निमन्त्रितोऽयं तस्मिन् सोमयागे आचार्य-पदं भेजे। निष्पन्ने यागे श्रीदीक्षितजवानसिंहमहाराजेन सम्मानितः प्राज्यसम्भार-सहितो जम्बूकाश्मीराद्यनेकदेशाधिपतेः महाराजश्रीप्रतापसिंहस्य राज्याभिषेकमचीकरत्, तन्त्रशास्त्रोक्तसिद्धिलाभाय च तपस्तप्तुं वाराणसीमगच्छत्। तत्राप्येकान्तमनासाद्य शान्तप्रदेशं हिमालयैकदेशं सेवितुं नयपालानगमत्। तत्र शास्त्रसिद्धौ सत्यां कमाण्डर-करनलकेसरीसिंहप्रभृतयः क्षत्रियास्तत्रभवन्तं श्रद्धयाऽसेवन्त। सिद्धसमीहितोऽयं १९५०वैक्रमाब्दे जम्बूराजधानीं प्रत्यावर्तत।

अथास्य स्वराज्ये पुनरागमनं श्रुत्वा धर्मावतारो महाराजः श्रीप्रतापसिंहः परं मुमुदे। प्रीत्या स्वदैनिकपूजायामस्मात्कथां श्रोतुं प्रारब्धवान्। मन्त्रतन्त्रचमत्कारान-नुभूय महाराजस्यात्र बुधे परा श्रद्धा सञ्जाता। षट्पञ्चाशदुत्तरैकोनविंशतिशततमे (१९५६)वैक्रमाब्दे महाराजश्रीप्रतापसिंहः एनं श्रीरघुनाथमन्दिरस्याधिष्ठातृपदमध्य-तिष्ठिपत्। असौ १९५६वैक्रमाब्दे श्रीरघुनाथपाठशालायां प्रिंसिपलपदमलमकार्षीत्। एतदीयमध्यापनकौशलं प्रवन्धप्रावीण्यं च श्रुत्वा बदरिकाश्रमादारभ्य आ कन्याकुमार्याः पूर्वसमुद्रात् पश्चिमसमुद्रपर्यन्तं च पिपठिषवश्छात्रा आगत्यागत्य श्रीरघुनाथपाठशालायां प्राविशन्। प्रतिवर्षं पञ्चदश विंशतिर्वा छात्राः पञ्चनदविश्वविद्यालयीयप्राज्ञ-विशारद-शास्त्रिपरीक्षाः समुदतरन्। बाणरसग्रहेन्दुमिते (१९६५) वैक्रमाब्दे महाराजश्रीप्रताप-सिंहाय विधिना मन्त्रदीक्षां प्रादात्। महाराजश्रीप्रतापसिंहः एतस्मिन् भक्तिमान् श्रद्धालुश्चासीत्। एतस्य वैदुष्यमाकर्ण्य वर्त्तानियासर्वकारः एतस्मै १९७१वैक्रमाब्दे महामहोपाध्यायपदवीं प्रददौ। द्विसप्तत्युत्तरैकोनविंशतिशततमे (१९७२) वैक्र-

माब्देऽस्मै भारतधर्ममहामण्डलाधिष्ठातृभि 'विद्यासागर'इत्युपाधि प्रादायि। राजनीतिचातुर्येण नगरपालिकासदस्यतामपि श्रीजगदीश्वर प्राप्नोत्। एवमय महती सम्मानशिलामधिरूढोऽपि विनयावनत, प्राप्ताखिलसम्भोगसम्भारोऽपि वसनाशनपानादिपु साधारणो, निग्रहानुग्रहसमर्थोऽपि सर्वजीवहितैषी च समभवत्। असौ विहगवसुनन्देन्दुमिते (१९८९) वैक्रमे वत्सरे भाद्रपदशुक्लचतुर्थ्यां सर्वं विहाय दिव गत।

---

## कविवर• श्रीजगन्नाथो वासिष्ठ

अस्ति पञ्चनदप्रान्तोत्तरदिग्विभागस्य रघुवशीयक्षत्रियवासित जम्बूनाम्ना प्रसिद्ध नगरम्। ततो दशक्रोशान्तरालेऽग्निकोणे 'मजूहा'नामधेय कश्चिदस्ति रामणीयकहृतहृदयोऽतिविश्रुतो ग्राम। तस्मिन् 'वनोत्रा'जातीय वसिष्ठगोत्र परमप्रसिद्ध ब्राह्मणकुल विद्यते। यस्मिन् कुले विविधविद्याविभावितान्तरात्मानोऽद्यावधि सुयोग्या विद्वास एव समभूवन्, वर्तन्ते च। एतत्कुलपूर्वपुरुषेपु परमभागवत पण्डितप्रकाण्ड श्रीढुण्ढिराज आद्यो विद्वान् सम्बभूव। तस्मात्क्रमेण जायमानेपु विद्वत्सु समभून्मेधावी विद्वद्वरिष्ठ श्रीमायाराम पण्डित। तस्मात्कृपारामव्रजलालौ समभूता रामलक्ष्मणाविवाभिन्नहृदयौ द्वौ पुत्रौ। तयो कनीयसो व्रजलालात् श्रीदुर्गादेव्या तस्य धर्मपत्न्या चरितनायकोऽस्य श्रीजगन्नाथ कविराजो वेदर्षिविहगेन्दुसम्मित (१९७४)वैक्रमाब्दे कार्तिकमासस्य विश्या तारिकायां पुनर्वसुनक्षत्रे प्रातस्तुलालग्नोदये जनिमग्रहीत्। पितुर्द्वितीयोद्वाहजप्रथमात्मजत्वादतीव वात्सल्याच्चानुशासनहीनोऽय बाल्ये कञ्चित्काल स्वैरिणीं वृत्तिमशिश्रियत्। ततो रामाष्टनवचन्द्रसम्मिते (१९८३)वैक्रमे हायने स्वायुषो नवमे वर्षे जम्बूनगरस्थपण्डितप्रकाण्डश्रीमदाम्रढभानुशास्त्रिणा सविधे चत्वारि वर्षाणि तद्गृहमध्युष्य तेभ्योऽक्षरारम्भादारभ्य शिक्षादीक्षादिकमग्रहीत्। परमवैयाकरणाना श्रीमदाम्रढभानूना सहवासेन तदनुग्रहेण चास्य व्याकरणे विशेषा रुचिरभवत्। तदनन्तर श्रीरघुनाथमहाविद्यालये प्रविश्य छात्रावासे छात्रेष्ववसत्। तत्र स्वातन्त्र्येण लघुकौमुदी, सिद्धान्तकौमुदी, ग्रहलाघव, रघुवशादिकाव्यानि च समधीत्य जातबोध काव्यकलनव्यसनसलग्नमानसस्तत्सम्बन्धिसम्भाराऽऽहरणध्यवसायं सहजा शक्तिमाविर्भावयितु प्रायतत। बाल्य एव प्रौढकविकलनयोग्यानि प्रकीर्ण(फुटकर)-काव्यानि कर्तुं प्राभूत्। तस्य कुशाग्रबुद्धिवैभवसन्तुष्टा पाठशालीया विद्वांस सूक्ष्मधिषणं सुज्ञेयानि व्याकरणसाङ्ख्यदर्शनादीना विशदविशदग्रन्थान्यध्यापिपन्। तात्कालिक-

वैद्येभ्यश्चायमायुर्वेदे वैद्यजीवन-भावप्रकाश-सुश्रुत-चरकादिग्रन्थानपि पर्यशिशीलत् । एवं संस्कृतभाषायां तत्प्रतिपादितगम्भीरविषयेषु च विशेषवैदुष्यं समधिगत्य हिन्दी-भाषायां तदाप्तुं प्रयतमानोऽयं राजकीयविश्वविद्यालयीयप्रभाकरपरीक्षायां प्रथमश्रेण्यां सर्वप्रथमं समुदतरत् । एवं संस्कृतहिन्दीप्रान्तीयभाषासु लब्धप्रसराऽस्य शेमुषी सारस्वत-सृष्टौ सम्राज्ञीव स्वातन्त्र्येण प्रावर्तत । नवनवोन्मेषशालीनि पदानि, वाक्यानि, छन्दांसि, अलङ्काराः, गुणाः, रीतयो, रसाश्च प्रभाववशीभूता गुणगणप्रलोभिता अनुचरा इव तस्य पुरतोऽवातिष्ठन्ताऽवतिष्ठन्ते च । पाकिस्तानविप्लवानन्तरं चायं जम्बूतः पूर्वदिग्वर्तिनि साम्बानगरे कृतनिवसतिः सरस्वतीसमाराधनपरायणः कुलक्रमप्राप्तां वृत्तिं समाश्रयन्नास्ते । अस्य कवेः—

(१) 'मानसरामराज्यनवकम्' । (२) 'गीतागीतम्' ।
(३) 'श्रीश्यामशोकदशकम्' । (४) 'अष्टग्रहीस्तोत्रम्' ।

इत्याद्याः संस्कृतपद्यमय्यः कविता अयोध्यायाः 'संस्कृत'पत्रे, जयपुरस्य 'भारती'-पत्रे, नागपुरस्य 'संस्कृतभवितव्य'पत्रे च यथासमयं प्रकाशिता अभूवन् । ईशावास्यो-पनिषदः संस्कृते पद्यमयोऽनुवादः, विद्वद्वरश्रीकाशीनाथकृतपीयूषगङ्गायाः 'सरला'-नाम्नी संस्कृतटीका, आशापूर्णस्तोत्रं च संस्कृतपद्यमयमनेन प्रकाशितम् । अन्याः प्रभूततराः संस्कृतपद्यमय्यः कविता उक्तकविना रचिता वर्तन्ते, परं द्रव्याऽभावान्न प्रकाश-मायाताः । अयं कविवरः स्ववंशवर्णनम्, किञ्चित् स्वकृतिनिर्देशं च स्वयमपि अनुष्टुप्-पद्यैः कृतवान् ।

---

### उपाध्याय. श्रीजगन्नाथ शास्त्रिशिरोमणि.

जम्बूनगरस्य 'पक्की ढक्की'प्रतोलिकायां श्रोत्रियगुणगणान्वितः, दुर्गरेषु सर्वत्र ख्यातः कश्चिदुपाध्यायवंशो विद्यते । यस्मिन् क्रमेण जायमानेषु विद्वत्सु कश्चिद् व्रजभूषणो नामोपाध्यायो जनिमग्रहीत् । असौ कर्मकाण्डकर्मणि प्रवीणः फलिते ज्यौतिषेऽपि सिद्धहस्तोऽभवत् । असौ नभोऽग्निनवेन्दुमिते (१९३०)वैक्रमे वत्सरे मार्ग-शीर्षमासस्याष्टादश (१८) तारिकायां प्रायः पञ्चवादनवेलायां स्वधर्मपत्न्यां देव्यां पुत्र-रत्नं जनयामास, यस्यैकादशेऽह्नि 'जगन्नाथ' इति नामधेयमकार्षीत् । असौ श्रीजगन्नाथ उपाध्यायो न्यायवेदान्तव्याकरणादिषु लब्धावकाशोऽपि धर्मशास्त्रकर्मकाण्डयोः परां प्रौढि-मापन्नः सर्वत्र दुर्गरेषु प्रसिद्धोऽभवत् । असौ स्वगृहीयपाठशालायां कर्मकाण्डमपिपठिपून्

च्छात्रान् पारस्करगृह्यसूत्र-संस्कारभास्कर-याज्ञवल्क्यस्मृतिमिताक्षराटीकादिकान् कर्मकाण्डधर्मशास्त्रग्रन्थान्, ग्रहलाघवमुहूर्तचिन्तामणिबृहज्जातकप्रभृतीन् ज्योतिषशास्त्रग्रन्थांश्च समपीपठत्। गृहागतान् जिज्ञासुजनान् सदुपदिदेश। जम्बूनगरस्थाः सर्वेऽपि वृत्तीश्वराः, उपाध्यायाश्च जगन्नाथशास्त्रिणः शिष्यप्राया आसन्, वर्तन्ते च। असौ कदाचित् तीर्थयात्राप्रसङ्गेन वाराणसीमयासीत्। तत्रत्यविद्वत्सदसि बहून् कर्मकाण्डविषयकान् प्रश्नान् स्वयमप्राक्षीत्, तत्कृतप्रश्नांश्च समुदतारीत्। तेन प्रीतैर्वाराणसेयविद्वद्भिरस्मै शास्त्रिशिरोमणिरित्युपाधिर्वितीर्णः। अयमाकृत्या सुन्दरः, शरीरेण विशालः, भाषणेन प्रगल्भः, वार्तालापेमधुरः, व्यवहारेण सरलः, चरित्रेण पवित्रः, नित्यनैमित्तिककर्मभिर्धार्मिकः, अध्यापनोपदेशादिभिर्गुरुः, वेशभूषाभिश्च महाराज इवासीत्। काव्यकलाऽप्यस्य हस्तामलकीभूता प्रतिवर्षं महाराजश्रीप्रतापसिंहस्य जन्मदिवसोत्सवसमये प्रशस्तिपद्यानि निर्माय ततः पुरस्कारविशेषानलभत। भूमीन्दुशून्यनेत्रमिते(२०११)वैक्रमे वत्सरे कार्तिकमासस्य चतुर्दशरात्रिकायाः प्रातर्ब्राह्मे मुहूर्ते हरिं स्मरन् दिवं गतः। धन्योऽसौ देशो यमेतादृशा भागवता जनुषाऽनुगृह्णन्ति। अस्य विदुषस्त्रिषु पुत्रेषु ज्येष्ठो रामशरणोऽसमय एव कालग्रासीभूतः। द्वौ यमुनादासजगद्रामौ नाम स्वकर्मणि कुशलौ वर्तेते, तयोर्जगद्रामः कर्मकाण्डधुरीणः पितृपादानां पद्धतिमनुसरन् महान्ति यशःकुसुमानि सञ्चेतुमारब्धवान् गुणं पितरमप्यतिशयिष्यते।

---

## जयरामशास्त्री

श्रीजयरामशास्त्री जम्बूराजधानीतः क्रोशशतकान्तराले वायव्यकोणे राजौरीपत्तनसविधे 'पञ्जाह' नामकग्रामे कर्मकाण्डपरिपाटीपटीयसः कृषिकर्मकुशलस्य कस्यचिद् राजानक(रैणा)जातीयस्य ब्राह्मणस्य गृहे जन्माग्रहीत्। असौ विद्वद्वरो वसुरसग्रहेन्दुमिते (१९६८) वैक्रमे वत्सरे वैशाखमासस्य षष्ठे दिवसे विद्यास्थानस्थितेषु शुभग्रहेषु शुभे मुहूर्ते प्राच्यां पूर्णेन्दुरिव स्वजनन्याः समुदैत्। शिशुरेव चास्य पितरं गुजनसुमारगोहितणुं विधिरपाहरत्। तथापि तदानिपाज्य सितदर्वीयप्रतिपदिन्दुरिव क्रमेणोपचीयमानकलावयवः, जनन्युत्सङ्गे संवर्धमानः, वीतराग इव पितृशोकलवेनाप्यनाघ्रातः कश्चित्कालमनैषीत्। तत पितृव्यमातुला ज्येष्ठभ्रात्रा श्रीलक्ष्मणदत्तेन लालितः पालितश्चायं क्रमेण जातवयस्कोऽपि पितृशोकेनाभिभूतो महतीं चिन्तामापन्नः। तदा ज्येष्ठः सहजोऽस्य शुभादरोन्मुखी प्रतिभा निभाल्य वैद्यचित्रेर्मसिंहनाम्ना महात्मना सह लायलपुरनगरं प्राहिणोत्। तत्र कश्चित् कालं महात्मा प्रेमसिंह

स्वयमस्य प्रारम्भिकशिक्षादीक्षादिकं विधाय तत्रत्यर्षिकुलमेनमवीविशत् । वसनाशन-पुस्तकादिप्रबन्धमप्यकार्षीत् । क्रमेण तत्रत्यश्रेणी. समुत्तीर्याऽग्रिमश्रेणीषु प्रविश्य पिपठिषु लवपुरं प्राहैषीत् । तत्रत्यविश्वविद्यालयस्य प्राच्यविद्यालये प्रविश्य इन्दुवह्निग्रहेन्दुमिते (१९३१) ख्रिष्टाब्देऽय शास्त्रिपरीक्षां समुत्तीर्णवान् । तत प्रेमसिंहमहात्मनि लोकान्तरं गते तच्छिष्यस्य श्रीहरिसिंहस्य साहाय्येन काशीमयासीत् । तत्र श्रीमदनमोहन-मालवीयपुरुषार्थसम्पन्ने विश्वविद्यालये प्रविश्यैकत्रिंशदधिकैकोनविंशतिशततमख्रिष्टाब्दादारभ्य चत्वारिंशदधिकैकोनविंशतिशततमख्रिष्टाब्दपर्यन्तं समधीत्य शाङ्कर-वेदान्तशास्त्रिपरीक्षां प्रथमश्रेण्या समुदतरत् । ततो वाराणसेयक्विंसकालेजीया दर्शनमध्यमान्यायशास्त्रिन्यायाचार्यपरीक्षाः क्रमेण समुत्तीर्याऽय न्यायाचार्यं समभूदित्यस्य स्वहस्तलिखितात्लेखाज्ज्ञायते । ततः सम्प्रार्थ्यमानैर्धर्मार्थविभागाधिकारिभिरुत्तरवाहिन्यां श्रीगदाधरपाठशालायामध्यापकपदे नियुक्तोऽय वेदविहगनन्देन्दुमित(१९९४)-वैक्रमाब्दादारभ्यैकोत्तरद्विसहस्रतम(२००१)वैक्रमाब्दान्तमध्यापयन् प्रतिमासं चत्वारिंशद्रूप्यकाणि मासिकं वेतनमलभत । जम्बूस्थश्रीरघुनाथपाठशालीयन्यायाऽध्यापके श्रीमहेश्वरशास्त्रिणि स्वीयं न्यायाध्यापककार्यभारं विमुच्य गृहान् गते, तत्र न्यायाध्यापकपदे जयरामशास्त्रिणमिमं प्रायुङ्क्त धर्मार्थपरिषत्प्रधानं श्रीहकीकतसिंहः । ततो दुर्दैवेन श्रीरघुनाथपाठशालीयप्रधानाध्यापकेषु क्रमेण क्षीयमाणेषु, श्रीपरशुरामकाकारामशास्त्रिणोर्वयस्कवृत्तिं लब्धवतो , श्रीसीतारामशास्त्रिणि वाराणस्यां मालवीयविश्वविद्यालयं गतवति भृतिक्रमेण लब्धावकाशोऽयमध्यक्षैः प्रधानाध्यापकपदे नियुक्तोऽद्यावधि तत्कार्यं सम्पादयति । अथ श्रीरघुनाथसंस्कृतमहाविद्यालयः सम्प्रति महाराजश्रीकर्णसिंहमहोदयानुग्रहेण जम्बूकाश्मीरविश्वविद्यालयेन सह कृतसम्बन्धो वर्तते । जम्बूकाश्मीरविश्वविद्यालयस्य कुलपतिपदमलङ्कुर्वाणो महाराजो डाक्टर-श्रीकर्णसिंहस्तद् व्यवस्थापकसमिति (सिण्डिकेट) सदस्येषु श्रीरघुनाथसंस्कृतमहाविद्यालयस्य प्रधानाध्यापकं श्रीपरशुरामशास्त्रिणमप्यन्यतमसदस्य (सिनेटर) निरवीवचत् । साम्प्रतं श्रीपरशुरामशास्त्रिणि वयस्कवृत्तिं लब्धवति श्रीजयरामशास्त्रिणं तत्पद-मारूरुहत् ।

---

### पण्डितप्रवर श्रीज्वालासहायः

अथ जम्बूराज्यान्तर्गत"गौर"नाम्ना प्रसिद्ध ग्राम विहगनेत्रनन्देन्दुमिते (१९२९)वैक्रमे वत्सरे भाद्रपदमासस्य षड्विंश(२६)तारिकाया प्रात सिंहलग्नोदये स्वजन्मनाऽमण्डयत् । अयमक्षरारम्भादिक पितृचरणसविधे विधाय पितृप्रेरणया जम्बू-नगरस्थश्रीरघुनाथसंस्कृतमहाविद्यालये व्याकरणादिशास्त्राणि समध्येतु प्राविशत् । तत्र परमविद्वद्भ्य श्रीगोकुलचन्द्रशास्त्रिभ्य, श्रीगङ्गाधरशास्त्रिभ्य, श्रीकाशीनाथशास्त्रि-भ्य, श्रीलक्ष्मणशास्त्रिभ्यश्च व्याकरणकर्मकाण्डधर्मशास्त्रकाव्यसाहित्यदर्शननिरुक्तादि-सहितान् वेदानध्यगीष्ट । अथ व्याकरणस्य शलाकापरीक्षास्वनेकश समुत्तीर्णो विद्व-त्परिषदि शास्त्रार्थसङ्गरे पराजितबहुपण्डितश्च वर्तते । कतिपयवर्षाणि श्रीरघुनाथ-पाठशालायां व्याकरणाध्यापकपदमलङ्कृतवान् । तदनन्तर लवपुरे वशीधरपाठशालाया द्वितीयाध्यापकपदमधिष्ठाय पञ्चदश वर्षाणि तत्राध्यापिपत् । तदनन्तर महाराज-श्रीप्रतापसिंह सम्मानपूर्वकमिम श्रीरघुनाथमन्दिरे कथावाचकपदे न्ययुङ्क्त । सम्प्रति नवतिवर्षवयसि वर्तमानोऽय गृहीयपाठशालाया छात्रानध्यापयति ।

---

### श्रीदामोदरपण्डित

राज्ञा व्रजराजदेवादनन्तर तदात्मज सम्पूर्णदेव एकवर्षदेशीय एव व्रजराजदेवस्य पितृव्यपुत्रमोटासिंहप्रातिनिध्येन दामोदरपण्डितेन कारिताऽभिषेको राजसिंहासन-मारूढ । परमय केवल दश वर्षाणि यावत् नाममात्रेण भूपतिर्भूत्वा बाल्यावस्थायामेव सर्वं विहाय लोकान्तरमगात् । रणजीतदेवस्य य कनिष्ठ पुत्रो दलीलदेव, तदात्मजो जीतसिंहो द्विगर्तभूपतिर्बभूव । तस्यापि राज्याभिषेक दामोदरपण्डित एवाचीकरत् । तस्य तु राज्यकार्यानभिज्ञत्वात् तद्राज्ञी नाम्ना 'बन्दराली' एव दामोदरपण्डितसाहा-य्येन सकल राज्यकार्यमचीचलत् । दामोदरपण्डित परमनीतिज्ञो मन्त्र-तन्त्र-कर्मकाण्डेषु प्रवीणोऽपि षड्यन्त्रसलग्नाया 'बन्दराली'राज्ञ्या कुव्यवहारैरसन्तुष्टो राजकार्येषु परमौदासीन्यमेवावलम्बत ।

---

### श्रीदामोदरवैद्यः, तद्वंश्याश्च

जम्बूनगरस्थश्रीरघुनाथपुराप्रतोलिकायां वसुगोत्रोपाह्वः कश्चिद् आयुर्वेदविद्या-विशारदः फीनारामो नाम ब्राह्मण. समभूत्। अस्माद्वैद्यवराद्भूनेत्रवस्विन्दुमिते (१८२१)वैक्रमाब्दे श्रीदामोदरो जनिमग्रहीत्। अयं जम्बूप्रान्तान्तर्गत"खिड़ाडियाँ"—ग्राममधिवसन् न्यायव्याकरणकाव्यादिषु प्रवीणोऽपि विशेषेणाऽऽयुर्वेदे सिद्धहस्तोऽभवत्। अस्य निदानानुसन्धानं रोगपरीक्षणञ्च विलक्षणे एवाभवताम्। केवल नाडीमुपगृह्य नेत्रे निमील्य क्षणेनैव रोगस्य निदानं नाम च निर्दिश्य तस्य साध्यत्वमसाध्यत्व ञ्च कथयति स्म। अयं मेघदूतहंसदूतरघुवंशकाव्याना टीकामप्यकार्षीत्। अनेन वैद्यविनोदनामकं हिन्दीभाषापुस्तकमप्यलेखि। अयं भूमीन्दुविहगवसुमतीमिते (१९११)वैक्रमे वत्सरे नवतिवर्षवयसि दिवं गतः।

अस्माद्वैद्यवरान्नत्थूरामः समजनि। असावप्यायुर्वेदे लब्धप्रतिष्ठ एवाभूत्। तस्य धनीरामचरणदासशर्म्माणौ द्वौ तनयावास्ताम्। तयोः कनीयान्ः श्रीचरणदासः सर्वशास्त्रनिष्णातोऽपि चिकित्साशास्त्रे सिद्धहस्तत्वेन पीयूषपाणितया आयुर्वेदपञ्चानन-नोपाधिमधिगतवान्।

---

### दुर्गादत्तशास्त्री

श्रीदुर्गादत्तशास्त्री जगदीशशर्म्मणो ज्येष्ठभ्रातुः श्रीभवानीदत्तस्य ज्यायाँस्तनूजः श्रीरघुनाथसंस्कृतमहाविद्यालये समधीत्य क्रमेण पञ्चनदविश्वविद्यालयीयप्राज्ञ-विशारद-शास्त्रिपरीक्षाः समुदतरन्। आङ्गलभाषायामपि परं प्रावीण्यं समधिगत्य जम्बू-काश्मीरप्रजासभाया महतः पुस्तकालयस्याध्यक्षपदमध्यतिष्ठत्। संस्कृत-साहित्यस्य प्रचारप्रसारार्थं च परं प्रायतत। अयं विनीतः, सुशीलः, अध्ययनाध्यापन-परश्च वर्तते।

---

### महामहोपाध्यायाः श्रीदेवराजशास्त्रिणः

इमे श्रीगोकुलचन्द्रशास्त्रिणां प्रपौत्रा गङ्गाधरशास्त्रिणां सुपुत्रा वसुवेदाङ्कभूमिते (१९४८)वैक्रमाब्दे मार्गशीर्षमासे कृष्णपक्षे नवम्यां भौमे दिवसे द्वादशवादनवेलायां

मकरलग्नोदये जनिमग्रहीषु । पञ्चवर्षवयस्येव कृतोपनयनसंस्कारा स्वपितृचरणयोर्मूलमध्युष्य वेदमन्त्रान् पाणिनिसूत्राणि चाभ्यास्यन् । पाठशालीयविदुषा सविधे व्याकरणकाव्यादीनि शास्त्राणि समधीत्य श्रौतस्मार्तकर्मसु विशेषरुचयोऽभवन् । ततो वैदिकविद्वद्भ्य साङ्ग सविस्तर कर्मकाण्डशास्त्र ममधीत्य कर्मकाण्डप्रवीणा इमे जम्बूकाश्मीरस्थविद्वद्गणेषु कर्मकाण्डिषु प्राथमिकी प्रतिष्ठा समवाप्य शनै शनै प्राप्तकीर्तिप्रसरा समस्तेऽपि पञ्चनदप्रदेशे परा ख्यातिमलभन्त ।

एतेषामेतादृश वैदुष्य प्रतिभानैर्मल्यञ्च परिज्ञाय महाराजश्रीप्रतापसिह सादरमिमान् श्रीरघुनाथमन्दिरस्याधिष्ठातृपदमध्यतिष्ठिपत् । तदनन्तर महाराजश्रीहरिसिंहोऽपि एषा पाण्डित्येन प्रभावितो राजप्रासादीयकर्मकाण्डाचार्यपदमेभ्य प्रायच्छत् । श्रीरघुनाथसंस्कृतमहाविद्यालयस्य प्रिंसिपलपदमपीमानेवाध्यतिष्ठिपत् । इमे एव महाराजश्रीहरिसिहस्य राज्याभिषेकमप्यचीकरन् । तस्मिन् राज्याभिषेके पञ्चलक्षरूप्यकाणि विद्वद्भ्यो ब्राह्मणेभ्यो दीनेभ्यश्चादापयन् । एषा वैदुष्येण सर्वजनमनोरञ्जनविधिना च पर प्रभावितो महाराजश्रीहरिसिंह इमान् स्वगुम्नत्वार्पीत्, भारतसर्वकाराच्च महामहोपाध्यायपदवीमेभ्योऽदापयत् । ग्रामञ्चैक स्वय प्रायच्छत् । बुधवराणा गुणग्रहणे, तेषा समुन्नतिसम्पादने, सर्वथा साहाय्ये च सहर्ष बद्धपरिकरा न जाने कियतां ब्राह्मणविदुषा तदितरेषा चेमे जीवनदातार आसन् । बहुप्रकारप्रकारैश्च याचकान् सफलमनोरथान् कुर्वन्त एते महामहोपाध्याया स्वकीयमक्षय यश समचिन्वन् । शतश सहस्रशा ब्राह्मणा दीनाश्च तैरुपकृता अद्यापि विद्यन्ते ।

किमधिककथनेन स्वकीयविषये असाधारणा अद्वितीयाश्चैते सर्वमुन्नति, सौभाग्य, सामर्थ्य, महत्त्व सकलमपि स्वहस्तेनैव सम्पादयन्त सर्वेषामेव संस्कृतज्ञानामादर्शभूता अभूवन् । एतदेव पूर्ण महत्त्वम्, एषैव सम्पूर्णा स्मृति, एतदेव वास्तविक गौरवम्, यदिमे सति समये सर्व परित्यज्य तटस्था समभूवन् । इमे महानुभावा पञ्चपञ्चाशद्वर्षवयसि वस्वङ्कनन्दवसुमतीमिते (१९९८)वैक्रमाब्दे काश्मीरेषु श्रीनगर स्वकनिष्ठभ्रातुर्बालकृष्णशास्त्रिणा दक्षिणोरुनिहितशिरसो स्वजनाऽनुचरान् विहाय दिवमगु ।

---

## सर्वतन्त्रस्वतन्त्र श्रीधूर्जटिपण्डित, तद्वंशजाश्च

जम्बूराज्यान्तर्गतजन्द्राहपत्तनवास्तव्यो ब्राह्मणतनुजन्माऽय धूर्जटिपण्डितोऽनुमानतो नेत्राग्निवसुवसुमतीमिते (१८३२)वैक्रमाब्दे समाविरभवत्। अय स्वायुषोऽष्टादश वर्षाणि वाराणसीमध्युष्य काव्यव्याकरणधर्मशास्त्रदर्शनादीनि शास्त्राणि समध्यगीष्ट। प्राचीनार्वाचीनन्यायनिष्णातोऽय विद्वत्परिषदि महतो महत शास्त्रार्थमहारथान् पराजयत। वाराणसीत प्रत्यावृत्य स्वजन्मभूमौ जन्द्राहपत्तने ब्राह्मणवटून् राजपुत्रांश्चाध्यापयन्नय महती ख्यातिमाप्नोत्। सर्वत्र द्विगर्तप्रान्तेऽस्य विद्यागुणा कस्तूरिकामोदा इव प्रासरन्। दूरदूरत समागत्य ब्राह्मणवटव क्षत्रियकुमाराश्चास्य शिष्यत्वमधिगत्यात्मान धन्य मन्यन्ते स्म।

कर्णोपकर्णिकया महाराज श्रीगुलाबसिंह श्रीधूर्जटेर्वैदुष्यख्याति समाकर्ण्य जन्द्राहपत्तनादेतान् सादरमाहूय राजपण्डितपदमध्यतिष्ठिपत्। 'एतत्सदृशा यदि बहवो विद्वासो मम राष्ट्रे सम्भवेयु, तदानी मन्ये प्रजास्य स्वस्ति सम्पत्स्यते इति' मत्वा श्रीधूर्जटि तत्रत्यान् प्रजाबालानध्यापयितु साग्रह प्रार्थयामास। 'पृथिवीपते! नाह वैतनिकी वृत्तिमाश्रित्य व्रात्यो भवितुमीहे। अगृहीतवेतनस्तु सर्वथा सर्वदाऽध्यापयितु सन्नद्धोऽस्मि, यदि भवद्भ्यो रोचेत' इत्यवादीद् धूर्जटिपण्डित। धूर्जटेस्त्यागेनौदार्य्येण च पर प्रीतो महाराज स्वसद्मन्येवाध्यापयितु तमादिदेश।

निश्शुल्कमध्यापयतोऽस्य विदुष शतश शिष्या विद्वास समभूवन्। अष्टादश पुराणानि तु धूर्जटेर्हस्तामलकान्यासन्, तेषा प्रवचनेन प्रायो राष्ट्र भागवतीभूय सत्पथे प्रवृत्तम्। महाराज श्रीगुलाबसिंहो धूर्जटिं द्रष्टु तत्सत्सङ्ग विधातुञ्च प्रत्यह तच्चरणयोर्मूल समागत्य परमश्रद्धया तदुपदेशान् शुश्राव, तांश्चानुससार। रसशरवसुवसुमतीमिते (१८५६) ख्रिष्टाब्दे पितरि दिव गते महाराज श्रीरणवीरसिंहो द्वैगर्तिकराज्यसिंहासनमधिरूढ, सोऽप्येन गुरुवत् पूजयति स्म।

तत्तनूज प्रतापसिंह श्रीधूर्जटिसविधे पाणिनीयव्याकरण, तर्कसंग्रहमुक्तावलीप्रभृतीन् न्यायग्रन्थांश्चाध्यगीष्ट। अन्ते सर्वस्व पुत्रपौत्रादिकञ्च परित्यज्य मुमुक्षयाऽय काशीमयासीत्। द्वित्रवर्षाणि काशीमध्युष्य भक्तिप्रह्वचेताश्च भगवतो विश्वनाथस्य मन्दिर गत्वा आत्मनाऽऽनीतेन गङ्गाजलेन भगवन्त विश्वनाथमभिषिञ्चति स्म। एवमलौकिकप्रतिभाशाली सुविदितमहाप्रभाव श्रीधूर्जटिमहानुभाव कालगतेरनतिक्रमणीयतया स्वायुष सप्तनवतितमे वत्सरे उत्तरायणे वैशाखमासे शुक्लसप्तम्या भृगुवासरे प्रात सार्द्धसप्तवादनवेलायां पार्थिव शरीरमपहाय शिवसायुज्यमाससाद।

## श्रीधूर्जटिपण्डितवंश्याः

### १. श्रीकाशीनाथः

सर्वतन्त्रस्वतन्त्रस्य श्रीधूर्जटेः सत्पुत्र श्रीकाशीनाथ पितृवद् व्याकरणादौ लब्धप्रसरोऽभवत् । अयं सीतारामशिवनाभौ नाम रामलक्ष्मणाविवाभिन्नहृदयौ परस्पर सेव्यसेवकभावापन्नौ सुतौ जनयामास ।

### २. श्रीसीतारामः

सीतारामो राजानक एकोनविंशतिशततमे (१९००)वैक्रमे वत्सरे सौर-माघमासे भीष्माष्टम्यां जनुरग्रहीत् । यथासमय समुपनीतोऽय पितृपादैरेव प्रारम्भिक-दीक्षामनुग्राहितः । क्रमेण जातबोध. स्वपितामहगुणान् कर्णोपकर्णिकयाऽकर्ण्य सञ्जात-स्पर्धः पितामहचरणयोर्मूलमध्युप्य पाणिनीयव्याकरण गौतमकणादीय न्यायशास्त्रञ्च समधीत्य स्वरितप्रवक्ता सम्बभूव । ततः कुलक्रमागतकर्मकाण्डसरणिमनुसरन् ज्योति.-शास्त्रस्य फलितांशेऽपि सिद्धहस्त. सम्बभूव । प्रान्तीयब्राह्मणवटून् क्षत्रियकुमारान् तदितरांश्च शिशून् गृहीयपाठशालायामध्यापयन् तदानीं महद् यशो लेभे ।

### ३ हरिश्चन्द्रो राजानकः

श्रीसीताराम. भूवन्हिग्रहेन्दुमिते (१९३१)वैक्रमाब्दे चैत्रशुक्लप्रतिपदि नयना-नन्दकर सुत जनयामास । यस्यैकादशेऽह्नि हरिश्चन्द्र इति नाम कृतवान् । गर्भादष्टमे वर्षे कृतोपनयनसंस्कारमिम लघुकौमुदीममरकोष रुद्राष्टाध्यायी च पिता स्वगृह एवा-ध्यापिपत् । ततो विशेषशास्त्राणि समध्येतु श्रीहरिश्चन्द्र श्रीरघुनाथसंस्कृत-महाविद्यालये प्रविश्य पाणिनीयव्याकरणप्रक्रियाया सिद्धहस्तोऽभवत् । जन्द्राहपत्तनीय-संस्कृतपाठशालायामध्यापकपदमधितिष्ठन् यावज्जीव व्याकरण कर्मकाण्डपद्धतिं चाध्यापिपत् । असौ कर्मकाण्डधुरीणोऽपि फलितज्योतिषि कृताभ्यासो जन्मलग्न-चक्रावलोकनमात्रेण प्रष्टु. सर्वमतीतानागतेतिवृत्त करमुकुरप्रतिबिम्बमिव दर्शयन् लोकेषु परमसम्मानितोऽभवत् । सीतारामपण्डित पुत्रैश्वर्यसुख चिरमनुभूय स्वा-युषोऽशीतितमे वत्सरे भौतिकशरीरलीला समाप्य ब्राह्मणोचितां गतिं गत. ।

### ४. श्रीमूलराजशास्त्री

श्रीहरिश्चन्द्रसकाशात् बाणर्षिग्रहेन्दुमिते (१९७५)वैक्रमे वत्सरे श्रावणमासे पुत्ररत्नमजायत । मूलभे जनिवशात् पिताऽस्य नाम मूलराज इत्यकार्षीत् । मूलभ-

स्य पुण्यघटिकासु मन्त्रियोगे समुत्पन्नोऽसौ पितृपादैरेव कृतोपनयनसंस्कारो वर्णाभ्यासमुपक्रम्य क्रियमाणशास्त्रशिक्षोपक्रमं पितृप्रेरणया जन्द्राहग्रामतश्चत्वारिंशत्क्रोशदूरे वर्तमानं जम्बूनगरमयासीत् । तत्रत्ये श्रीरघुनाथसंस्कृतमहाविद्यालये प्रविश्य सर्वतन्त्रस्वतन्त्राणां विदुषां सविधे कञ्चित् कालमध्युष्य क्रमेण प्रतिभाकारणानुकूलं सिद्धान्तकौमुदीमुक्तावल्यादिविभिन्नशास्त्रविषयप्रतिपादकग्रन्थान् समधीत्य वर्तमानयुगानुरूपे पाण्डित्ये समुद्भूतेऽपि निखिलानामगाधपयोधीनामिव शास्त्राणां पारदिदृक्षयाऽऽकुलितचेता अहोरात्रं यतमान आगमरहस्यतत्त्वान्वेषणे चोद्बुद्धसंस्कारस्तेषामेव तत्रत्यानां विदुषां चरणसरोरुहयुगलानि सेवमानोऽल्पीयसैवानेहसा व्याकरणन्यायज्योतिःशास्त्राम्बुधीनां सततस्पर्शं परं पाण्डित्यमवाप्नोत् । ततः क्रमेण पञ्चनदविश्वविद्यालयीयां प्राज्ञ-विशारद-शास्त्रिपरीक्षां सौकर्येण समुदतरत् । गुणैः, वैदुष्येण, व्यवहारनैपुण्येन चायं तात्कालिकविदुषां सतीर्थ्यानां च परं मोदमातनोत् । कर्मकाण्डविषयकमस्य पाण्डित्यं पद्धतिनैपुण्यञ्च कर्मकाण्डवारिधिपारदर्शिनोऽपि विस्मापयति । अस्य गुणैः प्रभावितौ द्वैगतिकब्राह्मणवंशावतंसौ श्रीदेवराजबालकृष्णौ सहोदरौ भ्रातरौ धर्मार्थाधिकारिणोऽनुरुध्य श्रीमूलराज श्रीरघुनाथपाठशालायां न्यायवेदाध्यापकपदमध्यतिष्ठिपाताम् । मूलराजोऽयं चतुरो वेदानधीयानोऽपि यजुर्वेदं साङ्गं सस्वरमधीतवान् । साम्प्रतं श्रीरघुनाथसंस्कृतमहाविद्यालयेऽहर्निशं निजालौकिकप्रतिभाविभवेनाऽखिलागमनिगूढतररहस्यानि करामलकवत् प्रकाशयन् सर्वेषां विदुषामन्तेवासिनां च मुदं प्रवर्धयन्नास्ते । नायं केवलं शास्त्रमर्मज्ञोऽध्ययनाध्यापनपटुरेव किन्तु लोकव्यवहारविषयेऽप्यस्य सूक्ष्मेक्षिका, प्रत्युत्पन्नमतिता, परिचयपेशलता, सामयिककार्यकारिता च स्पृहणीया अनुकरणीया च वर्तते । अस्य व्यवहारनैपुण्यं, परिचयपेशलत्वं मधुरभाषणं, परं वैदुष्यं च जनमनांसि समावर्जयति, येनाऽयं सर्वजनप्रीतिभाजनं संवृत्तो, जम्बूवास्तव्यानां सनातनधर्मसभायां ब्राह्मणसभायाञ्च मन्त्रिपदमधितिष्ठति । महाराजश्रीकर्णसिंहस्यायं विशेषेण प्रियतमो वर्तते । कणभक्षाक्षपादीयशास्त्रं तु अस्य जिह्वाग्रे वर्तते । साम्प्रतं सर्वस्मिन् जम्बूनगरेऽन्यः कश्चित् कर्मकाण्डचातुरीधुरीणोऽपि तत्परिपाटीपटीयानपि विषयेऽस्मिन्नस्य तत्तुलनां कर्तुं न प्रभवति । सर्वत्र यज्ञेषु संस्कारकर्मसु चायमेव प्रधानाचार्यपदमधितिष्ठति ।

### ५ श्रीशिवनाभशर्मा

श्रीशिवनाभराजानकः श्रीकाशीनारामपण्डितस्य कनीयान् तनूजोऽभवत् । अयं शून्याश्विविहगवसुमतीमिते (१९२०)वैक्रमाब्दे फाल्गुनमासे (चैत्रशिरचतुर्दश्या)

दिवा कर्कलग्नोदये जनुषा जन्द्राहपत्तनमभ्यग्रहीत्। अथ परमभागवत ससारासारता-मनुभवन्, बाल्य एव विरक्तवृत्तिरभवत्। अथ शास्त्रपद्धतिं बन्धनवागुरामिव मन्वानो जननीमिव स्नेहमयी ज्ञानामृतस्तन्यप्रस्रविणी भगवत्सान्निध्यविधायिनी भगवद्भक्ति-मेव करालकलिकालपारावारसन्तारणतरिमशिश्रियत्। नदीष्णोऽय वार्धक्येऽपि प्रात-श्चतुर्वादनवेलाया समुत्थाय कृतप्रात स्मरणाऽतिकठिनाया नदीमार्गसोपानपङ्क्तेर्महान्त-मप्यारोहावरोहश्रममविगणय्य विजानानो नित्य नदीतीरमुपाश्रित्य शौचस्नानसन्ध्या-वन्दनपितृतर्पणादिकमकार्षीत्। गृहीताक्षमाल प्रतिक्षण जपानुष्ठानभगवद्भजनस्मरण-कीर्तनसलग्नमानसश्च भगवति तन्मयोऽभवत्। अथ स्वाश्रितान् स्वशिष्यान् यजमा-नाश्च श्रद्धया समागतानुपदिदेश यद्— यमराजसदम सर्वेऽपि सदस्या सस्कृतभाषा-भाषिणो विद्यन्ते। यदि यूय सस्कृत नाधीध्व तर्हि यमकिङ्करैर्बलाद् यमपुर नीता यमेन तत्सदस सदस्यैश्च सस्कृतेन शुभाशुभकर्मविषये पृष्टास्तद्वचसामभिधेय-मजानाना किमुत्तरिष्यथ? इत्यतश्च मर्मैरपि भवद्भिरध्यय सस्कृतमिति'। धन्याऽय सस्कृतभाषाप्रचारको भक्तप्रवर, या हि सस्कृतभाषा लोकानध्यापयितु तस्य पर-लोकविभीषिकामदात् स्वाश्रितस्य। भागवतोऽय श्रीशिवनाभ एकाशीत्युत्तरद्विसहस्रतमे (२००१)वैक्रमे वत्सरे भौतिकशरीरलीला विहाय वैकुण्ठ प्रातिष्ठत।

## ६ श्रीविश्वनाथपण्डित

भक्तप्रवरस्य श्रीशिवनाभस्य तनूजन्मा श्रीविश्वनाथपण्डितो त्रिलोचनवदविहग रसमुनीमित (१९४२)वैक्रमाब्दे श्रावणशुक्लपञ्चम्या गता कुम्भलग्नोदय प्रादुरभूत्। अयमपि पितृवत् कर्मकाण्डपरायण परमभागवतोऽभवत्। अय वसनाशनपानादिषु साधारणोऽपि दक्षपितृकार्यातिथिब्राह्मणसेवादिष्वसाधारणोऽभवत्। गृहे एव ब्राह्मणबटून् राजपुत्रतनयांश्च कर्मकाण्ड, सन्ध्यामन्त्रान् लघुकौमुदी, नीलकण्ठीबृहज्जातकप्रभृतिज्यो-तिषग्रन्थांश्च पितृवत्सानन्दपुर सरमध्यापयन् वृत्तीश्वरब्राह्मणाना धर्मप्रियक्षत्रियाणा च प्रमास्पदीभूत, तदात्व स्नेहमय सस्कृतसाहित्यकल्पवृक्षमूलस्याभिषक्ताय राजानक श्रीविश्वनाथपण्डित एकादशाधिकद्विसहस्रतम (२०११)वैक्रमाब्द मार्गशीर्ष-मासे रुदन शिष्याश्रीन पुत्रादीन् विरहय्य दिव गत।

## ७ श्रीमोतीरामशास्त्री

विश्वनाथपण्डितस्य सप्तसुत श्रीमोतीरामशास्त्री ग्रहमुनिनन्देन्दुमित (१९७९)-वैक्रमाब्दे वैशाखमासस्याष्टाविंशति(२८)तारिकाया समाविर्भूय स्वसूनमलञ्चक्रे।

अष्टवर्षवयस्येवोपनीय श्रीरघुनाथसंस्कृतमहाविद्यालये पिपाठयिषया पित्रा प्रवेशितः। तत्रायं स्वप्रतिभाप्रभावेण गुरुचरणशुश्रूषया च स्वल्पीयसैवानेहसा सिद्धान्तकौमुदीम्, नवान्हिकमहाभाष्यम्, न्यायमुक्तावलीम्, साहित्यदर्पणम्, ध्वन्यालोकम्, ग्रहलाघवम्, सिद्धान्तशिरोमणिम्, नैषधीयचरितशिशुपालवधकिरातार्जुनीयकाव्यानि समधीत्य क्रमेण पञ्चनदविश्वविद्यालयोयप्राज्ञ-विशारद-शास्त्रिपरीक्षाः समुदतरत् । महाराजः श्रीहरिसिंहोऽस्य वैदुष्यं, योग्यतामध्यापनपाटवं चानुभूय शास्त्रिणमेनं श्रीरघुनाथ-पाठशालायामध्यापकपदमध्यतिष्ठिपत् । अयं विनीतः, सुशीलः, लोकव्यवहारकुशलः, प्रसन्नवदनश्चास्ते । अयं स्वाधिकारिणोऽन्तेवासिनश्च सन्तोषयन् यशोभाजनं संवृत्तः । कुलक्रमागतकर्मकाण्डकर्मण्यप्ययमप्रतिहतगतिर्वर्तते । ज्यौतिषशास्त्रस्य फलितांशे तु हस्ततले सर्षपं वपतीव । अयं प्रान्तीयढ्ँगतिकभाषामयी कवितां कलयितु यथासमयं यथाविषयं च लोकोक्तीः समुदाहर्तुं च यथाक्रममाशुकविः प्रत्युत्पन्नमतिश्च वर्तते ।

---

## श्रीधूर्जटिपण्डितस्य भ्रात्रोर्वंशजाः

### १. श्रीबुधवन्तशर्मा

धूर्जटेरन्यावपि द्वौ सहोदरौ कनीयांसौ भ्रातरावास्ताम्—बुधवन्तो नृसिंहदासश्च । धूर्जटौ काशीं गतवति तदभावक्षतिमपनेतुं महाराजः श्रीरणवीरसिंहः तद्भ्रात्रोरन्यतरं बुधवन्तं स्वराजधानीं जम्बूनगरीमानाय्य धूर्जटिपदमध्यतिष्ठिपत् । बुधवन्तोऽपि धूर्जटिरिव सर्वं राजान्तःपुरीयकर्मकाण्डकार्यमध्ययनाध्यापनादिकं साधु समपादयत् ।

### २. श्रीशेखरशास्त्री

बुधवन्तात्मजः श्रीशेखरः पाणिनीयव्याकरणाध्यापनचणो विद्वद्भिरपरः पाणिनिरित्युच्यते स्म । नागोजिभट्टकृतस्य सिद्धान्तकौमुदीव्याख्यानभूतस्य शेखरस्य जिह्वाग्रतया लोकैः स शेखरो नवशेखर इत्युच्यते स्म । अयं शास्त्रार्थसङ्गरेष्वनेकधाऽनेकान् विद्वद्वीरान् पराजित्य महाराजश्रीप्रतापसिंहसकाशात् शतशः पुरस्कारान् अलभत ।

### ३. राजानकः श्रीराधाकृष्णः

श्रीशेखरतनुजन्मा रैणाश्रीराधाकृष्णः सर्वशास्त्रेषु पितृकल्पोऽपि ज्योतिषे पितरमप्यत्यशेत । तस्य ज्योतिःशास्त्रे सिद्धहस्तत्वं समाकर्ण्य पुञ्छराज्याधिपतिः श्रीबलदेव-

सिंहस्त स्वराजधानीमानीनयत्। स च त राजान तत्प्रजाजनाश्च सत्पथे प्रावर्तयत्। तत्रत्यान् पिपठिषून् बालकान् ज्योति शास्त्रकाव्यव्याकरणकर्मकाण्डादीनि शास्त्राणि च गृह एवाध्यापयत्। तत्रत्येन राज्ञा लोकैश्च सम्मानितोऽय राजपण्डितपदमप्यवाप्तवान्।

---

## १ श्रीनृसिंहदास

धूर्जटेरपरो भ्राता नृसिंहदास पण्डितो भवन्नपि उदासीनो निरीह सर्वजीवसरक्षकश्चासीत्। स स्वीय जन्द्राहपत्तन विहाय नान्यत्र जीविका लब्धुमयासीत्। किन्तु स्वपत्तन एव चतुर्णामपि वर्णाना बालकान् समाहूय यथाधिकार स्वगृहे एवाध्यापयत्। दूरदूरात् साधारणा असाधारणाश्च ब्राह्मणा क्षत्रिया अन्ये वा ये जिज्ञासव आसन् ते सर्वे तत्राऽऽगाममागाम शतश सन्देहविषयकान् प्रश्नान् अप्राक्षु। तेषा च यथोचितान्युत्तराणि आकर्ण्य पर मुमुदिरे।

## २ श्रीनत्थूराम

नृसिंहदासस्य तनूज श्रीनत्थूराम कतिपयवर्षाणि कालिकाताया वाराणस्या च स्थित्वा सर्वदर्शनेषु परमनिष्णात समभवत्। नव्यन्यायपरिभाषा परिष्कारप्रकार चादाय कश्चिदपि वादी क्षणमपि तत्समक्ष स्थातुमपि न शशाक, किमुत वक्तुम्। तस्य तादृश शास्त्रार्थमहारथत्व कर्णोपकर्णिकयाऽऽकर्ण्य कालिकातात समाहूय महाराजश्रीप्रतापसिंह स्वगुरोमहामहोपाध्यायश्रीजगदीश्वरशर्म्मण सुत बृहस्पतिकल्प श्रीचन्द्र दर्शनादिकमध्यापयितु न्ययुङ्क्त। अपि च त श्रीरघुनाथपाठशालाया मीमासाध्यापकपदमप्यध्यतिष्ठिपत्। अय स्वायुषोऽष्टाशीतितिवर्षवयसि श्रीरघुनाथपाठशालायाश्छात्रावासे स्वकक्षे हरिं स्मरन् भौतिकलीला विहाय आत्मन्यलीयत।

---

## श्रीनन्दलालवैद्य

उद्धमपुरनगरे साधारणपण्डित कश्चिन्नृसिंहदासाभिधो ब्राह्मणोऽभवत्। स च पञ्चविंशत्युत्तरैकोनविंशतिशततम (१६२५)वैक्रमहायन नन्दलालनामान तनय जनयामास। यो हि जन्मान्तरसस्कारैर्गुरुकृपया स्वाभ्यासेन वाऽऽयुर्वेदविद्याया पर पारङ्गतोऽगाधाऽन्यसाध्यरोगग्रस्तानपि रोगिणा नीरोगान्कुर्वाणो सोऽर्व पीयूषपाणिरित्युच्यते

स्म । एकस्मिन्नेव काले शतशो रुग्णान् पश्यन्नौपधानि च तेभ्यो वितरन् न श्रममनुभवति स्म, न च वैषम्यमवलम्बते स्म । असौ पञ्चचत्वारिंशद्वर्षवयसि वर्तमान. सप्तत्युत्तरैकोनविंशतिशततमे (१९७०) वैक्रमाब्दे गत पितृलोक चिकित्सितुमिव पितॄन् ।

---

## श्रीनन्दलालशास्त्री

जम्बूराज्यान्तर्गतोद्धमपुरप्रान्तीय'नगरोटा'ग्रामवास्तव्यस्य कर्मकाण्डप्रकाण्डस्य श्रीदेवीदयालशर्म्मण पण्डितवरिष्ठस्य धर्मपत्न्या जनुर्गृहीत्वासौ श्रीनन्दलालशास्त्री स्वरूपलावण्यादिभिर्गुणै पित्रो परा मुदमवीवृधत् । पुत्रमुखावलोकनानन्दितान्तरात्मा श्रीदेवीदयालु स्वसुतस्य 'नन्दलाल' इति नामधेयमकार्षीत् । सोऽय नन्दलाल शैशवे लघुकौमुदीप्रभृतीनि लघुलघूनि सस्कृतपुस्तकानि पितृसकाशात् समधीत्य किञ्चिज्जातबोध पितृप्रेरणया जम्बूनगरस्थश्रीरघुनाथपाठशालाया प्रविश्य, तत्रत्यनियमानुसार तत्तद्विपयाध्यापकेभ्यस्तत्तद्विपयान् समधीत्य क्रमेण पञ्चनदविश्वविद्यालयीयप्राज्ञ-विशारद-शास्त्रिपरीक्षा समुदतरत् । ततो विद्वद्वरिष्ठेभ्य *श्रीकाशीनाथगङ्गाधरप्रभृतिभ्यो भाष्यान्त व्याकरणम्, न्यायसाख्ययोगपूर्वोत्तरमीमा*-सादिशास्त्रग्रन्थान् स्वातन्त्र्येण समधीत्य, शास्त्रीत्युपाधिमन्वर्थमकार्षीत् । ततस्तारुण्ये वर्तमानस्यास्य शास्त्राम्बुधितरणकुतूहलित्वम्, शास्त्रप्रवचनपटुत्वम्, अध्यापनविधिप्रावीण्य च स्वयमनुभूय महाराज श्रीप्रतापसिंह श्रीरघुनाथपाठशालीयान्यतमाऽध्यापकपदमध्यतिष्ठिपदिमम् । कतिपयहायनानि तत्राध्यापन कारयतोऽस्य छात्राणा विदुपा च ससदि महती ख्याति कर्णोपकर्णिकया समुपश्रुत्य प्रीतमना महाराज श्रीप्रतापसिंह स्वसदस सदस्याना विदुपा मध्ये श्रीनन्दलालशास्त्रिणमप्यन्वग्रहीत् । तत्रासौ महाराजसन्तोपपुरसर विदुप सदस्यानपि स्ववैदुष्येण समतूतुपत् । पण्डितेन्द्रश्रीकाशीनाथविरचितशिवस्तुतिपरक'पीयूपगङ्गा'नामकवेदान्ततत्त्वोद्बोधकखण्डकाव्यस्य मर्मोद्बोधिका टीका विरच्यासौ महानुभावो यशोभाजन समभवत् । असौ परमदार्शनिकोऽपि तर्ककर्कशोऽपि च सन् कमलकोमलकाव्यकलाकानने, नवनीतसममृदुलसाहित्यसुधास्वादनेऽपि च दुर्ललितस्वान्तो यथासमय प्रकीर्णकविता महाराजस्य तदधिकारिणा च प्रशस्तिपद्यानि च निर्माय तत्रत्यान् सदस सदस्यान् अशुश्रवत् । तेपु यथालाभ द्वित्रपद्यानि समुदाह्रियन्ते—

राघवेन्द्रकुलाम्युत्थप्रतापेन्दुर्बुधाश्रय ।
य परो वीरवर्येषु यस्य बुद्धिर्नये परा ॥
राजते य सभामध्येऽरातीना हृदयार्तिद ।
राजस्तुत्य सहात्मीयै सदानोऽव्याद्धि स प्रभु ॥ (खड्गबन्ध)

कवीन्द्रगीत ! सुश्लोक ! कश्मीरेश ! वदान्यक !
वागीश ! स्यान्निदाघाह्नो वा तव प्रतत मह ॥ (छत्रबन्ध)

असौ वर्णेन गौर, आकारेण दीर्घ, आकृत्या सुन्दर, स्वभावेन विनीत, विदुषा सदसि निर्भय, प्रत्युत्पन्नमतिश्च समभवत्। अमुष्य जन्मकालो निधनकालश्चेदमित्थतया निश्चितो नोपलब्ध ।

---

### श्रीनित्यानन्दब्रह्मचारी

जम्बूराज्यान्तर्गतोद्धमपुरनाम्नि नगरे कश्चित्कर्मकाण्डप्रक्रियाप्रवीण, सदाचारपरायणश्चन्द्रमौलिनामधेयो ब्राह्मणोऽवात्सीत्। तस्य पतिपरायणा धर्मपत्नी वस्वश्विनन्देन्दुमिते (१९२८)वैक्रमाब्दे ज्येष्ठकृष्णनवम्या कन्यालग्ने परिव्राजकयोगे भाविन योगीश्वर पुत्ररत्न प्रासूत। पितृपाद शुभस्थानस्थिततत्तद्ग्रहाणा योगेनान्ते नित्यानन्दमयापारमच्चिदानन्दसमुद्रावगाहनमनुमायैकादशेऽह्नि शिशोरस्य 'नित्यानन्द' इतिनामधेयमकार्षीत्। प्राप्ते वयसि यज्ञोपवीतसस्कार विधाय कतिपयवर्षाणि पितृपादा स्वयमष्टाध्याय्यमरकोशप्रभृतीनि पुस्तकान्येनमध्यापिपन्। एकादशवर्षदेशीय चैन विशेषशास्त्राणा पिपाठयिषया श्रीरघुनाथसस्कृतपाठशालाया प्रावीविशन्। तत्र सर्वतन्त्रस्वतन्त्राणा श्रीगङ्गाधरशास्त्रिणा सविधे योगीन्द्र श्रीनित्यानन्दब्रह्मचारी साख्ययोगौ, वेदान्तदर्शनम्, कर्मकाण्डसम्बन्धीनि पारस्करगृह्यसूत्रयजुर्वेदसहितादीनि पुस्तकानि, सिद्धान्तकौमुदी चाध्यगीष्ट। तदनन्तर ज्यौतिविल्लक्ष्मणशास्त्रिणा सविधे ज्यौति शास्त्र, याज्ञवल्क्यस्मृति समिताक्षराटीका च समधीतवान्। शैशवावस्थायामेवैमेऽतीव विरक्ता विशेषप्रतिभावन्ता योगप्रक्रियाया विशेषरुचयोऽभवन्। यौवनावस्थायान्तु गमधीतशास्त्रा यमनियमानाचरन्न कमपि सिद्धयोगिनमन्वेष्टुमारब्धवन्त । अथ कदाचिदष्टाङ्गयोगयुक्तात्मानमधिराधिककाल निर्बीजसमाधिमधितिष्ठन्त सर्वदाऽगिलभुवनतल करामलकवत्पश्यन्त सन्यासाश्रमाश्रयिण कमपि मुक्त योगिनमधिगत्य परा प्रीतिमापन्ना । सनियम त योगपथप्रदर्शक गुरु-

मकार्षुः । कञ्चित् कालं गुरुचरणयोर्मूलमाश्रित्य प्राणायामाभ्यासादारभ्य धारणाध्यान-समाधिलक्षणमाभ्यन्तरं योगाङ्गत्रयं यावत्सम्यगभ्यास्यन् । गुरुतः समुपलब्धाऽष्टाङ्गयोगा हिमाद्रेरुपत्यकायां कस्याञ्चिद् गुहायां प्रविश्य, मिताशिनो मितभाषिणो निरुद्धेन्द्रियग्रामाः संयमितमनस्काः सन्तो गुरुप्रदर्शितमार्गेण कञ्चित्कालं योगाभ्यासमकार्षुः ।

एवं किलाख्यायते, तैः स्वयमपि यदाकदाचिदभिधीयते च यत्—कदाचित्काचित्तरुणी तारुण्यमदविह्वला तेषां लोकोत्तरं सौन्दर्यं कमलकोमलं शरीरं च समवलोक्य कामपरवशीभूय मेनकेव विश्वामित्रमेतान्विमोहयितुं प्रावर्तत । भूयो भूयो बोधनेनाप्यनिवर्तमानाऽन्ते सा वैफल्यमेवाद्राक्षीत् । यस्य नारीमात्रेऽपि सर्वथा सर्वदा मातृत्वबुद्धिः, तस्य कदाचित्कस्याचिद् भोगिनीबुद्धिर्भवेदिति स्वप्नेऽपि न सम्भाव्यते । बोध्यमानापि यदासौ तरुणी नावाबुध्यत, तदा दूयमानमानसा इमे तीक्ष्णधारया छुरिकया स्वोपस्थेन्द्रियं छित्वा तदग्रे प्रक्षिप्यावोचन्—'मातः ! गृहाणेदं, यत्कृते स्वात्मानं मां च पातयितुं प्रयतमानाऽसि' इति । अहो ! साहसिकत्वम्, कर्मणोऽभूतपूर्वत्वम्, तपसोऽतिकाठिन्यम् । ततो लोकैः कृतोपचारा इमे कतिपयैरेवाहोभिः स्वस्थीभूय भूयो योगाभ्यासे संलग्ना समभूवन् । धर्मावतारो महाराजः श्रीप्रतापसिंहः कदाचित्कर्णाकर्णिकया योगसाधनाय कृच्छ्रे तपसि वर्तमानानेतानुपश्रुत्य कतिपयैराप्तपुरुषैः सह तत्र गिरिगुहायां गत्वा महता प्रश्रयेणेमाननुनीय राजप्रासादमानिनाय । राजप्रासादात् किंचिद्दूरं रामनगरभूमौ मर्मरप्रस्तरमयमतिरमणीयं कुटीरं कारयित्वा कतिपयैरनुचरैः सह तस्मिन्निमानतिष्ठिपत् । प्रत्यहं सायं प्रातश्च सानुचरो महाराजस्तत्कुटीरमागत्य स्वयं स्वहस्ताभ्यां ब्रह्मचारिणां योगेश्वराणां चरणौ संवाहयस्तदुपदेशानश्रौषीत् । प्राणायामविधिं चाशिक्षत । किं बहुना, स्वात्मानमपि तेभ्यः समार्पिपत् । सहस्रशो जनास्तेषां सदुपदेशैर्विगतदोषत्रया योगसरणिमनुसृत्य कृतकृत्या समभूवन् । महाराजे प्रतापसिंहे दिवङ्गते महाराजः श्रीहरिसिंहः सिंहासनमधिरूढः । तेन शतशः प्रार्थिता अपीमे कुटीरं विहायान्यत्र न गताः, शरीरयात्रार्थं हरिसिंहमहाराजेन कल्पितं भैक्ष्यमपि च नागृह्णन् । इदानीं नवतिवर्षवयसि वर्तमाना अपीमेऽविकलेन्द्रिया सदुपदेशैर्जिज्ञासून् भक्ताननुगृह्णन्ति । इमे कदाचित् 'पन्थल'नाम्नि पत्तने, कदाचिच्च कटरानगरे निवसन्तीति जिज्ञासुभिस्तदुपदेशैः स्वात्मा पाव्यते ।

इमे 'विवाहसंस्कारपद्धतिः', 'योगसाधनस्य सरलो मार्गः' इति पुस्तकद्वयं निर्माय विना मूल्येनाधिकारिभ्यः प्रादुः ।

---

### श्रीनीलकण्ठपण्डित

आसीद् द्विगर्तेपु 'कृत्यरत्नाकरस्य' महतो ग्रन्थस्य सम्पादक रैणा (राजानक)-जातीय राजसम्मानितो विद्वद्वरिष्ठ श्रीशङ्कराभिध पण्डित । तस्य पितृपितामहादय. काश्मीराभिजना काश्मीरिकशैवसिद्धान्तमनुसरन्त शिवोपासकतया 'शैवा' इति सज्ञा लेभिरे । श्रूयते-काश्मीरिकतन्त्रशास्त्रे, काव्यसाहित्यादिष्वपि चाप्रतिहतगतय इमे कदाचित् स्वजन्मभुव विरहय्य 'जम्बू'प्रान्तीय 'रामनगर'पत्तनमशिश्रियन् । ततो गुण-ग्रहिला रघुवशीया राजान सादरमिमान् स्वराजधानी जम्बूनगरीमानैपु ।

श्रीशङ्करशर्मणस्तनूज श्रीजगद्धरशर्माऽपि प्रायोऽखिलशास्त्रसारपारदृश्वा महाराजश्रीरणवीरसिंहस्य दानधर्माध्यक्षपदमधिरुह्य गीर्वाणवाणी सेवमानस्तस्य कीर्त्तिकौमुदी सर्वासु दिक्षु प्रावीकशत् । तस्यैव जगद्धरशर्मणस्तनूज श्रीव्रजलालशर्मा द्वात्रिंशदधिकैकोनविंशतिशततमे(१६३२)वैक्रमे वत्सरे श्रावणामावास्यायामधिजम्बूनगर स्वधर्मपत्न्या श्रीसरस्वतीदेव्यामेक पुनरत्नमजीजनत् । शिवोपासक्तया च तस्य 'नीलकण्ठ' इति नामधेयमकार्षीत् । श्रीनीलकण्ठशर्मा स्वपितृपादेभ्य स्वकुलवृद्धभ्यश्च-प्रारम्भिक शिक्षादीक्षादिक समधिगत्य मन्वादिधर्मशास्त्राणि, लीलावतीवीजगणित—सिद्धान्तशिरोमणिप्रभृतीनि गणितपुस्तकानि, ताजिकनीलकण्ठी-वृहज्जातक-जैमिनि-सूत्रादीनि फलितपुस्तकानि, पारस्करगृह्यसूत्रमन्याश्च कल्पग्रन्थान् समधीत्य कर्म-काण्डकर्मणि पर प्रावीण्यमभ्यगच्छत् । तस्य कर्मकाण्डपरिपाटीपटुत्वम्, लोकव्यवहार-नैपुण्यम्, लोभानभिभूतस्वभावत्व चानुभूय महाराज श्रीप्रतापसिंह स्वदानाध्यक्ष-पदमध्यारूरुपदिमम् । असौ तत्र यथान्याय, यथाधर्म च व्यवहरन् महतो यशसो भाजन सवृत्त । संस्कृतज्ञेभ्यो विद्वद्भ्यो विद्यार्थिभ्यश्च यथोपयोग यथासमय च धनवसनभोजनपुस्तकादीनि दापयन्तो महाराजद्वारेण समानयन्तो महाराजस्य संस्कृत-साहित्याभिरुचि वर्धयन्तश्च ते सुरगिर चिर समभ्यार्चिचन् । महाराज श्रीप्रताप-सिंहश्चैतेपु तथा व्यश्वसीद् यथा राजसद्मनि समस्तधार्मिककृत्येपु सत्कर्मसम्मति-प्रदानेपु च तेपामेव प्राधान्यमभवत् । ते देवप्रतिमा इव सर्वदा गृह एव व्यराजन्त । राजान इव पञ्चपसम्यं सहैव कदाचिद्वायुसेवनार्थगच्छन् । तादृशैश्वर्यशालिना तेपा निरभिमानत्वम्, सौजन्यम्, सारल्यम्, विनयावनतत्व च सुवर्णे सौरभमिव सूचयन्ति स्म तदानीम् । अकस्मादुदरव्याधियाधितास्ते द्विमासान् परमचिकित्सकैरपि चिकित्सिता अपि रुदतो बान्धवान् परिहाय विधुवियन्नभोऽश्विमिते (२००१)वैक्रमे वत्सरे सौर-चैत्रस्य विंशतितमतारिकाया (चैत्रशुक्लचतुर्थ्यां) शिव ध्यायन्तस्तत्सायुज्यमवाप्नुवन् ।

---

### पद्मनाभपण्डितः

ऊधमपुरनगरेऽस्ति किञ्चित् रैणाजातीयब्राह्मणानां समृद्धं कुलम्, यस्मिन् परम्परया विद्वांस एव समपद्यन्त सम्पद्यन्ते च। तस्मिन्नेव कुले रसविहगवसुवसुमतीमिते (१८९६) वैक्रमाब्दे श्रीपद्मनाभपण्डितस्य जनुरभूत्। सोऽयं पाणिनीयव्याकरणप्रक्रियाप्रवीणो भाष्याब्धिं प्रमथ्य 'वैयाकरणकेसरी' इति पदवीमधिश्रितो गृहीयपाठशालायां पिपठिषून् शिशूनपाठयत्, तदानीन्तनेषु विद्वत्सु महती प्रतिष्ठामवाप्तवांश्च। असौ वेदवह्निग्रहेन्दुमिते (१९३४)वैक्रमाब्दे देवीचन्द्रनामानं सुतं जनयामास।

देवीचन्द्रोऽपि पितृगुणैरन्वितो व्याकरणे लब्धविकाशः कर्मकाण्डप्रकाण्डम्, ज्योतिश्शास्त्ररहस्यज्ञः, लौकिकव्यवहाराभिज्ञः, वार्तायां च परमप्रवीणोऽभवत्, येनासौ सर्वत्र न्यायालयेषु, सभासु, समाजेषु च सम्मानितोऽभवत्। असावपि पितृवद् गृहीयपाठशालायां पाठयन् संस्कृतसाहित्यस्योपकारं कृतवान्। अस्य पिता श्रीपद्मनाभपण्डितः षट्चत्वारिंशदधिकैकोनविंशतिशततमे (१९४६) वैक्रमे वत्सरे परलोकं गतः। श्रीदेवीचन्द्र एकोनषष्टयधिकैकोनविंशतिशततमे (१९५९)वैक्रमाब्दे वैशाखस्य दशम्यां सिंहोदये तेजोभानुनामानं सुतं जनयामास।

असौ तेजोभानुरपि सम्पादितोपनयनसंस्कारः श्रीरघुनाथसंस्कृतमहाविद्यालये प्रविश्य प्राज्ञविशारदपरीक्षे समुत्तीर्य ज्योतिश्शास्त्रमध्यगीष्ट। सर्वकाराधिकृताङ्गलविद्यालये स्वातन्त्र्येण च संस्कृतसाहित्यस्य परमुपकारमकार्षीत्। अष्टादशाधिकद्विसहस्रतमे (२०१८) वैक्रमेऽब्दे वयस्कवृत्तिं गृहीत्वापि यथासम्भवं संस्कृतसाहित्यमुपकरोति। अस्य जनको देवीचन्द्रपण्डितस्तु वेदग्रहनन्देन्दुमिते (१९९४) वैक्रमाब्दे निजपितृसरणिमनुसृतवान्।

---

### श्रीपरशुरामपण्डितः

श्रीपरशुरामपण्डितो जम्बूप्रदेशगते 'अखनूर'नाम्नि चन्द्रभागातीरस्थे महति पत्तने विहगाग्निनन्देन्दुमिते (१९३९) वैक्रमे हायने ज्येष्ठमासस्याष्टमतारिकायां प्रातर्वृषलग्नोदये नादजातीयपण्डितप्रवरश्रीरघुवरदयालुशर्मणो गृहे जन्मभापावीत्। बाल्येऽक्षरारम्भं विधायेमं चान्द्रव्याकरणं तत्पितैवाध्यापिपत्। ततस्तत्रत्यात् पण्डितप्रवरात् श्रीदिनकरमिश्रात्, श्रीगङ्गारामपण्डिताच्च काव्यपुराणादि समधीत्यापि ज्ञानामृतपिपासां शमयितुमसौ जम्बूनगरस्थश्रीरघुनाथपाठशालायां प्रविश्य पण्डितप्रकाण्डात्

श्रीगोकुलचन्द्रात् ज्योतिर्विद श्रीलक्ष्मणशास्त्रिणश्च वेदवेदान्तन्यायकर्मकाण्डज्योतिश्शास्त्रधर्मशास्त्रमर्माणि शिक्षित्वा प्राय सर्वगुणसम्पन्न पण्डितोऽभवत् । पुन स्वजन्मभूमौ 'अखनूर'पत्तने समागत्य यजमानगृहेषु सर्वं कर्मकाण्डजातमयमेवाचीकरत् । यावज्जीव च निश्शुल्क संस्कृतमध्यापिपत् । प्राय सर्वेऽपि वृत्तीश्वरा, इतरे च पण्डिता, एतेषामेव शिष्यपरम्परागता वर्तन्ते । असौ महानुभाव सप्ततिवर्षवयसि पुत्रै शिष्यैश्च कृतोपचारोऽपि व्याधेरसाध्यतया भौतिकशरीरलीला समापितवान् ।

---

### वद्यराज श्रीपरशुराम.

जम्मूराज्यान्तर्गते 'कठुआ'प्रान्ते 'रयीकूटा'नामधेयोऽतिरमणीय उर्वरभूभूषिता नारामोद्यानपुष्पवाटिकाभि परिवृतो ब्राह्मणाना निवासभूमि कश्चिद् ग्रामो विद्यते । तत्र नागरब्राह्मणवशावतस, कर्मकाण्डधुरीण, परमधार्मिको जगद्रामशर्मा नाम ब्राह्मणोऽजातसीत् । तस्य धर्मपत्नी नन्दवेदविहगवसुमतीमिते (१९४९)वैक्रमाब्द भाद्रपदमासस्य तुरीयतारिकाया प्रात पञ्चनादनवेलाया कर्कलग्नोदये पुत्ररत्नमसूत । ज्योतिर्विद्भिर्जन्मलग्नकुण्डली निर्माय तत्तत्स्थानस्थितग्रहफल निवेदयद्भिरय पीयूषपाणिर्वैद्यो भविष्यतीति साकूतमभाणि । प्रीतमानस पिता तस्य जातकर्मसंस्कार विधायैकादशेऽह्नि महता समारोहेण 'परशुराम' इति नामधेयमकार्षीत् । कदाचिज्जम्मूनगरवास्तव्या नागरजातीया 'रानी'इत्युपाह्वा तपस्विनी चन्दादेवी शिशुमेन द्रष्टु 'रयी'ग्राममगात् । शुभलक्षणैरयमवश्य महापुरुषो महात्मा च भविष्यतीति अनुमाय च चत्वारिंशद्दिवसदेशीयमिम पित्रो सकाशादानीय, विधिना दत्तकपुत्र विधाय च महता स्नेहेनाऽपोषलत् । पञ्चमे वर्षेऽक्षरारम्भमष्टमे वर्षे वैदिकविधिनोपनयनसस्कार च विधायाङ्गलोर्दूभाषाभ्या सह वेदमपि तमध्यापिपत् । क्रमेण पञ्चनदविश्वविद्यालयीयमैट्रिकपरीक्षा समुत्तीर्णोऽयं लोकोत्तरप्रतिभयाङ्गलभाषया भाषणे तत्प्रणीतग्रन्थरहस्योद्घाटने च परमप्रवीणोऽभवत् । व्याकरणम्, काव्यानि, दर्शनानि, धर्मशास्त्राणि च गमधीत्य संस्कृतभाषायामपि पर प्रावीण्यमलभत । आयुर्वेदे स्वस्य नैसर्गिकी प्रवृत्तिरासीत् । आयुर्वेदवैदुष्यस्य नवोन्मेषसमये नवोत्साहस्योच्छ्रायवेलाया भासौ लवपुरे डी०ए०वी०कालेजे वह्नीन्दुनन्दभूमिते (१९१३) क्रिस्टाब्दे प्राविशत् । तत्रायुर्वेदविद्भ्यो भावप्रकाशनिघण्टुवाग्भटसुश्रुतचरकादीनार्षग्रन्थान् समधीत्य शल्यचिकित्सायामपि प्रतिभाप्रतिभासमानोऽस्य परा योग्यता प्राप्नोत् । तत्र आयुर्वेदस्य सर्वाङ्गेषु सिद्धहस्त

कविराजपरीक्षा प्रथमश्रेण्या समुदतरत् । तथासन्तोषितसमस्तचिकित्साध्यापकस्तेभ्य पृथक् पृथक् प्रशंसापत्राणि सर्वोत्तमचरित्रपत्राणि चादाय जम्बूनगरं प्रत्यावर्तत। प्रचुरद्रव्यव्ययेन महान्तमौषधालयं निर्माय कांश्चिदनुभविनो वैतनिकांश्चिन्त्सिकांश्च तत्र नियुज्यौषधानां विधिना निर्माणमचीकरत् । सम्यग् निदानपुरःसरं रोगिणां दुस्साध्यानसाध्यांश्च रोगान्निर्मूलयन्नसावल्पीयसैवाऽनेहसा महतीं ख्यातिं प्राप्नोत् । लोकैश्चासौ 'पीयूषपाणि' इत्युच्यते स्म । एतदीयौषधालयसम्पादितौषधान्यद्यापि दूरदूरस्था वैद्या मूल्येन क्रीणन्ति । प्रारम्भे रुग्णानां दुस्सहां वेदनामनुभूय तामपनेतुं यतमानोऽसौ स्नानाऽऽहारादिष्वपि समयक्षेपमाक्षेपमिव मन्यते स्म । नासौ केवलमायुर्वेदौषधपीयूषं पाययित्वा मानवशरीराण्यजरीकर्तुं प्रभवति स्म, अपितु सङ्गीतागमपारगेभ्यो गुरुवरेभ्यस्तच्छास्त्रं सक्रियमारमसात्कृत्वा षड्जादिभिः सप्तभिः स्वरैर्नन्द्यावर्तादिभिस्त्रिभिर्ग्रामैरेकविंशतिमूर्च्छनाभिश्च भगवत्कीर्तनं कुर्वन् नास्तिकानामपि हृदयानि विद्रुतानि विदधानो, नवनीतकोमलानि सहृदयानां हृदयानि भक्तिरसनीरनिधौ निमज्जयति स्म । तस्य स्वरालापनसमये विदुषां परिषदि सर्वे पारिषद्याः परमानन्दसागरनिमग्ना इव, मोहमहौषधमूर्च्छिता इव, तन्त्रशास्त्रप्रयोगकीलिता इव, चित्रलिखिता इव च भवन्ति स्म ।

किञ्च शास्त्रसारपारदृश्वतया दृश्यश्रव्यकाव्यपरिशीलनकौशलं, तद्गुणदोषविवेचनं, सकलरसास्वादनचुञ्चुत्वमप्यस्य लोकोत्तरमेवानुभूतम् । किमिमे स्वर्वैद्याः, आहोस्विद् गन्धर्वाः, यद्वा देवाः, इत्येव संशेरते स्म सहृदयानां मनांसि तस्य साक्षात्कारसमये । कुसुमसारसौरभरसिकोऽप्ययमासीत् । एतस्य शरीरसौन्दर्यं, स्मितपूर्वाभिभाषणं, सयुक्तिकं विषयप्रतिपादनं, प्रणयपूर्वकं गृहागतजनसभाजनम्, अभिनवजनपरिचयविधानञ्चैकदाप्यनुभवन् नास्ति कश्चित्तादृशो यो न स्यादस्य वश्यः । प्रौढविद्वांसोऽप्यस्यासाधारणीं भाषणशैलीं समीक्ष्य परमं विस्मयं सन्तोषं च समध्यगच्छन् । प्रचुरप्रासादसम्भारसम्भृतेऽपि, मृत्तराद्यनेकवाहनवाहिन्यपि, लक्षशो विभूतिसम्पन्नेऽपि, विद्यानामगाधसमुद्रेऽप्यमुष्मिन् निरभिमानित्वं, सौजन्यं, विनयावनतत्वं, सारल्यमित्यादयो गुणाः सुवर्णे सौरभसम्पर्कमिव सूचयन्ति सर्वतः । एतदीयं नीतिचातुर्यं समनुभूय पूर्वं महामन्त्रिणो महाराजाश्च सम्मानपूर्वकमाहूय तत्तद्विषयेषु सम्मतिमेतदीयां गृह्णन्ति स्म । वर्तमानकालेऽपि राज्यशासक(सदरेरियासत)महोदया राजसदःसदस्या महामान्या मन्त्रिणश्चैतं हृदा सम्मानयन्ति । एतस्य धार्मिकता, वदान्यता, विद्यानुरागिता, कर्मण्यता च कर्मभिरेवाभिव्यक्ताऽस्ति । जम्बूस्थसनातनधर्म-

सभाया गीताभवननिर्माणे पूर्वमयमेव बद्धपरिकर आसीत् । सनातनधर्मकन्यापाठशाला-प्येनैनैव मैट्रिकप्रभाकरहिन्दीसाहित्यरत्नपरीक्षापर्यन्त वर्धिता पोषिता च । श्रीरघुनाथ-संस्कृतमहाविद्यालयस्य मवृद्धये प्रतिवर्षं वसन्तोत्सवसमये शत रूप्यकाणि वितरति । यथायोग्य विद्यार्थिभ्य पुस्तकवस्त्रादिरूपेण सहाय्यमपि प्रददाति । अहर्निश कर्म कुर्वाणोऽप्यसौ न श्राम्यति ।

साम्प्रत सप्ततिवर्षवयसि वर्तमानोऽपि युवेव कार्यजात सम्पादयतीति धन्योऽय महानुभाव । एतेनोपनिबद्धानि प्रान्तीयभाषामयानि हिन्दीभाषयोपस्कृतानि भक्तिरस-परिपूर्णानि गीतानि भक्तजनमनासि करुणरसनीरनिधौ निमज्जयन्तीव समनुभूयन्ते सहृदयै प्रात सायं च हरिकीर्तनवेलायाम् । साम्प्रतमेव च श्रीमद्भगवद्गीताया प्रान्तीयद्विगर्तभाषयोपनिबद्धातीव सरला माधुर्यगुणगुम्फिता भक्तिरसप्रधाना सारगर्भिता पद्यमयी टीका सलिख्य प्रकाशिता वर्तते ।

एषा महानुभावाना सङ्गीतज्ञशिष्येषु श्रीकुन्दनलालसहगल, श्रीमदोम्प्रकाशश्च मुख्यशिष्यौ समभवताम् । तथा आर्० आर्० सहगलश्छायानाटकेषु सर्वप्रथम सङ्गीताऽभिनेता समभवत्, अद्यापि यस्य गीतानि श्राव श्राव सहृदया रससागरे निमग्ना इव परमानन्दमनुभवन्तो दरीदृश्यन्ते । ओम्प्रकाश प्रथम छायानाटकेष्व-भिनेतृपदमलमकार्षीत् । सम्प्रति छायानाटकीयचित्रसन्ततिनिरीक्षकेषु (फिल्मडाय-रेक्टरेषु) मुख्यतमो वर्तते । इमे परशुरामवैद्या वर्तमानसमये आकाशवाणीगृहागत-गायकपरीक्षकपदमप्यलङ्कुर्वन्ति । तद्विषये समुद्गिरन्ति जना यत्—

व्याधिबाधितजन्तूना प्राणत्राणपरायण ।
तुल्य परशुरामेण न भूतो न भविष्यति ॥ इति।

---

### ज्यौतिषाचार्यः श्रीपूर्णचन्द्रशास्त्री

द्विगर्तेषु त्रिकूटपर्वतोपत्यकाया 'कटरा'नाम्नो महत पत्तनस्य सविधे 'नगल-पनतान'नामधेय कश्चिद् ग्रामो विद्यते । तत्र जम्ववालजातीया ब्राह्मणा निवसन्ति । तेषु महामना, परमभागवत, कर्मकाण्डधुरीणो निहालचन्द्रो विद्वान् समभूत् । यो हि राजनीतिनिष्णाततया न्यायालयेषु लब्धप्रतिष्ठोऽभियोगाना पारस्परिककलहाना च निर्णयमभियुक्ताना निग्रहानुग्रहादिकञ्च विधातु राजादेशेन स्वय प्रभुरासीत् । स्वय मल्ल सन् स्वास्थ्यसवर्धनाय स्वग्रामवास्तव्यान् मल्लतामपि शिक्षयति स्म ।

तस्य धर्मपत्नी एकां कन्यां चतुरः पुत्रांश्चाजनयत् । चत्वारोऽपि ते कर्मकाण्डिनो भागवताश्चासन् । परं तेषु कनीयान् 'तेजोरामो' यो हि शून्यवेदग्रहेन्दुमिते (१९४०)वत्सरे समुत्पन्नः, शास्त्रिपरीक्षापर्यन्तं शास्त्रं समधिगत्याष्टादशपुराणावगाहनमकार्षीत्, भागवतं तु तस्य हस्तामलकमासीत् । तस्य भागवतप्रवचनं श्रुत्वा विद्वांसोऽपि गद्‌गदीभवन्ति स्म । किञ्चैतत्प्रदेशीयान् विद्यार्थिनो निश्शुल्कविद्यादानेनासौ सम्भावयन्नासीत् । त्रिंशद्वर्षवयसि वर्तमानोऽसौ युवा विद्वानकस्मादेव विसूचिकाव्याधिबाधितो मासद्वयदेशीयं पूर्णचन्द्रनामधेयं शिशुं भार्यां च शोकविह्वलां परित्यज्य स्वर्लोकमारुक्षत् । श्रीपूर्णचन्द्रः कटरापत्तने मातामहसद्मनि सप्तत्यधिकैकोनविंशतिशततमे (१९७०) वैक्रमाब्दे कार्तिकमासस्य षष्ठे दिवसे (कार्तिककृष्णचतुर्थ्यां) शनिवासरे दिवाऽष्टवादनवेलायां जनिमग्रहीत् । पितृविहीनं क्रमेण वर्धमानमष्टवर्षदेशीयं कारितोपनयनसंस्कारं चैनं माता रघुनाथपाठशालायामध्येतुं प्रावेशयत्, तत्र कतिपयवर्षाण्यध्युष्य प्राज्ञपरीक्षाग्रन्थान् समधीत्य समुत्तीर्णपरीक्षो दीवानामरनाथधर्मपत्नीसकाशाच्छात्रवृत्तिमादाय वाराणसीमयासीत् । तत्र क्विंसकालेजे प्रविश्य ज्योतिःशास्त्रमध्येतुं प्रारभत । सद्‌गुरुभ्योऽधीयानोऽयं ज्यौतिषाचार्यपरीक्षां प्रथमश्रेण्यां समुदतरत् । रसनन्दग्रहेन्दुमिते (१९९६) वैक्रमे वत्सरे श्रीरघुनाथसंस्कृतमहाविद्यालये ज्यौतिषाध्यापकपदमध्यतिष्ठत्, महतीं ख्यातिं च समधिगतवान् । बहून् शिष्यान् गणितफलितोभयविधज्योतिःशास्त्रप्रवीणानकार्षीत् । ज्योतिर्विदसौ वह्निखनभोनेत्रपरिमिते (२००३) वैक्रमे वत्सरे 'पञ्चाङ्गचूडामणि'नामधेयं पञ्चाङ्गं निर्माय प्रकाशितवान्, यस्मिन् २००४ वैक्रमवत्सरे भाविनो विप्लवान् प्रागेवाऽसूचयत् । साम्प्रतं जम्बूजनतासु बहिरपि चामुष्य यशःसौरभं सर्वत्र प्रसृतं वर्तते ।

———

**श्रीबलदेवोपाध्यायस्तदात्मजाश्च चत्वारः**

असौ महानुभावः एकोनविंशतितमशताब्द्यां राजतिलकापरनाम्नि जम्बूनगरस्थपुराणीमण्डीपरिधौ पादप्रतोलिकायामुपाध्यायोपाधिकात् पण्डितप्रकाण्डात् श्रीजवाहरलालशर्मणो जनुरग्रहीत् । सप्तमे वर्षे स्वपितुः सविधेऽक्षरारम्भं विधाय लघुलघूनि पुस्तकानि समधीत्य जातबोधः पितुर्निदेशेन शास्त्रान्तराणि समध्येतुं मतिं व्यधत्त । तात्कालिकविदुषां सकाशान्न्यायव्याकरणसाहित्यादिषु लब्धावकाशोऽपि विशेषेण स्मृतिपुराणतन्त्रशास्त्रेषु परमप्रवीणोऽभवत् । यथासमयं पण्डितगोष्ठीमधिष्ठाय शास्त्राणां निगूढविषयेषु विचारं विदधानो सर्वश्रेष्ठपदं समवापत् । विदुषां समाजे लब्धप्रतिष्ठमिमं महाराजः श्रीरणवीर-

परिचयः—२७४ पृष्ठे



पं० श्री बलदेवोपाध्यायः

परिचयः—२८३ पृष्ठे



पं० श्रीरघुनाथशास्त्री

परिचय — २७५ पृष्ठे



राजपण्डितः श्रीबालकृष्णशास्त्री

परिचयः—२८५ पृष्ठे



पं० श्री रामकृष्णशास्त्री

सिंह वर्णोपवर्णिक्या सश्रुत्य, सादरमाहूय, तेपु तेपु विपयेपु पण्डितै परीक्ष्य, दानमानादिना सम्मान्य च स्वपण्डितेष्विममन्यतम पण्डितममन्यत। अथ पण्डितप्रकाण्ड स्वगृहागतान्तेवासिनोऽध्यापयश्छात्रपरिपदि, विद्वन्मण्डल्या च महती कीर्ति व्यतनिष्ट । अथ वह्निविधुविहगवसुमतीमिते (१९१३) वैक्रमेऽब्दे 'ब्रह्मकपालीश्राद्धोपपत्ति लक्षण ग्रन्थ निर्माय लवपुरे 'एकानोमीक्लयन्त्रालये' मुद्रापयित्वा च मूल्यमन्तरा विद्वद्भ्यो व्यतरत् । 'वास्तुशास्त्रोक्तपूजनप्रयोगा भिधमपरमपि पुस्तकमयमलेखीत्, यदद्यावध्यमुद्रितमेवास्ति । तन्त्रशास्त्रविपयकास्त्वनेके चमत्कारास्तस्य श्रूयन्ते । पुराणीमण्डीवास्तव्या सर्वेऽपि राजपुत्रवशीया अद्यापि गुरुवदिम सस्मरन्ति । असौ गौरवर्ण, सुघटितसन्धिवन्ध, हृष्टपुष्टो लम्बकाय, सुधौतश्वेतवसन, वृहदुष्णीप, पुराणप्रवचनप्रवीण, साधुस्वभाव, पञ्चपानुगं पथि गच्छन् राजेव राजते स्म । असौ पण्डितप्रवर पीताम्बर-नरोत्तम जगदीश निधिपतिनामधयाश्चतुर पुत्रान् जनयित्वा पञ्चनवतिवर्षवयसि वाणमुनिग्रहेन्दुमिते (१९७५) वैक्रमे हायने कार्त्तिकामावास्याया रुदत पुत्रादीन् विहाय दिवमगात् ।

तत्पुत्रेपु पीताम्बरा, नारायणेऽनुरक्त सन्ध्यावन्दनपितृतर्पणठाकुरपूजादिपैतृकसम्पद्रूपनित्यकर्मसलग्नमानस समभूत् । ज्योतिर्विन्नरोत्तमो गणितफलितोभयविधज्योतिश्शास्त्राऽप्रतिहतगतिरपि फलिते विशेपतया सिद्धहस्तोऽभवत् । जगदीश सर्वकारकार्यालये वैतनिकी भृति कुर्वाणाऽपि नित्यनदीष्ण, पार्थिवशिवपूजनरत, प्रत्यह द्विवादनपर्यन्तमेकासनमधिष्ठाय शिवध्यानपरायणाऽभवत् । लब्धवयस्कवृत्तिकस्तु प्रातश्चतुर्वादनत समारम्य मध्याह्नद्वादशवादनपर्यन्त नदीतीरे समाधिमध्यतिष्ठत् । निधिपतिस्तु जन्मत सिद्ध समभवत् । इमे चत्वारोऽपि यथासमय लोकान्तरमयासिपु । निधिपतिं विहाय त्रयाणामपि पुत्रपौत्रादयो विद्यन्ते । ते च सर्वेऽपि प्राय पैतृकसम्पद्भूते ब्राह्मे कर्मणि सलग्ना सात्त्विकसम्पद सुखमनुभवन्ति ।

---

## श्रीबालकृष्णशास्त्री

श्रीवालकृष्णशास्त्री श्रीगोकुलचन्द्रशास्त्रिणा प्रपौत्र, श्रीगङ्गाधरशास्त्रिणां कनिष्ठ पुत्र, महामहोपाध्यायश्रीदेवराजशास्त्रिणामनुजो भ्राता शरेष्वङ्कवसुमतीमिते (१९५५) वैक्रम वत्सर कार्तिकमासस्य शुक्लाष्टम्या प्रात पञ्चवादनवलायामजनि । पञ्चवर्पदेशीय एव कृतोपनयनोऽसौ वेदारम्भमकार्पीत् । बाल्ये एवोपरते पितरि तद्वियोग-

विट्ठलमिमं पितृकल्पा ज्येष्ठभ्रातरो देवराजशास्त्रिण एव समवर्धयन्त, एतस्य लालन-पालनादिकं मध्ययनाध्यायनादिप्रबन्धं चाकार्षुः । स्वकुशाग्रबुद्धिप्रभावेण, गुरूक्तार्थग्रहण-धारणसामर्थ्येन चासौ गुरुं परमपिप्रीणत् । क्रमेण पञ्चनदविश्वविद्यालयीयां प्राज्ञविशा-रदशास्त्रिपरीक्षां समुदतारीत् । तदनन्तरमिमं भ्रातृपादा विशेषशास्त्राण्यध्येतुं काशी-मजीगमन् । तत्र ज्ञानसंसदि लब्धप्रतिष्ठेभ्य एकैकशास्त्रस्य धुरन्धरविद्वद्भ्यो न्याय-व्याकरण साहित्य-काव्यादिशास्त्राणि समधीत्य कालिकात्ताविश्वविद्यालयीयां न्याय-व्याकरण-साहित्यतीर्थपरीक्षां प्रथमश्रेण्यां समुदतारीदसौ । काव्यशिरोमणिपरीक्षां च स्वर्णपदकलाभानुगां समुदतरत् । काशीतः प्रत्यागतो जम्बूनगरस्थनागरिकैः, विद्वद्भिरधिकारिभिश्च सुवर्णपदकपुरस्कारेण परं सम्मानितोऽसौ । नन्दवसुनन्देन्दुमिते (१९८९) वैक्रमहायने राजाधिराजो महाराजश्रीहरिसिंहः सम्मानपूर्वकमेनं राजपण्डित-पदमध्यतिष्ठिपत् । महाराजान्तःपुरकर्मकाण्डकार्याणि तदितराणि मुहूर्तादीनि च परमनैपुण्येन समपीपदत् । महाराजश्रीहरिसिंहोऽमुष्य नैपुण्यं, वैदुष्यं, योग्यतां च समनुभूय जम्बूस्थश्रीरघुनाथपाठशालीयप्राचार्य(प्रिंसिपल)पदममुनाऽलमचीकरत् । किं च परमप्रीतो महाराजो जम्बूस्थातिविस्तृतश्रीरघुनाथमन्दिराधिष्ठातृपदं काश्मीरेषु श्रीनगरस्थश्रीगदाधरमन्दिराधिष्ठातृपदमपीममेवाध्यतिष्ठिपत् । एतत्सर्वमपि कार्यजातं परमकौशलेन सम्पादयन् श्रीबालकृष्णशास्त्री महतीं ख्यातिं कीर्तिं च चाप्नोत् । भूख-शून्यनेत्रसम्मिते (२००१) वैक्रमाब्दे फाल्गुनमासे शिवरात्रौ शिवं ध्यायन्नसौ शिव-सायुज्यमाप ।

वर्तमानसमये श्रीबालकृष्णशास्त्रिणां तनुजन्मा श्रीश्रीशङ्करशास्त्री जम्बूस्थ-श्रीरघुनाथमन्दिरस्याधिष्ठातृपदं, काश्मीरेषु श्रीनगरे राजप्रासादस्थश्रीगदाधरमन्दिरा-धिष्ठातृपदं चालङ्कुर्वाणः स्वपितृपितृव्यपितामहादीनां चरणचिह्नान्यनुसरन् विद्वत्परि-षदि परमयशोभाक् संवृत्तः ।

---

## श्रीबालकृष्णशास्त्री एम्० ए०

अस्ति जम्बूप्रान्तान्तर्गतो रघुवंशीयक्षत्रियाणाम् 'अम्बा'भिधो ग्रामः, यस्मिन् 'श्रीइन्द्रदत्त'नामधेयः कर्मकाण्डकर्मणि प्रवीणस्तौर्यत्रिककलाकुशलो ब्राह्मणो जनिं गृही-त्वा शैशवे पैतृकसम्पत्तिं कर्मकाण्डविद्यां समधीत्य, यौवने जम्बूराजधानीमध्युष्य, सङ्गीतकलाकुशलेभ्यो गीतवाद्यादिषु स्वरारोहावरोहलयतालादिविशेषतां समधिगत्य,

सत्या सम्पदि गृह निर्माप्य च सह स्वधर्मपत्न्या सुखमवात्सीत् । असौ श्रीमदिन्द्रदत्तपण्डितो वियद्विलोचनविहगवसुमतीमिते (१६२०) ख्रिष्टाब्दे फर्वरीमासस्य विंशतितमतारिकाया स्वधर्मपत्न्या पुनररत्नमजीजनत् । एकादशेऽह्नि च माङ्गलिकवैदिकविधिना स्वशिशो 'बालकृष्ण' इति नामधेयमकार्षीत् । शुभसमये समुत्पन्नस्याऽस्य गणित-फलितोभयविधेन ज्योतिश्शास्त्रेण शुभायतिमनुमाय कृतोपनयनसस्कारमिम सस्कृतमध्यापयितु पिता श्रीरणवीरसस्कृतपाठशालाया प्रावीविशत् । तत्र त्रिद्यास्थानस्थितशुभग्रहप्रभावेण, पूर्वजन्मकृतशुभकर्मसस्कारैर्वा पित्रोस्तपसा पुञ्जेन वा समागते स्वप्रतिभोन्मेषावसरे विनयमाधुर्यसौशील्यादिभिर्गुणैर्गुरूणा हृदयानि समावर्जयन् पञ्चनदविश्वविद्यालयीया प्राज्ञ-विशारद शास्त्रिपरीक्षा समुदतरत् । तत पितृप्रेरणया स्वाभाविकप्रवृत्त्या चाङ्ग्लभाषाध्ययने मति व्यधत्त । तत्रापि पञ्चनदविश्वविद्यालयीया मैट्रिक-एफ्०ए०-बी०ए०परीक्षा समुदतारीत् । एवम् एम्०ए०परीक्षामपि हिन्दी-सस्कृतभाषयो प्रथमश्रेण्या समुत्तीर्णोऽसौ प्रभाकरपरीक्षाम्, हिन्दीसाहित्यरत्नपरीक्षा च समुत्तीर्णवान् । ततोऽस्य नवनवोन्मेषशालिनी प्रतिभा विस्तृत स्वविकाशक्षेत्र काङ्क्षन्ती कूपकल्पेषु विषयान्तरेषु निर्बाधमवकाशमलभमाना पयोधिकल्पा काव्यकला स्वोचिता क्रीडास्थलीममन्यत । शतशोऽस्य सस्कृतहिन्दीडोगरीभाषामयानि स्फुटकाव्यानि गीतानि च विदुषा गोष्ठीषु सहृदयहृदयानि समावर्जयन्ति, नभोमण्डल मण्डयन्ति च तटस्थैरप्यनुभूयन्ते । यत्र तत्र शिक्षाविभागेषु सस्कृतभाषा सेवमानोऽसौ साम्प्रत जम्बूराजधान्या सर्वकारकालेजे सस्कृतप्राध्यापकपदमधिष्ठाय सस्कृत हिन्दीभाषा च समध्यापयन् शिष्येषु विद्वत्सु च महती कीर्त्ति समुपार्जयन्नास्ते । कतिपयभाषान्तरपुस्तकाना हिन्दीभाषायामनुवादमप्ययमकार्षीत्, कर्तु प्रवृत्तश्च वर्तते । अय सकृच्छ्रुतग्राही, तर्ककर्कशोहापोहवान्, मेधावी कर्मण्योऽध्ययनाध्यापनव्यसनितया क्षणमपि निष्क्रियो नावतिष्ठत ।

---

## श्रीबैजनाथशर्मा

श्रीकृपारामशास्त्रिणा कनीयान् सहोदर श्रीबैजनाथशर्मा पाश्चात्यविद्यानिष्णातोऽपि सस्कृतभाषा तत्प्रतिपादितनिगमागमरहस्य चावगन्तुमद्यापि दिवानिश प्रयतते । आङ्ग्लविद्यालये आङ्ग्लभाषा पठन्नपि परमधार्मिकस्वपितृससर्गाद् गीर्वाणवाण्यामपि प्रावीण्यमधिगत्य तन्माधुर्यादिगुणगणाकृष्टस्वान्तो नितान्तमन्तर्मोमुद्यते ।

संस्कृताध्यायिनः, स्वसहचरान्, संस्कृताध्यापकान्, तदन्याश्च संस्कृतभाषाभाषिणो विदुषो बहु मन्यते च। साम्प्रतं वार्द्धके वर्तमानोऽप्यय महानुभावो गीर्वाणवाणी जननीमिव मन्यमानस्तां यथाशक्ति निरन्तर सेवते। जम्बू-काश्मीरराज्ये प्रान्ताध्यक्ष(तहसीलदार)-पदमलङ्कुर्वाणस्तारुण्ये वयसि यत्र यत्र प्रान्तेषु परिवृत्तिमेत्य यदाऽगच्छत्, तदा तत्र तत्र सर्वत्र ब्राह्मणवटून्, ब्राह्मणेतरकुमारान्, वयस्कांश्च धर्ममतीन् गीर्वाणवाणी समध्येतु साग्रहं सप्रश्रयं तद्गुणाख्यानपुरःसरं प्रावर्तयत्। असमर्थानां, दरिद्राणां, पिपठिषूणां भोजनवसनपुस्तकादिभिरपि साहाय्यमकार्षीत्। अयं परमधार्मिकः, सुशीलः, गुणग्रहिल, परोपकारस्वभावः, परमेश्वरभक्तः, दयावान्, संस्कृतभाषाप्रचारप्रसारविषये बद्धपरिकरश्च वर्तते। साम्प्रतं लब्धवयस्कवृत्तिकोऽपि भारतसेवासङ्घस्य किञ्चिदुच्चपदमधिष्ठाय निष्कामसेवा कुर्वाण, संस्कृतसाहित्यस्य च लोकोत्तरगुणान् ख्यापयन् परमयशोभाजनं संवृत्त.।

पितृभक्तोऽप्ययं ज्येष्ठभ्रातरं श्रीकृपारामशास्त्रिणं रामं लक्ष्मण इव सेवमानस्तदानी तदीक्षणसङ्केतमीक्षमाणः कर्मसु प्रायस्तदादेशपरायण एव समभवत्। एतादृशानां परमेश्वरपरायणाना, पितृभ्रातृभक्ताना सकललोकोपचिकीर्षूणा गीर्वाणवाणी सेवमानाना जीवन सर्वथाऽऽदर्शरूपमेव भवति।

---

## श्रीभक्तरामशर्मा

जम्बूप्रान्तान्तर्गत'सुचानी'ग्रामवास्तव्यो विद्याविद्योतितविप्रवंशो ज्योतिर्विच्छ्रीभक्तरामशर्मा श्रीरघुनाथपाठशालाया जम्बूस्थाया प्रविश्य, व्याकरणे तर्कशास्त्रे च जातबोधो दाक्षिणात्याज्ज्योतिर्विद सकाशात् लीलावती-बीजगणित-ग्रहलाघव-सिद्धान्त-शिरोमणिप्रभृतिगणितज्योतिर्ग्रन्थान् समधीत्य 'अर्थद ज्यौतिष शास्त्रम्' इति निश्चित्य फलितज्यौतिषशास्त्र .समध्येतु प्रायतत। परन्तु ग्रन्थानधीत्यापि इदमित्थमिति फल निश्चेतु न प्राभवत्। ततोऽन्तर्दूयमानः फलितज्यौतिषे सिद्धस्य परस्य ज्योतिर्विदः शरण प्रश्नविधि शिक्षितुमयासीत्। गुरुकृपया, भाग्योदयेन, केनापि शुभोदर्केण वा तस्मिन् फलितज्यौतिषे सिद्ध समभवत्। ततः करामलकवदतीतानागतवर्तमान सर्व दर्शयन् सर्वत्र द्विगर्तेषु प्रसिद्धः समभूत्। परस्तात्तस्य सविधेऽहमहमिकया लोका प्रश्नपिपृच्छया समायान्ति स्म। असौ सर्व हृदयस्थ करामलकवत्पुरस्कृत्य दर्शयतीति समुपश्रुत्य गुणैकपक्षपाती ब्रह्मण्यो राजा श्रीमान् अमरसिंह सबहुमान समाहूय बहुविध-

परिप्रश्नं सुपरीक्ष्य धनदानसम्मानादिना सन्तोष्य च राजपण्डितपदमध्यतिष्ठिपदिमम्। अमरसिंहे राजनि विगते अन्तःपुरस्था राज्यो महाराज्ञ्योऽन्याश्च सर्वा अपि दासीजना कर्मकाण्डसम्बन्धिविशेषकृत्यजात शुभमुहूर्तादिक चैतेनैवाऽचीकरन्। विशेषाद् राज्ञोऽमरसिंहस्य धर्मपत्नी महाराजश्रीहरिसिंहस्य माता महाराज्ञी गुरुवदिममपूपुजत्। ब्रह्मनिष्ठे महाराजश्रीप्रतापसिंहे ब्रह्मणि लीने महाराज श्रीहरिसिंहो जम्बूकाश्मीरराज्यसिंहासनमध्यतिष्ठत्। असौ महाराजस्तन्मन्त्रिमण्डलमन्ये च प्रकृतिजना इम सम्मानदृष्ट्या पश्यन्ति स्म। महाराजो राजज्योतिषिपदमिममध्यतिष्ठिपत्। असौ गृहीयपाठशालाया शतशो विद्यार्थिनो ज्योतिश्शास्त्र तर्कं व्याकरण च वस्त्रभोजनपुस्तकादिवितरणपुर सर समध्यापिपत्। पर तत्सदृश प्रश्नकोविदो न कश्चिदभवत्।

एव वहुविधसम्मानभाजनीभूय स्वायुषि एकषष्टितमे वर्षे भूलोक विहाय ज्योतिर्विच्छ्रीभक्तरामशर्मा लोकान्तरमयासीत्। अमुष्य त्रयस्तनया विद्यन्ते, तेषु ज्येष्ठ श्रीभोलानाथशास्त्री कविराज सर्वशास्त्रेष्वप्रतिहतगतिर्विशेषतयाऽऽयुर्वेदविद्याया पर प्रावीण्यमधिगत्य रुग्णजनचिकित्सने पीयूषपाणिर्वर्तते। अय जम्बूकाश्मीरराज्ये वर्तमानायुर्वेदविभागे विद्यमानाना रुग्णालयानाम्, औषधालयाना च सरक्षक(डाइरेक्टर)-स्य पदमधिष्ठाय वहूपकृतवानायुर्वेदविभागस्य रोगरक्षोऽभिभूतानामातुराणा च। मध्यमो देहल्या सर्वकारकार्यालये किञ्चिदुच्चपदमधितिष्ठति। तृतीयश्च जम्बूराजधानीमधिवसति।

---

## श्रीभोलानाथशास्त्री

अय जन्मान्ध पञ्चनददेशीयोऽन्तर्दिव्यनेत्र, यथेच्छ परिभ्रमन् कदाचिद् द्विगर्तेषु जम्बूनगर जगाम। स्वान्त प्रतिभया प्रेरितो ज्ञानपिपासा शमयितु श्रीरणवीरपाठशालाया प्रविश्य प्रथम स्वातन्त्र्येण व्याकरण वेदान्तादिशास्त्राणि समधीत्य, तत क्रमेण पञ्चनदविश्वविद्यालयीया प्राज्ञ विशारद शास्त्रिपरीक्षा समुदतरत्। पञ्चनदेष्वसौ महती प्रतिष्ठामापन्नस्तदानी दिग्गजपण्डितेष्वगण्यत। अस्य व्याख्यानानि सदुपदेशाश्च श्राव श्राव सर्वे श्रोतारश्चकितवकिता "अहो धारणा !, अहो शास्त्राधिगम !, अहो प्रतिभावलम् ! अहो वक्तृत्वम् ! यत्र भारतेऽन्धा अपीदृशास्तत्र सचक्षुषा किं वक्तव्यम् इति मुक्तकण्ठमवादिषु। असौ 'चातुर्वर्ण्यम्' इति नामधेय स्वाभिनवमतप्रकाशकमेक पुस्तकमप्यलेखीत्।

---

## श्रीमदनमोहनशास्त्रिज्योतिषाचार्यः

श्रीमदनमोहनशास्त्री ज्योतिषाचार्यो विद्वन्मूर्धन्ये धन्ये 'तलाववाले' इति प्रसिद्धे ब्राह्मणवंशे गणेशशर्मणस्तनूजात् पूर्वोक्तान्नन्दलालशर्मणो देवकीदेव्युपनाम्न्यां निहाल-देव्यां नन्दवेदविहगवसुमतीमिते (१९४९)वैक्रमाब्दे सौरभाद्रपदमासस्य दशमतारिकायाम् (भाद्रपदशुक्लद्वितीयायां) भौमवासरे जनुरग्रहीत् । जातसंस्कारं विधाय सुवर्णशलाकया जिह्वायामोङ्कारमस्य समुल्लिलेख पितृपादः । एकादशेऽहनि च 'मदनमोहनः' इति नामधेयमकार्षीत् । ततः पञ्चवर्षवयसि अक्षरशिक्षोपक्रमं विधायाऽष्टमे वर्षे समुपनीय वेदमेनमध्यापिपत् । ततोऽसौ श्रीरणवीरपाठशालायां प्रविश्य श्रीदीनानाथरघुनाथशास्त्रिप्रभृतिभ्यो विद्वद्भ्यः प्राज्ञपरीक्षोपयोगिपुस्तकानि समधीत्य पञ्चनदविश्वविद्यालयीयां प्राज्ञपरीक्षां प्रथमश्रेण्यां समुदतरत् । श्रीरघुनाथपाठशालीयविद्वद्भ्यो हरदत्तप्रभृतिभ्यः पूर्वोक्तेभ्यो रघुनाथशास्त्रिप्रभृतिभ्यश्च समधीत्य क्रमेण विशारद-शास्त्रि-परीक्षे अपि समुदतारीत् । शास्त्रिपरीक्षाकाले नवाह्निकव्याकरणमहाभाष्यं शब्देन्दुशेखरञ्च समध्यगीष्ट । ततः कञ्चित् कालं श्रीरणवीरपाठशालाया प्राध्यापकपदमध्यतिष्ठत् । महाराजः श्रीप्रतापसिंहः कुशाग्रतीक्ष्णामूहापोहसमर्थामेतस्य प्रतिभां समनुभूय वाराणसीमेन ज्योतिश्शास्त्रमध्येतु प्राहिणोत् पुष्कलां छात्रवृत्ति चमुष्मै प्रादात् । तत्र क्वीसकालेजे प्रविश्य क्रमेण ज्योतिषाचार्यपरीक्षां समुदतरत् । विद्वद्भ्यश्च विद्याभूषण-ज्योतिर्विद्याभूषण-गणकरत्नोपाधीनलभत । कालिकाताविश्वविद्यालयीयां काव्यतीर्थपरीक्षां च समुदतरत् । एवं सर्वशास्त्रनिष्णातोऽप्यसौ गणितफलितोभयविधज्योतिश्शास्त्रे कर्मकाण्डकर्मणि च परं प्रावीण्यमध्यगच्छत् । महाराजः श्रीप्रतापसिंहोऽमुष्य तादृश वैदुष्यं, व्यवहारपाटवं, सभाचातुर्यं च प्रत्यक्षीकृत्य स्वपण्डितेष्वन्यतमपण्डितस्य पदमध्यतिष्ठिपत् । तस्य गुणैराकृष्ट. पुञ्छराज्याधिपति. श्रीसुखदेवसिंहः स्वज्येष्ठपितृव्यं महाराजश्रीप्रतापसिंहमनुनीय स्वकीये राजपण्डितपदे नियुज्य स्वराजधानीममुमनयत् । तत्र सर्वं मौहूर्तिकादिकं ज्यतिश्शास्त्रसम्बन्धि, संस्कारोद्यापनयज्ञयागादिकं कर्मकाण्डसम्बन्धि च कार्यजातं परमनैपुण्येन समपादयत् । अथ कर्णोपकर्णिकयाऽलवरनरेशोऽमुष्य वैदुष्यगुणान्निशम्य सादरमेनं समाहूय विदुषां सदसि प्रश्नोत्तरविधया सम्यक्परीक्ष्य च, राजपण्डितपदमध्यतिष्ठिपत् । जम्बूवास्तव्याऽनुरोधेन तु पुनर्जम्बूनगरं गत्वा श्रीरघुनाथसंस्कृतमहाविद्यालये ज्योतिषमध्यापयंश्छात्रसंसदि महतीं कीर्त्तिं समवाप्नोत् । लोकेष्वपि परमयशोभाजनं संवृत्तः ।

इमास्तस्य कृतय —

(१) हिन्दीसस्कृतमयस्य पञ्चाङ्गकल्पद्रुमस्य सम्पादनम् । (२) गुरमुखी-भाषाया उत्तमतिथिपत्रिकानिर्माणम् । (३) उर्दूभाषामयी मञ्जूरेआलमयन्त्रिका । (४) मृगलोचनाजातकम् । (५) लग्नसारिणीसमुच्चय । (६) वर्षफलप्रकाश । (७) सक्षिप्तद्विगर्तराजेतिहास । (८) हरिसिंहपरिणय । (९) पितृशोकलता । एषु पञ्चाङ्गत्रय यथासमय समुद्रितमभूत् । परमितरा पुस्तिका अमुद्रिता एव विद्यन्ते ।

श्रीमदनमोहनशास्त्रिणामुपहासप्रियत्वम्, व्यवहारकौशलम्, सकलजनमनोरञ्जकत्वम्, सभाचातुर्यम्, सर्वत्राऽप्रतिहतगतित्वम्, आशुकवित्वम्, प्रत्युत्पन्नमतित्वम्, सर्वदैव प्रसन्नवदनत्वम्, परिचयपरिपाटीपटुत्व चाऽखिलजनविदित वर्तते । इमे व्यवहारेण, सरसमधुरभाषणेन, आकारेण, वस्त्रपरिधानप्रकारेण, सर्वसम्भारसम्पन्नासिकया, बाह्याभ्यन्तरत समेन रूपेण स्वीय महापुरुषत्वमभिव्यञ्जयन्ति स्म । एषा ज्येष्ठस्तनूज श्रीलोकनाथ प्रान्ताध्यक्ष (तहसीलदार), द्वितीय कृष्णचन्द्र (अध्यापक), तृतीय श्रीनीलाम्बरदेव एम्०ए० प्राध्यापक (प्रोफेसर), चतुर्थो यज्ञेश्वर एम्०ए०, पञ्चम शशिभूषणशर्मा—इमे पञ्चापि परस्पर स्नेहिन, पितृभक्ता, विनीता, सुशीला, कर्मण्या, कुलमर्यादापालका पितृवत् परमधार्मिकाश्च वर्तन्ते ।

——

श्रीमूलचन्द्रशास्त्री एम्० ए०, एम्० ओ० एल्०पदवीक

अस्ति द्वैगर्तक्षत्रियाणामधीन, पुन्छनामधेय कश्चित् प्रदेश । तस्य प्रथमो राजा गुलाबसिंहकनिष्ठभ्रातुर्ध्यानसिंहस्य पुत्र श्रीमोतीसिंह आसीत् । तदनन्तर तदात्मज श्रीबलदेवसिंहोऽभूत् । तत्समये कालिदासो नाम कर्मकाण्डप्रवीणो राजससदि लब्धप्रतिष्ठ कश्चित् पण्डित पुन्छराज्यस्य पुलन्दरीप्रान्तान्तर्गते 'गोराह नाम्नि ग्रामे तन्नत्यैर्ग्रामीणै सम्मानित स्वधर्मपत्न्या विष्णुदेव्या सह ससुखमवात्सीत् । रसाङ्कग्रहेन्दुमिते (१९९६) वैक्रमाब्दे आश्विनमासस्य २९ तारिकाया कालिदासाद् विष्णुदेव्या श्रीमूलचन्द्रो जन्म गृहीतवान् । असौ पितृनिर्देशेन, स्वप्रतिभाबलेन, गुरूणा साहाय्येन च गुणाग्निग्रहेन्दुमिते (१९३३) ख्रिष्टाब्दे पुरपपुरत (पेशावरात्) शास्त्रिपरीक्षामदात्, सर्वेषु च छात्रेषु तृतीयोऽभवत् । तदनन्तर लवपुरे ओरियण्टल कालजात् १९४९ख्रिष्टाब्दे सस्कृते एम्०ए०परीक्षा दत्तवान्, सर्वच्छात्रेषु च प्रथमोऽभूत्, तस्य बुद्धिकौशलमाशुग्राहित्वम्, लेखनकलाभिज्ञत्व च प्रशस्ततरमभूत् । ततो

१९५२ख्रिष्टाब्दे हिन्द्याम् एम्०ए० परीक्षां समुदतरत्। इदानीमसौ जम्बूनगरस्थे सायसकालेजे छात्रान् संस्कृतमध्यापयंस्तान् परं तोपयति गुणैः, स्वाधिकारिणां च चेतांसि सम्यगावर्जयति ।

---

## मूलराजशास्त्री मल्हणः

जम्बूनगरवास्तव्यो महाराजश्रीप्रतापसिंहाश्रितो मल्हणजातीयः श्रीगङ्गारामाभिधो ब्राह्मणः 'कच्चीछावनी'प्रतोलिकायां स्वधर्मपत्न्या सह ससुखं चिरमुवास। तस्माच्छ्रीगङ्गारामान्मूलराज एकोनद्विसहस्रतमे (१९९९) वैक्रमे वत्सरे ज्ञानदेव्यामाश्विनशुक्लषष्ठ्यां गुरौ जनुर्गृहीत्वा स्ववंशीयेषु हर्षप्रकर्षं विदधानः पञ्चमे वर्षे कृतोपनयनसंस्कारो जम्बूराजधानीस्थे श्रीरघुनाथसंस्कृतमहाविद्यालये प्रविश्य क्रमेण प्राज्ञविशारद-शास्त्रिपरीक्षाः प्रादात् । साम्प्रतं जम्बूस्थे मोतीबाजाराभिधे महति हट्टपथे श्रीमारुतिमन्दिराधिष्ठातृपदमलङ्कुर्वाणः श्रद्धया समागतान् संस्कृतभाषामर्मजिज्ञासून् संस्कृतमध्यापयति ।

---

## श्रीमौलिरामः

मौलिरामः पुञ्छराज्यान्तर्गते 'गोराह'ग्रामे ब्राह्मणवंशे समुत्पद्य कञ्चित् कालं पितृपार्श्वेऽधीतवान् । जातसमुद्बोधश्च वाराणसीं गत्वा, तत्र द्वादशवर्षाणि व्याकरणादिशास्त्राणि समधीतवान् । विशेषतः पाणिनीयव्याकरणप्रयोगसाधनविधौ, फक्किकाविश्लेषणे, नव्यन्यायरीत्याभिलापनपद्धतौ चासौ प्रौढोऽभवत् । अध्यापनानन्तरमपि शिष्टमायुषो भागं निश्शुल्कमध्यापनकर्मणैव व्यत्ययापयत् । अमुष्याऽद्यापि बहवो विद्यार्थिनः शास्त्रार्थकलायां कुशला दरीदृश्यन्ते । अस्मिन् काले एवंविधा निष्कामकर्मकर्तारोऽतिदुर्लभाः सन्ति । वह्नीन्दुनन्देन्दुमिते (१९१३)ख्रिष्टाब्देऽसौ दिवं गतः ।

---

## आयुर्वेदपञ्चाननः श्रीरघुनाथशर्मा

जम्बूनगरवास्तव्यो भरद्वाजगोत्रः श्रीरघुनाथशर्मा विधिनाऽऽयुर्वेदशास्त्रमधीत्य पीयूषपाणिर्भूत्वा 'आयुर्वेदपञ्चानन' इत्युपाधिमधिगतवान् । तस्यायुर्वेदविद्यायां परं

प्रावीण्यमनुभूय महाराज श्रीप्रतापसिंह श्रीरघुनाथशर्माणममु श्रीरघुनाथसंस्कृतमहाविद्यालये आयुर्वेदाध्यापकपदमध्यतिष्ठिपत् । असौ शतशो विद्यार्थिन आयुर्वेदमध्याप्य चिकित्सकानकार्षीत् । नाय केवलमायुर्वेदविदेवासीत्, काव्यसाहित्येऽप्यक्षुण्णप्रसाराऽस्य प्रतिभा प्रत्यभासत । कविताकाननविहरणशीलेनामुना पाश्चात्यसम्राज , काश्मीरनरेशानामन्येषा च महापुरुषाणा प्रशस्तयोऽनन्ता समुदलेखिषत । असौ मधुरभाषी, क्षमाशील , दयामय , प्रसन्नवदन परिचयपेशलश्चासीत् ।

---

## योगाचार्य. श्रीरघुनाथशास्त्री

जम्बूराजधान्या दुर्गरगरिमसमुत्कर्षका वसिष्ठवंशावतसा श्रीखण्डभूसुरजातिसम्भूता श्रीरामधनज्योतिषाचार्यतनूजा श्रीकुञ्जलाल-हृषीकेश-रघुनाथाभिधानास्त्रयो भ्रातरो बभूवु । तेषु मध्यम षट्षष्ट्यधिकाष्टादशशततमे (१८६६) ख्रिष्टाब्दे समुत्पन्न पञ्चनदविश्वविद्यालयीया शास्त्रिपरीक्षा समुत्तीर्य वैतनिकी भृति स्वीकृतवान् । अयमष्टाविंशतिवर्षाणि सर्वकारविद्यालयेषु स्वगृहे च स्वातन्त्र्येण ब्रह्मयज्ञवितननबद्धपरिकरश्छात्रान् संस्कृतमध्याप्य महती ख्यातिमवाप । सप्तदशाधिकैकोनविंशतिशतमिते (१९१७) ख्रिष्टाब्दे सर्वमैहिक कार्यभार विहाय लोकान्तरमगात् । कनिष्ठ श्रीरघुनाथशास्त्री नन्दरसवसुचन्द्रमिते (१८६९) ख्रिष्टाब्दे परिव्राजकयोगोदये समुद्भूतो नवयौवन एव परमभक्तिसम्पत्तिसान्द्रहृदयो भौतिकविषयवीतरागोऽभवत् । पर विद्यानुरागातिरेकात् तत्र कृतबहुप रश्रम पञ्चनदविश्वविद्यालयीया शास्त्रिपरीक्षामुत्तीर्य स्वजनानुरोधादुपात्तपरिणय एकमेव गुणसम्पन्न पुत्ररत्न समुत्पाद्य, पर वैराग्यमापन्न परिव्रज्य गृहान्निर्जगाम । गङ्गातीरमासाद्य हृषीकेशस्य भरतमन्दिरे महन्तश्रीपरशुरामसविधे कञ्चित्काल निनाय । तत स्वर्गाश्रमे हृषीकेशतीर्थे विद्वत्साधुगोष्ठीषु विचरन् चिर तस्थौ । असौ भागवत श्रीरामानुजाचार्यसम्प्रदाये दीक्षितोऽभवत् । श्रूयतेऽसौ महात्मा श्रीमद्भागवतस्य दशमस्कन्धकथाप्रवचनावसरे भगवतो वसुदेवस्यामललीलावर्णनव्यग्रो, भक्तिरसपयोधिमग्न , विलोपितात्मस्मृतिचेतन , कदाचिन्नयनाभ्या रसतरङ्गिणी प्रवाहयन् भागवतग्रन्थपत्राण्यपि नयनजलप्लावितानि करोति स्म । तस्य कथोपकथनसमये श्रोतारोऽपि भक्तिरसपरिपूर्णा भगवन्मया एवाभवन् । प्रतिदिन घण्टाषट्क शीर्षासनासीनो भगवन्नाम जजाप । असावायुषश्चतुर्थे भागे योगसाधनोचिते तपस्विना निवासभूमौ बदरिकाश्रमे चिरमुवास । अद्याप्यस्य महात्मनो नाम्ना 'शेषधारा'-'थाईवाडी-बदरीनारायणधामाश्रितम् आश्रमत्रय प्रचलति । अद्यापि

योगीश्वरस्य श्रीरघुनाथशास्त्रिण शतश शिष्यास्तद्गुणान् स्मार स्मार निमीलितनयना आनन्दाश्रूणि मुञ्चन्त पर मोदमापद्यन्ते । तच्छिष्यप्रणीत तद्विषयकमेक पद्यमप्युपलभ्यते—

श्रीमत्सदार्यबलरामगुरो पदाब्जं सस्मृत्य लब्धनिगमान्तरहस्यसारम् ।
नारायणाश्रमनिवासरत महान्त योगीश्वर तु रघुनाथगुरु भजेऽहम् ।। इति ।

---

## कविराज श्रीरमाकान्तशास्त्री

आयुर्वेदपञ्चाननस्य श्रीरघुनाथशर्म्मणस्तनूजन्मा श्रीरमाकान्तशास्त्री खशून्यनन्देन्दुमिते(१९००)*ख्रिष्टाब्दे जूनमासस्य द्वाविंशति(२२)तारिकाया प्रादुरभूत्* । प्रारम्भ एवासौ कुशाग्रधिषण मेधावी ग्रहणधारणसमर्थश्चासीत् । श्रीरणवीरसस्कृतपाठशालायामधीत्य क्रमेण पञ्चनदविश्वविद्यालयीया प्राज्ञ-विशारद-शास्त्रिपरीक्षा समुदतरत् । स्वपितृपादेभ्योऽन्येभ्यश्चायुर्वेदविद्याविशारदेभ्यो विद्वद्भ्य आयुर्वेदविद्यामधीत्य 'आयुर्वेदविशारद' कविराज' इत्युपाधिद्वयमध्यगच्छत् । *पितृपादे दिवगते* श्रीरघुनाथसस्कृतमहाविद्यालये पितृपादाधिष्ठितपूर्वमध्यापकपदमध्यतिष्ठत् । तत्र न केवलमायुर्वेदशास्त्रमेवापि तु व्याकरणकाव्यसाहित्यमन्वादिधर्मशास्त्राण्यप्यध्यापिपत् । छात्रपरिषदि च परमयशस्वी समभूत् । सस्कृतशिक्षाविषये त्वसौ विशेषानुसन्धानमकार्षीद् येन भाषान्तरविज्ञ सस्कृतभाषानभिज्ञोऽपि केवल मासषट्केनैव सस्कृत लेखितु पठितु च समर्थो भवितुमर्हति । *बाणाग्निग्रहेन्दुमिते(१९३५)ख्रिष्टाब्दे* परमोपकारकमेकम् 'आरोग्यविद्या'नामक पुस्तकमसौ समुदलेखीच्छात्राणा प्रारम्भिकशिक्षासौकर्यार्थम् । सन्धिषु क्लिष्टतादोषपरिहारार्थं सन्धयोऽत्र न कृता, भाषा चातिसरला समासरहिता, पदानि चान्यभाषाभि सह सम्बद्धान्येव वर्तन्ते । अत साधारणोऽपि छात्रोऽस्य शब्दार्थं बोद्धु शक्नोति । न केवल छात्राणामपि तु वैद्याना कृतेऽपि परमोपकारकमिद स्वास्थ्यविज्ञानशिक्षकम् *'आरोग्यविद्या'नामक पुस्तकम्* । *आयुर्वेदविद्याविशारदोऽसौ श्रीरमाकान्त*शास्त्री आङ्ग्लोर्दू भाषयोरपि महापण्डितो वर्तते । आङ्ग्लोर्दू सस्कृतहिन्दीभाषाणा लेखनकलाया परा प्रौढिमापन्न आयुर्वेदविद्यया लोकोपचिकीर्षुश्च । इदानीमसौ लब्धपुष्कलवयस्कवृत्तिक स्वातन्त्र्येण चिकित्सन् परमयशस्वी सवृत्त । एतत्तनूजन्मा *श्रीसुभाषशर्मा सस्कृते एम्०ए०* इत्युपाधिमाप्तवान् । सोऽपि *कवितादिभिर्गुणै स्वपितर* पितामह चानुसरति ।

---

## श्रीरामकृष्णशास्त्री

जम्बूनगरे श्रीरघुनाथपुराप्रतोलिकाया नन्दलालश्रोत्रिय समभवत्। स च श्रीरघुनाथसंस्कृतमहाविद्यालये सामवेदाध्यापकपदमलङ्कुर्वाणो नागरिकै कर्मकाण्डादिक कारयन् कर्मकाण्डविषये परा प्रसिद्धिमध्यगच्छत्। तस्मिन्नुपरते तदात्मज श्रीपरशुरामश्रोत्रिय संस्कृतमहाविद्यालयीयसामवेदाध्यापकपदमध्यतिष्टत्। अथ स्वपितृवच्छ्रोत्रियगुणगणालङ्कृत कर्मकाण्डचातुरीधुरीण, जटा-माला-शिखा-लेखा ध्वज-दण्ड-रथ-घनाख्याभिरष्टविकृतिभि सहित सामवेद कोकिलस्वरेण गायति स्म। तस्य श्रोत्रियवरस्य धर्मपत्नी जयन्तीदेवी व्योमवसुविहगवसुमतीमिते (१९८०) वैक्रमे वत्सरे सौरकार्तिकद्वाविंशतितमतारिकाया (कृष्णचतुर्दश्या) साय सार्द्धपञ्चवादनवेलाया सुतमसूत। यस्यैकादशेऽहनि पिता रामकृष्णयोरुभयोर्गुणग्रहणाय, जीवने तदुभयोपासना विधातु च रामकृष्ण इति शुभनामधेयमकार्षीत्।

पञ्चमे वर्षेऽक्षरारम्भमष्टमे चोपनयन विधायास्य पिता स्वय वेदारम्भमचीकरत्। स्वाङ्क निधाय प्रतिदिनमसावेकैकपादादारभ्यैकैक मन्त्र कण्ठे कारयति स्म। क्रमेणैव मन्त्रेषु कृताभ्यासममु लघुकौमुदी, पञ्चतन्त्र, रघुवश च स्वयमध्याप्य पञ्चनदविश्वविद्यालयीया परीक्षा दापयितु श्रीरघुनाथसंस्कृतमहाविद्यालये प्रावेशयत्। तत्रासौ प्राज्ञ-विशारद-परीक्षे समुत्तीर्य दुर्दैववशात् षोडशे वत्सरे पितृपादैर्व्ययुज्यत। तत श्रीरघुनाथपाठशालाया पद लब्धु धर्मार्थसदस सकाशाच्छात्रवृत्तिमादाय साङ्ग सामवेदमध्येतु वाराणसीमयासीत्। तत्र हिन्दूविश्वविद्यालये प्रविश्य वैदिकविद्वद्भ्य साङ्ग वेदमध्येतु प्रारभत। हिन्दूविश्वविद्यालयीयच्छात्रोत्सवेषु सुरगिरा प्रणीतेषु तत्तन्नाटकेषु तत्तत्पात्राभिनय विदधानोऽयमभिनयस्य सम्यक् सम्पादनात् तत्रत्याध्यक्षेभ्य पुष्कलान् पुरस्कारानलभत। अथ चत्वारि वर्षाणि वाराणसीमध्युष्य सामवेदशास्त्रिपरीक्षा प्रथमश्रेण्या समुदतरत्, समस्तच्छात्रेभ्योऽधिकाङ्कलाभेन सुवर्णपदक चाप्नोत्। साम्प्रतमसौ द्वैगर्तिककविषु मुख्यतमो गण्यते। प्रान्तीयभाषाया, हिन्दीभाषाया, संस्कृते च कविता कलयन्नय महती ख्याति समधिगतवान्। बहुनोत्सवेषु प्रीतमानसा, काव्यरसास्वादनविदग्धा, सहृदया अस्मै पुरस्कारानदु। महाराज कर्णसिंह प्रतिवर्ष यान् प्रतियोगितानिबन्धान् लेखयति, तत्रापि वारद्वय प्रथमपुरस्कारस्य विभागेनैकैकशतरूप्यकाणि पुरस्कारमलभत।

असौ बाणकवे कादम्बर्या सक्षेप संस्कृतगद्येन, गीतगोविन्दस्य कञ्चिद् भाग

द्विगर्तभाषाच्छन्दोभि , गीताव्याख्यान च हिन्दीभाषाच्छन्दोभिर्लिखितवान् । प्रकीर्णा कवितास्त्वस्य भूयस्यो विद्यन्ते । साम्प्रतमसौ श्रीरघुनाथसस्कृतपुस्तकालयाध्यक्षपदमलङ्कुर्वाणो लोकेषु परमप्रीतिभाजन सवृत्तो विनीत , सुशील , वाह्याभ्यान्तरत समानस्वभावोऽध्ययनशीलश्च वर्तते ।

जम्बूस्थाऽऽकाशवाणीकार्यालयाध्यक्षा अमुष्य सरससारगर्भितप्रसादगुणगुम्फितकविताप्रभाविताः प्रतिमासममुष्य कविता प्रसारयन्ति । असौ कर्मण्य , सङ्गीतप्रिय , ग्रहणधारणसमर्थ , गुरुपितृदेवेषु श्रद्धावान्, सहिष्णु , हितमितमधुरभाषी चाऽऽस्ते ।

---

## श्रीरामनाथशास्त्री

असौ श्रीरणवीरपाठशालाया प्रविश्य पञ्चनदविश्वविद्यालयीये प्राज्ञ-विशारदपरीक्षे समुदतरत् । शास्त्रिपरीक्षा च श्रीरघुनाथपाठशालीयविद्वद्भ्य समधीत्य समुदतारीत् । तत 'प्रिन्स आफ वेल्स कालेजे' (वर्तमाने 'गान्धिमेमोरियल कालेजे') प्रविश्याङ्ग्लभाषाया परा योग्यतामधिगतवान् । पञ्चनदविश्वविद्यालयीये एफ० ए०, बी० ए०परीक्षे समुत्तीर्य सस्कृते एम्० ए० परीक्षा, हिन्दीप्रभाकरपरीक्षा च प्रथमश्रेण्या समुदतरत् । साम्प्रतम् 'आर्टस् कालेजे जम्बूनगरस्थे' सस्कृतप्राध्यापक-(प्रोफेसर)पदमधिरुह्याध्यापयति । असौ सरलस्वभाव , वर्तमानकालिकसभ्यतासस्कृत्यो. पोषकोऽपि विनीतो काव्यसाहित्यपरिशीलनशील., अध्यापनकलया छात्रपरिषदि, प्रवचनपाटवेन विद्वद्गोष्ठ्या च लब्धप्रतिष्ठ । अमुष्य कविता रसभावमयी, गूढव्यङ्ग्या, विद्वद्बुद्धिवेद्या च भवति । एवविधा प्रभूता स्नातका श्रीरणवीरपाठशालाया यश पताका विधूनयन्तोऽद्यापि सर्वत्र भारते दरीदृश्यन्ते ।

---

## पण्डितप्रवरः श्रीरामप्रपन्नशास्त्री

अस्ति पञ्चनदप्रान्तर्गत'होश्यारपुर'मण्डलैकदेशद्वावाप्रान्तोत्तरभागे'जेजो'नामधेय किञ्चिदतिविश्रुत पत्तनम् । तत्र सारस्वतब्राह्मणजातीय, किञ्चित् परमप्रसिद्ध, विद्याविद्योतित, पण्डितकुल वर्तते । यस्मिन्नद्यापि निखिलनिगमागमसारपारदृश्वानो धर्ममर्मविदो विद्वास एवाविरभूवन् भवन्ति च । तस्मिन् कुले कश्चित् केशवनामा

विद्वान् समाविरासीत् । श्रीकेशवात्मज पितृगुण पण्डित श्रीरघुनाथशर्मा पौनश्च भगवद्भक्तो, धुरन्धरो विद्वान्, छात्रपरिषदि लब्धप्रतिष्ठ श्रीमुकुन्दलालशर्मा, श्रीरामचन्द्रधूर्जटिरामनारायणनामधेयास्त्रीन् पुनाञ्जनयामास । श्रीरामप्रपन्नशास्त्री धूर्जटिशर्मणो ज्येष्ठस्तनूज, यो जम्बूराजकीयश्रीरघुनाथसस्कृतमहाविद्यालये महाध्यापकपद चिरमलमकार्षीत्तदानीन्तनपञ्चनदीयविद्वत्सु मुख्यपदमवाप्तवाश्च । असौ व्याकरण-न्याय-वैशेषिक-वेदान्त-मीमासा-साख्य-योग-धर्मशास्त्र-तन्त्रप्रभृतिशास्त्रेष्वप्रतिहतगतिरपि पक्षतान्ते नव्यन्यायानुमानखण्डे, पञ्चलक्षण्या, सिंहव्याघ्रे, व्याकरणशास्त्रपरिष्कारेषु, शब्दखण्डे च, व्युत्पत्तिवादशक्तिवादयोरपि च पर प्रावीण्य वाग्मित्व चाध्यगच्छत् । असौ श्रीरामप्रपन्नशास्त्री यास्कीयनिरुक्ते प्रपन्नालोकाख्याम्, वासुदेवविजये केशवी नामातिसरला बालोपकारिणीत्याख्याम् वृत्तरत्नाकरे वृत्तसङ्ग्रहाख्या व्याख्याम्, विदग्धमुखमण्डने कुञ्चिकाभिधा वृत्ति च विरच्य प्राकाशयद्, याभि सस्कृतसाहित्यस्य महानुपकार समभूत् । पिङ्गलसूत्रभाष्यम्, वैयाकरणभूषणविवृतिश्चैतद् द्वय सङ्कलितममुद्रितमेव विद्यतेऽद्यावधि । असौ कतिचिद् हायनानि जम्बूप्रान्तान्तर्गतोत्तरवाहिनीगदाधरपाठशालायामपि प्रधानाचार्यपदमलमकार्षीत् ।

असौ परमतपस्वी, साधुस्वभाव, नवनीतकोमलहृदय, सर्वजनहितैषी शिष्येषु पर स्निह्यति स्म । दिवानिशमध्ययनाध्यापनव्यसन्यसौ नक्तभोजनमपि स्वाध्याये महान्त विघ्नमिवाऽऽकलयति स्म । वेदनन्दविहगेन्दुसम्मिते (१९९४) वैक्रमे हायने स्वसुकृतैर्वैकुण्ठलोकमयासीत् ।

---

## श्रीरूपचन्द्र कविराज

कविराज श्रीरूपचन्द्रो वात्स्यायनवशसम्भवाद् वैद्यप्रवरात् श्रीनरोत्तमचन्द्राद् एकपञ्चाशदधिकैकोनविंशतिशततमे(१९५१)वैक्रमे वत्सरे वैशाखमासे यमुनादेव्या जनिमग्रहीत् । प्रारम्भे हरदत्तप्रभृतिभ्या दिग्गजपण्डितेभ्यो व्याकरण-न्याय-काव्य-साहित्यादिशास्त्राणि समधीत्य सस्कृतसाहित्ये विशेषपाण्डित्य प्राप्नोत् । तदनन्तरमायुर्वेदविद्याऽस्माक पैतृकसम्पत्तिरिति मत्वा तदुन्मुख समभवत् । प्रथम स्वपितृपादेभ्यस्तदनु श्रीदिलारामप्रभृतिभ्य सहिताग्रन्थान् समध्यगीष्ट । तदनुभवोऽनुसन्धान च लोकोत्तरे एव वर्तेत । स्वानुसन्धानेनैव रागिणा रोगनिदानादिकमसौ तत्कालमेव निर्दिशति । वर्तमानसमये त्वसौ वेदान्तसिद्धान्तारविन्दविहारभ्रमर

सवृत्त । उभाभ्यामायुर्वेदवेदान्ताभ्या शरणागतान् रोगिणो निरीहाश्च जीवयन्नसौ धन्य ।

---

### श्रीलक्ष्मदत्तो वैद्य

जम्बूप्रान्तीयकनहालग्रामवास्तव्यो वाराणस्या सुनाकिकवेश्वरणयोर्मूलमुपित्वा व्याकरण-न्याय-वेदान्त-काव्य साहित्यादिग्रन्थान् समध्यगीष्ट । कविताकलनकर्मण्यपि स्वगुरुमन्वसरत् । ततो वैद्यकग्रन्थानधीत्य पीयूषपाणि सिद्धवैद्यो भूत्वा द्विगर्तान् प्रत्यावर्तत । अनेकरोगरक्षोहतानाबालवृद्धानार्त्तजनान् स्वसाधितरसौपधपीयूपवर्षे पुनरुज्जीव्य महान्तमुपकारमकार्षीत् स्वदेशवासिना जनानाम् । साम्प्रत सर्वं परित्यज्य गृहीतसन्यास स्वजन्मभुवि 'कनहाल'नाम्नि ग्रामे पर्णकुटीर निर्माय, हरिं भजन् काल नयति । धर्मोपदेशेन स्वानुभूतवैद्यकविद्यया च लोकानुपकुर्वाण 'प्रणवानन्दस्वामी'ति नाम्ना लोकैरभिधीयते । तरुणिमनि वर्तमानस्यास्य तदानीन्तना सौजन्यादयस्तुलना नावहन्ति स्म ।

---

### श्रीलक्ष्मणशास्त्री ज्योतिर्विद्

असौ द्विगर्तप्रान्तस्थे 'भटयाल'नाम्नि ग्रामे सारस्वतब्राह्मणवंशे मुनीन्दुग्रहवसुमतीमिते (१९१७)वैक्रमाब्दे समुत्पन्नोऽक्षरारम्भादिक गृह एव विधायोत्तरवाहिन्या गदाधरपाठशालाया प्रविश्य विद्वद्भ्यो भाष्यान्त व्याकरण दर्शनानि च समधीत्य जम्बूराजधान्या श्रीरघुनाथपाठशालाया समागत । तत्रत्येभ्यो ज्योतिर्विद्भ्यो ज्योति -शास्त्रस्य चतुर्दशसिद्धान्तान् समधीत्य तत्र शास्त्रान्तरेषु च पर वैदुष्यमापन्न आधुनिककेतकीयमकरन्दसारण्यनुसार पञ्चाङ्गभास्कराभिध पञ्चाङ्ग निर्माय प्रतिवर्षं प्रकाशयामास । तस्य वैदुष्यगुणानाकर्ण्य धर्मावतारो महाराज श्रीप्रतापसिंह श्रीरणवीरपाठशालायाममु प्रधानाध्यापकपदे न्ययुङ्क्त । असावाङ्ग्लभाषायामपि लब्धप्रसरो लेखनसम्भाषणादौ परमप्रवीण समभूत् । तस्य तादृश वैदुष्य ख्याति च समनुभूय महाराजेन स कालेजे संस्कृतप्राध्यापकपदे नियुक्त । तत्राप्येनन महती ख्याति प्राप्ता । शतश सहस्रशश्च तस्य शिष्या शास्त्रिण , बी०ए०, एम्०ए०उपाधिधारिणस्त सस्मृत्य सरोमाञ्च मोदन्ते । ज्योति शास्त्रे तु तस्य लोकोत्तर प्रतिभाविकासोऽभवत् । अमेरिका-

यूरोप-जर्मनादिदेशीया विद्वांसोऽपि कठिनातिकठिनान् गणितप्रश्नान् पत्रद्वारा त पप्रच्छु । तस्य समुचितान्युत्तराणि समधिगत्य पर मुमुदिरे च । असौ काव्यकलाकलनेऽपि सिद्धहस्त आसीत् । 'पञ्चमजार्जकीर्तिलतिका'नामक खण्डकाव्य निर्माय महाराज-श्रीप्रतापसिंहसकाशात् पुष्कल धन लब्धवानसौ । राजसभाया त्वसौ 'आशुकवि'पदवी-मपि लब्धवान् । तेन संस्कृतसाहित्यस्य महदुपकृतम् । तत्तनूज श्रीवासुदेवशर्माऽपि एम्०ए० इत्युपाधि समाप्य सात्त्विकी वृत्तिमादधानो लोके 'भविष्यद्वक्ता' इति भण्यते । भूमुनिविहगेन्दुमिते (१९७१)वैक्रमाब्दे माघमासेऽष्टम्या परमाराध्यमाशुतोष सस्मरन्नसौ शिवलोकमगात् ।

—

## श्रीलक्ष्मीदत्तो दैवज्ञ

अस्ति जम्मूतस्त्रिशत्क्रोशान्तराले व्यापारिणा निवासस्थानम् 'ऊधमपुर'नाम-धेय किञ्चिदतिरमणीय पत्तनम् । इद जम्मूनगरादुत्तरस्या हिमाचलोपत्यकायाम् 'ऊधमसिंह'नाम्ना राज्ञा स्वनिवासार्थं वासितमासीत् । तत्र नत्थूरामपण्डितो ग्रहनन्द-वसुवसुमतीमिते (१८९९)वैक्रमाब्दे समाविर्भूय पित्रा समुपनीत पितृपादयोर्मूलमध्युष्य व्याकरणकोषादिक समधीतवान् । ततो जम्मूराजधानी समागत्य तात्कालिकेभ्यस्तत्र-त्येभ्य पण्डितेभ्यो व्याकरणन्यायसाहित्यकर्मकाण्डज्योतिषशास्त्राण्यधीत्य परमप्रवीणो-ऽभवत् । पुनरूधमपुरमागत्य ज्योतिषेण कर्मकाण्डेन च स्वजीविका सम्पादयन् स्वभार्यया सह ससुखमवात्सीत् । गृहागतान् ब्राह्मणवटून्, क्षत्रियकुमारान्, तदितरशिशूश्च निश्शुल्क-मध्यापयश्छात्रसंसदि लोकेषु च परा कीर्ति प्राप्तवान् । तत्रैव लक्ष्मीदत्तनामधेय सुत जनयामास । असौ श्रीलक्ष्मीदत्त शरनेत्रनन्देन्दुमिते (१९२५)वैक्रमे वत्सरे समावि-र्भूय पित्रा समुपनीयाक्षरारम्भादारभ्य क्रियमाणशास्त्रशिक्षोपक्रमो व्याकरणन्याय-साहित्येषु परिनिष्ठितोऽभवत् । ज्योतिषशास्त्रेऽधिका प्रवृत्ति जन्मान्तरसस्कार च परिज्ञाय पितृपादैरसौ सकलशास्त्रपारङ्गतविद्वद्रत्नाकर जम्मूनगर प्रति प्रहित । तत्र श्रीरघुनाथसंस्कृतमहाविद्यालये प्रविश्य श्रीविश्वेश्वरप्रभृतिज्योतिर्विदामन्तेवासिदव समधिगत्य स्वल्पेनैवानेहसा गणितफलितोभयविधज्योतिश्शास्त्राम्बुधे स्तलस्पर्शं पर पारमगात् । ततो गुरुभिरनुज्ञातो गृहमागत्य पितृपादैरनुमोदितो गृहीयपाठशालाया पिपठिषून् पाठयन् पितृपादाना मुदमवर्धयत् । कर्मविपाक मूकप्रश्नोत्तर च करामलकवत् प्रत्यक्षेण ब्रुवाणममु लोका साक्षाद्भृगुरयमिति परस्परमवादिषु । प्रतिवर्ष सूर्यसिद्धा-

'न्तानुसारं तिथ्यादिकं केतकीसिद्धान्तानुसारेण ग्रहाणां स्पष्टीकरणम्, नानाविधलोकोपकारिविषयोपेत'पञ्चाङ्गरत्नाकर'नामकं पञ्चाङ्गं च प्रकाश्य कर्मकाण्डज्योतिषवृत्तिजीविनां महान्तमुपकारमकार्षीत्। असौ 'आचार्यभास्कर'नामकं प्रश्नमुहूर्तजातकादिविषयप्रतिपादकमेकं पुस्तकं विरचितवान्, अपरं च 'आयुर्दायाध्याय'नामकम्। लक्ष्मीदत्तदैवज्ञस्य पितृपादाः श्रीनत्थूरामशर्माणः सर्वं सत्पुत्रसम्बन्धि सुखमनुभूय नन्दमुनिग्रहेन्दुमिते (१९७९)वैक्रमाब्दे स्वर्गं प्रस्थिताः। ज्योतिर्विच्छ्रीलक्ष्मीदत्तोऽपि द्विसहस्रतमे (२०००)वैक्रमाब्दे लोकान्तरमगमत्। अमुष्य प्रभूततराः शिष्या वर्तन्ते। तेषु चनैनीवास्तव्यो ज्योतिर्विद् नानकचन्द्रो द्विगर्तप्रसिद्धः सम्प्रति जम्बूनगरमधिवसति, यो 'राष्ट्रविजयपञ्चाङ्गं' रचितवान्।

---

## लालचन्द्रः

असौ 'नाटकनजाटी'ग्रामवास्तव्यः पुञ्छराज्यस्थसनातनधर्मसंस्कृतपाठशालायां बहुकालमध्यापिपत्। स्वातन्त्र्येणैव काव्यव्याकरणादीनि शास्त्राणि महता परिश्रमेण गुरुपार्श्वेऽभ्यस्यासौ तत्राध्यापकपदमध्यतिष्ठत्। श्रूयतेऽमुना स्वप्रान्ते संस्कृतस्य प्रचुरः प्रचारो विहितः। अद्य मृतस्याप्यस्य चत्वारिंशद् वर्षाणि समभूवन्।

---

## श्रीवनमाली पण्डितः

जम्बूनगरस्थायां 'कालीजन्ही'नाम्न्यां प्रतोलिकायां कश्चित्कर्मकाण्डिप्रकाण्डं पण्डितो देवीसहायनामधेय आसीत्। श्रूयतेऽसौ स्वगृहीयपाठशालायां शतशो विद्यार्थिनः सार्ववर्णिकान् संस्कृतमध्यापिपत्। तस्यैव निश्शुल्काध्यापकस्य संस्कृतप्रचारपरायणस्य विदुषो ब्राह्मणस्य सकाशाद् रसेन्दुग्रहवसुमतीमिते (१९१६) वैक्रमे वत्सरे वनमाली नाम कर्मकाण्डधुरीणः पौराणिको विद्वान् जनिमग्रहीत्। स्वपितृसकाशात् कर्मकाण्डशास्त्रं, ज्योतिश्शास्त्रं, व्याकरणं, धर्मशास्त्रं चाध्यगीष्ट। अष्टादश पुराणानि चास्य हस्तामलकान्यासन्। असावपि स्वपितृवद् गृहीयपाठशालायां निश्शुल्कं पाठयति स्म। परमभागवतोऽसौ महाराजावरोधने भागवतीं कथामशुश्रवत्। महाराजेन महाराज्ञीभिस्तद्दासीभिश्च सम्मानितोऽसौ ततः प्रचुरधनलाभेन समृद्धोऽभवत्। 'घुरूरी'-

नाम्नी महाराज्ञी किमपि सुन्दरं मन्दिरं निवासगृहं चास्मै प्रादात् । तस्य शतशः पौराणिकाः कर्मकाण्डिनश्च शिष्या अद्यापि विद्यन्ते । असौ शतवर्षायुषि शरेन्दुशून्याक्षिमिते (२०१५) वैक्रमाब्दे दिवं गतः ।

---

### श्रीवामदेवशास्त्री

असौ जम्बूप्रान्तान्तर्गत'सुचानी'ग्रामवास्तव्यो द्वादशवर्षवयसि श्रीरणवीरपाठशालायां प्रविश्य प्रथमादिश्रेणिचतुष्टयं क्रमेण समुत्तीर्य पञ्चनदविश्वविद्यालयीयाः प्राज्ञ-विशारद-शास्त्रिपरीक्षाः समुदतरत् । पञ्चनदविद्याविभागीयम् 'ओ० टी०' इत्युपाधिमधिगत्य तत्रैव माध्यमिकविद्यालयेषु भृतिं कुर्वाणो महतीं ख्यातिं समधिगतवान् स्वसहचरेष्वध्यापकेषु । स्वायुषोऽन्तिमभागे वयस्कवृत्तिं लब्ध्वा जम्बूनगरे प्राणानत्याक्षीत् ।

---

### विद्यासागरः बी० ए० ज्यौतिषी

अस्ति पञ्चनदप्रान्ते गुरदासपुरमण्डलान्तर्गतो यव-यवक-सर्षप-मसूरातसी-हरिमन्थादिसस्यसम्पद्धरितो, निविडेक्षुदुर्गमतरमार्गः, परिपक्वधान्यकपिशकेदाररम्यप्रान्तभागः, कूपारघटोदञ्चितोदकसिच्यमानक्षेत्रोद्भूतसस्यश्यामलः, कृत्तकलमगोधूमपुष्कलपूलकमर्दन--वृषभसञ्चालन--धान्यपवन--संशोधनादिकार्यसंलग्नकृषकजनकलकलरमणीयः, गोमयोपलान् वर्तयन्तीनां शुष्कगोमयराशीश्चिन्वतीनाम्, बदरकामलकाम्रादिफलखारिका वहन्तीनां कृषकतरणीनां ग्राम्यगीताकृष्टहृष्टपथिकजनमानसः "दुन्धुचक्क" नामधेयः कश्चिद्ग्रामः ।

तत्राग्रजन्मवंशावतंसः, अखिलवर्णशिक्षादीक्षागुरुः, धर्मोपदेशदानदक्षः, कर्मकाण्डपरिपाटीपटीयान्, गणितफलितोभयविधज्योतिर्मर्मवित्तयाऽतीतानागतं सर्वं करामलकवद्दर्शयन्, लोकेषु सर्वत्र सम्मान्यः श्रीरामदयालुर्नाम कश्चिद्विपश्चित् ज्योतिर्वित् स्वधर्मपत्न्या श्रीनिहालीदेव्या सम सुखमवात्सीत् । तस्य गृहे गुणानलविहगविधुमिते (१९३३) वैक्रमे वत्सरे भक्तरामाभिधो जनुर्लेभे । असौ दशवर्षदेशीय एव विविधबालक्रीडाक्रोडीकृतस्वान्तोऽपि ग्रहगणिततत्त्वोद्भेदनवेलायां तल्लीनमनस्कतया

समाधिमिवाधिश्रयन् स्वपितुर्निस्सीमप्रमोदभाजनमभवत् । तत प्रारम्भिकज्योतिश्शास्त्र पितृसकाशात् समधीत्य, ततोऽधिक समध्येतुमय तदादेशेनामृतसरोवास्तव्यस्य गणित-फलितोभयविधज्योतिश्शास्त्रे सिद्धस्य, बालमुकुन्दशर्मण शरणमयासीत् ।

श्रीबालमुकुन्दोऽपि गोलगणिते निर्बाध लब्धावकाशामस्य शेमुषी निभाल्य सप्रणयमिम शिष्यत्वेनान्वग्रहीत् । ततोऽय ज्योतिश्शास्त्र समधीत्य, फलितज्यौतिषे विशेषतया प्रावीण्यमध्यगच्छत् । तस्मिन् विषये बहुधा परीक्ष्य जातसन्तोष श्रीबाल-मुकुन्द सहर्षमिम गृहान् गन्तु समादिदेश । असावपि श्रीभक्तरामो यथासामर्थ्यं गुरु सम्पूज्य तदाशीराशिभिरभिनन्दित पितृचरणयोर्मूल "दुन्धुचक्क' ग्राममागत्य सप्रश्रय पित्रोश्चरणशुश्रूषणपर, विद्यया, बुद्ध्या च तयो स्वान्त शान्त विदधान फलित-ज्योतिश्शास्त्रबलेन फलानि निर्दिशन् लोकानामपि परमश्रद्धाऽऽस्पदमभवत् । अथ श्रीभक्तरामो बाल्यादेव सकलभुवनकृतचरणनति भगवती वैष्णवी प्रपन्नस्तन्मयमेवाऽ-पश्यज्जगत् सर्वम् । तस्य पत्नी श्रीमती लक्ष्मीदेवी नयनमुनिनन्देन्दुमिते (१९७२) वैक्रमे वत्सरे ज्येष्ठशुक्लत्रयोदश्या भृगुवासरे शुभलक्षणलक्षित पुत्ररत्नमजीजनत् । ततो द्वादशेऽहनि विद्यास्थानस्थितशुभग्रहदशाऽनुरूप पिताऽस्य "विद्यासागर" इति नामधेयमकार्षीत् । अथ क्रमेणैधमानोऽय पित्रो प्रीतिं प्रत्यपादयत् । पितृपाद पञ्च-वर्षवयस्कमिम च स्वाङ्कमारोप्याक्षराण्यशिशिक्षत् । अथ कृतोपनयनसस्कारमष्ट-वर्षवयस्क स्थानीये प्रारम्भिकविद्यालये विधिवत् समध्येतु प्रावीविशत् । स्वय च पितृपाद ज्योतिश्शास्त्रसिद्धान्तान् व्याकरण च स्वसविधे समुपवेश्य कण्ठे कारयति स्म । तत क्रमेण पञ्चमश्रेणी समुत्तीर्य किञ्चिज्जातबोधोऽय पितृप्रेरणया जम्बूस्थ-श्रीरणवीरमाध्यमिकविद्यालये (हाईस्कूले) प्रविश्य स्वाध्यापकसन्तोषपुरसर क्रमेण दशमश्रेणी प्रथमश्रेण्या समुदतरत् ।

ततो लवपुरे सनातनधर्ममहाविद्यालये (कालेजे) प्रविश्य पञ्चनदविश्वविद्या-लयीयाम् एफ० ए० परीक्षा समुदतरत् । तत्र परमविदुष श्रीगणेशदत्तशास्त्रिण समु-पासनया गीर्वाणवाण्यामस्य परमस्नेहोऽभवद् येनाय तस्मादन्येभ्यश्च तत्रत्येभ्यो विद्व-द्भ्यो यथासामर्थ्यं यथासमयञ्च गीर्वाणवाणी समध्येतु प्रावर्तत, तत्र साफल्य चालभत । वेदान्तसिद्धान्तारविन्दवनविहरणव्यसनिन पण्डितमार्तण्डस्य श्रीगणेशदत्तशास्त्रिणो व्याख्यानानि श्राव श्राव चपलाचपलशीलोऽप्यय मनस्वीव नितान्तशान्तस्वान्त सम-भवत् । शान्तरसपिपासा, आत्मपरमात्मविवेकजिज्ञासा च प्रतिक्षण वर्धमाना विद्या-सागर समाकृष्य पुन समस्तविद्यामन्दिर जम्बूनगर समनैषीत् । अत्र 'प्रिन्स आफ

ज्योतिर्विद श्रीयोद्धारामशर्मण पुण्यगृह जन्मनालमकार्षीत् । अथ प्रथम पितृपादेभ्योऽधिगताक्षरारम्भशिक्षादीक्ष क्रमेण भाष्यान्तव्याकरणम्, प्राचीनार्वाचीनन्यायग्रन्थाश्च समधीत्य व्याकरणाचार्य-न्यायाचार्योपाधिद्वयविभूपितोऽभवत् । तस्य वैदुष्य समनुभूय महाराजश्रीरणवीरसिंहो धर्मार्थविभागोच्चाधिकारिपदमिममध्यतिष्ठिपत् । असौ कश्चित् काल जम्बूनगरे ततोऽधिक वाराणस्या व्यत्ययापयत् । तस्यैव दिलारामस्य विदुष सकाशात् वैक्रमे १९४९ वत्सरे मार्गशीर्षमासस्य चतुर्थतारिकायाम् अर्धरात्रोत्तरैकवादनवेलाया श्रीविश्वनाथो जनिमग्रहीत् । पञ्चमे वर्षेऽक्षरारम्भमष्टमे वर्षे वेदारम्भ चैतत्पितृपादा स्वयमकारयन् । ततोऽसौ श्रीरघुनाथसंस्कृतमहाविद्यालये श्रीहरदत्तरामप्रपन्नारूढभानुप्रभृतिभ्यो विद्वद्भ्योऽधीत्य क्रमेण पञ्चनदविश्वविद्यालयीया प्राज्ञ-विशारद शास्त्रिपरीक्षा प्रथमश्रेण्या समुदतरत् । अथ वाराणस्या पितृसविधेऽध्युष्य न्यायव्याकरणसाहित्यपयोधीना पर पारमगमत् । असौ प्रत्युत्पन्नमति, परमसहृदय, कर्मकाण्डेषु, ज्योतिश्शास्त्रे च सिद्धोऽस्तीति सम्यक् परीक्ष्य पुञ्छाधिपतिर्महाराज श्रीजगद्देवसिंह सम्मानपूर्वकमेन राजपण्डितपदमध्यतिष्ठिपत् । तत्र राज्ञ कर्मकाण्डादिक प्रश्नमुहूर्त्तादिक च सर्वं कार्यजात सम्पादयन्नसौ स्वगृहे एव स्वातन्त्र्येण छात्रान् व्याकरणम्, कर्मकाण्ड, ज्योतिश्शास्त्र चाध्यापिपत् । पुञ्छराज्ये सर्वत्र पण्डितेष्वसौ प्रधानपण्डित आसीत् । शास्त्रेषु, कर्मकाण्डविषये, धर्मशास्त्रव्यवस्थासु, लौकिकव्यवहाराऽऽचारेषु च सति संशये तच्छेदार्थमिममेव शरणमयासिषुरस्तत्या पण्डिता, अन्ये च सर्वे प्रजाजना । असौ काव्य-नाटककलाकलनप्रवीणो, मधुरमितभाषी, पुण्यमय, प्रेममयो, दयामयो गाम्भीर्योदार्यादिगुणगणान्वित प्रात्यहिकसन्ध्यावन्दनपितृतर्पणदेवपूजादिनित्यकृत्याना श्रद्धया सम्पादयिताऽस्ति । एतदीयमक्षरविन्यास दर्श दर्श, माधुर्यादिगुणगुम्फितामनुप्रासार्थान्तरन्यासाद्यलङ्कारैरलङ्कृता पदावलीरचना श्राव श्राव तन्निगूढव्यङ्ग्यर्थान् बोध बोध च पर मोदन्ते सहृदया विद्वास काव्यरसास्वादनरसिका ।

इदानीमसौ श्रीरघुनाथसंस्कृतमहाविद्यालयेऽध्यापकपदमधिष्ठाय सर्वान् विषयान्, अध्यापयन् विद्यार्थिन पर तोषयति । विद्यार्थिनोऽपि तद्वात्सल्यस्नेहेनाध्यापनकौशलेन विषयप्रतिपादनचातुर्येण तत्तद्विषयभावोद्बोधनसौकर्येण च चकिता सन्त पर मोदमापन्ना यत्र तत्रैन स्तुवन्तो दरीदृश्यन्ते । कीदृशोऽपि प्रभावशाली पुरुष सनातनधर्मस्य दर्शनाना, व्याकरणस्य वा सम्बन्धे कीदृशानपि गूढप्रश्नानुपस्थापयेत्, पर प्रश्नसमाप्तिसमकालमेव तानसौ तथा समादधाति यथा प्रश्नकर्तु परिताप

स्यादेव। तदीयास्त्रय मत्पुत्रा गुणा इव परस्परमभिन्ना, विनीता, सुशीला, स्वकुलोचितगुणान्विता, विद्यानुरागिण, सदाचारपरायणा, पितृभक्ता, परमेश्वरनिष्ठाश्च सन्ति। तेषु मध्यम श्रीगोविन्दशास्त्री क्रमेण पञ्चनदविश्वविद्यालयीया प्राज्ञविशारद शास्त्रिपरीक्षा प्रथमश्रेण्या समुत्तीर्याङ्ग्लभाषायामपि क्रमेण मैट्रिक एफ्०ए०-बी०ए०परीक्षा समुदरत्।

---

श्रीविश्वेश्वरशास्त्री ज्योतिषाचार्य

त्रिगर्तेषु वसुम्थली(बसौली)नाम्नी काचिदतिप्राचीना राजधानी वर्तते, या सर्वशास्त्रेष्वप्रतिहतगतीना विदुषा ब्रह्मनिष्ठाना ब्राह्मणानां वासभूरिति लोकैरुच्यते, यत्रत्या ब्रह्मणास्तीर्थयात्राव्याजेन वाराणसी गत्वा तत्रत्यान् पण्डितप्रकाण्डान् साधारणवेषा मलमल्लावशेषा अपि शास्त्रविचारे आश्चर्यचकिताश्चक्रु। ईदृशे परम्पराप्राप्तोत्कृष्टपाण्डित्ये एकस्मिन् ब्राह्मणकुले व्रजनन्दनशर्मण पण्डितस्य धर्मपत्न्या श्रीनपोवतीदेव्या श्रीविश्वेश्वरशर्मा पाण्डवनन्दवसुभूसमिते (१८९५) वैक्रमे वर्षे वैशाखशुक्लैकादश्या जन्म लेभे। अथ मौहूर्तिकैर्विचारितस्य प्रादुर्भावसमये तत्क्षणे शुभोदग्रग्रहाणा प्राचुर्यं सुदुर्लभ चतु सागरयोग च बाढ पश्यन्तो ज्योतिर्विदा राजसम्मानितता शुभोत्तरकाल च निश्शङ्क निरधारयन्, 'विश्वेश्वर' इति च सज्ञा व्यधु। क्रमेण कृतसस्कारोऽसौ लघुपुस्तकानि गृहे एव स्वपितृसकाशादपठत्। तस्य पितृपादा नवनवोन्मेषशालिनी लोकोत्तरा प्रतिभामनुमाय श्रीविश्वेश्वर विदुषामाश्रयभूता, पण्डितकुलसङ्कुला जम्बूराजधानी प्रति प्राहिण्वन्। तत्रत्यविदुषा शिष्यत्व श्रद्धया स्वस्मिन्नाधाय तेभ्यो न्यायशास्त्रम्, काव्यप्रकाशादीन् अलङ्कारशास्त्रग्रन्थान्, बाहुल्येन गणितफलिताभयविध ज्योति शास्त्र च समधीतवानसौ। नैषधीयचरितादीनि त्वस्य जिह्वाग्रस्थान्येवासन्निति तात्कालिका विदन्ति। महाराजेन श्रीरणवीरसिंहेन तस्य गुणान् परीक्ष्यासौ स्वाश्रयी ज्योतिषी ज्योतिर्विद पदे प्राङ् नियुक्त। तदनन्तरमस्याध्यापनपटुत्वम्, प्रबन्धप्रावीण्यञ्च वीक्ष्य स्वसस्थापितपाठशालाप्रबन्धसौकर्याय तासा पाठशालाना निरीक्षक (इस्पेक्टर) नियुक्त। एव क्रमेण महाराजस्य मन प्रमोदहेतु सन्नसौ जम्बूकाश्मीरस्यधर्मार्थविभागस्योच्चाधिकारिपदमलङ्कृतवान्। असौ महानुभाव श्रीविश्वेश्वरशर्मा त्रिभिर्महाराजै श्रीरणवीरसिंह-प्रतापसिंह हरिसिंहै सम्यक् समभ्यर्चित सम्मानितश्च। तादृशी सम्मानना लभमानोऽप्यय स्वगृहे महता प्रेम्णा शिष्यान् औरसपुत्रानिव लालयन्नध्यापयत्।

नन्दलालशास्त्रि-मदनमोहनशास्त्रि-काकारामशास्त्रिप्रभृतयः प्रकाण्डविद्वांसोऽस्यासन् शिष्याः। तेषु केचनाद्यापि विद्यन्ते। तेन प्रतिवर्षं पञ्चाङ्गं प्रकाश्यते स्म। प्रश्नमार्गः, प्रश्नकुतूहलं, रणवीरविजयः, जातकरहस्यमित्येवमादयो ज्योतिर्निबन्धा अपि प्रकाशिता आसन्। परं नाधुना ते सर्वे समुपलभ्यन्ते। केवलं रणवीरविजयाख्यो महाग्रन्थः श्रीरणवीरसंस्कृतपुस्तकालयेऽमुद्रितो वर्तते। राजाधिराजमहाराजादिभिः समभ्यर्चितपादपद्मो विदुषां मूर्ध्नि संस्थितोऽसौ विश्वेश्वरशर्मा वह्निवसुग्रहेन्दुमिते (१९८३) वैक्रमाब्दे स्वायुषोऽष्टाशीतितमे वर्षे आषाढकृष्णषष्ठ्यां दुःखत्रयाद् विमुक्तोऽभवत्।

---

## श्रीविष्णुदत्तशास्त्री

द्विगर्त्तराज्यान्तर्गतं'कठुआ'नगरं जम्बूतश्चत्वारिंशत्क्रोशदूरे श्रीविष्णुदत्तशास्त्रिणो जन्मस्थानं वर्तते। तत्रोपाध्यायोपाह्वः, वैद्यशिरोमणिः, अमरनाथशर्मा न्यवसत्। तस्य धर्मपत्न्यामक्षरादेव्यां श्रीविष्णुदत्तशास्त्री रसाङ्कविहगेन्दुमिते (१९९६)वैक्रमाब्दे चैत्रमासस्याऽष्टमतारिकायां जनिमग्रहीत्। एकादशेऽह्नि पिता तस्य 'विष्णुदत्त' इति नामधेयमकार्षीत्, षष्ठे च वत्सरेऽक्षरारम्भं विधाय वर्णविन्यासमशिशिक्षत्। अष्टमे कृतोपनयनसंस्कारमिमं पिता लघुपुस्तकानि स्वयमध्यापिपत्। तदनन्तरमसौ लवपुरसनातनधर्मकालेजे प्रविश्य मुनिनयनग्रहेन्दुमिते(१९२७) ख्रिष्टाब्दे पञ्चनदविश्वविद्यालयीयां शास्त्रिपरीक्षां समुदतरत्। ततो विहगविलोचननन्देन्दुमिते(१९२९)ख्रिष्टाब्दे लवपुरे एव डी०ए०वी० कालेजे समधीत्याऽऽयुर्वेदविषयिणीं कविराजपरीक्षां समुदतरत्। तमेव कालेजमधितिष्ठन्नयमायुर्वेदविधिना 'रोगिरोगपरीक्षणम्' इति नामधेयं निबन्धं संलिख्य सुवर्णपदकमपि समवाप्नोत्। रसवह्निविहगवसुमतीमिते (१९३६) ख्रिष्टाब्दे पञ्चनदविश्वविद्यालयीयां बी०ए० परीक्षां समुदतरत्। विलोचनवेदविहगवसुमतीमिते (१९४३) ख्रिष्टाब्दे पञ्चाम्बुविश्वविद्यालयीयां हिन्द्याम् एम्०ए० परीक्षां समुदतारीत्। मुनिबाणग्रहेन्दुमिते(१९५७) ख्रिष्टाब्दे काश्मीरिकशैवदर्शनसिद्धान्तानुसारं 'शिवपूजनमहत्त्वम्' इति विषयमवलम्ब्य संलिखितेन निबन्धेन 'पी०एच्०डी०' इत्युपाधिमधिगतवान्। एवमनेन विदुषा पञ्चनदविश्वविद्यालयीयाः पञ्चोत्तमोत्तमपरीक्षाः समुदतारिषत। डी०ए०वी० आयुर्वेदकालेजतश्च 'वैद्यकविराजः' इत्यायुर्वेदपरीक्षा समुत्तारि। एवं पी०एच्०डी० इति विशेषोपाधिनाऽऽढ्यं विदुषामग्रणीः संवृत्तः काश्मीरेषु श्रीनगरे श्रीमदमरसिंहकालेजे संस्कृतहिन्दीप्राध्यापकपदमधितिष्ठति। सूर्यप्रकाश-

नामधेयोऽस्य तनूजोऽपि काश्मीरविश्वविद्यालयतो बी०एस-सी० परीक्षां समुत्तीर्य चिकित्सा(मेडिकल)विभागे एम्०बी०बी०एस० परीक्षां समुत्तरीतुं प्रयतते । तनूजा च सत्यादेवी प्रभाकरपरीक्षां समुत्तीर्येदानीं बी०ए०परीक्षां दित्सति।

---

## श्रीविहारीलालः

श्रीविहारीलालः 'खिहाडिया'ग्रामवास्तव्यो जम्बूनगराभिजनो दामोदरपौत्रात् श्रीनत्थूरामस्य च पुत्रात् श्रीचरणदासशर्मणः सीतादेव्यां विधुविहगनन्देन्दुमिते(१९९१) वैक्रमे वत्सरे मकरगे रवौ पौषशुक्लैकादश्यां भौमवासरे समाविरभूत्। जम्बूस्थश्रीरघुनाथपाठशालायां सद्गुरूणां सविधे समध्युष्य काश्मीरविश्वविद्यालयीये शास्त्रिप्रभाकरपरीक्षे समुदतरत्। असौ व्याकरणसाहित्यकाव्यादिषु निष्णातोऽपि ज्योतिश्शास्त्रे विशेषतया सिद्धहस्तो वर्तते। श्रीरघुनाथपाठशालायामध्यापकपदमधिष्ठाय संस्कृतमध्यापयति। असौ सुशीलो, विनीतो, ग्रहणधारणशक्तिसम्पन्नो वसनाशनादिषु साधारणोऽपि विशिष्टं ज्ञानधनं समुपार्जयितुं दिवानिशं प्रयतमानः स्वसहचरेभ्यो विशिष्यते।

---

## डा० वेदकुमारी (घई) एम्० ए०

असौ विदुषी जम्बूनगरवास्तव्यस्यार्यसंस्कृतौ परमनिष्ठावतः श्रीमत आरूढचन्द्रार्यस्य प्रपौत्री, गुरुकुलादिविद्यासंस्थासु विधिना समधीत्य पञ्चनदविश्वविद्यालयीयां शास्त्रिपरीक्षां समुत्तीर्णस्य श्रीमूलशङ्करशास्त्रिणः सुपुत्री, श्रीमूलशङ्करशास्त्रिणो ज्येष्ठभ्रातुः श्रीवरकतरामस्य दत्तिका सुपुत्री विलोचनवह्निविहगवसुमतीमिते (१९३२) ख्रिष्टाब्दे नवम्बरमासस्य षोडश्यां (१६) तारिकायां समाविर्भूय भास्करप्रभेव स्वकुलकमलाकरे भासमाना सितदलप्रतिपच्चन्द्रकलेव प्रतिदिनमेधमाना पित्रोः परं हर्षप्रकर्षमकार्षीत्। तस्याः सार्द्धैकवर्षवयसि वर्तमानाया एव जननी कौशल्यादेवी परसुखाऽसहिष्णुना विधिनाऽसमय एवापहृता। श्रीवरकतरामार्यस्य वेदसिद्धान्तप्रवक्त्री, करुणामयी, परमधार्मिकी, धर्मपत्नी, श्रीमती विद्यावती विदुषी या हिन्दीसंस्कृताऽध्यापनकर्मणैव समयं यापयन्ती, तत्रैव व्यासक्तस्वान्ता वात्सल्येन दिवानिशं कन्यां पाठयन्ती न श्राम्यति, न दुःखमनुभवति, किन्तु परं प्रसीदति, सेमां सार्द्धैकवर्षवयस्कां वेदकुमारीं

स्वाङ्कमारोप्यौरसदुहितृतोऽप्यधिकमस्यां स्निह्यन्ती तथेमामपीपलद् यथेयं नाद्यापि संस्मरति जनयित्री मातरम्, नाववोद्धुमीहते च तद्वृत्तम्। पञ्चवर्षवयस्येवाक्षरारम्भादारम्य क्रियमाणसस्कृतपुस्तकाऽध्ययनोपक्रमा क्रमेण पञ्चनदविश्वविद्यालयीयां प्राज्ञपरीक्षां समुदतरत्। पञ्चाशदधिकैकोनविंशतिशततमे (१९५०) च ख्रिष्टाब्दे बी० ए० परीक्षां समुदतरत्। नेत्रशरनन्देन्दुमिते (१९५२) ख्रिष्टाब्दे पञ्चनदविश्वविद्यालयीयायां संस्कृते एम्० ए० परीक्षायां प्रथमश्रेण्यां सर्वप्रथमाऽभवत्। सप्तपञ्चाशदधिकैकोनविंशतिशततमे (१९५७) ख्रिष्टाब्दे वाराणसेयहिन्दूविश्वविद्यालये समधीत्य प्रत्नेतिहाससंस्कृतिपुरातत्त्वविषयिण्यां एम्० ए० परीक्षायां प्रथमश्रेण्यां सर्वद्वितीया समभवत्।

किञ्च—'नीलमतपुराण' विषयकं साहित्यिकसांस्कृतिकाध्ययनम्' इति नामधेयग्रन्थनिर्माणेन पी० एच० डी० इत्युपाधिमध्यगच्छत्। अपि चेयं द्विगर्तपत्रिकायास्तथा संस्कृतविभागस्य च मुख्या सम्पादिका वर्त्तते। हिन्दी सस्कृतेग्लिशप्रान्तीयद्विगर्तभाषामयी कवितां कलयन्तीयं विदुषी वेदकुमारी सहृदयहृदयानि रसपीयूषपयोधौ निमज्जयति, विशेषतया हिन्दीपद्यानि चास्या अनुरणनध्वनिमभिव्यञ्जयन्ति।

प्रथममसौ जम्बूराजधानीस्थे महिलाकालेजे सस्कृताध्यापिका(प्रोफेसर)पदमधिष्ठाय, विनयवैदुष्यादिभिर्गुणैः स्वसहचराध्यापिकावर्गं, सदाचारसद्विचारसरलसात्त्विकव्यवहारस्मितपूर्वाभिभाषणाध्यापनाभिनवभङ्गीभिश्च स्वानुशास्यशिष्यागणमनांसि समावर्जयन्ती संस्कृतमध्यापिपत्। ततः काश्मीरेषु महिलाकालेजे संस्कृताऽध्यापिकापदमलंकुर्वाणा सस्कृतमध्यापयति स्म। अस्या विलक्षणामध्यापनपरिपाटीमध्याप्यपुस्तकानां रहस्यार्थाववोधनसौकर्यम्, छात्रासु स्नेहं, सर्वदा प्रसन्नवदनत्वं, विनयावनतत्वं, परिचयपेशलत्वम्, इत्यादीनध्यापिकागुणानन्यांश्चोत्तमोत्तमनारीसुलभगुणान् समनुभूय छात्रा विषयान्तराणि परित्यज्यास्याः सकाशात् संस्कृतमध्येतुमहमहमिकया समायान्ति। सम्प्रति जम्बू-काश्मीरविश्वविद्यालये विलोचनरसविहगविधुमितस्य(१९६२)ख्रिष्टाब्दस्य सितम्बरमासे सस्थापितस्य स्नातकोत्तरसंस्कृतविभागस्य (एम्० ए० श्रेण्याः) मुख्याध्यक्षपदमधिष्ठाय तद्विभागस्य सर्वमध्ययनाध्यापनसम्बन्धि कार्यजातं साधु सम्पादयन्त्यसौ भारतीयशिक्षादीक्षाभ्यां कन्याः स्वसदृशगुणगणैरलङ्कृत्य स्वल्पेनैवानेहसा सदाचारसद्विचारवतीभिस्ताभिः पुनरुद्धरिष्यति भारतमित्याशास्यते।

---

### श्रीशकुन्तलाशर्मा शास्त्रिणी एम्०ए०,एम्०ओ०एल्०

जम्बूराजधान्या सारस्वतब्राह्मणवंशावतंसस्य श्रीश्रीनिवासशर्मणो ब्राह्मणस्य धर्मपत्नी श्रीमती नन्ददेवी शरविहगनन्देन्दुमिते (१९९५) वैक्रमे वत्सरे माघमासस्यैकादशतारिकाया सुतामसूत। यस्या यथासमय पिता 'शकुन्तला'इति नामधेयमकार्षीत्। इयमक्षरारम्भोत्तर श्रीदयारामशास्त्रिणो विद्यापीठ प्रविश्य क्रमेण पञ्चनदविश्वविद्यालयीया प्राज्ञ-विशारद-शास्त्रिपरीक्षा समुदतरत्। सकृच्छ्रुतग्राहिणीय संस्कृताध्ययनसमये स्वसतीर्थ्यकन्यागण स्वाधीतपाठमध्यापनविशेषविधया पाठयन्ती तत्राग्रणीर्गण्यते स्म, स्वश्रेणीनियतग्रन्थातिरिक्तशास्त्ररहस्यमपि गुरुभ्य श्रोतु जिज्ञासते स्म च। संस्कृतसाहित्ये परमनिष्ठावतीय बाला भाषान्तरज्ञान विना संस्कृतस्य प्रचारप्रसारौ न सौकर्येण भवितुमर्हत इति विचिन्त्याग्लभाषाया कुशाग्रतीक्ष्णा स्वप्रतिभा निवेशयितु प्रयत्नवती समभवत्। तत क्रमेण पञ्चनदविश्वविद्यालयीयमैट्रिक एफ०ए०-बी०ए०परीक्षा समुत्तीर्य, संस्कृते एम्०ए०परीक्षा हिन्दीप्रभाकरपरीक्षा च प्रथमश्रेण्या समुदतारीत्। सर्वकारलब्धछात्रवृत्ति समधिगत्य सैनिकशिक्षा(एन०सी०सी०)बालखुरलीमभ्यसितु 'चकराता'मयासीत्। प्रथम जम्बूराज्यान्तर्गत ऊधमपुरपत्तने हाईस्कूले संस्कृताध्यापिका समभवत्। तत पुञ्छनगरे माध्यमिकविद्यालये प्रधानाध्यापिका सञ्जाता। साम्प्रत काश्मीरेषु श्रीनगरे 'नवाकदल'प्रतोलिकाया सर्वकारकालेजे हिन्दी-संस्कृतप्राध्यापकपदमधिष्ठाय परमकौशलेन संस्कृत हिन्दीभाषा च समध्यापयति। असौ श्रीशकुन्तला विदुषी, परमविनीता, सुशीला, पवित्रचरित्रा, गुणग्राहिला, सात्त्विकाऽमलवेशा, अध्ययनाध्यापनव्यसनवती, गीर्वाणवाणी निरन्तर सेवमाना संस्कृतसाहित्यानुरागिषु महद् यशोभाजन सवृत्ता। छात्राणा परिषदि, विदुषा ससदि च लब्धप्रतिष्ठेयम्। अस्या प्रवचनप्रकार, व्याख्यानभङ्गी, अध्यापनशैली, सम्भाषणचातुर्यम्, गृहकर्मकौशलम्, परिचितिप्रावीण्यम्, ज्येष्ठाना समादरणम्, कनिष्ठाना लालनम्, शिशुभ्योऽपि गुणाना ग्रहणम् गुरूणामपि दोषाणा हानमित्यादयो गुणा अद्यतनाभि सर्वाभिरपि विदुषीभिरनुकरणीया।

---

### श्रीसेठशकुन्तला शास्त्रिणी, बी० ए०, बी० टी०

असौ श्रीशकुन्तला सेठोपाह्वक्षत्रियज्ञातीया। अस्या पितरौ सर्वसमृद्धौ स्वधर्मनिरतौ चास्ताम्। शैशवे राजाधिराजदुहितृसमान बालसुखमनुभवन्त्यपीय दुर्दैववशेनाऽकस्मादेवासाध्यव्याधिव्यापन्नाभ्या पितृभ्या वियुक्ता, महति शोकसागरे निमग्ना, पदे पदे

विमुह्यन्ती, मातृस्वस्रा जम्बूवास्तव्यस्य लालाश्रीहेमराजमल्होत्राख्यस्य श्रेष्ठिनो धर्मपत्न्या धनदेव्या स्वाङ्कमारोप्य, लालिता पालिता च क्रमेण पितृवियोगसम्भवं विमोहं परिहृत्य शरीरमनसो: स्वास्थ्यं समध्यगच्छत्। मातृतां विदधाना मातृस्वसास्यामौरस्या दुहितरीव स्निह्यन्ती शिक्षादीक्षादिकं प्रबन्धजातं विधाय परेण वात्सल्येनास्याः सर्वविधं संरक्षणमकार्षीत्। ततः क्रमेणैधमाना, बाल्यचापलमधिकमधिश्रयन्ती मातृस्वसाऽऽर्यकन्यापाठशालायां देवनागरीवर्णमालायाः शिक्षां ग्रहीतुं नैसर्गिकबाल्यचापलं निरुध्य स्थैर्यमवलम्बितुं च प्रावीविशत्। तत्र वर्णमालामभ्यस्यन्तीयं पूर्वजन्मसंस्कारेण, सदध्यापिकासदुपदेशेन, मातृस्वसुः सद्भावनया वा कतिपयैरेवाहोभिर्योगिनीव स्थिरासना, मनस्विनीव मितभाषिणी, विदुषीव विनीता समभवत्। गुणैर्विनयेन च स्वाध्यापिकामनांसि तर्पयन्ती क्रमेण पञ्चनदविश्वविद्यालयीयाः हिन्दीरत्न-भूषण-प्रभाकर-परीक्षाः समुदतरत्। ततः संस्कृतभाषैकपक्षपातिना परमतपस्विना श्रीदयाराम-शास्त्रिणा प्रेरिता संस्कृतभाषां समध्येतुं मतिं व्यधत्त। तदा स्वसम्बन्धिभिः मातृस्वस्रा च प्रोत्साहिताऽपि संस्कृतं परित्यज्याग्लभाषाध्ययने रुचिं नाकार्षीत्। दयारामशास्त्रिणो विद्यापीठं प्रविश्य क्रमेण पञ्चनदविश्वविद्यालयीयाः प्राज्ञ-विशारद-शास्त्रिपरीक्षाः समुदतारीत्।

दयारामशास्त्रिणि सर्वं परिहाय ऊधमपुरं गतवति तदादेशेनेयं विद्यापीठस्य प्रिन्सिपलपदमधिष्ठाय सर्वमध्ययनाध्यापनसम्बन्धि कार्यजातमद्यावधि परमकौशलेन सञ्चालयति। अध्ययनाध्यापनव्यसनवतीयमिदानीमध्यापनवेलायामपि परिश्रमेणाभ्यस्यन्ती क्रमेण जम्बूकाश्मीरविश्वविद्यालयात् केवलेग्लिशभाषाया मैट्रिक,एफ०ए०, बी०ए०परीक्षाः समुत्तीर्य, बी०टी०उपाधिमप्यलभत। नारीजनानुकरणीयगुणेयमाकृत्या भक्त्या च गौरीम्, विद्यया बुद्धया च सरस्वतीम्, श्रिया शोभया च लक्ष्मीमनुसरन्ती, सर्वतः कामपङ्कपङ्किलमिमं कलिकालं ब्रह्मचर्यव्रतामृतेन प्रक्षालयन्ती, विलासितानलज्वालाभिर्दह्यमानं सात्त्विकसरलवेषवारिणा अभिवृष्य शमयन्ती भारतभुवः स्वतन्त्रराष्ट्रस्याऽऽधारशिलायमाना, पाश्चात्त्यशिक्षापद्धतिपूतिपयोधौ मग्नां नारीजातिं लोकद्वयोपकारकार्षधर्मपवित्रचरित्रसाधनेन समुद्धरन्ती मन्ये महान्तमुपकारं कर्तुं प्रवृत्ता स्वर्गोपमभूभागस्याऽमुष्य।

---

### शम्भुनाथ शास्त्री, एम० ए०

जम्बूराज्ये कस्मिंश्चिद् ग्रामे कर्मकाण्डकर्मणि कुशल फलितज्योतिषे सिद्धहस्तो जनार्दननामधेयो ब्राह्मण सह धर्मपत्न्या सुख निवसति। स च रसवह्नि-ग्रहेन्दुमिते (१९३६) ख्रिष्टाब्दे अगस्तमासस्य २३तारिकायां स्वधर्मपत्न्या श्रीकृष्णादेव्या सुतमजीजनत्। यस्यैकादशेऽह्नि 'शम्भुनाथ' इति नामधेयमकार्षीत्। अथ शम्भुनाथो जम्बूस्थश्रीरघुनाथसंस्कृतमहाविद्यालये प्रविश्य, सद्गुरुसाहाय्येन, स्वप्रतिभोन्मेषवशेन च स्वल्पेनैवानेहसा जम्बूकाश्मीरविश्वविद्यालयीया प्राज्ञविशारदशास्त्रिपरीक्षा सर्वप्रथमश्रेण्या समुदतरत्। तत स्वकुशाग्रबुद्धि-प्रभावेण स्वल्पेनैवानेहसा जम्बूकाश्मीरविश्वविद्यालयीया मैट्रिक-एफ्०ए०-बी०ए०-परीक्षा क्रमेण समुत्तीर्य पञ्चनदविश्वविद्यालयस्य एम्०ए० परीक्षा च प्रथमश्रेण्या समुत्तीर्य विशिष्टपद प्राप्नोत्। काश्मीरविश्वविद्यालयीयहिन्दीप्रभाकरपरीक्षामपि सर्वप्रथमत्वेन समुत्तीर्णवान्। होश्यारपुरपत्तने विश्वेश्वरानन्दवैदिकशोधानुसन्धानकार्यं सम्पादयतोऽस्य पुराणसम्बन्धिनो राजतरङ्गिणीतिहाससम्बन्धिनश्च बहवो लेखा विश्वज्योतिर्नाम्नि मासिकपत्रे प्रकाशिता समभवन्। किञ्च कियन्तश्चित् साहित्यसम्बन्धिनो लेखा शिमलापत्तनतो निर्गच्छति 'दिव्यज्योति'पत्रे मुद्रिता अभवन्। साम्प्रतमयं जम्बूकाश्मीरविश्वविद्यालयीये संस्कृतविभागे प्राध्यापकपदमधिष्ठाय एम्० ए०श्रेणी-मध्यापयति। अथ स्वकार्ये कौशलेन, वैदुष्येण, व्यवहारपाटवेन, स्वाध्यायव्यसनेन, व्याख्यानविधया, परिचयपरिपाट्या च विद्यार्थिन स्वाधिकारिणश्च पर तोषयति।

——

### डा० श्रीशान्ता शास्त्रिणी, एम० ए०

आसीज् जम्बूराजधान्या 'पुराणी मण्डी'नाम्नि प्रसिद्धप्रतिवेशे श्रीकृष्णतनूजन्मा 'विश्वेश्वर' नामधेय, परमेश्वरभक्त, कर्मकाण्डकर्मणि संलग्नमानस कश्चिदतिसज्जनो ब्राह्मण। तस्मादियं शान्ता रसाब्धिविहगवसुमहीमिते (१९२६) ख्रिस्ताब्दे सुमादेव्यां जनन्यां जनुरग्रहीत्। इयं बाल्य एव मेधाविनी महत्त्वग्राहिणी ज्ञानामृतपिपासु परा परिश्रमशीला चासीत्।

प्रथममार्यकन्यापाठशालायां समधीत्य पञ्चनदविश्वविद्यालयीयां 'हिन्दीभूषण'-परीक्षां समुदतरत्। ततः स्वातन्त्र्येण पञ्जाबविश्वविद्यालयीयां हिन्दीप्रभाकरपरीक्षा

समुत्तीर्य, विद्यापीठे प्राविशत् । ततः श्रीदयारामारूढभानुकाकारामप्रभृतिभ्यो विद्वद्भ्यः समधीत्य क्रमेणेंग्लिशभापया मैट्रिक-एफ० ए०-बी० ए०परीक्षाः समुत्तीर्य वाराणसीमयासीत् । तत्र हिन्दूविश्वविद्यालये प्रविश्य संस्कृते एम० ए० परीक्षां पारयित्वा विधुरसविहगवसुमतीमिते (१९६१) खिष्टाब्दे डा० श्रीआत्रेयस्य, अग्रवालोपाह्वस्य डा० श्रीवासुदेवशरणस्य च निरीक्षकतायाम्—'कालिदासस्य दार्शनिकी पृष्ठभूमि'रितिनामकं निवन्धं संलिख्य, 'पी०एच०डी०' इत्युपाधिमध्यगच्छत् । तस्मिन्नेव वर्षे जर्मनभापामयीं कामपि परीक्षां समुदतरत् । प्रथमं जम्बूनगरे महारानीमहिलाकालेजे संस्कृतमध्यापिपत् । साम्प्रतं काश्मीरेषु 'गवर्नमेण्ट वीमेनकालेजे' संस्कृतमध्यापयति । असौ विदुपी, सुशीला, विनीता, कर्मण्या, विद्यानुरागिणी, सलज्जा, गुणग्रहिला, पितृभक्ता, वस्तुतोऽन्वर्थनामधेया वर्तते । छात्रा वालिकास्तस्या अध्यापनशैल्या गूढातिगूढविपयोद्घाटनभङ्ग्या च परं मोदमनुभवन्ति ।

---

## महावैयाकरणः श्रीशिवरामपण्डितः

रामनगरपार्श्वस्थः कश्चिद् 'द्योल्डी' नाम ग्रामो विद्यते । तस्मिन् प्रभूततरा ब्राह्मणानामेव गृहाः सन्ति । तत्र चतुर्विंशत्यधिकैकोनविंशतिशततमे (१९२४) वैक्रमाब्दे समुत्पन्नः कश्चिद् ब्राह्मणकुमारः स्वायुपः पञ्चदशे वर्षे व्याकरणपिपठिपया पित्रोरनिच्छतोरपि वाराणसीमयासीत् । तत्र पोडश वर्षाणि स्थित्वा पाणिनीयव्याकरणपयोनिधेः परं पारमगमत् । द्वात्रिंशद्वर्षवयसि पुनर्गृहानागत्य यावज्जीवं व्याकरणमध्यापयन् लोके'महावैयाकरण' इत्युच्यते स्म । विनैव शुल्कं व्याकरणसदृशातिकठिनशास्त्राध्यापकोऽस्य कश्चिन्नोपलभ्यते । अयं सप्ताधिकद्विसहस्रतमे (२००७) विक्रमाब्दे रुदतः शिष्यान् परित्यज्य लोकान्तरमगात् ।

---

## पण्डितप्रकाण्डः श्रीशिवशङ्करः

अस्ति त्रिगर्तेपु रैणोपाह्वः कश्चिद् राजानकब्राह्मणवंशः, यद्वंशीयाश्चाद्यावधि समग्रब्राह्मणगुणकर्मपरिष्कृताः, सकलविद्यास्थाननिष्णाताः, परम्परया त्रैगर्तिकराजवंशाश्रिताः, सदुपदेशशिक्षादीक्षादिभिर्धार्मिककर्मभिश्च राजवंशमन्वग्रहीपुः । अस्मिन्

परिचय —२९५ पृष्ठे



प० श्रीविश्वेश्वरज्योतिर्वित्

परिचय —३०८ पृष्ठे



प० श्रीचन्द्रन्यायव्याकरणतीर्थ

परिचय —३०८ पृष्ठे



राजपण्डित श्रीशिवशङ्कर, महाराज श्रीगुलाबसिंहस्य

राजानकब्राह्मणवंशे कश्चिद् बालकरामनामधेय सुविद्वान् ब्राह्मण समभवत्, य स्वीयैर्विद्यागुणै, ब्राह्मणोचितव्यवहारैश्च स्वसमये सर्वत्र द्विगर्तेषु पण्डिताग्रणी समभूत्। सोऽय महामना श्रीबालकराम शिवशङ्करनामान सुत जनयामास। यो हि वर्णाभ्यास-मुपक्रम्य क्रियमाणशास्त्रशिक्षोपक्रम, विलक्षणप्रतिभोहापोहशतै स्वल्पेनैवानेहसा निखि-लागमागाधाम्बुधीना सततस्पर्श पर पारमगमत्। निखिलनिगमाऽऽगमवेदिना विदुषा जन्मभुवमपि द्विगर्तदेश महाराजश्रीरणजीतदेवानन्तर पारस्परिककलहेन शत्रूणा क्रूराक्रमणैर्विगताचारप्रचार, विलुप्तनिगमागमसञ्चार, विस्मृतपरमेश, साभिनिवेश पुन प्रसृतसदाचारसद्विचारम्, सवृद्धनिगमागमप्रचारम्, सर्वदा सस्मर्य्यमाणपरमेश कृतवान्। महाराजश्रीगुलाबसिंहोऽस्य गुणै प्रलोभित पण्डितप्रकाण्डमिम स्वदाना-ध्यक्षपदमध्यतिष्ठिपत्। कालगतेर्दुर्निवारत्वात् महाराजे श्रीगुलाबसिंहे दिव गते सर्वगुण-सम्पन्ने तदात्मजे श्रीरणवीरसिंहे द्विगर्त्तराजसिंहासनमधिरूढे श्रीशिवशङ्करपण्डितस्तस्य सदस सदस्येषु प्रधानपण्डित समभवत्। सर्वस्मिन् राज्ये धर्मसम्बन्धिनी सर्वा व्यवस्था स्वयमेवाकार्षीत्। श्रीरणवीरसिंहमहाराजस्यानुरोधेन सर्व धर्मशास्त्र शास्त्रान्तराणि च सतत्त्वोपसङ्ग्राह सगृह्य, 'श्रीरणवीरकृत्यरत्नाकर' इत्य महाग्रन्थ सकलस्य महान्त-मुपकारमकार्षीद् धार्मिकजनसमाजस्य। महाराजश्रीरणवीरसिंहेन स्वीये श्रीरण-वीरमुद्रणालये मुद्राप्य प्रकाशितोऽय ग्रन्थ। अस्मिन् महाग्रन्थे श्रुतिस्मृतिपुराणोक्त-नित्यनैमित्तिककर्मणा व्रतोत्सवादीनाञ्चाऽऽमूलचूल सोपपत्तिक सप्रमाण वर्णन विद्यते। न केवल द्विगर्तेषु, अपितु सर्वस्मिन् भारते विद्यमाना समेऽपि सनातनधर्मावलम्बिनो विद्वासोऽहमहमिकया ग्रन्थमिम सङ्ग्रहीतु यायतयन्ते, पर कि ब्रूम, सप्रति केवल द्वित्रा एवास्य ग्रन्थस्य प्रतयोऽवशिष्यन्ते ता अपि जीर्णप्राया, यदि त्वरयास्य ग्रन्थस्य मुद्रापण-प्रबन्धो न भविष्यति, तदानी ता अपि नून नङ्क्ष्यन्ति।

महाराज श्रीरणवीरसिंहो हि स्वय स्वप्रजाजनाना धार्मिकप्रवृत्ती सवर्धयितु *विदुषा ससदि समुपासीन श्रीशिवशङ्करपण्डित निबन्धमिम सङ्कलयितु सप्रश्रयमादिदेश,* तद् यथा—

> आलोक्य तेन विदुषा विदुषा समाज वर्णान् स्ववर्णविधित कलिनावधूतान्।
> सञ्चित्य चोक्तमखिलाब्दतिथिव्रताना धर्मोदयाय जगति क्रियता प्रबन्ध ॥१॥
>
> तस्यानया वीक्ष्य महानिबन्धान् विद्वद्भिरग्र्यैरनुमोदितन।
> विलिख्यत श्रीरणवीरसिंहरत्नाकरोऽय शिवशङ्करेण ॥२॥

सोद्वेलो विधिसेतुरुत्सवमहोच्छ्वासप्रकारोद्गमो
दानोर्मिव्रतविभ्रमो व्रतकथाकल्लोलकान्तान्तरः
पूर्णोद्यापननौः सुपर्वणि महादानादिकल्पद्रुमो
भूयाद् धर्मजलाञ्चितो रघुपते रत्नाकरोऽयं मुदे ॥३॥

---

**श्रीशुकदेवशास्त्री**

असौ महानुभावो जम्बूराजधान्याः साम्बाप्रान्तस्थपाटीग्रामवास्तव्यस्य पण्डितप्रवरश्रीगङ्गारामात्मजव्रजमणिरामशर्मणस्तनूजो व्योमबाणाङ्कचन्द्रसंमिते (१९५०) वैक्रमाब्दे विद्वद्गुणैः ख्यातं स्वकुलं जन्मना समलङ्कृतवान् । स्वात्मजे ब्रह्मवर्चसं कामयमानः कर्मकाण्डधुरीणः व्रजमणिरामशर्मा आयुषः पञ्चमे वर्षे कृतोपनयनक्रियाकलापमिमं प्रतिदिनं स्वाङ्कमारोप्य लालनपुरस्सरं लघुव्याकरणं, कांश्चिद् वेदमन्त्रांश्च समध्यापयत् । अस्य प्रतिभामाशुग्राहिणीं गुणग्रहिलां कुशाग्राञ्चानुभूय आयुषो दशमे हायनेऽखिलभारतख्याते श्रीरघुनाथमन्दिरस्थसंस्कृतमहाविद्यालये प्रावेशयत् प्रौढमतिवेद्यानि व्याकरणादिविशेषशास्त्राणि समध्येतुम् । तत्र सर्वशास्त्रनिष्णातमतीनां विदुषामनुग्रहेण सर्वशास्त्रेषु लब्धप्रसराऽस्य प्रतिभा स्वल्पीयसैवानेहसा शास्त्रार्थादिभिर्महतो महतो विदुषो विद्वत्परिषदि पराजयत् । असौ कतिपयैरेव वत्सरैः पञ्चनदविश्वविद्यालयीयां शास्त्रिपरीक्षां प्रथमश्रेण्यां समुदतरत् । तदनन्तरं सर्वकारस्कूलस्वतन्त्रकालेजपाठशालादिष्वध्यापयन् छात्रसंसदि लब्धयशस्कः स्वीयतीव्रमतिप्रभावेणाऽखिलशास्त्रेष्वप्रतिहतगतिरयं कथाकथनव्याख्यानप्रत्युत्पन्नमत्यादिविशेषगुणैरावर्जितैरधिकारिभिस्तत्सहचरान् समानवैतनिकानितरांश्च सर्वान् समतीत्य वेतनवृद्ध्या साधुवादेन च तोषितो मोदितश्च । साम्प्रतं सर्वकारादाप्तपर्याप्तवयस्कजीविकः स्वातन्त्र्येण संस्कृत-हिन्दी-प्रान्तीयडोगरीभाषासु सामयिकीं कवितां कलयन् महतीं ख्यातिं समधिगच्छति, सहृदयहृदयान्यावर्जयति च । कविभारतीप्रसादेनायं पुनरपि तरुणायते ।

'जितमलचरितम्', 'स्वच्छन्दत्रिवेणी', 'शुकोद्गारसंग्रह'श्चेति त्रीणि खण्डकाव्यानि तेन सङ्कलितानि वर्तन्ते, यैरयं प्रयागायते । एषु जितमलचरितम्, स्वच्छन्दत्रिवेणी चैतत् पुस्तकद्वयं स्वीयधनव्ययेन मुद्रापयित्वा सहृदयेषु प्रस्तुतम् । विविधविषयप्रतिपादकोऽनुष्टुप्छन्दोभिराकलितो हिन्दीटीकोपेतः शुकोद्गारसंग्रहश्चाऽव-

शिष्यते मुद्रापयितुम् । एवमस्य संस्कृत-हिन्दी-डोगरीभाषानिबद्धानि प्रकीर्णकाव्यान्यपि बहूनि विद्यन्ते । साम्प्रतमयं दार्शनिकसरणिमनुसरन्नखिलपुराणकथाकथनव्याजेन सकलसहृदयहृदयावर्जनपुरःसरं सदुपदेशमहिम्ना भावुकभक्तमनांसि रसरूपनित्यानन्दमयापारसच्चिदानन्दपयोनिधौ मज्जयन्निव संस्कृतसाहित्यस्य महदुपकरोति । किं बहुना, असौ लोकैः 'शुकदेवः शुकदेव एव' इति भण्यते । तस्य दुर्गेरस्तुतिनामकमहाकाव्यात् पद्यद्वयं समुद्धृत्य संलिख्यते । तद्यथा—

१—देविकावर्णनम्—

यस्या वारि सुधासमं च वसुधा धत्ते सदैव ह्यधः,
गुप्तं पुण्यजनैः स्वपुण्यवशतः पुण्यं क्वचिल्लभ्यते ।
शैवं लोकमवाप्नुयादिति नरो यस्या मृतो दह्यते,
मामप्येतु शरीरदाहसमये सा गुप्तवार्देविका ॥१॥
यस्यास्तीरमसंख्यरुद्रनिचयैः पाषाणमूर्त्यां स्थितैः,
पुष्पैर्बिल्वदलाक्षतैश्च विधिना सम्पूजितैः कोविदैः ।
युक्तं दृष्टिपथं गतं च दुरितं विद्रावयेत्सत्वरम्,
स्मारं स्मारमहं तदा स्मरहरं स्मारं हरे दूषणम् ॥२॥

२—द्वैगर्तिकराजवर्णनात्मकमेकं पद्यम्—

बाल्ये ये च परिश्रमेण पठनं चक्रुर्गुरोराज्ञया,
तारुण्ये तरुणीरतिं प्रमुदिता धर्माविरुद्धां व्यधुः ।
वार्द्धक्ये मुनिवृत्तिमेव नितरामाश्रित्य जेपुर्हरिम्,
राजानो रघुवंशरीतिमगमन् द्वैगर्तदेशाधिपाः ॥१॥

---

**डा० श्रीबुद्धेश्वरवर्मा शास्त्री, एम्०ए०, पी०एच्०डी०**

असौ महानुभावः पञ्चनदीये 'रावलपिण्डी'नाम्नि नगरे नन्दाज्ञातीयलालाश्रीरामदासस्य गृहे सप्ताशीत्यधिकाष्टदशशतमिते (१८८७) ख्रिष्टाब्दे नवम्बरमासस्य तृतीयतारिखायां समाविर्भूय विदुषो जनाननुजगृहे । अमुष्य पितृपादः श्रीरामदासोऽशीतिवर्षवयोऽवस्थायामपि दृढसन्नाहः, सुघटितसन्धिबन्धः, व्यायामदृढावर्क-

शकाय, विशालाकार, सोत्साह, हृष्टपुष्ट, सज्जनस्वभाव, सभ्यजनानुमोदितव्यवहार, करणीयकर्मसु तरुणानप्यतिशेते स्म । अमुष्य जननी परमधार्मिकी देवपूजासाधुसेवादि-कर्मसंग्लमानसा, पतिपरायणा, सर्वजीवहितैषिणी, मदालसेव वेदान्तसिद्धान्तरुचि, परमेश्वरभक्ता, परमवदान्या चासीत् । तदानीं सुभिक्षसमयेऽपि प्रतिदिन मन्दिरेषु रूप्यकद्वयपणान् परमेश्वरोपायनमकार्षीत् । रावलपिण्डीनगरे जनिवशादमुष्य प्रारम्भिक नाम पितृपाद 'पिण्डीदास' इति कृतवान् । असौ वह्निशून्यविहगवसुमतीमिते (१९०३) ख्रिष्टाब्दे पञ्चनदविश्वविद्यालयीयमैट्रिकपरीक्षा समुदतरत् । ततो द्वैवार्षिक्या स्व-रुग्णावस्थाया सम्पूर्णां व्याकरणसिद्धान्तकौमुदीमध्यगीष्ट । तत क्रमेण पञ्चनदविश्व-विद्यालयीये एफ्०ए०बी०ए०परीक्षे समुदतरत् । ततश्च तस्मादेव विश्वविद्यालयादिति-हासविषये एम्०ए०परीक्षा समुदतरत् । अथ शाहपुरनगरे नहरसिहस्य राज्ञ सचिव-पदमध्यतिष्ठत् । शास्त्रिपरीक्षा समुत्तीर्य श्रीकेशवदेवपण्डितस्य शिष्यत्वमधिगत्य व्या-करण साहित्य-दर्शन-वेदसम्बन्धिविषयप्रतिपादकग्रन्थान् समध्यगीष्ट । गुजरावा-लानाम्नि नगरे हिन्दूहाईस्कूलाख्यमाध्यमिकविद्यालये मुख्याध्यापकपदमध्यतिष्ठत् । पर निखिलभाषाभावाम्बुधीना पारदिदृक्षुरसौ मुख्याध्यापकपद स्वस्वाध्यायप्रतिबन्धक मत्वा त्वरित तत् परित्यज्य जम्बूराजधानीस्थे 'प्रिन्स-आफ वेल्स'कालेजे संस्कृतप्राध्या-पकपदमधिष्ठाय वह्निवेदविहगवसुमतीमित(१९४३)ख्रिष्टाब्दपर्य्यन्त तत्रैवाध्यापक-कार्यमकार्षीत् । छात्राणा नैतिकस्तर समुन्नेतु प्रतिदिनममुष्य सदाचारसद्विचारमानव-धर्मविषयकाणि व्याख्यानानि समभूवन् ।

अमी वेदविलोचनविहगवसुमतीमित(१९२४)ख्रिष्टाब्दपर्यन्त जर्मनफ्रैञ्चरसियन-ग्रीकभाषाभाषिणोऽपि समभूवन् । तस्मिन्नेव वत्सरे भारतसर्वकाराद् विदेशेषु विविध-भाषा समध्येतु तन्मूलमन्वेष्टु च भाषाच्छात्रवृत्तिमधिजग्मिवास । तत्र प्रति-सप्ताह त्रीणि व्याख्यानानि श्रोतव्यानि छात्रैरासन् । परमिमे सप्तदश व्याख्यानान्यश्रृ-ण्वन् । अनुसन्धानात्मक किमपि पुस्तक समुल्लिख्य D Lit इत्युपाधिमध्यगच्छन् । अमीषा योग्यता प्रतिभाविभव च निभाल्य, तदानीन्तनोऽध्यापकगणो मुदितमना समभवत् । हिमाचलवास्तव्यानामेकविंशतिर्भाषा या अद्यावधि नानुसन्धातृणामनु-सन्धानविषया समभूवन्, ता भद्रवाहीरसलीप्रमुखा भाषा अनुसन्धाय भाषाविज्ञान-विदामक्षिलक्ष्यीभूतवन्त इमे महद् यशोभाजन सवृत्ता । काश्मीरिकमध्यभागवासिषु द्राविडभाषामनुसन्धाय काश्मीरिकसर्वकारात् महान्त पुरस्कारमलभन्त । हैदराबादसर्वकारसचालितस्य 'उर्दू साइक्लोपीडिया' पत्रस्य मुख्यसम्पादका

समभूवन् । स्वलिखितानपि चत्वारिंशल्लेखानस्मिन् प्रकाशितवन्त । तदनन्तर विश्वेश्वरानन्दानुसन्धानकार्यालयेऽनुसन्धानकार्यमप्यकार्षु । साम्प्रतमपि पञ्चनदीय-चण्डीगढराजधानीमधिवसन्त श्रीविश्वेश्वरानन्दानुसन्धानकार्यालयस्यानुसन्धानकार्ये यथासम्भव साहाय्य सम्पादयन्तो महान्तमुपकार विदधति सस्कृतसाहित्यस्य ।

---

## श्रीश्यामलाल , बी०ए०, भाषाविज्ञानस्नातक

जम्बूनगरे विप्रवशावतस श्रीपरमानन्दो ज्योतिर्वित् समुत्पन्नवानासीत् । फलिते ज्यौतिषेऽस्य सिद्धहस्तत्व निरीक्ष्य लोका इम सर्वज्ञमिवाऽपूपुजन् । अस्मान्महात्मनो भूनेत्रनन्देन्दुमिते (१९२१) ख्रिष्टाब्दे जनवरीमासस्य पञ्चविंशति-(२५)तारिकाया श्रीश्यामलालोऽजायत । वर्णमालात आरभ्य पितृपाद स्वाङ्क-मारोप्यैन लघुकौमुदीम्, रघुवशम्, पञ्चतन्त्र चाध्यापिपत् । तदनन्तर शिशो कुशाग्रबुद्धि, सामाजिकपरिस्थितिमाङ्ग्लभाषायामस्य प्रवृत्ति च निरीक्ष्याङ्ग्लविद्या-लयेऽध्येतुमेन प्रावेशयत् । तत्राऽय सस्कृतमाध्यमेन क्रमेण पञ्चनदविश्वविद्यालयीया: मैट्रिक, एफ०ए०, बी०ए०परीक्षा समुदतरत् । तिसृष्वपि परीक्षासु सस्कृते प्रथम-श्रेण्युचितानङ्कानलभत । असौ तत्तत्कक्षासु स्वसतीर्थ्यान् सस्कृतमध्यापयत् तेषु कैश्चि-दय पण्डितोऽपरैर्गुरुरित्युच्यते स्म । एफ०ए०, बी०ए०श्रेण्या पठन्नसौ भाषावैज्ञानिक-शिरोमणीना डाक्टरश्रीशुद्धेश्वरवर्मणा शिष्यत्वमधिगत्य परम्प्रासीदत् । श्रीशुद्धेश्वर-वर्माण पाश्चात्यभाषाभाषिणोऽपि गीर्वाणगिरि विशेषतया स्निह्यन्ति । तेषा चरित्र पूर्वत्रोपक्रान्त वर्तते । वर्मणा सविध सस्कृतव्याकरणस्य मार्मिकस्थलानि समधीत्य भाषाविज्ञानस्य बी० लिट्परीक्षा समुदतरत् । अध्यापननैपुण्यसूचिका बी०टी०परीक्षा पञ्चनदविद्यालयीया हिन्दीप्रभाकरपरीक्षा च समुदतरत् । सस्कृते प्राप्तप्रौढिरसौ सस्कृते एम्०ए० परीक्षादित्सया तन्नियतग्रन्थाना रहस्यमधीतवान् । पर सर्व परि-त्यज्य देशकार्ये सलग्नोऽभवत् । असौ द्विगर्तिकाना नेतृत्व कुर्वाणोऽपि स्वात्मान देश-सेवक दीनोद्धारक च मन्यते । सस्कृतसाहित्यस्य विशेषपण्डितोऽप्यय देशीयसाधारण-जनावबोधनार्थं तदुद्धारसाधनानि प्रदर्शयितु प्रान्तीयद्विगर्तभाषा हिन्दीभाषा च पुरस्कृत्य बहु समुदलेखीत् । तद्यथा—

(१) हिन्दीभाषयोपनिबद्ध, 'द्विगर्तकेसरिण श्रीप्रमनाथस्य व्यक्तित्वम्' इति नामधेय पुस्तक (मुद्रित वर्तते) ।

(२) 'डोगरी भाषा संस्कृति ते इतिहास'नामधेयं द्विगर्तभाषामयं पुस्तकम् (मुद्रितम्)।

(३) सोमदेवरचितकथासरित्सागरादुद्धृत्य पञ्चविंशतिकथानामनुवादरूपा 'वैतालपचीसी'नाम्नी द्विगर्तभाषोपनिबद्धा पुस्तिका (अमुद्रिता) वर्तते।

(४) श्रीमद्भागवतकथानामनुवादरूपा द्विगर्तभाषायामुपनिबद्धा 'श्रीमद्भागवत दिया कथा' नामधेया द्विगर्तभाषामयी पुस्तिका (मुद्रिता)।

(५) डोगरीभाषामयी निबन्धपुस्तिका (अमुद्रिता)।

राजनैतिक-सामाजिक सांस्कृतिक-साहित्यिककार्येषु संलग्नोऽसौ दिवानिशं यतमानः क्षणमपि न विरमति। पूर्वमसौ सनातनधर्मसभाया हाईस्कूले मुख्याध्यापकोऽभवत्। साम्प्रतम् 'ओरियण्टल अकाडमी' विद्यालयस्य मुख्याध्यापको वर्तते। जम्बूकाश्मीरराज्यं भारतीयराज्यान्तरवद् भारतीयसार्वभौमराज्येऽन्तर्भावयितुं यतमानोऽसौ जम्बूकाश्मीरराज्याधिकारिभिर्द्विवारं कारायां निक्षिप्तः। असौ सोत्साहः, कर्मण्यः, देशहितैषी, देशसेवकः, वाग्मी, प्रवक्ता, प्रत्युत्पन्नमतिः, परिचयपेशलः, परमविनीतः, विदुषामनुचरः, संस्कृतसाहित्यानुरागवान् शतशः स्वभाषणेषु संस्कृतभाषाया नैसर्गिकत्वम्, वैज्ञानिकत्वम्, सर्वेतरभाषाणां जननीत्वं च सोपपत्तिकं, सप्रमाणं चासाधयत्। स्वसहचरानध्यापकान् शिष्यांश्च संस्कृतं स्वयमध्यापयति, सहचराध्यापकाः, शिष्याश्चैनं संस्कृताऽध्यापनगुरुं मन्यन्ते। अस्य धर्मपत्नी श्रीशक्तिदेवी हिन्द्याम् एम्०ए०उपाधिं दधानाऽपि संस्कृतभाषायां परं स्निह्यति। इदानीं गवर्नमेण्टमहिलाकालेजे हिन्दीप्रोफेसरपदमलङ्कुर्वाणय यथासमयं छात्रासंसदि, प्रोफेसरगोष्ठ्यां चेतरभाषापेक्षया संस्कृतस्य विशेषतामाविष्कृत्य छात्राणामध्यापिकानाञ्चास्यां रुचिं वर्धयति।

---

## पण्डितेन्द्रः श्रीचन्द्रशर्मा

असौ पण्डितेन्द्रो महामहोपाध्यायश्रीजगदीश्वरशास्त्रिणां सुपुत्रो विद्वद्वरिष्ठानां श्रीगोकुलचन्द्रशास्त्रिणां प्रपौत्रो रसशरग्रहेन्दुमिते (१९५६)वैक्रमे वत्सरे आश्विनशुक्लपूर्णिमायां प्रातः सप्तवादनवेलायामाविरभूत्। अमुष्य सर्वान् जातकर्मादीन् संस्कारान् पितृचरणाः स्वयं यथाशास्त्रमकार्षुः। ब्रह्मवर्चसकाम्यया पञ्चमे वर्षे कृतोपनयनसंस्कार-

मिम पितृचरणा स्वाङ्के निधाय स्वय वेदमन्त्रान् पाणिनीयाष्टाध्यायीसूत्राणि चाध्यापिपन् । असौ षोडशवर्षवयस्येव यथाक्रम व्याकरण-साहित्य-न्याय-वैशेषिक-वेदान्त-मीमासा-साख्य योग-धर्मशास्त्र-तन्त्रप्रभृतीनि शास्त्राण्यधीत्य पर पाण्डित्यमवाप्तवान् । नव्यन्यायेऽनुमानखण्डे पञ्चलक्षणी-सिहव्याघ्रेति ग्रन्थद्वयम्, पक्षतान्तमनुमानखण्डम्, बाधान्तनव्यन्यायग्रन्थान्, कुसुमाञ्जलिप्रभृतीन्, स्कन्धत्रययुत ज्योतिषशास्त्र च समधीत्याष्टादशवर्षाभ्यन्तरमेव शास्त्रवैदुष्यमशेषमधिगतवान् । यद्यपि तस्य पितृपादाना शिष्यो महाराजश्रीप्रतापसिंहो दूरदूरतो निगमागमपारावारावगाहननिपुणान् शास्त्रार्थसमरेषु बहुधा विजितबहुप्रतिद्वन्द्विभटान् पण्डितान् समाहूय पुष्कलवेतनप्रदानपुर सरमस्याध्यापनार्थं यथासमय नियुज्यतस्य ज्ञानपिपासा शमयितु प्रायतत, पर सर्वतन्त्रस्वतन्त्रस्य, लोकोत्तरप्रतिभानतोऽमृतसरोवास्तव्यस्य, पण्डितेन्द्रस्य शाक्तधौरेयस्य श्रीहरदत्त-विदुषो, 'जन्द्राह'वासिन प्राचीनाऽर्वाचीनन्यायनिष्णातस्य श्रीनत्थूरामपण्डितस्य चासौ विशेषानुग्रहभाजन समभवत् । तस्मिन्नेव वयसि श्रीरघुनाथसस्कृतमहाविद्यालयस्य वायसप्रिसिपलपदमध्यतिष्ठत् । नैसर्गिकप्रतिभया, जन्मान्तरसस्कारैर्वा एकैकशास्त्रसम्राज शतश शास्त्रार्थमल्लान् शास्त्रार्थसङ्ग्रामे पराजयत्, शिष्याश्चाध्यापनसमयेऽध्यापनभङ्ग्या पर समतोषयत् । तदानी तस्य गृह सर्वसाधारणाना कृतेऽप्यवारितप्रवेशमासीत् । सर्वेऽपि तदीयव्यवहारेण सुप्रसन्ना आसन् । देवप्रतिमेव सर्वदासौ निज-मन्दिर एव विराजते स्म । वायुसेवनार्थमपि बहिर्न गच्छति स्म । निरतिशयानुनय-मन्तरेण कस्यचिच्छिष्यस्यापि गृहे नागच्छत् । तस्य सर्वतन्त्रस्वतन्त्रत्व सर्वत्राप्रतिहत-गतित्व च निरीक्ष्य महाराज प्रतापसिंहोऽयमपरा बृहस्पतिरिति व्याजहार । तद्गुण-गौरवाकृष्टो महाराज श्रीप्रतापसिंह, तदनुचरास्तन्मन्त्रिण, सर्वे नागरिका, विद्वासश्च तस्य परमभक्ता, अनुरागिणश्चासन् । अमुष्य मनोहर स्वरूपमपि सर्वाकर्षकमासीत् । तस्य सकृदपि स्वरूपपरिदर्शनेन लोकाना भक्ति समुत्पद्यते स्म । स्वास्थ्यमपि समीचीनमतिव्यवस्थित च । वचने नैसर्गिक माधुर्यमभवत् । तन साक वार्तालाप कुर्वता चेत परमानन्दित भवति स्म । वैदिककर्मकाण्डाना यागादीना च प्रचारे तस्य महान् प्रयत्न आसीत् । मिलितानामेव ज्ञानकर्मोपासनानामनुकरण श्रेय प्रद, न त्वेकैकस्येति तस्य मतमासीत् । असौ बाल्य एव मात्रा वियुक्तोऽभूत् । पितृपादा एवामुष्य मातृत्वमप्यकार्षु । असौ परमपितृभक्त आसीत् । तस्य वैदुष्य समनुभूय यूरोप-जर्मन-अमेरिकावास्तव्या विद्वासोऽपि वेदान्तादिविषयकदुरूहमर्माणि भेत्तु पत्रद्वारा प्रश्नान् पृच्छन्ति स्म । विप्रवरोऽसौ वर्षचतुष्टय रुग्णाऽप्यभवत् । पर तदानीमपि नासीन्नित्यकर्मणा सन्ध्यावन्दनादीना कापि हानि । वैक्रमे द्विसहस्रतम (२००) वर्षे, उत्तरायणे, आषाढमासे

परमेश्वरस्मरणपूर्वकं पाञ्चभौतिकं शरीरं त्यक्तवान् । तस्य सुपुत्रौ श्रीवाचस्पतिशर्मा, उमेशचन्द्रशर्मा चेति द्वावपि कुलमर्यादासंरक्षणे पितृवदेव कुशलौ वर्तेते । तयोः श्रीवाचस्पतिशर्मा एम्०ए०पदवीमधिगत्य जम्बूकाश्मीरसर्वकारकार्यालये किमपि उच्चाधिकारिपदमधितिष्ठति । उमेशचन्द्रस्तु मृते पितरि नानाविपत्समूहान् समुल्लङ्घ्येदानीं प्रभाकरपरीक्षामुत्तीर्य स्वातन्त्र्येणैव शास्त्रावलोकने कृतनिश्चयो वर्तते ।

---

## सत्यपालशास्त्री, एम्०ए०

अस्ति जम्बूराज्यैकदेशवसुस्थली (वसोली) प्रान्तान्तर्गतः 'सुराडीसुम्बरता'भिधो, रसालसालादिस्थकोकिलकलकूजनहृतसहृदयहृदयः स्थानस्थानेषु निर्मलशीतलप्रपापानीयपानस्नानापहृतपथिकजनश्रमः, सस्यश्यामलः, कश्चिद् ब्राह्मणग्रामः । तस्मिन् वात्स्यायनवंशसम्भवः, कर्मकाण्डपरिपाटीपटीयान्, फलितज्यौतिषे सिद्धहस्तः, श्रीहरिरामनामधेयो ब्राह्मणो निवसति स्म । तस्य धर्मपत्नी मुनिवसुविहगेन्दुमिते (१९८७) वैक्रमे हायने ज्येष्ठमासस्यैकोनत्रिंशत्तमतारिकायां पुत्ररत्नमजीजनत्, पिता यस्य 'सत्यपाल' इत्यन्वर्थं नामधेयमकार्षीत् । आयुषोऽष्टमे वर्षे कृतोपनयनसंस्कारममुं पिता स्वयमक्षरारम्भं कारयित्वा पञ्चमश्रेणीपर्यन्तं स्थानीयलघुतरपाठशालायाम् (प्राइमरीस्कूले) अपीपठत् । ततः किञ्चिज्जातबोधममुं केवलं संस्कृतपिपाठयिषया जम्बूनगरस्थश्रीरघुनाथपाठशालायां प्रावीविशत् । श्रीरघुनाथपाठशालीयाः सर्वेऽपि विद्वांसो ग्रहणधारणसामर्थ्यं सम्यक् परीक्ष्य तस्मिन् पुत्रवत् स्निह्यन्ति स्म । असावपि गुरुसन्तोषपुरःसरं, स्वप्रतिभोन्मेषपूर्वकं च क्रमेण पञ्चनदविश्वविद्यालयीयाः प्राज्ञ-विशारद-शास्त्रिपरीक्षाः समुदतरत् । ततो वर्षं नेशनलमिडलस्कूलसंस्थायां, वर्षं च सनातनधर्मकन्यापाठशालायां संस्कृतमध्यापिपत् । असौ यत्र तत्र स्वातन्त्र्येणाङ्ग्लभाषामपि पठन् क्रमेण पञ्चनदविश्वविद्यालयीयाः मैट्रिक-एफ्०ए०-बी०ए० परीक्षा अपि समुदतरत् । ततो जम्बू-काश्मीरसर्वकारतश्छात्रवृत्तिमादाय कुरुक्षेत्रविश्वविद्यालये प्राविशत् । तत्रत्या संस्कृते एम्०ए० परीक्षां प्रथमश्रेण्या समुत्तीर्य सम्प्रति जम्बूराज्यान्तर्गत'पुंछ'राज्ये गवर्नमेण्टकालेजे संस्कृतमध्यापयति । असौ कुशाग्रधिषणः, तर्ककर्कशमस्तिष्कोऽपि नवनीतकोमलहृदयः, साधुस्वभावः, बाह्याभ्यन्तरतो ह्येकरूपः, अध्यापनकलाकुशलः, कर्मण्यः, संयतेन्द्रियः, सत्यनिष्ठः, सदाचारसद्विचारवान्, परमधार्मिकः, भगवद्भक्तः, विशेषतया गीर्वाणवाणीं मातरमिव

मन्यमानस्तामेव प्रतिक्षण स्मरति, तामेव च कण्ठे धुरुते। तत्प्रतिपादितनिगमागमरहस्यावबोधने प्रयतते, तद्गौरवगाथा नित्य शिष्येषु स्चयति। तन्नैसर्गिकगुणान् भाषाविज्ञानिषु समभिवदति। वयस्यानपि तामध्येतु प्रोत्साहयति। तामेव देशस्य जातेर्धर्मस्य च सर्वस्व मन्यमान, तस्या रक्षणे, सवर्धने, प्रचारे, परिशीलने च सर्वदा बद्धपरिकरोऽत्रतिष्ठते।

---

## डा० श्रीसरला खोसला, एम्० ए०, पी० एच० डी०

अस्ति त्रिगर्त्तेषु क्षत्रियाणा खोसलाभिधा काचिज्जाति। जम्बूनगरे तज्जातीयो लालाहेमराज पितृपितामहादिभ्य समारभ्य सर्वकारकार्यालये कार्यं कुर्वाण स्वधर्मपत्न्या सह सुखमवात्सीत्। असौ वेदविलोचनविहगवसुमतीमिते (१६२४) ख्रिष्टाब्दे सितम्बरमासस्य पञ्चदशतारिकाया स्वधर्मपत्न्या रामप्यारीदेव्या दुहितर जनयामास। यस्या सरलेत्यन्वर्थं नामधेयमकार्षीत्। षष्ठे वत्सरेऽक्षरारम्भ विधायाध्येतुमिमा पिता कन्यापाठशालाया प्रावेशयत्। सच प्रत्युत्तरण-ग्रहण धारण प्रश्नयादिभिर्गुणै स्वाध्यापिकामनासि समावर्जयन्ती क्रमेण प्रथमादिश्रेणी समुत्तरन्ती सस्कृतसहितेषु पाठ्यविषयेषु पञ्चनदविश्वविद्यालयीयां मैट्रिकपरीक्षा समुदतरत्। एवमुच्चशिक्षालये (कालेजे) प्रविश्य तत्रापि सस्कृत गृहीत्वा एफ० ए०, बी० ए० परीक्षे समुत्तीर्य इतिहासविषये एम्० ए० परीक्षा समुदतरत्। तदनन्तर महारानीमहिलाविद्यालये (कालेजे) प्राचार्यपदमलमकार्षीत्। सर्वकारगृहीते तस्मिन् विद्यालये तत्रैतिहासिकप्राध्यापकपदमलङ्कुर्वाणा पूर्णाभ्यासेन सस्कृतप्रेम्णा च पञ्चनदीया सस्कृते एम्० ए० परीक्षामपि समुदतरत्। साम्प्रतमेव 'काश्मीरेषु बौद्धधर्मप्रभाव' इतीम विषयमवलम्ब्य समुल्लिखितेन निबन्धेन पी० एच० डी० पदवीमधिगतवती। असौ पाश्चात्यविद्याप्रवीणाऽपि सस्कृतेऽतीव स्निह्यति। स्वगृहे स्वातन्त्र्येणापि, समागता विद्यालयीयच्छात्रा सस्कृतमध्यापयति। सस्कृते भाषण निबन्धलेखनञ्चास्या विदुषा मुदे प्रभवति। असौ विदुषी विनीता सुशीला, मधुरभाषिणी, प्रसन्नवदना, हासान्मुखी, परिचयप्रवीणा, सदाचारपरायणा, धार्मिकी, ब्रह्मचर्यव्रते स्थिता, परोपकारनिरता च वर्तते। अधीयाना बालिका अस्यां पर श्रद्दधति।

---

### श्रीसीतारामशास्त्री

असौ कर्मकाण्डकर्मणि परमप्रवीणो जम्बूराज्यान्तर्गत'राजौरी'पत्तनास्तव्य, अक्षरारम्भत श्रीरणवीरपाठशालाया समधीत्य क्रमेण पञ्चनदविश्वविद्यालयीया प्राज्ञ-विशारद-शास्त्रिपरीक्षा समुदतरत् । अथ पण्डितप्रवरो यत्र तत्र माध्यमिकविद्यालयेषु (हाईस्कूलेषु) संस्कृतमध्यापयन् वहून् संस्कृतभाषानुरागिणो विदधान. परा॰ख्याति-मापन्न.। स्वायुषोऽन्तिमभागे सर्वकाराद् वयस्कवृत्तिम् (पेन्शनम्) समधिगत्य 'राजौरी'-पत्तने गृहीयपाठशालाया समागतानाबालवृद्धान् संस्कृताध्यापनेन सदुपदेशादिना चान्वग्रहीत् । जातकर्मादिसंस्कारानन्यानि च कर्मकाण्डसम्बन्धीनि यज्ञयागादिकर्माणि कारयन् यजमानेषु परामभ्यर्हणा समध्यगच्छत् । अन्ते च तीर्थयात्राप्रसङ्गेन परि-भ्रमन्नकस्मादेव हृद्गतिनिरोधेन भौतिक शरीर परिहाय लोकान्तरमयासीत् ।

---

### आशुकविः श्रीसुनाकिमहानुभावः

अथ कविवरो जम्बूप्रान्तीयहीरानगरमण्डलान्तर्गतहरिपाठलग्रामे वैक्रम्यामे-कोनविंशतिशताब्द्या महति ब्राह्मणकुले जनुरग्रहीत् । क्रमेणैधमान, बालक्रीडनैर्धूलि-सराङ्ग, कीरकल्पाव्यक्तवचोभि. पित्रोर्हर्षं वर्धयन्त, वह्निवर्षदेशीयममु हित्वाऽ-निच्छन्तावपि पितरावस्य दुर्दैवेन बलाद्दिवमनायिपाताम् । पितृस्वसैव मृतपितृकस्य स्वसहजवशाङ्कुरस्यास्य मातृकतामकार्षीत् । ततोऽष्टवर्षवयसि वर्तमानममु तत्रत्य: कश्चिद् ग्रामाध्यक्षोऽनाथोऽय ब्राह्मणबालोऽवश्य विद्यामध्यापनीय इति करुणाक्रान्त-स्वान्तो विदुषा सविधे विद्यामध्येतुममृतसरोऽनैषीत् । श्रूयते-तत्र कस्मिंश्चिच् शिवमन्दिरे पठितपाठमभ्यसितु साय पद्मासने समुपविश्याऽपरस्मिन्नहनि प्रात सूर्यो-दये समुदस्थात् । पण्डितो भूत्वा पुन पितृस्वसार द्रक्ष्यामीति च प्रत्यज्ञासीत् । तत्रैव शिवसन्निधौ गुरुसकाशादधीतविद्यामभ्यस्यमानस्यास्य चेतसि कवित्वशक्ति प्रास्फुटत् । षोडशवर्षवयस्येव हिन्दीसंस्कृतभाषामयी कविता कलयितु परमप्रवीणोऽभवत् । तस्मि-न्नेव वयसि ततोऽधिक जिज्ञासितु वाराणसीमयासीत् । तत्र काव्यपुराणव्याकरणदर्शन-साहित्यादिशास्त्राणि समधीत्य विद्वत्परिषदि शास्त्रार्थसमरविजयिन. प्रभूततरान् विदुष पराजयत । कदाचित्तीर्थयात्राप्रसङ्गेन काशी गतो महाराज श्रीप्रतापसिंहो विदुषा समाजे सुनाकिकवे सुरगिरा भाषण विद्वद्भिश्च सह शास्त्रार्थं समुपश्रुत्य विद्वत्सु प्रवर्धमान प्रभावञ्च निरीक्ष्य तत्रैव स्वीयरणवीरपाठशालाया संस्कृताध्यापकपदमिममध्यतिष्ठिपत् ।

श्रूयते—दश वर्षाणि तत्राध्यापककार्यमकार्षीत् । पर वेतन नाग्रहीत् । ततस्तत्र स्वगृहे पाठशाला निर्माय गृहागतच्छात्रानपीपठत् । असौ 'चकोरदूतम्', 'तापीशतकम्', 'प्रतापशतकम्', 'जम्बूकाव्यम्' इति चत्वारि खण्डकाव्यान्यचीकसत्, परन्तु तेष्वेकमपि जम्बूराजधान्या नोपलभ्यते इति चेत्खिद्यते चेत । श्रूयते—वाराणस्या यत्र कुत्रचिद् विदुपा गृहेषु चत्वार्यपि समुपलभ्यन्ते-इति । एकममरनाथशिवाष्टकमयमलेखीत्, यस्य प्रत्येक-पद्यस्यान्तिम पाद 'अमरनाथशिवस्य च दर्शनम्' इत्यस्ति । इदमष्टकमपि न दृश्यते इति तच्छिष्यस्य श्रीलक्ष्मणदत्तवैद्यस्य मुखाच्छ्रूयते । शिष्यगणैरुद्घोषितगुण श्रीसुनाकिकवी राजाधिराजमहाराजपरिषत्सु विदुषा गोष्ठीषु च शास्त्रार्थादिभि काव्यगुणैश्च सम्मानित परा कीर्त्ति समवाप्नोत् । असौ श्रीसुनाकिकवि. सुघटितसन्धिबन्ध, हृष्टपुष्टाङ्ग, लम्बाकृति, गौरवर्ण, विशालनेत्र, स्कन्धावलम्बितकेश, करगृहीतदण्ड, कषायोष्णीष, परिचयाचरणचतुर, प्रत्युत्पन्नमति, प्रभाववाश्चासीत् । 'विद्यैव परम तप' इति मन्यमानो यावज्जीवमध्ययनाध्यापनकर्मण्येव सलग्नमना समभूत् । वार्द्धक्ये सर्वस्व शिष्येभ्य समर्प्य पञ्चसप्ततिवर्षवयसि शिवलोकमगात् । धन्या-स्तादृशा परमतपस्विनो निरीहा ये धनोपार्जनसमर्था अपि मायामोह विहाय गीर्वाण-वाणी ससेवन्ते ।

---

## सुशीला तुली विशारदा

श्रीसुशीला तुली जम्बूवास्तव्यस्य तुलीत्युपाह्वस्य लालाश्रीरामदासवर्मण-स्तनूजा । लालाश्रीरामदासो वैदिकधर्मावलम्बी क्रमेणाऽऽश्रमादाश्रम जिगमिषु साम्प्रत वानप्रस्थाश्रममधितिष्ठति । असौ महात्मा सर्वभाषाप्रसवित्री संस्कृतभाषामेव वैदिक-धर्मस्य मूलाधार मन्वान सप्त स्वदुहितृर्भाषान्तर पाठयन्नपि संस्कृतमेव प्राधा-न्येनाऽपीपठत् । अस्यैकस्तनय पितु प्रेरणयाऽऽयुर्वेदविद्याया पर प्रावीण्यमधिगत्य सम्प्रति जम्बूस्थे आयुर्वेदकालेजे प्रोफेसरपदमलङ्करोति । सुशीला बाल्यादेव सुशीला, विनीता, कुशाग्रधिषणा, ग्रहणधारणसमर्था, धर्मनिष्ठा, परमेश्वरभक्ता, मातापितृगुरुवचसि स्थिता च । पिताऽस्या स्वधर्मनिष्ठा समवलोक्यामू हिन्दीभाषा पठितुमार्यकन्यापाठशालाया प्रावेशयत् । तत्रासौ सुशीला वर्णमालामभ्यस्यन्ती प्रथमादिक्रमेणाऽष्टमश्रेणीपर्यन्तमाङ्ग्लभाषोपेता हिन्दीभाषा गमधीत्य स्वातन्त्र्येण केवल हिन्दीभाषामध्येतु मति व्यधात् । तत क्रमेण पञ्चनदविश्वविद्यालयीया हिन्दीरत्नभूषणप्रभाकरपरीक्षा समुदतरत् । पुन श्रीदयारामशास्त्रिणो विद्यापीठ

प्रविश्य पञ्चनदविश्वविद्यालयीये संस्कृतभाषायाः प्राज्ञ-विशारदपरीक्षे समुदतरत् । ततः किञ्चिज्जातबोधा स्वातन्त्र्येण शास्त्राणि समभ्यस्यन्ती गुरुकृपया, स्वप्रतिभोन्मेषवशेन, भगवदनुग्रहेण वा परं वैदुष्यमापन्ना धार्मिकजनसङ्घेषु, महिलामण्डलीषु, विदुषां गोष्ठीषु, प्रजानां परिषत्सु च तत्तच्छास्त्राणां मर्मोद्घाटनपूर्वकं लौकिकविषयाणां सर्वविधसमस्यासमाधानपुरःसरं भाषमाणा करतालिकादानादिना लोकैः समर्च्यमाना सर्वत्र साधारणनरनारीषु, विद्वत्सु, विदुषीषु च परां ख्यातिमापन्ना । भाषणवेलायां नासौ प्रस्तुतं विषयमतिक्रामति, न चौचित्तीसीमामतिशेते, नापि च प्रौढिवादेन मर्यादां परिहरति, नापि भावुकताऽऽवेशेन स्वात्मानमुद्वेलयति । एतादृशं वक्तृत्वं विशिष्टं वैदुष्यं च निभाल्य तात्कालिकविद्यापीठसमितिसदस्यैर्विद्यापीठाध्यापकेष्वन्यतमाध्यापिकापदे न्ययुज्यतासौ । साम्प्रतं विद्यापीठस्योपाचार्यापदमलङ्कुर्वाणा भारतीयान् कुमारान् कुमारीश्च गीर्वाणवाणीपरानुरागितां नयमाना भारतीयसंस्कृतिं, सभ्यतां, स्वतन्त्रराष्ट्रोचितं मानवधर्मं च समोदं शिक्षयति ।

---

### श्रीसंसारचन्द्रमगोत्रः

अस्ति द्विगतषु जम्बूप्रान्तान्तर्गतः, सर्वविधसम्पत्सम्पन्नो, हरितक्षेत्रकेदारोपशोभमानोपशल्यभागः, वृक्षवल्लीगुल्माकरलघु-लघुपर्वतमालापरिवृतः, वटाश्वत्थाम्रामलकबदरीबब्बूलबीजपूरजम्बीरादिमहीरुहच्छायाशीतलः, फलपटलास्वादनचपलचञ्चूपुटकीरभारनमितशाखानां शाखिनां खण्डितैः फलैर्व्याकीर्णाधोभागः, वसन्तादिदिनेषु कुसुमितरसालसालरसरसनकलकाकलीकलितकूजितकोकिलकुलकलकलै रमणीयो 'भटोली'नामधेयः कश्चिद् ग्रामः, यस्मिन् ब्रह्मनिष्ठानां ब्राह्मणानां प्रभावेण सर्वे वर्णाः स्वस्वधर्मकर्मनिरताः परस्परं सम्मिलिता निवसन्ति । तस्मिन्नेव ग्रामे महागोत्रा(मगोत्रा)वटङ्कानां द्वैगतिकद्विजेषु सर्वोच्चताभाजां ब्राह्मणानां पावनं कुलं वर्तते, यस्मिन् क्रमेण समुत्पद्यमानेषु कर्मकाण्डप्रकाण्डेषु ब्राह्मणेषु स्वकुलकमलदिवाकरो महात्मा दयारामशर्मा जन्म लेभे । असौ परमेश्वरपरायणो भारतीयसंस्कृतिसंरक्षणसक्षणो व्यवसायकर्मणि स्वभावचतुरो व्यापारद्वारा लक्षशो धनं समुत्पाद्य, दीनानाथेभ्यः संस्कृतस्याऽध्येतृभ्योऽध्यापयितृभ्यश्च यथावश्यकं वितरन् महद् यशोभाजनं संवृत्तः । तस्मादेव महात्मनः सकाशात् श्रीतीर्थीदेव्यां धरणीगगनविहगविधुमिते(१९०१)ख्रिष्टाब्दे फर्वरीमासस्य तुरीयतारिकायामस्माकं चरित्रनायकः श्रीसंसारचन्द्रमगोत्रो जनिमग्रहीत् । असौ शैशवादेव गीर्वाणवाणीं मातरं

मन्यमानोऽस्या पर स्निह्यति स्म । क्रमेण प्रथमादिश्रेणितो दशमश्रेणीपर्यन्त सस्कृतमधीयान पञ्चनदविश्वविद्यालयीया मैट्रिकपरीक्षा प्रथमश्रेण्या समुदतरत् । तत्रापि सस्कृतस्य विषयान्तरेभ्योऽधिकानङ्कान् समग्रहीत् । एवम् एफ० ए०, बी० ए०परीक्षयोरपि सस्कृत विशेषरुच्या पठन् सस्कृताध्यापकस्य विशेषप्रेमपात्र समभवत् । पञ्चनदविश्वविद्यालयीया बी०ए० परीक्षा प्रथमश्रेण्या समुत्तीर्णममु स्वात्मज श्रीदयारामशर्मा गणितशास्त्रस्य विशेषरहस्यमवगमयितु पाश्चात्यदेशेषु लन्दनपुर प्राहिणोत् । तत्र महता धनव्ययेन चत्वारि हायनानि स्थित्वा स्वप्रतिभोन्मेषवलेन गणितशास्त्रस्य पारगतोऽपि सस्कृतभाषामेव कुलपरम्परागता पैतृकी सम्पदममन्यत । पूर्णमनोरथो जम्बूराजधान्या लोर्कविशेषाधिकारिभिश्च सम्मानित प्रथम निधिविधिपति (अकाउण्टेण्ट-जनरल) पदमधिष्ठायापि सस्कृतस्वाध्याय विदधान स्वेतरानप्यधिकारिण सस्कृतरसास्वादनलोलुपास्तद्गुणाख्यानपुर सरमकार्षीत् । तदनन्तरम् आयकर(इन्कमटैक्स)-विभागे विभागोपाध्यक्ष (एसिस्टेण्टकमिश्नर) पदमलङ्कृत्यापि सति समये साय प्रात सस्कृतसाहित्य परिशीलयन् यथासमय परिचितानपि सस्कृतमध्येतु प्रोत्साहयति स्म । ततो भारतसर्वकारस्यापि तस्मिन्नेव विभागेऽध्यक्षपदमधिरुह्य वर्षत्रय महता प्रयत्नेन कार्यं सम्पादयन् यशस्वी समभवत् । मुनीषुविहगविधुमिते (१९५७) खिष्टाब्दे स्वकार्यात् मुक्तिमधिगम्य लब्धपुष्कलवयस्कवृत्तिस्ततः प्रभृति गीर्वाणवाणी सेवमान प्रतिक्षण तस्या एव प्रचारप्रसारोपायाश्चिन्तयन् तामेव स्वतन्त्रराष्ट्रसरक्षणस्य पर साधन मन्यते । श्रीससारचन्द्रशर्मा परमविनीत, सुशील, साधुस्वभाव, भारतीयसस्कृतिसम्पत्ताधर्मान् मानवमात्रोपयोगिनो मन्यमानो लोकानेवमुपदिशति—

एका भाषा प्रिया येषा सस्कृतिश्चोत्तमोत्तमा ।
राष्ट्र प्राणसम येषा ते स्वराज्याधिकारिण ॥

प्रतिप्रान्तं विभिन्नाश्च भाषा बह्व्य सुदुर्गमा ।
प्रान्तीयत्वकुसस्कारा राष्ट्रोन्मूलनकारिण. ॥

मधुरा ध्वनयो यस्या वर्णा नैसर्गिकास्तथा ।
बालवृद्धै समुच्चार्या राष्ट्रभाषा तु सा मता ॥
सस्कृतेन समा भाषा न भूता न भविष्यति ।
यस्या सन्ति गुणा सर्वे यया देवत्वमाप्यते ॥

साम्प्रतमसौ जम्बूराजधान्या विशाले स्वभवन 'भारतीय विद्या भवनस्य' शाखा सस्थाप्य तत्रत्यविद्वज्जनर्निर्मितानि लघुलघूनि सर्वेषा सस्कृताध्ययनोपयुक्तानि

संस्कृत-हिन्दी-पुस्तकानि च समानाय्य न्यदधात्। स्थानान्तरीयाण्यपि संस्कृतपुस्तकानि तस्मिन् पुस्तकालये निधित्सते। किञ्चासौ कमप्यनुभविनं संस्कृतज्ञं विद्वांसमपि तत्र नियोक्तुमीहते, यः संस्कृतानुरागिणः प्रौढान्, तरुणान्, संस्कृतपरीक्षादित्सून् विद्यार्थिनश्च संस्कृतमध्यापयेत्। किञ्चासौ भारतीयसंस्कृतिसंरक्षणे बद्धपरिकरस्तत्र तत्र संस्कृतस्य भाषान्तरवैशिष्ट्यं समुपदिशति, प्रतिपादयति च चतुर्वर्गप्राप्तये संस्कृतस्यैव सर्वथोपादेयत्वम्। असौ मुम्बईपुर्यांश्चौपाटीराजमार्गे समुद्घाटितस्य 'भारतीयविद्याभवनस्य' शाखाया जम्मूपुर्यां समुद्घाटकस्तनुधनमनोभिः संस्कृतप्रचारे प्रयतमानो वर्तते।

---

### श्रीसंसारचन्द्रशास्त्री (खजूरिया)

रघुवंशीयराजपुरोहितेष्वन्यतमः श्रीसन्तरामपण्डितः कर्मकाण्डकर्मणि परं प्रावीण्यमधिगतो राजसदसि लब्धप्रतिष्ठः स्वधर्मपत्न्या सह ससुखं जम्मूनगरमध्यवात्सीत्। असौ श्रीसन्तरामपण्डितो विधुविहगनन्देन्दुमिते (१९९१) वैक्रमे वत्सरे सौरापाढस्याष्टमतिथिकायां श्रीशिवदेव्यां स्वधर्मपत्न्यां पुत्ररत्नमजीजनत्। शिशोः सकलजननयनानन्दकरं रूपं समवलोक्य द्वादशेऽह्नि पिताऽस्य 'संसारचन्द्र' इत्य वर्यं नामधेयमधार्षीत्। उपनीयमानावयवः, पित्रोर्महतीं प्रीतिं सम्पादयन्, कृतोपनयनसंस्कारः, कृताक्षरारम्भश्च श्रीरघुनाथसंस्कृतमहाविद्यालये प्रविश्य गुरुनिदेशमनुसरन् लघुकौमुदी-वृत्तरत्नाकरामरकोषादीनि लघूनि पुस्तकानि समध्यगीष्ट। ततो जातबोधः क्रमेण पञ्चनदविश्वविद्यालयीयाः प्राज्ञ-विशारद-शास्त्रिपरीक्षाः समुदतरत्। निबन्धलेखने व्याख्यानसरणौ च सिद्धहस्तो भूत्वाऽऽङ्गलभाषां समध्येतुं प्रावर्तत। राजकीयोच्चमाध्यमिकपाठशालायां(गवर्नमेण्टहाईस्कूले) संस्कृतमध्यापयन् क्रमेण मैट्रिक-एफ्०ए०परीक्षे समुदतरत्। असौ यत्र यत्र उच्चपाठशालासु गच्छति, तत्र तत्र संस्कृतजिज्ञासून् छात्रान् अध्यात्मादरं संस्कृतमध्यापयति। संस्कृतप्रचारे बद्धपरिकरोऽसौ रात्रावपि न विरमति।

---

### श्रीहरदत्तशर्मा कविराजः

असौ महानुभावो जम्मूप्रान्तान्तर्गत'पोगुर'ग्रामवास्तव्यः शास्त्रिपरीक्षा-पर्यन्तं प्राच्यपाठशालायां समधीत्य परां प्रौढिमापन्नः। तत्र तत्र उच्चाध्य-

पाठशालासु संस्कृतमध्यापयतोऽपि व्याख्याने पौराणिककथावाचने चास्य विशेषप्रवृत्तिरभवत् । अस्य कथाप्रवचनसमये श्रोतारश्चित्रलिखिता इव, मन्त्रमुग्धा इव, रसपयोधौ मग्ना इव, योगसमाधौ स्थिता इव, निश्चेष्टाः समभूवन् । संस्कृतमयी रसभावपरिपूर्णां कविता विरच्य काव्यरसाऽऽस्वादनलोलुपान् सहृदयान् परमानन्दपयोधौ निमज्जयति स्म । अमुष्य डोगरीभाषायां रचितानि प्रकीर्णकवितापुस्तकान्यद्यापि समुपलभ्यन्ते । यानि पाठं पाठं कविगोष्ठीषु श्रावं श्रावञ्च सामाजिकास्तद्रसमया इव भवन्ति । एतादृशा लोकोत्तरकाव्यकलाकलनकुशलाः, सर्वदा स्मेराननाः, सत्पुरुषोचितोपहासप्रियाः, परमनोविनोदकुतूहलिनः, कवयः साम्प्रतं दुर्लभाः ।

---

### श्रीहरिरामशास्त्री

पण्डितप्रकाण्डं श्रीहरिरामशास्त्री जम्मूनगरस्य 'रघुनाथपुरा'नाम्ना प्रसिद्धायां प्रतोलिकायां श्रीनन्दलालविदुषो धर्मपत्न्यां लक्ष्मीदेव्यां ग्रहविहगवसुवसुमतीमिते (१८९९) ख्रिष्टाब्दे मईमासस्य सप्तमतारिकायां प्रातर्दशवादनवेलायां मिथुनलग्नोदये जनुरग्रहीत् । असौ प्रारम्भिकीं शिक्षां दीक्षां च पितृसकाशादधिगत्य, श्रीरणवीरपाठशालायां पण्डितवरश्रीविश्वम्भर-लब्धराम-रघुनाथ-दीनानाथप्रभृतिभ्यः, श्रीरघुनाथपाठशालायां पण्डितप्रकाण्डश्रीहरदत्तरामप्रपन्नाऽऽरुढभानुप्रभृतिभ्यश्चाधीत्य क्रमेण पञ्जनदविश्वविद्यालयीयाः प्राज्ञ-विशारद-शास्त्रिपरीक्षाः समुदतरत् । पञ्जनदविद्यालयेष्वितस्ततो बहुत्र संस्कृतमध्यापितवान् । असौ गाम्भीर्योदार्यवैदुष्यादिगुणैरध्यापनभङ्ग्या च लोकेषु विद्यार्थिषु च महतीं ख्यातिं कीर्तिं चाप्तवान् । साम्प्रतं लब्धपुष्कलवयस्कवृत्तिको जम्मूस्थाऽऽर्यकन्यापाठशालायां संस्कृतमध्यापयति ।

---

## जम्मूजन्मनाम् अवशिष्टानां विशिष्टविदुषां परिचयः

१. काकारामशास्त्री
२. स्वामी सत्यानन्दसरस्वती

### श्रीकाकारामशास्त्री

अस्ति सनावरपुङ्गविधे मङ्गलाभिध'तोवी'सरिदमलजलप्रक्षालितपूर्वप्रान्तभागः, उपहसितसुरगुरुबुद्धिविभवैः परमतपस्विभिर्नारायणैः (नाडायनैः) ब्राह्मणैः

स्वात्मीयत्वेनानुगृहीतः, कृषिकाणामाश्रयभूतः, 'छम्वा'भिधो ग्रामः। योऽयं साम्प्रतं जम्बूनगराद् विंशतिक्रोशान्तरालेऽवतिष्ठते।

ग्रामेऽस्मिन् नागबाणग्रहविधुसमिते वैक्रमे(१९५७) हायनेऽसौ,
कुम्भार्काक्रान्तमासे मुनिसमितमिताविन्दुपूर्णे निशीथे।
विप्राच् श्रीब्रह्मलालात्सकलगुणनिधेरग्रहीज्जन्म विद्वान्,
श्रीकाकारामनामा गुरुजनचरणाभ्यर्चने श्रद्धधानः॥

तस्य श्रीकाकारामविदुषः पितामहः श्रीशिवदयालुशर्म्मा सर्वशास्त्राप्रतिहतगतिरपि पुराणकर्मकाण्डतन्त्रेषु विशेषरुचिरासीत्। तस्य पुराणप्रवचनपाटवं, कथाश्रवणकुतूहलिनः समागतानाबालवृद्धान् नरनारीजनान् कथामृतसरसि निमज्ज्य चित्रलिखितानिव विदधत् कमपि लोकोत्तरं रसमनुभावयति स्म।

चन्द्रगोत्रा इति ख्याताः विप्रा नाडायनास्तु ये।
तेषामेव कुले पूज्ये समुद्‌भूतो महामनाः॥
सुविद्वान् शिवदयालः शिवपादार्चने रतः।
सर्वशास्त्राप्रतिहता बुद्धिर्यस्य महात्मनः॥
कर्मकाण्डपुराणेषु तन्त्रेष्वपि विशेषतः।
तस्याऽभूवश्च चत्वारः पुत्राः परमधार्मिकाः॥
रुलदुर्नन्दलालश्च ब्रह्मलालस्तथैव च।
कनीयान् साधुरामोऽभूद् व्यापारासक्तमानसः॥
नन्दलालात्कनीयान्यो ब्रह्मलालेति बुद्धिमान्।
पितुश्चरणयोर्मूलमाश्रित्य स समादरात्॥
व्याकरणादिकं सर्वं समधीत्य विधानतः।
ज्योतिषे कर्मकाण्डे च पुराणेष्वपि योग्यताम्॥
विशिष्टां समवाप्यासौ काश्मीरेषु गतस्ततः।
तत्र शास्त्रज्ञानमाप्तुं तान्त्रिकेभ्योऽतिरंहसा॥
द्वित्रवर्षाणि तन्त्राणां रहस्यं स्वोपयोगिकम्।
ज्योतिश्शास्त्रं च साहित्यमध्यगीष्ट निजेच्छया॥
एवं पाण्डित्यमापन्नो व्यावर्तत गृहान् प्रति।
कर्मकाण्डादिकं सर्वं तत्रत्यैः स्वैरचीकरत्॥

स्वगृहागतशिष्यांश्च स निश्शुल्कमपीपठत् ।
ग्रासीत् सुलक्षणा नाम्नी भार्या तस्य पतिव्रता ॥

प्रसन्नवदना साध्वी पत्यु. प्रियहिते रता ।
देवद्विजगुरुप्राज्ञातिथिवन्ध्वादिपूजनम् ॥

तत्सेवा च प्रकुर्वाणा श्रद्धया परया युता ।
धर्म्या - स्वकुलमर्यादामेषा नित्यमपीपलत् ॥

नगवाणग्रहविधु-मिते वैक्रमवत्सरे ।
तस्या देव्या समुद्भूत पुत्र· परमधार्मिकः ॥

विदुषो ब्रह्मलालस्य धर्म्या मतिमुपेयुषः ।
काकारामेति नाम्ना य. ख्याति प्राप्तोऽत्र भूयसीम् ॥

सस्कार तूपनयन गर्भादिष्टमवत्सरे ।
अकार्षीत् पितृपादोऽस्य वेदारम्भचिकीर्षया ॥

पर किमत्र वक्ष्यामि दैवदुश्चेष्टित परम् ।
तस्य वै नवमे वर्षे पिताऽकस्माद् दिव गत. ॥

शोकसागरमग्नाऽभून्माता विरहविह्वला ।
करुण व्यलपद् देवी कुररीव दिवानिशम् ॥

चिरेण शान्तचित्ता सा काकारामाभिधं सुतम् ।
अकार्षीत् सर्वशास्त्राणि समध्यापयितु मतिम् ॥

ततोऽस्य श्रीकाकारामो मातृप्रेरणया चन्द्रभागातीरस्थाऽखनूरपत्तनवास्तव्याया भगिन्या ज्येष्ठपितृव्यरलदुरामशर्मणो दुहितु पार्वत्याः शरणमाश्रित्य 'गुरगान' जातीयपण्डितप्रवरसकाशात् सारस्वतचन्द्रिके समध्यगीष्ट । ततो भवितव्यतानुरूप जम्बूराजधानी समागत्य श्रीरणवीरहाईस्कूलपाठशालाध्यापकस्याध्यापनलेखनकलाकुशलस्य श्रीरघुनाथशास्त्रिणः सकाशाल्लघुकौमुदी समधीत्य पण्डितप्रवर-विश्वम्भरलब्धराम-दीनानाथप्रभृतिभ्यश्च छन्दोऽलङ्कारकाव्यनाटकग्रन्थान्, व्याकरण-न्याय ग्रन्थाश्च समधीत्य तेभ्य एव गुरुभ्योऽध्यापनपाटवमध्यगच्छत् । पुनः कालान्तरे श्रीरघुनाथसंस्कृतमहाविद्यालये प्रविश्य श्रद्धयचरणयो श्रीरामप्रपन्नाऽऽन्ध्रमानुशास्त्रिणोः सकाशात् सिद्धान्तकौमुदीनवाह्निकव्याकरणमहाभाष्ययो. पुनरावृत्तिमकार्षीत् । अचिरादपि पूर्वोक्ताना समेषामपि गुरूणा प्रेरणया पञ्चनदविश्वविद्यालयीयप्राज्ञविशारदशास्त्रिपरीक्षा. क्रमेण समुदतरत् । परममनस्विभ्यः श्रीचन्द्र-

शर्मभ्यो ब्रह्मसूत्रशाङ्करभाष्यम्, धर्मार्थविभागाध्यक्षश्रीविश्वेश्वरशर्मणा सकाशात् लीलावतीताजिकनीलकण्ठीवृहज्जातकेतिख्यातान् त्रीन् ज्योतिर्ग्रन्थान् समधीत्य लोकोत्तरप्रतिभावताममृतसरसवास्तव्याना तदानी श्रीरघुनाथसंस्कृतमहाविद्यालये प्रधानाचार्यपदमलङ्कुर्वाणाना सर्वतन्त्रस्वतन्त्राणा श्रीहरदत्तशर्मणा सविधे कदाचित् कदाचित् समुपस्थाय तेषामध्यापनविधि श्राव श्राव किञ्चिज्जातबोध, तत्प्रतिद्विन्द्विना नव्यन्यायमूर्त्तीना गृहीतदण्डाना श्रीविश्वेश्वरानन्दस्वामिना चरणयोर्मूलमुपविश्य न्यायदर्शनमुक्तावलीवैशेपिकदर्शनादीन् ग्रन्थान् सप्रश्रयमश्रौषीत्। ततो यथा समय विश्वम्भररामप्रपन्नप्रभृतिभ्यो विद्वद्भ्यो ध्वन्यालोकरसगङ्गाधरव्यक्तिविवेकवक्रोक्तिजीवितचित्रमीमासाप्रभृतीन् साहित्यसिद्धान्तग्रन्थान् समधीत्य विलोचनवसुविहगवसुमतोमिताद् (१९८२)वैक्रमाब्दादारभ्य वह्निवसुविहगविधुमित (१९८३)वैक्रमाब्दान्तमस्थिरा, चतुरशीत्युत्तरैकोनविंशतिशततम वैक्रमाब्दस्य पञ्चदशतारिकाया च स्थिरा वैतनिकी भृति श्रीरघुनाथसंस्कृतमहाविद्यालये ससङ्घर्षं समधिगत्य तत्रत्य द्वितीयाध्यापकपदमध्यतिष्ठत्। ततो लब्धभृतिकोऽपि ग्रीष्मावकाशदिनेषु गगा समुपगम्य मायापुर गच्छतो राजमार्गस्य सविधे तदानी विद्यमानाया गोरक्षसम्प्रदायिना योगिना पाठशालाया प्रधानाचार्यपदमधितिष्ठतो महाविदुषो व्याकरण वेदान्त न्यायाचार्य्यस्य पण्डितश्रीद्रव्येशझामहाभागस्य पादपद्मे समाश्रित्य श्रीहर्षप्रणीत 'खण्डनखण्डखाद्यम्' श्रीमत्परमहसपरिव्राजकाचार्य्यमधुसूदनसरस्वतीप्रणीतामद्वैतसिद्धिम् अप्पयदीक्षितीय सिद्धान्तलेशम्, साख्ययोगदर्शने, पुनरावृत्तिरूपेण वैयाकरणभूषणमञ्जूषे तदनुग्रहेणामूलचूड समध्यैष्ट। नियतसमये कार्यविमुक्ते (पेनशनस्य) नियतत्वेऽपि तस्य गुणैरावर्जिता अधिकारिणोऽस्मै सकलगुणिगणाग्रगण्याय वर्षचतुष्टय मासाष्टक चाधिक समय प्रादु। अस्मिन्नेव समये समस्तप्रशस्तगुणगणसमलङ्कृतोऽय श्रीक कारामशास्त्री अस्य संस्कृतमहाविद्यालयस्य प्रधानाचार्यपदमलमकार्षीत् नभोऽङ्गविहगविधुमिते ख्रिष्टाब्दे च परिहृतकार्यमपीम गुणग्रहिलो महाराजो डाक्टरश्रीकर्णसिंह स्वकीयसंस्कृतपुस्तकालयस्य शोधसस्थान(रिसर्चइन्सीच्यूट)विभागेऽनुसन्धातृ(रिसर्चस्कालर)पदमध्यतिष्ठिपत्। तत्राप्यय यथासम्भव कार्य कुर्वाण प्रभूतयशोभाजनमभूत्, साम्प्रत महाराजो डाक्टरश्रीकर्णसिंह स्वीयश्रीरघुनाथसंस्कृतमहाविद्यालये आचार्यकक्षा (Post Graguate) न्यूनतामनुभूय तदुद्घाटनमप्यकार्षीत्। तामाचार्यश्रेणि समध्यापयितु पुनरपि इम श्रीकाकारामशास्त्रिण प्राचार्यपदे न्ययुङ्क्त। साम्प्रतमत्रत्यान् तरुणानपि विदुषोऽतिशयानोऽय महता परिश्रमेणाध्यापयति। सत्यमभिहित केनापि—

गुणानामेव दौरात्म्यात् धुरि धुर्य्यो नियुज्यते।
असजातकिणस्कन्ध सुख स्वपिति गौर्गलि॥

अथ पदवाक्यप्रमाणज्ञः कुशाग्रधीमुषीकः सकलशास्त्राध्यापनपरमप्रवीणः
पण्डितश्रीरामरामशास्त्री विद्वत्परिषत्सु छात्रसमाजेषु च लब्धकीर्तिर्विराजते । अस्य
सौजन्यं सौशील्यं प्रवचनप्रावीण्यं वैदुष्यं च स्पृहणीयमस्ति सर्वेषाम् । अस्य परावर-
शिष्यसन्तति शिष्याश्च तत्र विद्यालयेषु, महाविद्यालयेषु, विश्वविद्यालयेषु चान्येषु
कार्यालयेषु उच्चोच्चपदानि समधिगत्य अध्यापयन्तः तत्तत् कार्यं च सम्पादयन्तः
परां कीर्तिमधिगच्छन्ति ।

---

## स्वामी सत्यानन्दसरस्वती

असौ महात्मा जम्मूप्रदेशे ब्राह्मणकुले १८६० खिष्टाब्दे जनुरवाप्य वेदवेदाङ्गा-
दिसकलशास्त्रपारावारपारीणतां नाधिगत्य जैनधर्ममर्मण्यवगन्तुं कानिचिद् वर्षाणि
तमसेवत । ततश्च 'वेदोऽखिलो धर्ममूलम्' इति जातप्रतिपत्तिः स्वामिदयानन्दसरस्वती-
प्रवर्तितस्यार्यसमाजस्य वैदिकधर्मतयाऽऽख्यातस्य विख्यातस्य चाऽऽश्रयमभ्यपद्यत ।
बहूनि वर्षाणि तदनुरूपमेव धर्मप्रचारप्रकारेण भारतस्य विभिन्नेषु प्रदेशेषु वैदिकधर्म-
सन्देशान् प्राचारयत्स्वकीयया मनोरमया मनोगमया च प्रवचनशैल्या । स्वयमपि
चान्वतिष्ठत्तदनुकूलां योगादिसाधनाम् । अथैकदा डलहौजीस्थले योगं साधयतः 'तस्य
वाचकः प्रणवः, तज्जपस्तदर्थभावनम्' इत्याद्याकारमीश्वरप्रणिधानं प्राप्य समाधिदशा-
मासादयतोऽमुष्य कर्णयोरुच्चैराकाशे समुच्चार्यमाणो रामनामध्वनिराविशत् । विस्मृत्य
चासावोङ्कारायतनमेव रामनामजपपरायणोऽभूत्, सुचिरं चैनमभ्यस्यतोऽस्य तत्परम-
ज्योतिः प्रास्फुरत्, परमानन्दसन्दोहमग्नश्च तत्साक्षात्कारे महान्तमपि समयं क्षणमिव
व्यत्यापयत् । समाधेर्व्युत्थितस्तु तेनालभ्यलाभेन प्रसन्नचेता भूयसोत्साहेन भूयोऽपि
धर्मप्रचारादिकार्येष्वात्मानं व्यापारयत् । शुष्केषु कर्कशेषु तु तर्केषु नारमतैतस्यात्माऽऽ-
रामस्य मनः । कर्मज्ञानयोस्तटयोर्मध्ये प्रवहमाणां भक्तिं भागीरथीमिव मन्यमानस्तत्र
मज्जनपानादिसुखमनुभवन्ननुभावयंश्च वाल्मीकीयरामायणादिमाध्यमेन प्रवचनान्या-
रभत । शनैः शनैश्च सत्ये वस्तुन्यानन्दमन्विष्यतोऽस्य महात्मनः प्रवचनेषु लेखेषु च
स्वामिरामानन्दप्रभृतिभिर्वैष्णवाचार्यैरनुमोदितसमर्थिता भक्तिसिद्धान्ता विशेषेणास्पदं
भजमाना एनम् आर्यसमाजानुयायिनां लोकानां शङ्कास्पदमचीकरन् ।

वाल्मीकीयरामायणस्य 'रामायणसार' इति नाम्ना हिन्दीभाषाया गोस्वामि-
तुलसीदासपद्धतिमनुसृत्य दोहा-चौपाई सोरठा-सवैयादिच्छन्दःसु तात्पर्यानुवादं विलोक्य
तु ते भृशमखिद्यन्त, तत्र तदीयासु रचनासु चान्यत्र स्थले स्थलेऽवतारवादप्रतीकपूजा-
रामनाममाहात्म्यादिसनातनधर्माभिमतसिद्धान्तानां छायामवलोक्य, आर्यसामाजिकेभ्यो-

ऽपि दीयमाना रामनामदीक्षां चाकलय्य ते विरोधमपि प्रादर्शयन् । आर्यसमाजाश्रयेणास्पृश्योद्धारादिकानि महत्त्वपूर्णानि समाजसुधारकार्याणि कृतवतः, कुर्वाणस्य चिकीर्षोश्चास्य महात्मनो यद्यपि नासीन्मन आर्यसमाज परित्युक्तुम्, अपि त्वयमभ्यलषद् आर्यसमाजमञ्चेष्वपि सरसा सरला तरला च भगवद्भक्तिमवतारयितुम्, पर तात्कालिकानाम् आर्यसमाजिकाना दुराग्रहेण दूयमानमानसस्त्यक्तवानार्यसमाजसंस्थाम् । अथाऽस्य स्वातन्त्र्येण हिन्दूमहासभाद्याश्रयेण च देशस्य, जातेः, धर्मस्य च जागरणम्, समुन्नयन च साधयताऽनेन महात्मना नीरसेषु पाश्चात्यशिक्षादीक्षाशालिषु 'बाबू'पदवाच्येषु, 'सेठ'पदाभिधेयेषु च सहस्रेषु पुरुषेषु तादृशीषु च सहस्राधिकासु नारीषु रामभक्तिप्रवाह प्रसार्य सरसता समपाद्यत । साधनाशिविराणि सयोज्य चाय तेषा जीवनेषु साधनायाः सुखदाननुभवान् उद्भाव्य तान् परमार्थपथपथिकानचीक्लृपत् ।

अनेन महात्मना स्थापितानि साधनास्थानानि 'श्रीरामशरण'नाम्ना व्यपदिश्यन्ते, येषु सहस्राधिकैर्नरैर्नारीभिश्च समुपस्थाय कीर्तनभजनादिपुरस्सर भगवन्नामजपादिसाधना विधीयते । 'शतायुर्वै पुरुषः' इति श्रुतिवचनमनुसृत्यासौ महात्मा शतवर्षायुर्भूत्वा १९६० ख्रिष्टाब्दीयनवम्बरमासस्य १३ दिनाङ्के भौतिक कलेवर विहाय श्रीरामधाम प्रातिष्ठत । एतस्य जीवनकाल एव शिष्यैः सत्यानन्दधर्मार्थट्रस्ट इति नाम्ना निधिषा कश्चिदस्थाप्यत तस्य कार्यालय इदानी दिल्ल्या वर्तते, येनैतदीया लोककल्याणकारिणो ग्रन्थाः सम्प्रकाश्य देशस्य सर्वेषु भागेषु प्रसार्यन्ते । स्वामिसत्यानन्दसरस्वतीकृतेषु ग्रन्थेषु सस्कृतसम्बन्धेन विशेषादुल्लेखनीयाः—

१. एकादशोपनिषत्सग्रहः (भाषाभाष्यम्)
२. श्रीमद्भगवद्गीता (भाषाटीका)
३. वाल्मीकीयरामायणसारः (हिन्दीगद्यपद्यात्मकः)
४. भक्तिप्रकाशः (हिन्दीगद्यपद्यात्मकः)

एते चत्वारः सन्ति । अन्ये मौलिका अपि नवदश ग्रन्था हिन्दीभाषाया विद्यन्ते, येषु 'अमृतवाणी, भजनसग्रह'श्चास्य महात्मनः शिष्यैरशिष्यैरपि साग्रहं पठ्यन्ते, भजनसग्रहे तल्लिखितानि सस्कृतगीतान्यपि सन्ति । एतदीयग्रन्थानां व्याख्यार्थं दिल्लीस्थेन 'भगवानदास पब्लिक ट्रस्ट' इति नाम्ना निधिषा 'सत्यसाहित्य' नाम मासिक हिन्दीपत्रमप्येक प्रकाश्यते, यस्य प्रथमे पृष्ठे क्रमेण एकादशोपनिषदा वाक्याशाना प्रतिपदार्थलेखनशैल्या स्वामिसत्यानन्दसरस्वतीलिखित भाषाभाष्यमपि प्रकाश्यमानमस्ति ।

---

# काश्मीरप्रदेशः

अस्त्युदीच्या दिशि पर्यन्ततो हिमवद्राजिराजिता, नानानदनदीसरःकासारमनाथित, सुसस्यश्यामलभूमिभूषित, अनेकवनोपवनसमावृत, प्रकृतिकामिनीकमनीयविहारभूमि, ज्येष्ठरुद्रप्रद्युम्नशिखरिद्वय मुहुर्मुहुरामृशन्, हिमवज्जामातृभूतमहादेवादिमहीध्रालिपरिवेष्टित, सुरम्यकाननकदम्बडम्बरित, पर्वतराजपुत्र्या सत्यास्तपश्चर्याश्रयभूतो, भूतेश्वरामरेश्वरत्रिपुरेश्वरकपटेश्वरविजयेश्वरहर्षेश्वरसुरेश्वरादिपुराणप्रसिद्धानेकदेवालयालङ्कृतो, नैसर्गिकभावनरुद्रवनजयवनगणेशवनादिविविधतपस्योद्देशसशोभितो, मानसोत्तरमानसपद्ममहापद्मतारमारकमसरकालियनागशेषनागादिसरोवरगणभूषितो, नीलानन्तादिनागगणसमाश्रितो, विविधकुण्डकुण्डिकामममण्डित, शारदात्रिपुरसुन्दरीकुलवागीश्वरीक्षीरभवानीशिवाज्वालामुखीशारिकाभद्रकालीशैलपुत्रीमार्तण्डगङ्गोद्भेदस्वयम्भ्वादिप्रसिद्धतीर्थसार्थपावित, अनेकविधवृहत्तरव्रततिव्रातसेवित, वचाभूतजटागोलोमीकुष्ठाद्यौषधिवनस्पतिविसरसजुष्ट, पार्वतनिर्भरनिनादसमाकुल, विचित्रपतत्रिकुलकलरवगुञ्जित, कश्यपशाण्डिल्यभृङ्गीशादिमहर्षिगणाध्युषितपूर्व, कुङ्कुमप्रभवैकभूस्तत्क्षोदसुवासितश्च, मृद्वीकारकटङ्कपालीवतवातादाक्षोटाद्यमृतफलसमाश्रयभूरुहविभवविभावित, मठमठिकाश्रितनैकदेश्यसाधुसमूहव्यूहित, वैतस्तिकतरलवीचिनिकरपरिकरितपायितवसुन्धर, लोकभवनमरस्यभवनस्कन्दभवनजयेन्द्रराजचङ्कुणाद्यनेकबौद्धविहारविलसित, ज्ञानप्रभदीपाङ्कुरसोमनाथश्रीज्ञानरत्नवज्रशाक्यश्रीभद्रसघमित्राऽमञ्जुवसुबन्धुकुमाराजीवगुणवर्मादिप्रकाण्डबौद्धपण्डितैः पुरा कृतवसति, वसुगुप्तसोमानन्दकल्लटोत्पलरामकण्ठाभिनवगुप्तक्षेमराजभास्करभट्टनारायणजयरथभास्करकण्ठशिवोपाध्यायादिशैवदार्शनिकैः स्वनिवासेन विश्वस्मिन्नपि विश्वे शश्वद् विश्रुतिं नीत, हेलाराजभृङ्गीशनीलच्छविल्लाकरसुव्रतक्षेमेन्द्रकल्हणजोनराजश्रीवरप्राज्यभट्टशुकप्रख्यैरैतिहासिकैरितिहासपुराणमाहात्म्यादिलेखनात्तमोत्तमप्रदेशसवर्णनादिना सर्वाधितसुश्रीक, भरतानन्दवर्धनमहिमभट्टश्रीशङ्कुकरुय्यकाभिनवगुप्तमम्मटाल्लटरुद्रटभल्लटतिलकभट्टादिविविधालङ्कारिकयशःपटहैर्डिण्डिमिताखण्डभूमण्डल, पतञ्जलिकैय्यटक्षीरस्वामिच्छुच्छुकभट्टजगद्धरभट्टशितिकण्ठगोपालकविलादिवैयाकरणैर्दिगन्तविश्रान्तयशाः, शार्ङ्गधरचरकनरहरिवाभटदृढबलाद्यनवद्यविद्यवैद्यपुङ्गवैः स्वजनुषा समलङ्कृतभूविभाग, भट्टजयन्तभासर्वज्ञादितार्किकैः शोभितचर, सततसान्द्रहिमाच्छादितरजतोपमशिखरि-

शिखरमाल, रम्भोर्वशीतिलोत्तमाद्यप्सरस्तिरस्कारिणीभिर्विलासिनीभिरुपशोभित, भारतभूमिभालललाम, स्वप्रसिद्धसिद्धतपस्वितप समाश्रय, विविधविद्याकेन्द्रभूत, त्रिकशैवशास्त्राकर, सुनिष्णातपण्डितव्रातसेवित, विद्वन्मण्डलीविमण्डितवसुधामण्डल काश्मीरो नाम देशविशेष ।

अपि च सहजशोभाऽऽवर्जितविधिहरिहराखण्डलमिद काश्मीरमण्डल कश्यपयशोध्वजायमान, शारदाजन्मस्थान, त्रैलोक्यपुण्यफल, प्राचीनार्यकुलधर्मपीठस्थल, पुराणेतिहासप्रथित, रामणीयकधामतया धरणीतलस्थित स्वरिव प्रमित, कमनीयधूलिकण, लोभनीयतारागण, महनीयनीरदनिकर, लोचनसुखकर, प्रकृत्याकृतिभ्यामुत्तुङ्ग, समुद्भासमानधवलहिमशृङ्ग, गङ्गोदकसगोत्रनदनदीस्रोत सलिलाप्लावित, शीतलमन्दसुगन्धिसमीरसम्भावित, वितस्तातीरसमध्यासित, सुमनोभरसुरभितवनोपवनवीथिक, विहगकुलकलरवजेगीयमानयशोगीतिक, प्रकृत्यैव स्वकरकौशलप्रदर्शनार्थं विचित्रैश्चित्रैरिव चित्रित, परिपूतसरिद्वारिपूरपवित्रित, निर्झरझर्झररवपूजित, कलितकोकिलकलकूजित, मृदुलदूर्वादलनिचित, कुसुमोत्करप्रचित, शुचिशाद्वल, ललितसलिलस्थल, सुकुमारलतावलिवलित, लोकोत्तरसुषमाकलित, सुभगसुखमूल, चेतोहरसरसरित्कूल विराराजीति ।

यत्र सागरसमतुल विमल विततञ्च 'डलवूलरं'नाम सर स्वरसालतया मानसमानहर सुन्दर 'मानसवल'नाम ताल च निजविशालतया, प्रेक्षकाणा किमप्यलौकिक कौतूहल जनयत । यत्र च गन्धरवल-नगरीवल-डलप्रभृतयस्तडागा मिथ सौभाग्यस्पर्धयेव वितत्यात्मान स्थिता प्रकृत्यैव वा स्वसौन्दर्यदर्शनलालसया यत्र तत्र विन्यस्ता दर्पणा इव प्रतिभान्ति । यत्र च स्वभावचञ्चलया श्रिया स्वनिवासायेव स्थापित वितस्ताकूलद्वयानुकूलसन्निवेश श्रीनगर सलिलप्रतिबिम्बितकृत्स्नभवनपुलिनशोभासौभाग्य मोहयति मनोऽधिवासिनामपि, किं पुन. प्रवासिनाम् ।

यत्र च कदलाख्य सप्तसेतुदल, चपल च नौकानिकुरम्ब नितान्तकमनीयतया प्रेक्षकाणा स्वान्तानि समुल्लासयति, सलिल च सलील समुद्भासयति । यत्र च रूपराशिभूत नरनारीयूथ वारिविहारविनोदेनात्मान कृतार्थयति, जलकेलिकलाश्च समर्थयति । यत्र च सरित्परिसरे 'शेरगढी' इति प्रसिद्ध नृपनिकेतन विद्युद्दीपद्युतिदर्शनधृतलज्ज पुरन्दर क्वचित्तिरोभावयति, पुर च सभावयति । यत्र च बहुशो बहुशोभाशालिनः पन्थानः सुमाकीर्णा विलसन्ति । यत्र च सारूप्यसघटिता सुधाधवला सौधपङ्क्ती

रजताकारया वितस्ताधारया तिरोहितभेदप्रतिपत्तिनिवासिनामपि स्वकीयपरकीयसंशय जनयति । यत्र चैकान्ते निपण्णेव प्रकृतियुवति स्वैश्वर्यविधान सज्जयन्ती केनचनापि विधानेनान्त सन्तोषमनाप्नुवती क्षणे क्षणे तत्परिवर्त्तयन्तीव भाति, नवनवा च विभाव्यमाना रमणीयसमस्तवस्तुशिरोमणितामिवाधिगच्छति ।

अहो ! नानाकारकिसलयपुष्पफलसूचितौचित्योचितसौभगैरुच्चावचैर्नगै, हिमशीतलचन्द्रनिर्मलसुधामधुरसलिलझरैर्निर्झरै, नैकविधोपत्यकाधिकृतभूभागैर्धराधरैश्च परिवर्धमानसर्वाङ्गशोभाक, भुवा नाक, सुषमावलोकनसुखावर्जितसकलसुरसमूहसहिताखण्डल काश्मीरमण्डल कस्य नाम सहृदयस्य न स्यात् स्तवनीयम् ।

यत्र हि हिमसमानसमीरे वितस्तातीरे दीर्घदाघे निदाघेऽपि दर्शकजनाना तन्व प्रमुदिता इव सरोमाञ्चरमा वेपथुमत्यश्च सञ्जायन्ते, नभसि समुत्क्षिप्तश्च जलाञ्जलि शीतलतरमारुतसम्पृक्तो मुक्तामयतामिवाप्य भूमौ निपतति । यत्र च सुधास्वादूनि दिव्यभव्यानि फलानि दर्श दर्श नन्दनवनविहारकालेऽपि पुलोमजासहित सुरपतिर्बुभुक्षातुरो भवति, यत्रत्य च सकलमनोमोदन 'शाकौदन' नाम भोजन, कषाय च चाय नाम पेय कस्य रसज्ञस्य लोभनीयता नालभते ।

यत्र च स्थले निजौकसु, जले च नौकासु निवसता कश्चनापि भेदो नोपलक्ष्यते । धरणी हरणीया न भवतीति ता स्थावर धन वदन्ति, अत्र तु प्रशस्यशस्यानि क्षेत्राणि खलैश्चोर्यन्ते, दूर च नीयन्त इति क्षेत्रहरणविषये न्यायालयेषूपस्थाप्यमाना अभियोगा परम विस्मयमावहन्ति । यत्रत्याश्च पुरुषा विपणिषु, चत्वरेषु, वीथिषु, रथ्यासु, राजमार्गेषु, यत्र तत्र सर्वत्र दिवानिश वक्षसाऽऽलिङ्गिता सकामानला प्रिया काङ्गडीमितस्ततो वहन्तो भ्राम्यन्ति, न तु लज्जन्ते ।

यत्रत्या च भूमिर्निदाघे धान्याङ्कुरैर्हरिता, शिशिरे हिमै सिता, वसन्ते च सार्षपादिकुसुमै पीता भवतीति प्रकृतिरेव काश्मीरेषु हरितसितपीतवर्ण भारतध्वजमुद्धूनयति, ध्वनयति च काश्मीराणामविभाजनीया भारताङ्गताम् ।

यत्र प्रकृत्या सौन्दर्यमौदार्य च, बुद्धिर्बल च, अन्न जल च, वयो रूप चेत्यादय परस्परोपकारका, मिथ सापेक्षाश्च विशेषा सविशेषमास्थापिता । यत्र च परितो हिमस्यैव महिमा विततोऽस्ति, हिमस्यैव राज्यम्, हिमस्यैव पूजा, हिमस्यैव दर्शनम्, हिमस्यैव प्रचार, हिमादेव भीति, हिम एव च प्रीति । किं बहुना, नीरमपि यत्र

हिमाकारम्, नारायणोऽपि हिममूर्तिः, शिवोऽपि हिमलिङ्गात्मा। 'यथा देशस्तथा वेशः' इतीव मत्त्वा सर्वमेव यत्र हिममयतायै सिततमतायै च स्पृहयति।

यत्र च नगरमध्ये प्रविष्टोऽपि नदीप्रवाहः कञ्चिदुपद्रव नोत्पादयति, प्रत्युत नौकाविहारावसरप्रदानेन प्रिययोः कञ्चन महान्तमुत्सवमेव सम्पादयति। 'सर्वेऽनुकूला महतां भवन्ति' इत्यवितथमेव कथितवान् कश्चिद्विपश्चित्। न केवलमाङ्गिक्या, आहार्यया वा प्रवृत्त्या, अपि तु मानसिक्यापि, किञ्च सुरभारत्यां सम्भाषणेन वाचिक्यापि प्रवृत्त्याऽत्रत्या जना देवा इव प्रतीयन्ते, काश्मीरमण्डलञ्च देवलोकमिव प्रत्याययन्ति। अत एवेदं 'भुवो नाक'माचक्षते विचक्षणाः।

यत्र प्रातः काश्मीरसुषमासन्दर्शनेन सरसानां जनाना नयनानि, सरसां च कमलानि युगपदेव विकासमासादयन्ति। सत्यपि सौगन्ध्यबन्धुत्वे कृष्णवर्णा कस्तूरी पिशङ्गवर्णात्काश्मीरजाल्लज्जयेवेतो दूरीभवति। जितोऽनेन सगन्धगणः, सवर्णगणश्चेति जगदम्बापि काश्मीरजस्यालेपनं साग्रहं स्वीकरोति, सानुरोधञ्च तेन भगवन्तं भूतभावनं भवमपि सम्भावयति।

---

## भौगोलिकी स्थितिः

भूभागोऽयं भारतस्योत्तरपश्चिमकोणस्थः सर्वोत्तरप्रदेशोऽस्ति। भारतस्योत्तरसीमेति यावत्। आधुनिककाश्मीरराज्यम् ३२,१७ अक्षांशतः ३६-५८,३० अक्षांशपर्यन्तम् ७३,३६ देशान्तरतश्च ८०,३० देशान्तरपर्यन्तं पूर्वस्यामवस्थितमस्ति। तस्याधुनिकं भूपरिमाणं ८०६०० वर्गमीलमितमस्ति। जनसंख्या प्रायः २९ लक्षमिताऽस्ति, यस्यां पुरुषाः सार्धपञ्चदशलक्षसंख्याकाः स्त्रियस्तु सार्धत्रयोदशलक्षसंख्याः सन्ति।

### वर्तमानसीमा

काश्मीरस्योत्तरस्यां हिमालयभूधरान्तर्गता काराकोरमपर्वतश्रेणी, काश्मीरस्यैवाधीनानि अर्धस्वतन्त्राणि कानिचिल्लघूनि राज्यानि च सन्ति। दक्षिणस्यां पञ्चाम्बुप्रान्तान्तर्गता वितस्ता (झेलम)नदी गुर्जरातश्यालकोटप्रभृतीनि नगराणि च सन्ति। पश्चिमस्यां हजाराप्रदेशो रावलपिण्डीनगरं च वर्तते। पूर्वस्यां च त्रिम्बित (तिब्बत)-राज्यं संनिधत्ते।

### प्रदेशविभागः

काश्मीरराज्ये जम्बूविभाग', काश्मीरोपत्यका:, लब्धाक्ष(लद्दाख)विभाग., वलतीस्तानम्, मद्रवार., कृष्णवार , दर्दीस्तानम्, ले, तिलेलम्, सुरुः, आस्कर', रूपसू:, पुन्छ इत्येते, अन्ये च केचन क्षुद्रा विभागा सन्ति ।

### भूमिभाग.

साधारणतोऽवलोकनेन काश्मीरराज्य पर्वतैर्वेष्टित वितस्ताया अववाहकमिव प्रतीयते । तन्मध्यस्थले वितस्ता स्वशाखाप्रशाखा. प्रसार्य वराहमूलाख्यगिरिवर्त्मत: पश्चाम्बुप्रदेश प्रविशति । वितस्तातीरवर्तिनी निम्नामुर्वरा भूमिमतिरिच्य एकोत्तमा भूमि पर्वतमूलादारभ्य समनलभूमिपर्यन्त विस्तृताऽस्ति । सा 'क्पेरास' इति, 'उदारस' इति वोच्यते । उक्ता निखिला समतलभूमिर्नानाप्राणिभिर्वालुकया, कर्दमेन च मिश्रिताऽस्ति । उर्वरस्योक्तस्य भूमिखण्डस्य मध्ये प्रायः स्फुटकशतात् (१००) स्फुटवशतत्रयं (३००) यावत् गभीरो नदीपयोऽस्ति । साधारणतयोर्वराया भूमेरेकस्या दिशि पर्वतमालादेर्विद्यमानत्वेऽपि क्वचित् क्वचिच्चतसृपु दिक्षु निम्ना भूमयोऽपि लभ्यन्ते, यत्र सकलेपु भूमिशकलेपु कृपिर्भवति । किन्तु तत्र जलस्य सौविध्यं नास्ति । वृष्ट्यभावे नद्याः सकाशान्नालिका निर्माय जलमानीयते । पर्वतोपत्यकासु गवादीना चारणस्थानानि देवदारुवनानि च सन्ति । प्राय. काश्मीरस्य दक्षिणभागे एव लोका निवसन्ति । कृष्णगङ्गोपत्यकाया निम्नांशेपु सिन्धुनदस्याववाहिकातो वितस्ताचन्द्रभागयोरववाहिकां स्वतन्त्रा कुर्वत्यास्तुपारावृताया. पर्वतमालायाश्चतु पार्श्वस्थभूमिप्वपि लोकाना निवासा. सन्ति । एतत्प्रदेशस्यापि पर्वतमाला देवदारुवनैराच्छादिता वर्तते, यत्र मध्ये मध्ये कृष्युपयोगिनी अपि भूमिर्वर्तते । नदीतीराणि श्यामलै' शस्यक्षेत्रै पूर्णानि सन्ति । सर्वेपु ग्रामेपु पन्थान शोभना. सन्ति ।

### पर्वतमालाः

काश्मीरस्य चतुर्दिक्स्थाया. पर्वतमालाया ऊर्ध्वशिखराणि तुपारावृतान्यवलोक्यन्ते । वर्षस्याष्टौ मासान् तुपाराणा साम्राज्य तिष्ठति । पश्चिमोत्तरभागे 'वियाको' नामक तुपारावृत क्षेत्र प्राय पञ्चत्रिंशद् (३५) मीलपरिमित विस्तृतमस्ति । पञ्जालाख्यपर्वतमालाया मध्यस्थस्य सर्वोच्चशिखरस्य नाम 'मूली' इत्यस्ति । तच्च ४६५२ स्फुटकमितमुच्चमस्ति । आहेरटाटोपाख्यशिखरस्योच्चत्व प्राय. १३०४२ स्फुटकमितमस्ति । उत्तरस्या दिशि हरमुखाख्यपर्वतः १६०१५ स्फुटकोच्चोस्ति । काश्मीरोपत्यकाप्रान्ते

नागाख्यपर्वतो दयमूराख्यपर्वतो वा समुद्रपृष्ठत २६६२६ स्फुटकोच्चोऽस्ति । असौ पर्वत काश्मीरोपत्यकाया सिन्धुनदस्य च मध्येऽवस्थितोऽस्ति । तत्समीप एव 'शेर' नामक 'मेर नामक च शिखरद्वयमस्ति । तयो प्रथमम् २३४१० स्फुटकमित, द्वितीय तु २३२५० स्फुटकमितमुच्चमस्ति । विभिन्नासु दिक्षु तयोर्नामानि भिन्नान्येव प्रसिद्धचन्ति । यथा--पूर्वस्या तुषारावत पञ्चालाख्यो नग, दक्षिणस्या फतेहपञ्चालाख्य, वनिहारप्रदेशस्य पञ्चालाख्य पश्चिमस्या पीरपञ्चालाख्य, पश्चिमोत्तरकोणे हर-मुखाख्य', सोनीमार्गीया पर्वताश्चोच्यन्ते । दक्षिणस्या दिशि पर्वतमालाया निम्नत्वाद्-भूमिभागस्य सुषमाऽतीव रमणीया वर्तते । उत्तरा दिक् चारण्यानीमयत्वात्सर्वाधिक-सौन्दर्यपूर्णाऽस्ति । अत्युन्नतपर्वतश्रेणय, विस्तृतानि तुषारक्षेत्राणि, पर्वतारोहीणि क्षुद्राणि बृहन्ति च स्रोतासि मध्ये मध्ये निर्झराणि च दृष्टिगोचरीभवन्ति । एत-त्प्रदेशे किञ्चिदेकमपि शिखर द्विसहस्र (२०००) स्फुटकेभ्यो न्यूनमुच्च नास्ति । तत्र काराकोरमपर्वतमालाया एक शिखर प्राय सार्धद्विशताधिकाष्टाविंशतिसहस्र (२८२५०)-स्फुटकोच्च वर्तते ।

यूरोपीया पर्यटनशीला काश्मीरस्योक्तेषु स्थलेषु पर्यट्य तच्छोभा वर्णयामासु । तैर्लिखितमस्ति जगति एतद्भिन्नस्थानेषु एतादृशसौन्दर्यपरिलसितानि स्थानानि प्रायो न क्वाप्यवलोक्यन्ते । उक्ताभ्य शैलशिखरोपत्यकाभ्यो यावदेवोर्ध्वं गम्यते, तावदेव ऋतुभेदा, तदनुरूपाणि उद्भिज्जानि, सस्यानि, फलानि, मूलानि च दृष्टिपथमायान्ति । क्वचित्तूक्ताना विशेषाणा यत्रैकत्र समावेशस्तत्र पर्वतेषु आरण्यका. पर्वतीया निवसन्ति ।

### मार्ग क्षेत्राणि च

पीरपञ्चालपर्वतापेक्षया निम्नपर्वताना केचन शिखरदेशा अतीव विस्तृता सन्ति । तेषु सर्वत्र विविधानि सुन्दराणि मनोहराणि पुष्पाणि, दर्शनीयानि तृणादीनि च समुत्पद्यन्ते । तान्येव सर्वविधस्थलानि क्षेत्रसञ्ज्ञया मार्गसञ्ज्ञया च व्यवहृतानि सन्ति । गुलमार्गसोनामार्गप्रभृतीनि कानिचित् क्षेत्राणि त्वतीव सुन्दराणि सन्ति । तेषु ग्रीष्म-काले सर्वत्राश्वादिप्राणिना नैके यूयाश्चरन्ति । देशस्य महान्तो जना यूरोपीयाश्च सोनामार्गाश्रये श्रावणभाद्रयोर्मनोविनोदाय तिष्ठन्ति । इद स्थान तेभ्योऽतीव रोचते ।

### नद्य

काश्मीरराज्यस्य प्रधाना नदी वितस्ताऽस्ति, या काश्मीरोपत्यकाया पूर्व-दक्षिणसीम्नि समुद्भवति । बहूना मतेन वितस्ताया उत्पत्तिस्थान नाद्यावधि निश्चि-

तमभवत्। केचिदाग्ला अर्पंत-ब्रिग-सुन्दराख्याना निम्नगा नदीनां सगमेन वितस्ता समुत्पन्नेति प्रतिपादयन्ति। तस्या अनेका शाखा उपनद्यश्च सन्ति। केचिन्मुसलमाना भौगोलिका कथयन्ति यत् काश्मीरोपत्यकायाः पूर्वस्या दिशि सुप्रसिद्धात् वीरनागाख्योत्पादर्धक्रोशदूरे त्रय उत्सा सन्ति। ते परस्पर द्वादशाङ्गुलीदूरवर्तिन सन्ति। मुसलमाना द्वादशाङ्गुलीपरिमितम् (अङ्गुष्ठस्याग्रभागत. तर्जन्यग्रभागपर्यन्त) स्थान वितस्तिरिति कथयन्ति। अत एव तस्योत्सस्य नाम वितस्तिरित्यस्ति। ततो निर्गत जलस्रोतश्च वितस्तेति प्रसिद्धमभूत्। उक्तानामुत्साना जलधारा क्रमशो यावन्नीचैरवतीर्णास्तावदेव वीरनागानन्तनागाच्छाबलकुकुरनागगराशनागप्रभृतीनामुत्साना जलप्रवाहस्य मेलनाद् वितस्ताया अवयववृद्धिरभूत्। वितस्ता क्रमश उत्तरपूर्वाभिमुखी भूत्वा कियद्दूरे गत्वोलरह्रद प्रविशति। तत्पश्चाद्वराहमूलनामके जनपदे मध्यतो दक्षिणवाहिनी भवन्ती सा उपत्यका भीषणेन रूपेण विसृजति। उपत्यकामध्ये वितस्ताया अधिक प्रशान्तभावोऽस्ति। किन्तूपत्यकाया बहिस्तु नद्वेगस्तथैव भीषणो वर्तते। उत्तरपूर्वस्यामिसनामावादस्य समीपे लिदाख्या नदी, पूर्वस्या मार्दीपुरसम्मुख सिन्धुनदी, सोपुरनगरस्य निकटे च पिहरनाम्नी नदी एता वितस्तया सह पश्चिमतटे सङ्गच्छन्ते। अनन्तर च पूर्वस्मिन् तीरे मुहरामाख्यस्थानस्य निकटे नरामविराख्या नदी, रामच्युयान-(रामच्युत) नाम्नी नदी, श्रीनगरसमीपे च दुग्धगङ्गा वितस्तायामाविशति। निर्लोपत्यकाया ट्रेङ्गसनामके स्थाने कृष्णगङ्गानाम्नी एका मध्यवर्तिनी नदी निःसरति। सेय कृष्णगङ्गा पश्चिमोत्तरयो प्रवहन्ती हठात् दक्षिणस्या परिवर्तमाना मुजफ्फरावादनगरस्याधस्ताद् वितस्ताया मिलति। वर्दानाम्योपत्यकातो मारवर्दानाम्या नदी प्रवहन्ती दक्षिणमुखी कृष्णवार(कष्टवयार)नामकस्थाने चन्द्रभागया सह मिलति। मारवर्दानाख्या नदी कृष्णवारभद्रवाराख्यस्थानद्वयमध्ये जम्बूत पश्चिमस्या दिशि गच्छति। एतासु नदीषु केवल वितस्तायामेव नौकया यानायानं भवत। तत्रापि ६० मीलेभ्योऽधिकदूरे नौका नैव चलन्ति।

## सेतव.

उपत्यकामध्ये वितस्ताया त्रयोदश (१३) सेतव सन्ति। सतुदचात्र कदलसज्ञया प्रसिद्धयन्ति। काश्मीरेषु एते सर्वे सेतवो देवदारुकाष्ठैर्निर्मिता सन्ति। बहुषु स्थलेषु सुदृढरज्जुभि सेतवो निर्मिता सन्ति, ते च सुदूरविस्तृते नदीतटे एव प्रायो निर्मिता द्विविधा भवन्ति, दण्डग्रथिता प्रेङ्खारूपाश्च। प्रेङ्खारूपा दर्शने भयोत्पादका प्रतीयन्ते। किन्तु वास्तविक भयस्य कारण तत्र न भवति। तैर्निरापद यानायानादिक भवति। बहूनि वस्तूनि तद्द्वारा पार नीयन्ते, पाराच्चावारमानीयन्ते।

## प्रणालाः

श्रीनगरे तन्निकटवर्तिप्रदेशे च बहवः प्रणालाः सन्ति। तत्रैव उल्लीलवाख्यः उल्लारह्रदाख्यश्च ह्रदौ वर्तेते। वितस्ता सवेगं प्रवहति। उक्तस्य ह्रदस्य पारगमनं न सुकरम्। अतः सोनपुर-श्रीनगरयोर्मध्ये एकां प्रणालीं निर्माय गमनागमनयोः सौविध्यं रचितं वर्तते। कृषेः सौविध्यायापि यथेष्टं प्रणाल्यो निर्मापिताः सन्ति। तेषु क्षीर-पुर-मण्डलस्य शाहकुलस्य इसलामाबादस्य च नैन्दीनाम्नी निघ्नरनाम्नी च प्रणाली मुख्या विद्यते।

## ह्रदाः

काश्मीरे बहवो ह्रदाः सन्ति। उपत्यकाया पार्वत्यप्रदेशस्य च नानास्थानेषु ह्रदा दृश्यन्ते। उपत्यकाया निम्नलिखिताश्चत्वारो ह्रदा मुख्याः सन्ति।

१. मडलवानामा नागरिको ह्रदः। सोऽपि श्रीनगरस्योत्तरपूर्वकोणे क्रोशार्ध-दूरे वर्तते। तस्य दैर्ध्यं सार्धद्विक्रोशपरिमितमस्ति। चूंटकीलनामकप्रणालद्वारा स 'वितस्ता'मुपतिष्ठते। स च प्रणालः श्रीनगर-राजभवनस्य सम्मुखं गत्वा ह्रद-मुपतिष्ठति।

२. अंचारनामा द्वितीयो ह्रदोऽस्ति। स श्रीनगरस्योत्तरभागे वर्तते। नालमर-खालनाम्ना प्रणालेन स जलद्वारा संयुक्तोऽस्ति। नालमरनामा प्रणालः शादीपुरस्य समीपे सिन्धुनदेन मिलितोऽस्ति।

३. तृतीयो मानसबलनामा ह्रदोऽस्ति। स्थलमार्गेण स श्रीनगरात् पञ्चक्रोशदूरे जलमार्गेण चाष्टक्रोशदूरे वितस्ताया दक्षिणतीरे वर्तते। काश्मीरे तत्सदृशो रमणीयो ह्रदः परो नास्ति। तस्य दैर्घ्यं सार्धक्रोशमितं विस्तारश्च पादोनक्रोशमितोऽस्ति। मानसबलोऽ-तिगभीरो विद्यते। श्रीमता कविवरेण कल्हणेन विल्हणेन च पवित्रमानसह्रदनाम्नाऽ-स्योल्लेखः कृतोऽस्ति।

४. उल्लारनामा चतुर्थो ह्रदोऽस्ति। स श्रीनगरस्योत्तरपश्चिमस्थलपथेनैका-दशक्रोशदूरे जलपथेन च पञ्चदशक्रोशदूरे विद्यते। काश्मीरराज्ये स एव सर्वातिशायी महान् ह्रदः। उत्तर-दक्षिणवर्तिनीं पङ्किलां भूमिं विहाय तस्य दैर्घ्यं पादोनक्रोशमितं पङ्किलभूमिसहितं तु पञ्चक्रोशमितं वर्तते। परिधिः पञ्चदशक्रोशमितो भवति। गम्भीरताऽष्टहस्तमिता, क्वचन क्वचन चैकादशहस्तमिताप्यस्ति। पूर्वदिक्स्था

वारप्रदेशस्य पाञ्चालगिरावपि निवसन्ति । चीत्कारकारिणो मृगाः पाञ्चालपर्वतमालाया दक्षिणपश्चिमदिग्वर्तिक्रमावनतप्रदेशे भवन्ति । कृष्णगङ्गावितस्तयोर्मध्यवर्तिन्यां गिरिमालायां वराहमूलपथाद्वहिः पीरपञ्चालपर्यन्तं वृहत्कायाश्छागला मिलन्ति । ते मारखोरनाम्ना प्रसिद्धयन्ति । कस्तूरीमृगा अपि काश्मीरेषु सर्वत्र भवन्ति । पाञ्चालपर्वते वुलेकोईनाम्ना थरनाम्ना च प्रसिद्धयोर्जात्योः पर्वतीयाश्छागला अपि अवलोक्यन्ते । वृकाः लोपाकाः शृगाला वानराश्च काश्मीरेषु बाहुल्येन भवन्ति । कृष्णगङ्गाया उपत्यकाया द्रुमनामके स्थाने विलक्षणजातीया वानरा उपलभ्यन्ते । ते च प्रायः पिङ्गलपक्षिणो मृगयाभूता भवन्ति । उदविडालाः सर्वासु नदीषु भवन्ति । तच्चर्माणि वहुमूल्यैर्विक्रीयन्ते । कृष्णगङ्गावारप्रदेशे शल्लक्यः खारपुस्तनाम्ना प्रसिद्धा निवसन्ति । विषाक्तसर्पा अपि स्वल्पा एव । केवल मध्येमध्ये क्वचिद्गोधा अवश्यं दृश्यन्ते ।

श्येनचिल्लप्रभृतयो मांसादपक्षिणः काश्मीरेषु अधिका निवसन्ति । मुनालाख्याः, कल्लिजाख्याः, कोकिलाः, सारिकादयश्च पक्षिणः काश्मीरेषु विपुलसंख्यकाः सन्ति । विविधाः शुकाः काष्ठकुटाश्च तत्र बाहुल्येन भवन्ति । नानाविधा जलचरपक्षिणोऽपि सन्ति । ते शरदि शीतान्ते च काश्मीरं गच्छन्ति । वसन्तात्प्रत्यावर्तन्ते । फेञ्चकाः सारसा बकाश्च सर्वदा तत्र प्राप्यन्ते । काश्मीरस्य काका ईषत् श्वेता अपि सन्ति । तेषां स्वरा अतिकर्कशा न भवन्ति । गावः खर्वाकृतयः कृष्णवर्णाश्च भवन्ति । तासां दुग्धमतिपुष्टिकरं भवति । काश्मीरेषु मशकमक्षिकादीनामुपद्रवो बाहुल्येन भवति । श्रावणभाद्रयोस्ततोऽप्यधिकं भवति ।

## कृषिरुद्भिदश्च

काश्मीरस्य भूमिरत्युर्वराऽस्ति । यत्र यत्र हिमं न पतति, तत्र तत्र स्वयमेव तूदाक्षोटवातादादयः पर्याप्ता उत्पद्यन्ते । देवदारवः सर्जवृक्षाश्चान्यवृक्षवद्दृढा न भवन्ति । परन्तु काश्मीरिकास्तैरेव गृहादिकं नावश्च निर्मापयन्ति । तत्काष्ठानि तैलाक्तत्वात्पत्रालयीयवस्तूनां प्रेषणानयनयोर्व्यवह्रियन्ते । पथिकास्तदीयानि लघुकाष्ठानि प्रज्वाल्य रात्रौ प्रकाशकार्यं सम्पादयन्ति । देवदारुशालप्रभृतयो वहुमूल्यकाष्ठास्तरवस्तत्र बाहुल्येन सन्ति । काश्मीराद् बहिस्तत्काष्ठनयनं निषिद्धमस्ति । तत्र धान्यं प्रधानं खाद्यमस्ति । काश्मीरे भारतवर्षस्य सर्वविधानि शस्यानि शाकादीनि चोपलभ्यन्ते । शाकेषु वृन्ताका रक्ता आरक्तवर्णाश्च भवन्ति । फलेषु सेवानि, अमृतफलानि, वैहेयानि, गिलासाख्यानि,

कोतरनालाभिधानि, गोमोपाह्वानि, वगुनामकानि, तूदानि, द्राक्षा, अक्षोटानि, वातादानि, आडुकानि इत्यादीनि विविधानि सुस्वादूनि तान्युत्पद्यन्ते । तत्र वातादानि चतुर्विधानि भवन्ति । तेषु एकस्य त्वक्कर्गलवत्तनुर्भवति । अतएव तत् कर्गलवातादम् (कागजीवादाम) इति कथ्यते । तत्फलानि अतिवृष्याणि स्वादूनि च भवन्ति । द्राक्षा अष्टादश(१८) विधा भवन्ति । तासु माहवीनामिका मुष्कीनामिका चात्युत्कृष्टे भवत । काश्मीरेषु दीनजनाना गृहेऽपि प्राङ्गणे एव द्राक्षामञ्चास्तिष्ठन्ति, यत्माहात्म्येन द्राक्षाफलानि काश्मीरेषु प्रचुराणि सुस्वादूनि च भवन्ति । द्राक्षाणामतिस्वादोत्पादाद्धेतो. काश्मीरिकाणा गौरववर्धन साम्प्रतमेव ।

## कुङ्कुमक्षेत्रम्

सर्वप्रसिद्धोऽय श्लोक —

सहोदरा कुङ्कुमकेसराणा भवन्ति नून कविताविलासा ।
न शारदादेशमपास्य तेषामन्यत्र दृष्ट क्वचन प्ररोह ॥ इति ॥

श्लोकेऽस्मिन् कविताविलास–कुङ्कुमकेसरयो स्वाभाविक (प्रकृतिनियत) साहचर्यमनुवर्ण्यते । यद्यपि पाश्चात्यसमारोऽप्यत्रापि 'स्पेन' प्रभृतिदेशेषु कुङ्कुममुत्पद्यमान व्यवहारपथमायाति, तथापि भारते केवल काश्मीरदेशे एव तदुत्पत्तिरिति निश्चितम् । अतएवैक कुङ्कुमस्य नामापि 'काश्मीरम्' इति प्रासिध्यत् । स्थानत्रये हि काश्मीरेषु कुङ्कुममुत्पद्यते—१ द्रावा(शारदा)क्षेत्रे, २ पद्मपुरे (पापोरस्थाने), ३ कुङ्कुमाद्रौ (कष्टवारक्षेत्रे) च । तत्र—द्रावाक्षेत्रीयं कुङ्कुम रक्तवर्णं भवतीति तस्य नामाप्येक 'रक्तम्' इत्यभूत् । पद्मपुरीय कुङ्कुम तु विशिष्टसौगन्ध्ययुत भवति । कष्टवारस्थलोत्पन्न तु मिश्रित भवति । बहुमूल्यमिद द्रव्य भगवत्पूजादिषु, तिलकधारणे, औषधयोगेषु चोपयुज्यते भारते सर्वत्र । प्राचीने काले राजानो, राजमात्रा धनिकाश्चाङ्गराग–लेपादिष्वपि तस्योपयोग कुर्वन्ति स्म । यदा सौलभ्य समर्घत्व चाऽऽसीत्, तदा वस्त्ररञ्जनादिष्वपि तत्प्रयुज्यते स्म । कृषिजातेषु द्रव्येषु काश्मीरिककुङ्कुम (जाफानसज्ञकम्) अत्युत्कृष्ट भवति । काश्मीरेषु यथेष्टमात्रया तदुत्पादात् तन्नाम्नैव काश्मीरमिति सञ्जातम् ।

## कस्तूरिकाविशेषभूमि

भारते कामरूपादिष्वनेकक्षेत्रेषु कस्तूरी लभ्यते । नेपालेऽपि सा लभ्यते, परन्तु गुणत किंचिन्न्यूना, अत एव 'नैपाली ह्यधमा स्मृता' इत्युच्यते । काश्मीरी कस्तूरी तु सुगुणैव । परन्तु सा तत्र लद्दाख-गिलगित्त-कल्लू-कागडा-भद्रवाह-पाडर-

प्राङ्मेरु(पामीर)प्रभृतीनां प्रदेशानामतिशयघनेभ्यो वनेभ्यः समानीयते । तत्रैव हि कस्तूरिकाया विशिष्टा मृगा भवन्ति । त्रिविधा हि मृगाः प्रसिध्यन्ति—१. चमर्यः (चामरप्रदाः), २. अजिनयोनयः, ३. कस्तूरीयोनयश्च । यद्यपि साधारण्येन सर्वे मृगाः 'अजिनयोनयः' स्युः, तथापि केचन विशिष्टा मृगा अप्यजिनयोनयोऽमरेण गणिताः—**'कदली कन्दली चीनश्चमूरुप्रियकावपि । समूरुश्चेति हरिणा अमी अजिनयोनयः'** इति (अमर० २।५।६) । अन्ये चापि मृगजातिकाः पशवोऽमरेण कीर्त्यन्ते—**'कृष्णसार-रुरुन्यङ्कुरङ्कुशम्बररौहिषाः । गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः'** इति (अमर० २।५।१०) । परन्तु कोशादिषु कस्तूरिकामृगस्य विशिष्य वर्णनं नोपलभ्यते । आयुर्वेदे तु 'मृगमातृका' इति तन्नाम श्रूयते । व्याधाः कस्तूरिकामृगान् पूर्वं द्रावयन्ति, तेन तेषां नाभौ महान् स्फोटः समुद्भवति । ततः शरेण तान् निहत्य, नाभिस्फोटं दोरकादिना निबध्य च तं छिन्दन्ति । तस्मिन् स्फोट एव कणरूपाऽतिशयसौगन्ध्यपूर्णा कस्तूरिकाऽवाप्यते ।

## ऋतुपरिवर्तनम्

काश्मीरे ऋतुपरिवर्तनमतीव सुन्दरं भवति । स्वास्थ्यप्रदजलवायुत्वात्प्राकृतिकशोभावैशिष्ट्यात्पुष्टिकरतृप्तिप्रदद्रव्योत्पादकत्वाच्च काश्मीरं भूस्वर्गः कथ्यते । वसन्तसमागमे यदा हिमं गलितं भवति, तदा तत्र शोभाऽपारा भवति । हैमन्तिकतुषारावृता वृक्षादयस्तदावरण परिहाय पद्ममुकुलैर्विभूषिता जायन्ते । यतो यतश्चक्षुर्गच्छति ततस्ततः पत्रशून्यास्तरवः पुष्पैर्विभूषिता अवलोक्यन्ते । अर्थात् काश्मीरेषु विचित्रोऽयं क्रमो यत् तत्र पूर्वं पुष्पाणि विकसन्ति ततश्च तेषु पतितेषु पत्राणि उद्गच्छन्ति । तदनन्तरं यावत् हिम न पतति तावन्नवकुसुमपत्रादिशोभिता वृक्षा लताश्च वसन्तविराजिता इव भवन्ति । वैशाखमासात् कार्तिकपर्यन्तं वसन्ताधिकारस्तत्र तिष्ठति । शीतकाले तु हिमपातपरिमाणानुसारमेव वसन्तस्यागमनमचिरेण चिरेण वा भवति । अल्पहिमपातश्चैत्रमासात्पूर्वमेव गलितो भवति । वसन्तस्य चाऽऽगमो भवति । परन्तु अधिकहिमपाते वैशाखे वसन्तागमो भवति ।

विविधवर्णेषु सुगन्धितकुसुमेषु सर्वप्रथमं हरिद्राभाणि ईषच्छुक्लानि च वेदमुष्कतरोः पुष्पाणि विकसन्ति सर्वत्र तत्पुष्पाणामास्तरणमिव प्रसारितं परिदृश्यते । काश्मीरेषु पुष्पगुच्छकनिर्माणाय विविधपुष्पाणामाहरणाय यत्नो नापेक्ष्यते । यत्रैवेष्यते तत्रैवाभिमुखमेव हस्तमितायां भूमौ सप्ताष्टविधानि पुष्पाणि प्राप्तुं शक्यन्ते । वैशाखमासस्य मध्यकाले जातीपुष्पाणां विकासात् पुनः काचिन्नूतना सुषमा प्रसरति । असौ

समयः काश्मीरिकाणां कृतेऽतिशयानन्दप्रदो जायते । धनिनो निर्धना युवानो वृद्धाश्च सर्वे सहस्रवाचः (हजार दास्तान) पक्षिण. पञ्जर गृहीत्वा हरिपर्वतनामकं स्थानं यान्ति । तत्र च वातादवृक्षशाखाया पञ्जराण्यावध्य यदा तदीयानि उष्णीषाणि व्यपनयन्ति, तदा ते पक्षिणो मन्दमरुतां सुखमनुभूय नृत्यन्तः सुललितेन स्वरेण गायन्ति । काश्मीरिका मानवा अपि प्रभुभक्तिसूचकानि गीतानि गायन्त इतस्ततो विचरन्ति । ज्येष्ठमासे तत्र मालती विकसति तत्पुष्पाण्यम्बरवर्णानि भवन्ति । तानि वसन्ततोः समाप्तिसूचकानि भवन्ति । तत्तत्पुष्पविकाससमकालमेव हि वसन्तशोभा समाप्यते आषाढमासे वृक्षेषु फलप्रसवो भवति । सस्यानि च परिपूर्णतां गच्छन्ति । परन्तु तत्र ग्रीष्मोष्मणो लेशोऽपि न भवति । भारतस्येतरप्रान्तेषु वसन्तो मानवा भीष्मग्रीष्मताप शमयितु काश्मीरयात्रां कुर्वन्ति । यदाऽन्यत्रोत्तापेन मन उद्विजते तदा काश्मीरे परिधेयवस्त्राणि रात्रौ च नीसारावरणान्यावश्यकानि भवन्ति । श्रावणस्य प्रथम-भागे यद्यपि आतपोत्तापो भवति, तथापि तेन जना न क्लिश्यन्ते । यतो ग्रीष्माधिक्ये झटिति वृष्टे. पातात् शैत्यमायाति । श्रावणे तत्र धारासारैर्वृष्टिर्न भवति । केवल शीतकाले हिमपातावसरे नीहारेणाकाशमाच्छाद्यते, ततः करकापातो भवति । निखिलेऽपि सवत्सरे १८।२० इञ्चाख्यपरिमाणतोऽधिक जल नैव पतति आश्विने फलानि स्वल्पान्येव पच्यन्ते । कार्तिके शैत्यारम्भो भवति । वृक्षाः सर्वे पत्रहीना भवन्ति । तस्मिन्नेव समये श्रीनगरतो षट्(६)क्रोशदूरे पद्मपुरक्षेत्रे केसराण्युत्पद्यन्ते । अयमेव काश्मीरप्रदेशे प्रतिवत्सर शोभाशेषोऽस्ति । कस्याञ्चन पारसीककवितायामसौ शोभा-शेषः साधु वर्णितोऽस्ति । यथा विकासभाञ्जि केसराणि यान्निकानिहार्थयन्ति--

'विमुच्यतां प्रदेश एष गम्यता स्वदेशभूः ।
निवर्ततेऽधुना त्वदप्रदेशवर्तिनी द्युतिः ।' इति ।

शीतकालस्य समागममनुभूय काश्मीरिकैराहारोपकरणानि समाह्रियन्ते । शाका-दीनि च विशिष्य अन्यैर्विविधवस्तुभि. सह संगृह्य स्थाप्यन्ते । विंशतिसहस्र(२०,०००)-स्फुटकोपरिस्थे तुषारा. पुञ्जीभूताश्चिर विराजन्ते । समागते कार्तिके मासि क्रमशो नीचैः पर्वतोयस्थानेषु हिम पतति । किन्तु तत्स्थान न भवति । शीघ्रमेव च विलीयते । पौष-मासतस्तु नियमेन हिमानी काठिन्य धत्ते । चतस्रोऽपि दिशो रौप्यमण्डिता इव भान्ति । दृश्यमिदमतिरमणीय भवति । परन्तु तस्मिन् समये तत्र स्थितिर्दु.सहा भवति ।

काश्मीराधिपतेर्महाराजश्रीरणवीरसिंहस्य कृपारामाभिधेयेन मन्त्रिणा पञ्चा-शीत्यधिकाष्टादशशतके ख्रिष्टाब्दे (१८८५) स्वप्रणीते काश्मीरेतिहासे तुषारपातविषये

पीराख्यपर्वते या. क्षुद्रा श्वेता कणिका दृश्यन्ते, ता न हिमकणिका किन्तु आकाशेन काश्मीरस्य मुखेऽमृत प्रवृष्टमस्ति ।

वस्तुतस्तत्र तुषारपातेन जीवन सशयापन्न भवति, किन्तु तत्रापि विधातुरसीमया करुणया यथा प्राणिनो जीवन्ति, तदमृतसेवनस्यैव फल सिद्धयति । शीतकाले घटिकामात्रमपि तुषारपातो न विश्राम्यति । तदुपर्यपि मध्येमध्ये प्रवलवृष्टयो झभावातादयश्च भवन्ति । करकापातोऽपि क्लेशयति । कदाचित्तु मासपर्यन्तमपि सूर्यो नावलोक्यते । नदीह्रदादयोऽपि स्त्यानीभवन्ति पात्रस्थानि जलानि स्त्यानानि भवन्ति । पेय जल दुर्लभ भवति । रात्रिन्दिव जना अग्नि ज्वालयन्ति । तेन च जलादीनि रक्षन्त क्लेशनिवारणव्यवस्था कुर्वन्ति । आवालवृद्धा सर्वेऽपि जना स्ववक्ष स्थलेऽग्निगर्भित मृण्मयपात्र (काङ्गडीनामक) शैत्योपशमाय धारयन्ति । किन्तु शैत्यसत्त्वेऽपि तत्रत्यारमणीयता नैव नश्यति । हिमावृततया पर्वता निष्पत्रवृक्षा लतागुल्मादीनि च सर्वाणि रौप्यमण्डितानीव प्रतिभान्ति ।

शीतकाले काश्मीरिकाणा चायपान मासाशनादिक चातीव प्रिय भवति । अत्र काले वहुविधा जलचरा पक्षिणो लभ्यन्ते । कदाचित् सुप्रकाशसमये काश्मीरिका जलाशय गत्वा पक्षिणा मृगया कुर्वन्ति । तत्समये मृणालातिरिक्त न किमपि शाक लभ्यते । काश्मीरिकास्त'न्नदरु' इति सज्ञया व्यवहरन्ति । शीतकाले तदेव पक्त्वा खादन्ति ।

### जलवायव

काश्मीर जलवायुदृष्ट्या ससारे सर्वोत्तम स्थानमस्ति । नदीना ह्रदाना च जलानि तथा स्वच्छानि भवन्ति, येन जलस्य दशहस्ताध स्थिता अपि क्राडन्तो मत्स्या स्फुट दृश्यन्ते । जल यथैव स्वच्छ तथैव सुस्वादु अपि भवति । उत्साना जलानि तु भैषज्यगुणविशिष्टान्यपि सन्ति । केषुचिदुत्सेषु तु केवल स्नानमात्रेणैव जना आरोग्य लभन्ते । काश्मीरिका ग्रीष्मस्य धूल्यादेश्च क्लेश नानुभवन्ति स्वप्नेऽपि । अत्रत्या वायवो निर्मला शीतला स्वास्थ्यप्रदाश्च सन्ति । केनापि कविना लिखितमस्ति—

'चेत् कश्चिद् दग्धदेहोऽपि काश्मीरानतु मानव ।
सोऽप्यत्र पुनरुज्जीवेदुड्डयेत स चेत् खग ॥'

काश्मीरस्य जलवायुपु कति गुणा सन्तीति नैकेन मुखेन कथयितु पार्यते । काश्मीरे निवासाय गृहाणि काष्ठनिर्मितानि भवन्ति । काश्मीरभाषाया तानि 'लडी इति सज्ञया व्यवह्रियन्ते । तत्र प्रायशा भूमिकम्पा भवन्ति । अतो जना. काष्ठैरेव गृह निर्मापयन्ति ।

केषाचिद्गृहाणा भित्तय इष्टकचिता अपि भवन्ति । किन्तु आधारभित्तयः सर्वेषामेव गृहाणा भवन्ति । हिमनिष्यन्दाय सर्वेषा गृहाणां छदि-पटलानि उभयतः क्रमशो निम्नानि भवन्ति । छदिःसु काष्ठपट्टिका निधाय ता भूर्जपत्रैराच्छाद्यन्ते, तानि चोपरिष्टान्मृत्तिकया लिप्यन्ते । वसन्तकाले मृत्तिकाया तृणोद्गमात् छदींषि आवृतानि भवन्ति । सा चावस्था मनोरमतमा प्रतीयते । गृहास्तत्र द्विभूमिकत्वतः पञ्चभूमिकत्वावधि याता भवन्ति । गवाक्षाणा कपाटा द्विप्रस्था भवन्ति । बहिर्देशस्य कपाटेषु नानाविधानि शिल्पकार्याणि क्षुद्राणि छिद्राणि च भवन्ति । शीतकाले तानि छिद्राणि कर्गलैर्मुद्रितानि क्रियन्ते । तेन हिमानि नान्तरायान्ति प्रकाशश्च तिष्ठति । प्रत्येकस्मिन् गृहे प्रायः एक धूमायन भवति । तेन विना शीतकाले निवासोऽसाध्यो भवति । केषुचिद्गेहेषु विशेषतो धनिना गृहेषूष्णस्नानागारमपि भवति । तत्र कुतश्चिदपि वायुर्न प्रविशति । तेषु स्नानागारेषु औष्ण्यतारतम्यवन्ति नानाविधानि जलानि पात्रेषु भृतानि भवन्ति । स्नानागारेषु वह्निप्रज्वालनेन तदुपरिस्थे प्रभाण्डेऽपि औष्ण्य सजायते ।

श्रीनगरे प्रतिगृह प्रधानद्वारं नदीतटेऽवस्थितमस्ति । प्रतिगृह स्वतन्त्र घट्ट भवति । तत्रावताराय सोपान निर्मितं भवति । प्राय प्रत्येकस्याधिवासिन. स्वीया नौका भवति । तस्यैव घट्टे सा निवद्धा तिष्ठति । भवनाना काष्ठमयत्वात् प्रायः काश्मीरे सदैवाग्निदाहाद्भय भवति । तत्र भवनस्य सर्वोच्चस्थाने इन्धनकाष्ठानि पाकशालाया द्रव्याणा भाण्डागाराश्च तिष्ठन्ति ।

## नौका

नाविकाना नौरेव गृह भवति । रात्रिन्दिव नौकायामेव ते तिष्ठन्ति । बहवो जना गृहाभावान्नौकायामेव सपुत्रकलत्रा निवसन्ति । बालिका युवतयो वृद्धाश्च निपुणतया नावश्चालयितु शक्नुवन्ति । तत्र नावो विलक्षणा भवन्ति । शिकारा-डोगिका-नामिका नौका एव तत्र सौविध्यपूर्णा भवन्ति । शिकारानौका साधारणतया पञ्चविंशति-हस्तदीर्घा. सपादहस्तद्वयमध्यायामा. स्फुटकैकगभीराश्च भवन्ति । एतास्वारोहिणामुपवेशनस्थानानि यवनिकाच्छन्नानि भवन्ति । आवश्यकतानुसार तदाच्छादन सवर्त्य पृथक् कुर्वन्ति । नौकाचालनाय 'चाप्पा'भिधाना क्षेपण्यो महाडुकाकारा भवन्ति शिकारानाम्नीषु नौकासु क्षेपण्य एकत्र स्थापिता न भवन्ति किन्तु ता हस्ते धृत्वा अवतरणायावलम्ब्यन्ते । तद्देशीयासु कासुचिदपि नौकासु स्थूलभागो न भवति ।

पश्चात् स्थित एको जन क्षेपण्या एव तन्निर्वर्त्यं कार्यं सम्पादयति । आरोहिणामिच्छा-मनुरुध्यावश्यकतानुसार शिकारानौकाया त्रिसंख्यामारभ्य दश संख्या यावत् तत्र कैवर्ता नियोज्यन्ते । स्त्रिय शिकारानौकाश्चालयितु नैव शक्ता । प्लवा (डोंगीनामिका नौका) दूरभ्रमणायोपयोगिनो भवन्ति । तत्र नाविका स्वपरिवारेण सहैव निवसन्ति । तादृशा नाविका काश्मीर्यां भाषाया 'होजी' इति सज्ञया व्यवह्रियन्ते । ईदृश्यो नौका साधा-रणतया चत्वारिंशद्धस्तदीर्घा हस्तचतुष्टयविस्तृता सार्धैकहस्तगभीराश्च भवन्ति । तदा वरणादन्यत्रावशिष्टांशभागे तु होजीसज्ञका नाविकास्तिष्ठन्ति । स्त्रियोऽपि ता नौका-श्चालयितु शक्नुवन्ति । काश्मीरिका पण्डितास्ता नौका आरुह्य स्वकमस्थानेषु यातायाते कुर्वन्ति । तेषामाहारादिकमपि नौकायामेव सम्पन्न भवति ।

काश्मीराधिपते बहव सुदृश्या नाव सन्ति । तासु आकारानुसार काचित् पक्षिणी ('परिन्दा' इति) काचिच्चतुष्कोणा ('चौकोर' इति) काचिच्च रथविशेष ('बग्गो' इति) कथ्यते । तासु पञ्चाशत्संख्यातोऽशीतिसंख्यापर्यन्ता मानवा गृहीत-क्षेपणीका उपवेष्टु शक्नुवन्ति ।

## अधिवासिन

काश्मीरे हिन्दूना राज्येऽपि मुस्लिमजातीया जना संख्ययाऽधिका सन्ति । ये पण्डिता उच्यन्ते ते आचारव्यवहारविकृत्या मुस्लिमा इव लक्ष्यन्ते । हिन्दुमुस्लिमा-तिरिक्ता बौद्धा अपि तत्र बहव सन्ति । काश्मीरोद्भवा पुरुषा गौरवर्णा दृढकाया सुन्दराङ्गा भवन्ति । ते चतुरा प्रखरबुद्धय आमोदप्रमोदप्रियाश्च भवन्ति । किन्तु साहसिका न भवन्ति । तत्र प्रतिगृह रमण्य परमसुन्दर्यो भवन्ति । विशेषत पण्डितानां स्त्रियोऽनुपमरूपलावण्यवत्यो भवन्ति । कांश्चिद् धनिनो मुस्लिमान् कृषकांश्च विहाय कस्यचिदपि एकाधिका स्त्रियो न भवन्ति ।

## परिच्छद

काश्मीरिका अधोभागे सलवारनामक पादयाम शिरसि चोष्णीष धारयन्ति । प्रदेशान्तरवासिनामिव तेषा वासासि भारतीयान्येव भवन्ति । हिन्दवो मुस्लिमाश्च केचिद् युवका रोमाशाष्टोपिका अपि धारयन्ति । हिन्दय शिखा धारयन्ति । स्त्रिय शाटिका न परिदधते । किन्तु केवल बृहत्कञ्चुकमङ्गरक्षिका वा परिदधते । काश्चित् मूर्ध्नि रक्तटोपिकामपि धारयन्ति । केशान् वेणीरूपान् विधाय पृष्ठतो भागद्वये लम्बयन्ति । पण्डिताङ्गनासु काश्चित् कटिप्रदेशे कञ्चुकोपरि उत्तरीयाण्यपि दधति । ता भूषणानि

स्वल्पं दधति । स्त्रियः पुमांसश्च काष्ठपादुका अपि दधति । सर्वस्मिन् देशे स्त्रीणां पुरुषाणां च वेशभूषादौ भेदो लक्ष्यते, परन्तु काश्मीरे तु स भेदो नास्ति । परिच्छदादीनि विलोक्य काश्मीरिकजातेबलवीर्ये परिचीयेते । काश्मीरिकपुरुषाणा स्त्रीवेशधारणसम्बन्धे ऐतिहासिकाः कथयन्ति यत् अकबरसूनुर्जेहागीरो नाम तदानीन्तनो भारतसार्वभौमशासकः काश्मीरमाक्रम्यापि त देशं वशीकर्तुं समर्थो न बभूव । किन्त्वकबरेण तत्राधिकारे कृते तेन सह परामृश्य स बलात् पुरुषैः स्त्रीवेशमधारयत् । यद्यपि प्रथम नासौ वेश सर्वैर्यथावद्धृतः किन्तु पश्चादभ्यासात् स्त्रीणां पुरुषाणा समानो वेशस्तत्र प्रवृत्तोऽभूत् । सोऽधुनापि यथाकथचिद् केषुचिदशेषु समान एवास्ति ।

## आचारव्यवहारौ

केचन कथयन्ति काश्मीरिका अपरिष्कृता भवन्ति । तेषा वस्त्राणि गात्राणि आवासाश्च स्वच्छा न भवन्ति । शीतातिरिक्तेऽपि समये तत्र वस्त्रप्रक्षालन नियत न भवति । स्त्रियः पुरुषाश्चापि प्रकाशस्थले वस्त्रावरणरहिता एव स्नानं कुर्वन्ति । स्नानसमये गात्रावरणवस्त्राणि जलस्पर्शाभावेन मलिनानि भवन्ति । तत्र यूकालिक्षादीनामपि बाहुल्येन स्थितिर्भवति । काश्मीरिका मार्गे गृहाभ्यन्तरे वा यत्र कुत्रापि मलमूत्रं विसृजन्ति ।

शीतकाले गृहाद् बहिर्नि सरणस्य दु साध्यतया काश्मीरिका गृहाद् बहिर्न यान्ति अभ्यासाभावादन्यदापि गृह एव ते मलमूत्रत्याग कुर्वन्ति । तेन च लोकानामालयाः स्वच्छा न तिष्ठन्ति ।

श्रीनगरजम्बूप्रभृतिराजधानीतत्समीपनगरेष्वपि एतादृश्येव स्थितिरस्ति । किन्तु सत्यप्येवमाधुनिके राजनियमैः पूर्वापेक्षया तत्र सर्वं परिष्कृतमेव विलोक्यते । ग्रामनगरादिमध्यावासस्यापरिष्कृतत्वादेव राजकर्मचारिणो वैदेशिका पर्यटकाश्च काश्मीराद्भिन्नदेशवासिनो नगरबाह्येषु नदीतीरादिषु आरामादिषु च स्थातु वाञ्छन्ति ।

केचन कथयन्ति काश्मीरिका जना कलहप्रिया भवन्ति । स्वल्पेऽपि विवादविषये महाकोलाहल कुर्वन्ति । तदर्थं रात्रिन्दिव विवदन्ते । प्राय. प्रतिदिन कचन विवादमासाद्य कोलाहल कुर्वन्ति । श्रीनगरस्य नीचैर्वितस्तास्थलमप्रशस्तमस्ति । यस्मिन् समये नदीपारस्था परस्पर विवदन्ते । तदा नानाविधबीभत्सकोलाहलतस्तत्र न कोऽपि शिष्टः स्थातु शक्नोति ।

ते उभयोर्वेलयोर्भोजन कुर्वन्ति । अन्न मत्स्यादिक च तेषा नित्यभोजनीय भवति । कठिनानि शुष्काणि भक्तानि, लवणकटुकादिमिश्रितानि शाकादीनि चायपेय च काश्मीरिकाणा प्रियाणि भोज्यानि भवन्ति, ते नित्य चाय-पेय पिबन्ति । आगन्तुकाना सत्काराय चाय नस्य चानिवार्यतयोपस्थापनीय भवति । चायरसनिर्माणाय समपेक्षितयन्त्र 'समावाट' इत्युच्यते । तद्दर्शने टीनाख्यधातुपात्रसम प्रतीयते । समावाटस्योच्चता चतुर्दशप्राङ्गुलपरिमिता भवति । तस्य व्यास सार्धद्विप्राङ्गुलपरिमितो भवति । अभ्यन्तरे तद् द्विरावृत्त भवति । तन्मध्ये वह्निर्ज्वाल्यते ।

काश्मीरिका मिष्ट लवणयुत च चायरस पिबन्ति । ते फूलनामक तिब्बतीय क्षारलवण च व्यवहरन्ति ।

## शिल्पम्

काश्मीरिका शिल्पविद्यासु निपुणा भवन्ति । काश्मीरस्य प्रावारक विख्यातमस्ति । श्रीनगरस्य नेदीयसि नोजेराऽऽख्ये ग्रामे कर्गलानि निर्मीयन्ते तानि सुचिक्कणानि पर्चकसुमिश्रणानि भवन्ति । राजकीयव्यवहार्यकर्गलानि सुवर्णमण्डितानि शिल्पकर्मविशिष्टानि मनोहराणि च निर्मीयन्ते । काश्मीरदेशीयानि घनीभूतकर्गलैर्निर्मितानि कारुकर्मविशिष्टानि च लेखनीपात्रमञ्जूषाकरण्डकप्रभृतीनि वस्तूनि भुवनविख्यातानि भवन्ति । सुवर्णस्य रौप्यस्य च कार्याणि तत्र बाहुल्येन भवन्ति । पूर्वाननुभूतानामपि शिल्पवस्तूनामादर्शावलोकनमात्रेण ते तान्यविकलमनुकुर्वन्ति ।

## भाषा

काश्मीरस्य भाषाया नाम 'कासूर' इति व्यवह्रियते । सा संस्कृतस्यापभ्रंशप्रायाऽस्ति । तस्या भाषाया काचिल्लिपिर्नास्तीति तस्या लिखितपुस्तकादीनि नोपलभ्यन्ते । देवनागराक्षराणि भ्रष्टभूतैः शारदाक्षरैः संस्कृतपुस्तकानि लिख्यन्ते व्यवह्रियन्ते च । तत्र कासूरभाषाया उच्चारणानुसारेण सकला कथा लेखितु न शक्यन्ते । कासूरभाषाया हिन्दीभाषया साम्यमस्ति । कासूरभाषाया प्रतिशत पञ्चविंशति (२५) शब्दा संस्कृतस्य, चत्वारिंशत् (४०) पारस्यभाषा, पञ्चदश (१५) हिन्द्या, दश (१०) आरब्यभाषाया अन्ये च पर्वतीयास्तिब्बतीयाश्च व्यवह्रियन्ते । काश्मीरस्य विभिन्नेषु स्थानेषु प्राय द्वादशभाषा व्यवह्रियन्त । पुञ्छजम्मूमण्डलयोश्च डोगराभाषायाश्चिब्बलीभाषायाश्च व्यवहारो भवति, पर्वतीस्थानेषु पञ्च विभिन्ना भाषा सन्ति । काश्मीरोपत्यकाया कासूरभाषाया प्रचारोऽस्ति । लद्दाखबलतीस्तानचम्पाप्रभृतिषु स्थानेषु द्विविधा तिब्बतीय-

भाषा व्यवह्रियते । पश्चिमोत्तरयोश्चतुर्विधा दरभाषा व्यवह्रियते । अलबेरुनामकेन लेखकेन लिखितादवृत्तात्प्रतीयते यत् तत्र काश्मीरेषु एकादशशताब्द्या 'सिद्धमातृका' नामकानामाक्षराणा प्रचार आसीदिति ।

## शिक्षा

राजकीयान्यन्यानि च विविधकार्याणि उर्दूभाषायामाङ्ग्लभाषाया च सम्पद्यन्ते । अत एव लोकास्ते एव भाषे पठन्ति । काश्मीरिका पण्डिता सस्कृतस्य शिक्षा गृह्णन्ति । तेषु अनेके सविशेषव्युत्पन्ना सन्ति । ज्योतिषशास्त्राभिज्ञा अपि बहव सन्ति । काश्मीरिकमहाराजस्य प्रबन्धेन तत्रानेका सस्कृतपाठशाला आसन् । परमधुना तत्र इग्लिशभाषाया सस्था प्राचुर्येण प्रवर्तिता सन्ति ।

## धर्म

काश्मीरे प्राय सर्वे हिन्दव शाक्ता भवन्ति । सर्वे स्वस्वाचारानुसार पूजा स्तवादिपाठ च कुर्वन्ति । ये केचित् स्नानार्चादिक न कुर्वन्ति तेऽपि हिन्दुजातीया बालका स्त्रियश्च प्रत्यूषे उत्थाय तिलक कुर्वन्ति । प्रतिदिन प्राय एकस्मिन् काले तिलक धारयन्ति । प्रत्यह तिलकधारणात्तषा ललाटे तच्चिह्न लक्ष्यते । सर्वे ब्राह्मणा स्वरीत्यनुसारेण वेद पठन्ति । पुरा कदाचित् काश्मीरेऽपि बौद्धधर्मस्य प्रचुर प्रचार आसीत् । अद्यापि बहुषु स्थानेषु बौद्धमठाना विहारादीना च भग्नावशेषा दृष्टिपथमायान्ति । बहवो बौद्धपण्डितास्तत्राभूवन् । स्थाने स्थानेऽद्यापि बौद्धधर्मस्य प्राबल्यमस्ति ।

मुस्लिमजातौ सीयासुन्नीसज्ञौ द्वौ विभागौ स्त । तयो काश्मीर सुन्नीसज्ञाना सख्याऽधिकाऽस्ति । द्विसप्तत्युत्तराष्टादशशताब्द्या कस्यचिद् मसजिदसस्थानप्राचीरस्य विषये द्वयो सीयासुन्नीपक्षयोर्विवाद कलहश्चाभूत् । तत्र सुन्नीसज्ञै सीयासज्ञाना गृहादिक प्रदाह्य निधीन् विलुण्ठ्य रमणीना सतीत्व विनाश्य च राज्ये महापप्लव कृत । अनन्तर महाराजस्य शासनकौशलेन सवत्र शान्ति स्थापिताऽभूत् ।

## काश्मीरप्रदेशे सस्कृतपोषका राजान प्रजाजनाश्च

१८४६ खिष्टाब्दे सोब्राऊनसङ्ग्रामानन्तर महाराज श्रीगुलाबसिंहो रूप्यकाणा पञ्चसप्तत्या लक्षै ब्रिटिशशासनात्काश्मीरराज्यमक्रीणात् । तदनन्तरमसौ महाराजो ब्रिटिशशासनस्य मित्रभूतो राजाऽभूत् । अनेन मैत्रीसम्बन्धेनासौ युद्धकाले ब्रिटिशशास

नस्य साहाय्य कर्तु परवानिवासीत् । किन्त्वसौ राज्यकार्याणि स्वाधीनतयैव हिन्दू-राजनीतिमनुसरन्नन्वतिष्ठत् । १८५८ ख्रिष्टाब्दे महाराजे श्रीगुलाबसिंहे देवभूय गते तत्तनुजन्मा महाराज श्रीरणवीरसिंह सिंहासनमध्यतिष्ठत् । अमुना १८८२ ख्रिष्टाब्दे ब्रिटिशशासनाद् एकविंशतितोपध्वनिभिरभिवादनम्, ब्रिटिशसेनापतित्वम्, ब्रिटिश-सम्राज्ञीमन्त्रित्व च सत्काररूपेणालभत । १८८५ ख्रिष्टाब्दे महाराजश्रीरणवीरसिंहो जम्बूराजधान्या दिवमारोहत्, ततस्तस्य ज्येष्ठोऽङ्गज श्रीप्रतापसिंहमहाराज शासन-भार समधारयत् । तदीयाया राजसभाया ब्रिटिशशासनस्य प्रतिनिधिशासक प्राविशत् । महाराजश्रीप्रतापसिंहो ब्रिटिशशासनेन जी० सी० एम्० आई० इत्युपाधिदानेन, वश-परम्परार्थं च 'महाराज' इति पदवीप्रदानेनाभिनन्दित , एकविंशतितोपध्वनिभिश्चाभि-वादितो विशेषेण सम्मानयितुम् ।

काश्मीरेश्वरा ब्रिटिशसम्राज्ञ्यै प्रतिवर्षमेकमश्वविशेषम्, सार्धद्विसेटका मृदूर्णाम्, अत्युत्तमानि च त्रीणि काश्मीरिकप्रावारकाणि कररूपेण समर्पयन्ति स्म । महाराज-श्रीप्रतापसिंहस्यैव समये काश्मीरराज्यमिद कात्स्न्र्येन ब्रिटिशशासनाधीनता गतम् । तदनन्तर तत्पुत्रो महाराजश्रीहरिसिंह काश्मीरराज्यधुरमवक्षत्, ततश्च भारतविभा जनावसरे तदात्मजेन श्रीकर्णसिंहमहाराजेन काश्मीरराज्यस्य स्वतन्त्रभारताङ्गतोदघो-ष्यत । इत्थ स्वस्वमतिपराक्रमानुरूप काश्मीरप्रदेश शासद्भिरेभिर्महाराजै. संस्कृत भाषायास्तन्निष्ठाया भारतीयसंस्कृतेश्च धारणपोषणार्थं यानि यान्यवदानानि कृतानि, तेषा सर्वेषामपि नातिसक्षिप्तविस्तृत परिचयो दुर्गरप्रदेशेतिहासे निरूपित इति नेह तानि पुनर्वितन्यन्ते ।

काश्मीरिकै प्रजाजनैरपि संस्कृतसंस्कृतिपोषणाय यानि यान्युदारकर्माणि विहितानि, तान्यपि जम्बूकाश्मीरस्थाना संस्कृतसंस्थाना परिचयप्रकरणे समुपवर्णि-तानि । कानिचित्त्विह काश्मीरस्थाना राजकीयानामर्धराजकीयाना नगरपालिका-सम्बद्धाना स्वतन्त्राणा वा संस्कृतपाठशालाना परिचयपत्रिकाया यथोपलम्भ सूच्यन्ते ।



## काश्मीरस्था राजकीया अर्धराजकीया नगरपालिकासम्बद्धाः स्वतन्त्रा वा संस्कृतपाठशाला



| क्रम स० | पाठशाला नाम | स्थानम् | प्रकार |
|---|---|---|---|
| १ | काशीनाथशर्मसंस्कृतपाठशाला | करफली | स्वतन्त्रा |
| २ | काशीनाथसंस्कृतपाठशाला | टरबूजी | ,, |
| ३ | काशीनाथखरूसंस्कृतपाठशाला | गणपतयार | नगरपालिकासम्बद्धा |
| ४ | काशीनाथपुलादसंस्कृतपाठशाला | कालखड | अर्धराजकीया |
| ५ | गोपीनाथसंस्कृतपाठशाला | गणपतयार | राजकीया |
| ६ | गोपीनाथजरूसंस्कृतपाठशाला | शालकदलम् | नगरपालिकासम्बद्धा |
| ७ | जगजीवनरामसंस्कृतपाठशाला | गुण्डिअहलकम् | स्वतन्त्रा |
| ८ | जगन्नाथलगूसंस्कृतपाठशाला | गणपतयार | नगरपालिकासम्बद्धा |
| ९ | जगन्नाथदालासंस्कृतपाठशाला | ,, | राजकीया |
| १०. | दयारामसंस्कृतपाठशाला | रैणावारी | स्वतन्त्रा |
| ११. | दीनानाथहण्डूसंस्कृतपाठशाला | मल्लपोरा | अर्धराजकीया |
| १२ | द्वारिकानाथवीतालसंस्कृतपाठशाला | रैणावारी | नगरपालिकासम्बद्धा |
| १३ | नाथजीपुलादसंस्कृतपाठशाला | द्राबीयार | ,, |
| १४ | निरञ्जननाथसंस्कृतपाठशाला | हारिपर्वत | ,, |
| १५ | नीलकण्ठकूसंस्कृतपाठशाला | गाखनम् | अर्धराजकीया |
| १६ | पण्डितशिवभट्टोपाध्यायसंस्कृतपाठशाला | गणपतयार | स्वतन्त्रा |
| १७ | पीताम्बरपण्डितसंस्कृतपाठशाला | ,, | राजकीया |
| १८ | पीताम्बरनाथकुमेदानसंस्कृतपाठशाला | बडियार | अर्धराजकीया |
| १९ | पीताम्बरदारसंस्कृतपाठशाला | रैणावारी | नगरपालिकासम्बद्धा |
| २० | पीताम्बरहण्डूसंस्कृतपाठशाला | ,, | ,, |
| २१ | प्रकाशचन्द्रसंस्कृतपाठशाला | गणपतयार | स्वतन्त्रा |
| २२ | प्रकाशभट्टपण्डितसंस्कृतपाठशाला | रैणावारी | ,, |
| २३. | प्रेमनाथखरूसंस्कृतपाठशाला | गणपतयार | नगरपालिकासम्बद्धा |

| क्रम संख्या | ाठशालानाम | स्थानम् | प्रकारः |
|---|---|---|---|
| २४ | प्रेमनाथज्यौतिषिसंस्कृतपाठशाला | कखडारा | अर्धराजकीया |
| २५. | बलकाकसंस्कृतपाठशाल | रैणावारी | स्वतन्त्रा |
| २६. | मधुसूदनखुनमुशुसंस्कृतपाठशाला | शीतलनाथ | अर्धराजकीया |
| २७. | मधुसूदनरुगुसंस्कृतपाठशाला | रैणावारी | नगरपालिकासम्बद्धा |
| २८ | महादेवरिबूसंस्कृतपाठशाला | बटयार | अर्धराजकीया |
| २९. | महेश्वरनाथशर्मसंस्कृतपाठशाला | नखीरस्थानम् | नगरपालिकासम्बद्धा |
| ३० | मुकुन्दरामराजदानसंस्कृतपाठशाला | कर्णनगरम् | ,, |
| ३१. | रघुनाथकोकिलसंस्कृतपाठशाला | गणपतयार | राजकीया |
| ३२. | रघुनाथगजूहरिपाठशाला | गंजरव्वडम् | अर्धराजकीया |
| ३३. | रघुनाथपण्डितसंस्कृतपाठशाला | भानमोहल्ला | स्वतन्त्रा |
| ३४. | राजकीयसंस्कृतपाठशाला (सम्प्रति ओरियण्टलकालेजनाम्ना परिणता) | श्रीनगरम् | राजकीया |
| ३५ | राधाकृष्णकुदूसंस्कृतपाठशाला | करफली | नगरपालिकासम्बद्धा |
| ३६. | लक्ष्मणजीजरूसंस्कृतपाठशाला | गणेशघट्टः | अर्धराजकीया |
| ३७. | लसभट्टबाबूसंस्कृतपाठशाला | चन्दुपोरा | ,, |
| ३८. | लसभट्टरुगुसंस्कृतपाठशाला | सराफकदलम् | नगरपालिकासम्बद्धा |
| ३९. | विश्वनाथकोकिलसंस्कृतपाठशाला | मानमोहल्ला | अर्धराजकीया |
| ४०. | शम्भुनाथकुर्मदानसंस्कृतपाठशाला | खल्वेस्थलम् | ,, |
| ४१. | शम्भुनाथजरूसंस्कृतपाठशाला | सोमयालः | ,, |
| ४२. | शम्भुनाथटूरसंस्कृतपाठशाला | खत्थुथाला | ,, |
| ४३. | शिवनाथशर्मसंस्कृतपाठशाला | नखीरस्थानम् | स्वतन्त्रा |
| ४४. | श्यामलालगगूसंस्कृतपाठशाला | मलिकाङ्गणम् | अर्धराजकीया |
| ४५. | श्रीप्रसादसंस्कृतपाठशाला | अहल्यामठः | स्वतन्त्रा |
| ४६. | सुखभट्टसंस्कृतपाठशाला | सत्थुवर. | ,, |
| ४७. | सूर्यकण्ठशर्मसंस्कृतपाठशाला | फतेहकदलम् | नगरपालिकासम्बद्धा |
| ४८. | हिन्दूहाईस्कूलसम्बद्ध संस्कृतमहाविद्यालय. | श्रीनगरम् | |

एताभ्योऽतिरिक्ता अष्टौ पाठशाला निर्दिष्टेषु स्थानेषु वर्तन्ते स्म, यासा संस्था नामध्यापकसंस्थापकाना नामान्यपि नोपलब्धानीति तासा परिचयो नेह वितन्यते—१. अनन्तनागे, २. कुलग्रामे ३. सानवाहसोसतायाम्, ४. नवाकदलरूप-

भवान्याश्रमे, ५ पाम्पोरे, ६ वराहमूल, ७ विजविहाराख्ये स्थाने, ८ सोपोरे चेति।

## चिह्निताना प्राप्तपरिचयाना सक्षिप्त विवरणम्

### पण्डितकाशीनाथशर्मसंस्कृतपाठशाला

श्रीनगरस्य करफलीनामकोपनगरे पाठशालेय कर्मकाण्डग्रन्थानामध्ययनाध्यापनाभ्या ख्यातिमावहति।

### ५,६,१७,३१ सख्याका काश्मीरप्रदेशे सर्वकारप्रचालिता संस्कृतपाठशाला

१९१०–१९१२ खिष्टाब्दयोर्मध्ये काश्मीरप्रदेशे काश्चन संस्कृतपाठशाला सर्वकारेणास्थाप्यन्त। सख्यया पञ्चपाणामपि तासा पाठशालाना वर्गद्वय कल्पितमभूत्। उत्तमासु पाठशालासु पञ्चदशरुप्यकात्मक, साधारणीषु च दशरुप्यकात्मक आर्थिक सहयोगोऽदीयत। एतासा कार्यनिरीक्षणार्थं राज्येन कार्यालयाऽप्येक समस्थाप्यत, य 'संस्कृतप्रसारसमिति(बोर्ड फार दि प्रोपेगेशन आफ संस्कृत)' नाम्ना प्रचलतिस्म। अस्य मन्त्रिण कालेजाना संस्कृतप्राध्यापका भवन्तिस्म, त एव चाखिल कार्यं निर्वहन्तिस्म।

अधोनिर्दिष्टा विद्वासोऽस्या समितेर्मन्त्रिणोऽभूवन्—

१ श्रीकाशीलाला –प्राध्यापका –एस्॰पी॰कालेजसंस्कृतविभागस्य

२ श्रीमधुसूदनकौल —जम्बूकाश्मीरानुसन्धानविभागाध्यक्ष

३ श्रीजगद्धरजाडू —प्राध्यापक –अमरसिंहकालेजस्य

४ श्रीजियालाल —प्राध्यापक एस्॰पी॰कालेजसंस्कृतविभागस्य

साम्प्रतमेतासा पाठशालाना सञ्चालनस्य सम्पूर्णोऽधिकार शिक्षाविभागस्य निदेशकमहोदयाना हस्ते वर्तते। प्रत्यञ्चल (प्रतितहसीलम्) पृथक् पृथङ् निरीक्षणादिव्यवस्था स्थानीयैस्तत्तदञ्चलशिक्षाधिकारिभि क्रियते। रात्रिपाठशालारूपेण प्रचलन्तीषु एतासु पाठशालासु प्रतिपाठशालमेकक एव विद्वान् प्रतितिष्ठति, पाठनादिकार्यं च सम्पादयति। कस्यचन पाठ्यक्रमस्यानियतत्वादासु पाठशालासु सम्प्रति श्रीमद्भगवद्गीता-कर्मकाण्ड-स्तोत्रादिग्रन्था एवाध्याप्यन्त। विशिष्टाना पाठशालाना नामादिसङ्केत —

१. पण्डितपीताम्बरसंस्कृतपाठशाला गणपतयारे, श्रीनगरे

२ पण्डितजगन्नाथसंस्कृतपाठशाला ,, ,,

३ पण्डितगोपीनाथसंस्कृतपाठशाला ,, ,,

४. पण्डितरघुनाथकोकिलसंस्कृतपाठशाला ,, ,,

अत्र शिक्षकानां वेतनस्तर. पञ्चाशद्रुप्यकावधिरेव वर्तते ।

### पण्डितगोपीनाथजाड़ूसंस्कृतपाठशाला

श्रीनगरे शालकदलनाम्नि स्थाने पाठशालेय विराजते । अत्र संस्कृतसाहित्यस्योत्तमोत्तमा ग्रन्था अध्याप्यन्ते । अत्रत्यः प्रधानपण्डितो विविधशास्त्रनिष्णातो वर्तते ।

### पण्डितजगजीवनरामसंस्कृतपाठशाला

असौ संस्कृतसंस्था श्रीनगरस्य गुण्डिमहक्, नईसडकनामके स्थाने पण्डितश्रीजगजीवनराममहोदयस्थापिता आसीत् । अत्र विशेषरूपेण वेदान्तज्योतिशास्त्राणामध्यापन भवतिस्म । छात्रसंख्या आत्रिशत आचत्वारिंशदासीत् ।

### पण्डितजगन्नाथशालासंस्कृतपाठशाला

गणपतयारस्य विशिष्टे स्थाने पाठशालेय प्रचलति । शालाजातीय श्रीजगन्नाथपण्डितोऽत्र श्रीमद्भगवद्गीतादिधर्मग्रन्थैः सह कर्मकाण्डमध्यापयति ।

### श्रीदयारामसंस्कृतपाठशाला

श्रीनगरे रेणावारीनामकस्थाने श्रीदयारामपण्डितसंचालिताऽसौ पाठशाला वेदान्तादिदार्शनिकविषयसम्बद्धैर्व्याख्यानैः ख्यातिमध्यगच्छत् । श्रीदयारामपण्डितो वेदान्तज्योतिषकर्मकाण्डादिविद्वत्तल्लज आसीत् । जना एन दयकाकपण्डितनाम्ना स्मरन्तिस्म । अस्या पाठशालाया पञ्चाशच्छात्राः पठन्तिस्म । विनैव राजकीयसहयोग पाठशालेयं समचोचलत् ।

### पण्डितशिवभट्टोपाध्यायसंस्कृतपाठशाला

इय पाठशाला श्रीनगरे गणपतियारेऽवर्तत । अत्र वेदान्तदर्शनान्यध्याप्यन्तेस्म । श्रीशिवभट्टोपाध्याय· स्वयमस्याः संस्थायाः प्रधानपण्डित आसीत् । छात्रसंख्या त्वासन्नत्रिंशाऽविद्यत । किञ्चित्कालानन्तर श्रीहरिसिंहमहाराजः स्वधर्मार्थविभागादेतस्यै पाठ-

शालायै किञ्चिदार्थिकसाहाय्यमार्पिपत् । उपाध्यायो महापण्डित आसीत्, विशेषेण तस्य रुचिर्वैष्णवदर्शनेषु समदृश्यत । काश्मीरेषु वैष्णवदर्शनानां प्रचारेऽस्य विदुषो महान् योग आसीत् ।

### पण्डितप्रकाशचन्द्रसंस्कृतपाठशाला

असौ पाठशाला श्रीनगरे गणपतयारमध्यास्ते स्म । पण्डितप्रकाशचन्द्रश्च तत्र प्रधानपण्डितोऽभूत् । अत्र च्छात्रा वेदादिशास्त्राणि कण्ठस्थानि कुर्वन्तिस्म । कण्ठस्थशास्त्राश्छात्रा महापण्डितपदवी भजन्तेस्म । अत्र प्राचीनशारदालिप्या बहवो ग्रन्था अपि लेख्यन्ते स्म । अत्रोपपञ्चाशाश्छात्राः शिक्षामध्यगुः ।

### श्रीप्रकाशभट्टपण्डितसंस्कृतपाठशाला

रेणावारीमधिष्ठिता पाठशालेयं श्रीप्रकाशभट्टपण्डितेन समचाल्यत । अय पण्डितः सिद्धान्तकौमुदी महाभाष्य चेति ग्रन्थद्वयमपि पूर्वोत्तरपक्षसहित विनैव पुस्तकमध्यापयतिस्म । अस्य महावैयाकरणस्य शिष्या अपि महापण्डितत्वेन ख्यातिमलभन्त । अस्या पाठशालायां त्रिंशतश्छात्राणामुपस्थितिरभवत् ।

### पण्डितबलकाकसंस्कृतपाठशाला

इय पाठशाला श्रीनगरे रेणावार्यां प्रचलति स्म । श्रीबलकाकः प्रधानपण्डितत्वेनात्र विविधान् विषयानध्यापयति स्म । अत्र विंशतेस्त्रिंशत यावच्छात्रा अधीयतेस्म । सम्प्रति श्रीबलकाकतनुजन्मा श्रीपीताम्बरपण्डितः पाठशालामिमां सचालयति । सर्वकारेणात्र पञ्चाशद्रूप्यकाऽऽत्मक मासिक साहाय्य प्रदीयते ।

### पण्डितरघुनाथकोकिलसंस्कृतपाठशाला

इय पाठशाला श्रीनगरस्य भानमोहल्लाख्ये शाखानगरे स्थिताऽस्ति । अस्याः सचालकः श्रीरघुनाथकोकिल. पण्डितप्रकाण्ड विद्यते । ज्यौतिषे कर्मकाण्डे च स्वकीय ज्ञानोत्कर्षं शिष्येषु सक्रामयन्नात्मनः पाठशालायाश्च कीर्त्ति वितनोति ।

### राजकीयसंस्कृतपाठशाला

भूपतिना श्रीरणवीरसिंहेन १८७० ख्रिष्टाब्दे पाठशालेय स्थापिता विनियोजिताश्चाध्यापनार्थमत्र विशिष्टा विद्वास. । काश्मीरप्रान्ते पुनरपि संस्कृतविद्यायाः प्रचारः पूर्ववद् भवेदिति पाठशालाया अस्या स्थापनस्य मुख्यमुद्देश्यमासीत् । वस्तुत अनया सस्थया काश्मीरप्रान्ते सस्कृतभाषाया भूयोऽपि महान् प्रसार. सजातः ।

तदानी षडेवाध्यापका आसन्, येषु पण्डितश्रीदामोदरः प्रधानाध्यापकपदमलङ्कृतवान्। अय खलु काश्मीरेषु श्रीनगरस्यरैणावारीवास्तव्यः, अपि च महाराजस्य श्रीरणवीरसिंहस्य राजपण्डित आसीत्। अनेन विदुषा प्राचीनसंस्कृतग्रन्थानां बहूनां व्याख्यापि कृता, किन्तु सम्प्रति ते व्याख्याग्रन्था नोपलभ्यन्ते, ते प्रायः अप्रकाशिता एव इतस्ततो लुप्ताः पाठशालायामध्यापयता चामुना पण्डितेन महती ख्यातिर्लब्धा, अमुष्याध्यक्ष्येऽस्याः पाठशालाया सर्वथा उत्कर्षः समभवत्। अमुष्य सहायकाध्यापकेषु 'श्रीदयारामगञ्जू'महाभागः श्रीनगरस्य सत्थूग्रामवासी प्रसिद्धज्यौतिषिक आसीत्। अनेनापि ज्योतिषे बहूनि पुस्तकानि विरचितानि यानि खगोलविद्यायां सर्वतोऽनूतनायन्त। सत्थूग्रामवासी श्री'राजकाकगंजू' महाशयोऽपि महान् पण्डितः पाठशालायामध्यापयतिस्म। प्रधानाध्यापकपदमपि समारुह्यायं विशिष्टं कार्यं सम्पादितवान्। एवं श्रीनगरस्यहब्बाकदलग्रामनिवासी श्रीचन्द्रराजदानोऽपि ज्योतिषशास्त्रस्य न्यायशास्त्रस्य च प्रसिद्धो विद्वान् पाठशालायामस्यां सहायकरूपेणाध्यापितवान्। श्रीमहानन्दपण्डितोऽपि श्रीनगरस्यहब्बाकदलनिवासी धर्मशास्त्री दार्शनिकश्च महापण्डित आसीत्, सहैव महासाधकोऽपि। स्वसाधनाप्रभावेणैव च सर्वत्र विशिष्टां ख्यातिमाप्तवान्।

पण्डितश्रीसाहिबः शैवदर्शनस्य विशिष्टो विद्वान् श्रीदयारामपण्डितात्परमस्याः पाठशालायाः प्रधानाध्यापकोऽभवत्। तदनु पण्डित'राजकाकः', ततश्च पण्डितवासुदेवशास्त्री इति क्रमेण प्रधानाध्यापकपदमलङ्कृतवन्तौ। तत्र श्रीवासुदेवशास्त्रिणा बहूनां वैदिकग्रन्थानां टीकापि कृता, किन्तु ते टीकाग्रन्था न मुद्रिताः, अत एव नोपलभ्यन्त इदानीम्। अयं च वासुदेवशास्त्री अस्या एव पाठशालायाः स्नातक आसीत् पश्चाच्च प्रधानाध्यापक इति पाठशालाया वैशिष्ट्यं सुतरां सिद्ध्यति।

तदानीमस्याः सस्थायाः सम्बन्धः पञ्जाबविश्वविद्यालयेन साकमासीत्। दयारामगंजूमहोदस्य कालं यावदस्यां परीक्षायाः कश्चन क्रमो नाऽऽसीत्। महानन्दपण्डितस्य प्रधानाध्यापकत्वे दश च्छात्रा लाहौरनगरस्थकेन्द्रं परीक्षार्थं गता येषु चत्वार उत्तीर्णा अभूवन्। अथ वासुदेवशास्त्रिणो मुख्यपण्डितत्वे पञ्चावविश्वविद्यालयस्यात्रापि केन्द्रमभूत्। अत्र च केन्द्रे प्राज्ञ-विशारद-शास्त्रिपरीक्षाः प्रचलिताः। अत्र क्रमशो निम्नलिखिता मुख्याध्यापका अभूवन्।

| | | |
|---|---|---|
| १. पण्डितदामोदरः | २. पण्डितराजकाकः, | ३. पण्डितमहानन्दः, |
| ४. श्रीवासुदेवशास्त्री, | ५. श्रीनाथरामशास्त्री, | ६. ईश्वरभट्टशास्त्री |

७ पण्डितबलिजिन्नाथशास्त्री ८ पण्डितरघुनाथशास्त्री

९. पण्डितशिवनाथशर्मा शास्त्री १० पण्डितविश्वनाथशर्मा शास्त्री,

अधुना—'गवर्नमेण्ट ओरियण्टलकालेज' इति नाम्नाऽसौ प्रसिद्धा । अत्र पूर्ववर्षेषु क्रमश १७०, ७०, ५०, ४०, ३०, २०, छात्रा आसन्, साम्प्रत १०, छात्रा सन्ति ।

छात्रवृत्तेरभाव सस्कृतच्छात्राणा ह्रासे मुख्य कारणम् । श्रीशेखअब्दुल्लामहोदयस्य प्रधानमन्त्रित्वे यदा पाठशालायमस्या 'फारसी, उर्दू, अरबी' इति भाषाणा श्रेणी चलिता तदैवास्या नामपरिवर्तनमभूत्ततस्तदा शिक्षामन्त्रिकार्यभारमपि मुख्यमन्त्रिणा गृहीतमासीत् ।

### अहल्यामठस्या श्रीप्रसादकाकसस्कृतपाठशाला

जाङ्गजातीय श्रीप्रसादकाकोऽस्या पाठशालाया प्रधानपण्डित आसीत् । अत्र शैवशास्त्रवेदान्तदर्शनज्योतिषकर्मकाण्डानि विशेषेणाध्याप्यन्ते स्म । पण्डितश्रीप्रसादकाक समकालिकेषु कर्मकाण्डिषु महाचार्यतयाऽऽद्रियतेस्म । मुख्यतमानामनुष्ठानाना सचालनममुनैव क्रियतेस्म । अस्या पाठशालाया ब्राह्मणवर्ग प्रति भूयान् उपकारोऽद्यापि स्मर्यते । असौ प्रधानपण्डित शास्त्रज्ञाना सदनुष्ठाना चाऽऽसीत् । अत्राषष्टे (६०) आशीति (८०) छात्रा अधीयतेस्म । साम्प्रतिकेषु काश्मीरिकेषु कर्मकाण्डिषु शैवदार्शनिकेषु च भूयासो विद्वास परम्परया तस्या पाठशालाया एव स्नातका सन्तीति नातिशयोक्ति ।

### श्रीसुखभट्टसस्कृतपाठशाला

सत्यूवरवरसाहस्थल श्रीरामचन्द्रमन्दिरे महादार्शनिकस्य वैद्यकशास्त्रविशारदस्य व्याकरणादिशास्त्रनिष्णातस्य महापण्डितश्रीसुखभट्टस्य प्रधानाध्यापकत्वे पाठशालेय प्राचलत् । इय सर्वकारसाहाय्यमप्यविन्दत् ।

### हिन्दूहाईस्कूलसम्बद्ध सस्कृतमहाविद्यालय

महाराजश्रीप्रतापसिंहप्रशासनसमये १९०१-१९०४ त्रिशताब्दयोमध्ये सस्कृतमहाविद्यालयोऽय हिन्दूहाईस्कूलेन सार्धमेव समस्थाप्यत । अत्र प्राज्ञविशारदशास्त्रिपरीक्षानुसारी पाठ्यक्रमोऽध्याप्यत । अय सस्कृतमहाविद्यालयो वाराणसीस्थ थियोसोफिकलसोसाइटीनामिकाया सस्थाया पार्थक्येन सहयोगेन प्राचाल्यत । तेषु दिनेषु हिन्दूहाईस्कूलाख्यविद्यालयस्य आचार्य एम० आर० विल्सनमहोदयोऽभूत्, सस्का-

महाविद्यालयस्य मुख्यपण्डितश्च श्रीनाथरामशास्त्री समवर्तत । संस्थायाश्चास्याः स्थापनं फतेहकदलाख्ये शाखानगरे (श्रीनगरस्य तृतीयसेतुसमीपस्थे) जातम् । ततोऽयं महाविद्यालयो हिन्दूहाईस्कूलसहित एव कोठीबागाख्यं स्थानमनीयत। तत्र महाराजश्रीप्रतापसिंहो हिन्दूकालेजमप्येकमतिष्ठिपत् । हिन्दूहाईस्कूल इत्यस्य 'एस्. पी. हाईस्कूल' इति, हिन्दूकालेज इत्यस्य च 'एस्. पी. कालेज' इति नामाचीकरत्। अस्य कालेजस्य प्राचार्य एम्. यु. मोर एम् ए. महोदय आसीत् । उपर्युक्तहाईस्कूलेन सम्बद्धोऽसौ महाविद्यालयः १९१०विक्रमाब्दे समाप्तिं गतः ।

अस्य संस्कृतमहाविद्यालयस्य समाप्तौ कारणान्तरेषु किञ्चित्कारणमिदमप्यासीद्—यत्तदा सर्वेषां संस्कृताध्येतॄणां ध्यानं राजकीयसंस्कृतपाठशालां प्रत्याकर्षितमभूत्, तत्र हि पण्डितप्रकाण्डानि छात्रानध्यापयन्ति स्म । अस्मै विद्यालयाय च यथासमयं राजकीयः सहयोगोऽपि नादीयतेत्येष दिने दिने ह्रासमनुभवन्नेव समाप्तिमयासीत् ।

### काश्मीरराज्यसर्वकारेण कृताः संस्कृतसेवाः

कश्मीरराज्यसर्वकारेण स्वर्गीयमहाराजश्रीरणवीरसिंहेन स्थापिताया राजकीयसंस्कृतपाठशालाया गवर्नमेण्टओरियन्टलकालेजेतिनाम्ना विकाशं विधाय तत्र प्राज्ञविशारदशास्त्रिपरीक्षाक्रमानुसारिण्यध्यापनव्यवस्था पुरातत्त्वान्वेषणविभागपोषणद्वारा शैवशास्त्रीयग्रन्थरत्नानां प्रकाशनव्यवस्था स्वर्गीयपण्डितमुकुन्दरामशास्त्रिणे महामहोपाध्यायोपाधेः स्वर्गीयपण्डितहरभट्टशास्त्रिणे स्वर्णपदकस्य श्रीनगरस्थराजकीयसंस्कृतपाठशालाभूतपूर्वमुख्याध्यापकाय स्वर्गीयपण्डितदयारामगञ्जूमहोदयाय विद्यावारिध्युपाधेश्च प्रदानेन संस्कृतसम्मानं चकार । अमुना च संस्कृतानुसन्धानशालास्थापनेन संस्कृतविकाशाय कृतोऽभिनन्दनीयः पदक्रमः । तेन पाण्डुलिपीनां विकाशाय मुद्रणाय च १५००० पञ्चदशसहस्रं, पुस्तकानां कृते च १०००० दशसहस्रं रूप्यकाणि स्वीकृतानि सन्ति । संस्कृताध्ययनसौविध्याय रात्रिपाठशालाश्च स्थापिता अभूवन् । स्वतन्त्रताप्राप्त्यनन्तरं च काश्मीरराज्येन संस्कृतोन्नतये ३० त्रिंशद् संस्कृतपाठशालाः स्थापिताः । न केवलमासु पाठशालासु ग्रीष्मातिरिक्तकाले सायंपञ्चवादनादष्टवादनं यावत्तथा ग्रीष्मे षड्वादनान्नववादनं यावदध्यापनं प्रचाल्यते । प्रत्युत राजकर्मचारिणामपि संस्कृताध्ययनसौविध्यलाभाय राजकीयसंस्कृतपाठशालाया अपि सायंकालिकः कार्यकालो निरधार्यत । अद्यत्वे प्रायो विज्ञानरुचयो जनाः सन्तीति संस्कृताध्ययने ते प्रायो न प्रवर्तन्त इति संस्कृतसंस्थाया ह्रासं निरीक्षमाणेन सर्वकारेण सर्वाः संस्कृतपाठशाला रात्रिपाठशालात्वेन परिणमिता येन सर्वेषां

सस्कृताध्ययन सुलभ समजायत । येनाधुनात्र प्रदेशे सर्वकारकर्मचारिणोऽपि विशेषरूपेण सस्कृताध्यन कुर्वन्तो दृश्यन्ते । १९६२ खिष्टाब्दे जाम्बूकाश्मीरविश्वविद्यालये सस्कृत-विभागस्यापि स्थापना कृता । माध्यमिकविद्यालयेषु दश प्रतिशतमुच्चमाध्यमिकविद्यालयेषु विशति प्रतिशत सस्कृताध्यापका सन्ति । परन्तु साम्प्रतमेषु सस्कृताध्यापकेषु प्राय सस्कृते एम० ए० परीक्षोत्तीर्णा एव सन्ति । अत्र राज्ये प्राज्ञविशारदशास्त्रिणा मान्यता क्रमश मैट्रिक-एफ० ए०-बी० ए०तुल्या विद्यते । एतेषा सर्वेषा तत्तदुपाधिधारिणा वेतन (७०-६-१०० ई०बी० ८-१८०) समानमेव वर्तते । शास्त्रिणा कृते २०० द्विशत यावद् वेतन निर्मीयमाण विद्यते । महाविद्यालयस्य वेतन २५०-१५ ३०-२५-५००-६०० यावद् विद्यते । विश्वविद्यालये च ३००-६०० तथा ८००-१२०० वेतन निर्द्धारित वर्तते ।

सस्कृतपरीक्षाया सचालन जम्बूकाश्मीरविश्वविद्यालयेनैव क्रियते विद्यालये महाविद्यालये विज्ञानातिरिक्तविषयाध्येतृणा कृते सस्कृतमनिवार्यतया ग्राह्य भवति ।

उपर्युक्तविवरणैर्ज्ञायते यदधुना काश्मीरप्रदेशसर्वकारेण सस्कृतविकाशाय भूयान् प्रयत्न समारब्धो विद्यत इति ।

---

जम्बूकाश्मीरराज्यस्य शिक्षाविभागस्य निदेशक श्रीनीरुद्दीनमहोदय

अमौ सुविश्रुतो महानुभाव काश्मीरेषु श्रीनगर स्वजन्मनाऽलमकरोत् । अध्यापक प्राध्यापकश्च भूत्वा क्रमेणाय शिक्षानिरीक्षकपदमध्यतिष्ठत् । तत्परतया स्वकर्मसम्पादन व्यसनितया यदासौ यत्पदमधिष्ठित, तदैव तत्पदकार्यं सम्यक् समपीपदत् । विशेषत शिक्षानिरीक्षकेन सताऽमुना सस्कृतस्य विकासाय बहु प्रयतितम् । सस्कृतपाठशालाना सख्या सवर्धिता । शिक्षाक्षेत्रेऽमुष्याभिरुचि कार्यकौशल चावेक्ष्य जम्बूकाश्मीरप्रशासनेनासौ शिक्षासम्बद्धाना विषयाणा पुनरवलोकनाय सम्यगध्ययनाय चाऽऽङ्गलदेश प्रति प्रेषित । तत प्रत्यागतश्च शिक्षाविभागस्योपनिदेशकपदे प्रतिष्ठापित, मध्ये एस् पी कालेजे प्राचार्यता नीत । अत्र कालेजे पुस्तकालयस्य प्रगति साधयता सस्कृतग्रन्थाना भूयसी सख्यावृद्धिर्विहिता । पुनरप्यसौ प्रशासनेन तदेवोपनिदेशकपदमध्यासित । योग्यताविशेषमाकलय्य तु प्रशासनेनासौ क्रमेण शिक्षानिदेशकपदेऽपि निवेशित, स्वकीयया कार्यकुशलतयाऽमुना महोदयेनास्मिन् पदे प्रतिष्ठितेन शिक्षाविभागस्य कृते नूतननूतना योजना परिकल्पिता, यासामनुष्ठानेनानेपस्यापि प्रदेशस्य महालाभ समजनि । विशेषेण पाठ्यग्रन्थप्रकाशनविभागे नवीना क्रान्तिरानीता, षोडशभ्यो वर्षेभ्य प्रचलन्त प्राचीन पाठ्यक्रम परिवर्त्याभिनवे शिक्षास्तरे समुपयुक्तानि पुस्तकानि प्रकाशितानि । प्राच्य-

विद्यानां विकासाय स्थैर्याय चामुना विदुषाऽद्यापि नवनवा योजनाः परिकल्प्यन्ते, प्रस्तूयन्ते च। हिन्दीसंस्कृतसेवापरायणेभ्यो विद्यालयेभ्यो महाविद्यालयेभ्यश्चात्रभवता पर्याप्तमार्थिकसाहाय्यं प्रदापितमस्ति, यदस्य भारतीयसंस्कृतौ संस्कृते च प्रीतिं प्रमाणयति।

### आङ्ग्लविद्यालयमहाविद्यालयेषु संस्कृतशिक्षा

जम्बूकाश्मीरराज्ये विद्यालयेषु हिन्दूबालकानां कृते हिन्दीसंस्कृतयोः शिक्षायाः प्रबन्धो विद्यते। माध्यमिकेषु, उच्चमाध्यमिकेषु उच्चतरमाध्यमिकेषु च विद्यालयेषु क्रमोऽयमद्यापि प्रचलति। प्रतिविद्यालयं हिन्दीसंस्कृतयोरध्यापनाय प्राज्ञविशारदशास्त्रिप्रभाकराद्यन्यतमपरीक्षोत्तीर्णौ द्वौ शिक्षकौ नियुज्येते, येषां वेतनस्तरो रूप्यकाणां सप्ततेरारभ्य शतं यावदेव भवति, एम् ए परीक्षोत्तीर्णाः संस्कृतशिक्षकास्तु द्विशतीत आरभ्य सार्धत्रिशतीं यावल्लभन्ते। संस्कृताध्येतॄणां छात्राणां सख्या प्रतिवर्षं क्षीयमाणा वर्तते। येषु विद्यालयेषु चत्वारः संस्कृतशिक्षका अपेक्षिता अभवन्, तेष्वद्य क्वचिदेकोऽपि नापेक्ष्यते।

---

### प्रतापपुस्तकालयस्तदीयः संग्रहालयश्च

असौ पुस्तकालयः महाराजहरिसिंहेन स्थापितो विद्यते। अत्र संस्कृतस्य, आङ्ग्लसाहित्यस्य, हिन्दीसाहित्यस्य, उर्दूसाहित्यस्य, फारसीसाहित्यस्य, अरबीसाहित्यस्य च महाग्रन्था विराजन्ते। येषु मुख्यतः संस्कृतवाङ्मयस्य काव्यनाटकवेददर्शनादिविषयका ग्रन्थाः सन्ति। अत्र हस्तलिखितानि पुस्तकानि न सन्ति प्रत्युत प्रकाशितान्येव सहस्रसंख्यकानि विद्यन्ते। अस्य पुस्तकालयस्य सदस्यो भूत्वा कोऽप्येकदा द्वे पुस्तके केवलमेकमासस्य कृते ग्रहीतुं शक्नोति।

प्रतापपुस्तकालयसम्बद्धे संग्रहालये प्राचीनराज्ञां राजचिह्नानि तात्कालिकाः भूगर्भनिःसारिताः प्राचीनपाषाणमूर्तयः सन्ति। अत्र च महाराजरणवीरसिंह-गुलाबसिंहामरसिंहरणजीतसिंहमहानुभावानां पाणिपल्लवैरालिखितानि महान्ति चित्राण्यपि विद्योतन्ते। यैश्च राजपुत्रदेशस्य दर्शकजननयनानन्दकारिरूपं व्यज्यते। इमौ पुस्तकालयसंग्रहालयौ साम्प्रतं संग्रहालयपुस्तकालयानुसन्धाननिदेशककार्यालयाधीनौ स्तः। इतो बहूनि पुस्तकानि जम्मूकाश्मीरविश्वविद्यालयं गतानि सन्ति। १९४८ख्रिष्टाब्दात् (महाराजहरिसिंहराज्यकालात्) परमनयोः पुस्तकालयसंग्रहालययोः स्वरूपं परिवर्तितं जातं, कार्यप्रगतौ च महती न्यूनता जाता। अस्मात्प्रतिष्ठानाद् लब्धसाहाय्या निम्नलिखिता निबन्धलेखकाः सन्ति। १–डा० राधाकृष्णकावः २–डा० विष्णुदत्तः, ३–शिवनाथशर्मा शास्त्री, ४–डा० मोहनहेंग., ५–डा० प्राणनाथ, ६–डा० प्राणकिशोरी ७–डा० विचित्रसिंहः, ८–प्राध्यापको बलिजिन्नाथशास्त्री, ।

## काश्मीरप्रदेशे श्रीनगरस्थशोधसस्थाने स्थितानाम् अप्रकाशितानां ग्रन्थानां परिचयः (अकारादिक्रमानुगतः)

---

### कङ्कालमालिनीतन्त्रम्

असौ देवनागरीलिपिलिखित सम्पूर्ण १६ पत्रात्मकस्तन्त्रग्रन्थ । अस्मिन् ग्रन्थे वर्णवीजसङ्केत-योनिवीज मुद्रा-षडाधारयोनिकवच गुरुपूजनकवच गीता-महाकाली-मन्त्रोद्धार-सक्षिप्तपूजापद्धति पुरश्चरणपूजापद्धतीना निरूपण विद्यते ।

### काकशास्त्रम्

असौ ग्रन्थो गर्गविरचितो देवनागरीलिपिलिखितोऽसम्पूर्णो निरतिशयमहत्त्वपूर्णो विद्यते । अस्मिन् ग्रन्थे बलिनिमित्तस्य पिण्डलक्षणस्य प्रहरक्रमेण काकवृत्तस्य यात्रा कर्तुं समुद्यतस्य जनस्य खगचेष्टितैर्भाविफलसूचनस्य काकगतिप्रयोजनस्याऽन्यविज्ञानस्य शीततोयस्नानादिफलस्य काकजातीना च निरूपण वर्तते ।

### कातन्त्रलघुवृत्ति

असौ देवनागरीलिखितो ३७८ पत्रात्मको नामाख्यातकृत्तद्धितसन्धिभि सन्दर्भैरन्वित शर्मवर्माचार्यविरचितसूत्राणा लघुवृत्तिरूप छुच्छुकभट्टविरचितो व्याकरणशास्त्रीयो ग्रन्थ ।

### कामधेनुतन्त्रम्

असौ देवनागरीलिपिलिखित २१पत्रात्मका महादेवप्रोक्तस्तन्त्रग्रन्थ. । अस्मिन् ग्रन्थे अक्षराणा तत्त्ववर्णादे मातृकामन्त्रस्य ध्यानविधेर्मन्त्रशोध्यागक्रमस्य सदीपिनीविद्याया बीजध्यानस्य कामिनी-जपगुणकारादीना च निरूपण विद्यते ।

### घटयोग

असौ देवनागरीलिपिलिखितो ६ पत्रात्मको घेरण्डसंहितो योगग्रन्थ ।

### चीनाचारतन्त्रम्

असौ देवनागरीलिपिलिखितो महादेवप्रोक्त ७ पत्रात्मकस्तन्त्रग्रन्थ ।

अस्मिन् ग्रन्थे चीनाचारोपदेशानुसारेण वशिष्ठमुनिकर्तृकताराऽऽराधनस्य चीनाचारानुसारिपीठपूजन-सुराशापविमोचनयोः कुलद्रव्यनिर्माणस्य तत्सेवनादेः समयाष्टकस्य कुलाचारशङ्कापनोदनस्य शक्तिपूजाप्रभृतीनां च निरूपण विद्यते ।

## तोडलतन्त्रम्

असौ देवनागरीलिपिलिखितः सम्पूर्णः शिवप्रोक्तस्तन्त्रग्रन्थः । अस्मिन् ग्रन्थे विद्यानां दक्षतायाः पूज्यदेवताया लघुब्रह्माण्डस्य तीर्थमुद्रासनानां कालिकामन्त्रोद्धारस्य तारामन्त्रादेः स्नानसंध्यापूजापद्धतीनां तारापूजाक्रमस्य पार्थिवशिवार्चनस्य कालीमन्त्रवासनायास्तत्पुरश्चरणमन्त्रचैतन्ययोः तारामन्त्रवासना-माहात्म्यादीनां मूलाधारस्थद्वीपाख्यादेः षट्चक्रदेवता-महापीठ--पातालानां शारीरनाडीमानस्य मूलाधारपद्मतन्मानादीना नवार्णवासनाया दीर्घायुःसाधनस्य षण्मालाजपफलस्य कात्यायनीमन्त्रोद्धारादेः काकचञ्चुमुद्राया दशावताराणां देवीनिर्णयादीनां च निरूपणं विद्यते ।

## बालबोधिनीवृत्तिः

असौ भूर्जपत्रेषु शारदालिपिलिखितो जीर्णोऽतिप्राचीनश्छिन्नो द्विशताधिकपत्राऽऽत्मको जगद्धरभट्टविरचितो व्याकरणग्रन्थः ।

## भक्तिरसामृतसिन्धुः

असौ १४६३वैक्रमाब्दे श्रीरूपगोस्वामिविरचितस्य ग्रन्थस्य प्रतिलिप्यात्मको ग्रन्थः श्रीरघुनाथमन्दिरपुस्तकालयाध्यक्षेण देवनागरीलिपौ लिखितः १६०पत्राऽऽत्मकः- साहित्यशास्त्रीयो ग्रन्थः । अस्मिन् ग्रन्थे भक्त्यङ्गतया रसभावतदाभासादीनां भारत्यादिवृत्तिप्रभृतीनां च निरूपणं विद्यते ।

## महार्णवनिबन्धः

असौ मान्धातृनृपनिर्मापितो देवनागरीलिपिलिखितः सम्पूर्णः ३९२पत्रात्मको महाग्रन्थः ।

## मातृकाभेदतन्त्रम्

असौ देवनागरीलिपिलिखितः सम्पूर्णः १९पत्रात्मकः शिवप्रोक्तस्तन्त्रग्रन्थः । अस्मिन् ग्रन्थे रौप्यनिर्माणविधेर्मद्यगन्धापसारणपद्धतेः पुत्रोत्पत्तिस्थित्यादीनां भोजनविधानस्य होमकुण्डस्थमद्यपानविधेर्मद्यमहाशङ्खप्रशंसायाः पारदभस्मीकरणपद्धतेः, शापन्मोचनस्य, ग्रहणमाहात्म्यस्य, चामुण्डाऽऽराधनपद्धतेस्त्रिपुरसुन्दरीपूजाविधेर्गुरुस्तोत्र-

कवचयो सन्ध्याध्यानलिङ्गार्चनयोर्लिङ्गरूपस्य पारदलिङ्गविधानस्य पारदभस्मीकरण-प्रकारान्तरस्य गुरुमन्त्रदेवतानामैक्यस्य पशुप्रदानस्य यज्ञसूत्रधारणस्य पूजाऽऽधारस्य शिवलिङ्गपूजाफलस्य मन्त्रदोषसंस्कारादीना मालाजपग्रन्थिच्छेदनादिदोषस्य त्रिविध-भोगप्रभृतीना च निरूपण पादुकापञ्चकस्तोत्र च विद्यते ।

### रणवीरविजय

असौ विश्वेश्वरविरचितो देवनागरीलिपिलिखितोऽसम्पूर्ण ५८६पत्राऽऽत्मको युद्धविद्याशकुनग्रन्थ । अस्मिन् ग्रन्थे द्वन्द्वयुद्धे जयपराजयज्ञानचक्रादीना पुरभङ्गस्य जलदुर्ग-स्थलदुर्ग-गिरिदुर्गादिभङ्गाना च पद्धतेर्मृगयाया अस्त्रविधीना सग्रामविधीना स्तम्भनमन्त्राणा शत्रुभङ्गमन्त्राणा भावियुद्धशकुनस्य युद्धमाहात्म्यप्रभृतीना निरूपण विद्योतते ।

### रसकामधेनु

असौ चूडामणिसङ्गृहीतो देवनागरीलिपिलिखितो नातिप्राचीन सम्पूर्ण ४०६ पत्रात्मको वैद्यकग्रन्थ ।

### राधातन्त्रम्

असावीश्वरोक्तो देवनागरीलिपिलिखितो ४२ पत्राऽऽत्मक सम्पूर्णस्तन्त्रग्रन्थ । अस्मिन् ग्रन्थे वासुदेवकर्तृकत्रिपुरादर्शनादीना द्वात्रिंशदक्षरमन्त्रमहिम्नो व्रजमथुरयो-रुत्पत्ते पद्मिन्या व्रजागमनस्य, पद्मिन्या राधानाम्ना वृषभानुगृहेऽवतरणस्य, कृष्णा-वतारस्य, वृन्दावनस्थद्वादशारण्यपीठाना ध्यानतत्त्वस्य, कृष्णरहस्यस्य, वासुदेवकर्तृक-नामरूपग्रहणस्य, कृष्णशरीरलक्षणस्य, पद्मिनीतत्त्वस्य, जयाविजया राधामन्त्रध्यानयो-र्हरिनामरहस्यप्रभृतीना निरूपण, राधाकवच, तत्सहस्रनाम च विद्यते ।

### शिवताण्डवम्

असौ दक्षिणामूर्त्तिविरचितो देवनागरीलिपिलिखितो ३२ पत्राऽऽत्मक सम्पूर्णो यन्त्रशास्त्रीयो ग्रन्थ ।

---

## काश्मीरप्रदेशे विंश्यां वैक्रमशताब्द्यां लिखितानां ग्रन्थानां परिचयः

### कल्पवृक्षः

अमुष्य ग्रन्थस्य रचयिता स्वर्गीयः पण्डितसाहिबकौलमहोदयः। असौ प्राप्योऽप्रकाशितश्च विद्यते।

### आखेटप्रश्नः

अमुष्य ग्रन्थस्य प्रणेता क इति न ज्ञायते किन्त्वसौ ग्रन्थोः ज्यौतिषशास्त्रीयः ४६ पत्राऽऽत्मकः समुपलभ्यते।

### विधिसारसंग्रहः

अमुष्य ग्रन्थस्य सम्पादकः श्रीनगरस्थराजकीयसंस्कृतपाठशालाया मुख्याध्यापकः स्वर्गीयः पण्डितश्रीनाथरामशास्त्रिमहाशयः। अमुष्मिन् लौगाक्षिमुनेः कतिपयसूत्राणा विवेचनं ज्यौतिषकर्मकाण्डादिविषयाणा दिग्दर्शन च विद्येते। अधुना ग्रन्थोऽसौ केवलं सम्पादकस्यैव गृहे वर्तते।

### ज्यौतिषसंग्रहस्य भास्करटीका

अमुष्य ग्रन्थस्य रचयिता स्वर्गीय. पण्डित मनसराजानको बभूव। नासौ ग्रन्थः साम्प्रतमुपलभ्यते।

### रणवीरभागवतम्

स्वर्गीयमहाराजरणवीरसिंहस्य सभापण्डितैर्लिखितोऽय ग्रन्थः।

### गोमेधप्रकाशः

असौ ग्रन्थः श्रीनगर-शालकदलवास्तव्येन चण्डीचरणाराधकेन शैववेदान्तज्यौतिषादिप्रकाण्डपण्डितेन श्रीरघुनाथशास्त्रिणा सम्पादितोऽप्रकाशितोऽप्राप्यश्च विद्यते। सम्प्रति केवल सम्पादकस्य गृह एवासौ वर्तते।

### ब्रह्मसंकीर्तनम्

असौ ग्रन्थः श्रीस्वामिब्रह्मानन्दतीर्थेन रचितः।

### घटकर्परकाव्यम्

असौ ग्रन्थः श्रीमदभिनवगुप्तेन रचितः।

## लौगाक्षिगृह्यसूत्रम्

अमुष्मिन् ग्रन्थे श्रीदेवपालकृत भाष्य विद्यते ।

## वामकेश्वरीमतविवरणम्

असौ ग्रन्थो विद्वद्वरेण श्रीजयद्रथेन रचित. ।

## सौन्दर्यलहरीटीका

असौ ग्रन्थ. पण्डितश्रीसुनभट्टशास्त्रिमहोदयेन लिखित., किन्तु नासौ प्रकाशितो न चेदानीमुपलभ्यते ।

## शैवशास्त्रे मांसभक्षणस्य व्यवहृतत्वम्

असौ ग्रन्थः शैवान् बोधयितु काश्मीरस्थेश्वरभवनवास्तव्येन ब्रह्मचारिणा श्रीलक्ष्मणशास्त्रिणा विरचितः ।

## उत्पलस्तोत्रावलीटीका

उत्पलदेवरचितायाः शिवस्तोत्रावल्या हिन्दीटीका प्राध्यापकश्रीजियालाल-कौलेन रचयितुमारब्धा ।

## साम्बपञ्चाशिकाटीका

साम्बपञ्चाशिकाया हिन्दीटीका प्राध्यापकश्रीजियालालकौलेन विरचिता ।

## मुकुन्दमालाटीका

मुकुन्दमालाया हिन्दीव्याख्या श्रीमाधवानन्दसरस्वतीमहानुभावेन लिखिता ।

## महिम्नस्तोत्रटीका

पुष्पदन्तविरचितमहिम्नस्तोत्रस्य हिन्दीव्याख्या पण्डितश्रीमधुसूदनशास्त्रिणा लिखिता, किन्तु सम्प्रति सा नोपलभ्यते ।

## ज्योतिषसंग्रहः

असौ ग्रन्थ· केशवभट्टेन विरचित. ।

## मेखलापद्धतिटीका

असौ टीकाग्रन्थ संस्कृतभाषामयः गोविन्दभट्टशास्त्रिणा लिखितोऽप्रकाशितश्च ।
असौ तत्पुत्रस्य श्रीपृथ्वीनाथभट्टस्य गृहे श्रीनगरस्थकरणनगरनामके बाशानगरे प्राप्येन ।

### पक्षयागः

असौ ग्रन्थ. पण्डितश्रीनाथरामशास्त्रिणा रचितः, सम्प्रति च नोपलभ्यते ।

### शिवरात्रियागटिप्पणी

षट्त्रिंशतत्त्वसन्दोहमाधारीकृत्य लिखिताया शिवरात्रियागपद्धत्याः टिप्पणी श्रीहरभट्टशास्त्रिणा रचिता । असौ टिप्पणी न प्रकाशिता नाप्यधुना लभ्या ।



## काश्मीरप्रदेशे श्रीनगरस्थशोधसंस्थाने महाराजश्रीरणवीरसिंहसमयात् महाराजश्रीहरिसिंहसमयं यावत् संगृहीतानां पाण्डुलिपीनां विषयानुसारिणी सूची

| विषय. | ग्रन्थः | कर्ता, सम्पादको वा. | पृष्ठानि | विवरणम् |
|---|---|---|---|---|
| वेदः | १. शिवसंकल्पविवृतिः | — | ३ | भूर्जपत्रेषु शारदालिपिलिखिता नवीना सम्पूर्णा |
| ,, | २. नवग्रहमन्त्राः | — | ६ | देवनागरीलिपिलिखिता अतिजीर्णा. सम्पूर्णाः |
| ,, | ३. ,, | चण्डीदासः | १०७ | ,, |
| व्याकरण-कोशौ | ४. कातन्त्रलघुवृत्तिः | श्रीछुच्छुकभट्टः | ३७८ | ,, |
| ,, | ५. धातुरूपादर्शः | — | २६७ | ,, अपूर्णः |
| ,, | ६. कलापबालबोधिनीविवृतिः | जगद्धरभट्टः | २०० | भूर्जपत्रेषु शारदालिपिलिखिता जीर्णाऽपूर्णा । |
| ,, | ७. शब्दरूपावली (भाषानुवादोपेता) | — | २६६ | देवनागरीलिपिलिखिता नूतनाप्यपूर्णा । |
| ,, | ८. सारस्वतीप्रक्रिया (भाषोपेता) पूर्वार्द्धम् | अनुभूतिस्वरूपाचार्यः | १०३ | ,, सम्पूर्णा । |

| विषय | ग्रन्थ | कर्ता, सम्पादको वा | पृष्ठानि | विवरणम् |
|---|---|---|---|---|
| व्याकरण-कोशौ | ९. सारस्वतव्याकरणम् (पूर्वार्द्धम्) | — | २६७ | नूतन सम्पूर्णम् |
| ,, | १० ,, द्व | — | २३२ | ,, |
| ,, | ११ नाममाला | — | ४३ | ,, |
| काव्य-नाट्ये | १२ भक्तिरसामृतसिन्धु | श्रीरूपगोस्वामी पुस्तकालयाध्यक्ष | १६० | १४६३वैक्रमाब्दे विरचित १६४५ , देवनागरी-लिपिलिखित सम्पूर्ण |
| ,, | १३ रामकृष्णविलोम-काव्यम् | सूर्यकवि | ६ | देवनागरीलिपिलिखित सम्पूर्णम् । |
| ,, | १४ शिशुपालवधम् | माघकवि | ३०३ | वल्लभदेवकृतव्याख्यान्वित शारदालिपिलिखित भूर्जपत्रे विनष्टबहुलैपत्रात्मकम् । |
| ,, | १५ हास्यार्णवप्रहसनम् | जगदीशकवि | ३० | देवनागरीलिपिलिखित सम्पूर्णम् । |
| नीति | १६ कामन्दकीय-नीतिसार | — | १४१ | ,, |
| ,, | १७ पदातिशिक्षा (प्रथमो भाग) | रणवीरसिंह | ७० | आङ्ग्लभाषानुवाद-सहिता सम्पूर्णा । |
| ,, | १८ रयन्त्रशिक्षा | , | २७५ | ,, |
| ,, | १९ रयन्त्राभ्यास | ,, | १८४ | ,, |
| ,, | २० समुदायशिक्षा (सैन्यशिक्षा) | ,, | ६२ | ,, |
| ,, | २१ हितोपदेश (विषमपदव्याख्योपेत) | विष्णुशर्मा | २०६ | ,, |
| धर्मशास्त्रम् | २२ अपरार्क (शान्तिप्रकरणान्त) | अपरादित्य | ३८२ | देवनागरीलिपिलिखित नवीनाऽपूर्ण । |

| विषयः | ग्रन्थः | कर्ता, सम्पादको वा. | पृष्ठानि | विवरणम् |
| --- | --- | --- | --- | --- |
| ,, | २३. द्वादशीव्रतनिर्णयः | — | १ | शारदालिपिलिखितो नवीनः, अतिप्राचीनो जरदवस्थश्च । |
| ,, | २४. निर्णयामृतम् | गोपीनारायणः | १११ | भूर्जपत्रेषु शारदालिपि-लिखितं जीर्णतमं छिन्नं च । |
| ,, | २५. मनुस्मृतिः | — | ८९ | ,, |
| ,, | २६. महार्णवनिबन्ध-(कर्मविपाकः) | मदनसुनुर्मान्धाता | ३९३ | देवनागरीलिपिलिखितो नवीनोऽसम्पूर्ण.। |
| ,, | २७. रणवीररत्नाकरः (प्रथमो भागः) | रणवीरसिंहः | ४७५ | देवनागरीलिपिलिखितः १९२२ वैक्रमाब्दे विरचितः सम्पूर्णः । |
| ,, | २८. ,, (द्वितीयो भागः) | | ४७१ | ,, |
| ,, | २९. ,, (तृतीयो भागः) | | ५३६ | ,, |
| ,, | ३०. विष्णुस्मृतिः | विष्णुः | ५६ | भूर्जपत्रेषु शारदालिपि-लिखिता प्राचीनतरा सम्पूर्णा । |
| | ३१. विष्णुस्मृतिपर्याय· | — | ६ | ,, ६७,९०,९८ प्रकर-णानां पर्यायरूपः । |
| कर्मका-ण्डम् | ३२. अनन्तपूजा | — | १ | देवनागरीलिपिलिखिता नवीना सम्पूर्णा । |
| ,, | ३३ चतुर्विंशतिगायत्री | — | २६ | ,, |
| ,, | ३४. ,, | | ३६ | ,, |
| ,, | ३५. आह्निकपद्धतिः | नव्यचण्डीदासः | १०८ | ,, |
| ,, | ३६. नित्यहोमविधिः | — | ६ | ,, |
| ,, | ३७. ,, | ,, | १० | ,, तालपत्रेषु |

| विषय: | ग्रन्थ: | कर्ता, सम्पादको वा. | पृष्ठानि | विवरणम् |
|---|---|---|---|---|
| कर्म-काण्डम् | ३८. नित्यहोमविधि: | नव्यचण्डीदास: | ४ | देवनागरीलिपिलिखितो नवीन: |
| ,, | ३९. ,, | ,, | १२ | ,, |
| ,, | ४०. प्रातःकृत्यम् | शङ्कर: | ७ | ,, |
| ,, | ४१. मूलशान्ति: | शौनक: | ४५ | ,, |
| ,, | ४२. ,, | ,, | ४ | ,, प्राचीना जीर्णा च |
| ,, | ४३. लक्ष्मीपूजाविधि: | — | ६ | ,, असम्पूर्णा |
| ,, | ४४. विवाहपद्धति: (टीकोपेता) | शौनको हलायुधश्च | ३२ | ,, |
| ,, | ४५. ,, | ,, | ६ | ,, असम्पूर्णा |
| ,, | ४६. शिवपूजनम् | बोधायन: | १६ | ,, सम्पूर्णम् |
| ,, | ४७. ,, | ,, | ,, | ,, जीर्णम् |
| ,, | ४८. ,, | ,, | १८ | ,, ,, |
| ,, | ४९. श्राद्धकाण्डी | — | ४ | प्राचीना भूर्जपत्रे शारदालिप्याम् । |
| ,, | ५०. षोडशोपचार-ऋङ्मन्त्रा: | — | ६ | देवनागरीलिपिलिखिता: सम्पूर्णा. |
| ,, | ५१. ,, | ,, | ६ | ,, ,, |
| ,, | ५२. ,, | ,, | १२ | ,, ,, |
| ,, | ५३. ,, | ,, | ६ | ,, ,, |
| ,, | ५४. सन्ध्या प्रयोग: | — | १० | ,, ,, |
| ,, | ५५. ,, | ,, | १८ | ,, ,, |
| ,, | ५६. ,, | ,, | १८ | ,, ,, |
| ,, | ५७ सन्ध्याप्रयोग | — | १२ | देवनागरीलिपिलिखित: |
| ,, | ५८. ,, | ,, | १२ | ,, सम्पूर्ण: |
| ,, | ५९. ,, | ,, | २२ | ,, ,, |
| वेदान्त: | ६०. ईश्वरप्रत्यभिज्ञा (विवृतिविमर्शिनीसमेता) | उत्पलदेव. अभिनवगुप्त: | १९९ | भूर्जपत्रेषु शारदालिपिलिखिताऽतिप्राचीनाऽसम्पूर्णा |

| विषयः | ग्रन्थः | कर्ता, सम्पादको वा. | पृष्ठानि | विवरणम् |
|---|---|---|---|---|
| सांख्य-योगौ | ६१. भगवद्गीता | महर्षिव्यासः | ३०३ | देवनागरीलिपिलिखिता नवीना विंशति-चित्रान्विता सम्पूर्णा |
| ,, | ६२. ,, | ,, | १६६ | ,, |
| ,, | ६३. ,, | ,, | २१७ | ,, चित्ररहिता |
| ,, | ६४. योगवासिष्ठम् (भाषाटोकासहितम्) प्रथमं वैराग्यप्रकरणम् | वाल्मीकिः | ३६० | देवनागरीलिपिलिखित नातिप्राचीन सम्पूर्णम् |
| ,, | ६५. ,, द्वितीयं मुमुक्षुप्रकरणम्, | | १६५ | ,, |
| ,, | ६६. ,, तृतीयमुत्पत्तिप्रकरणम् | | ३३० | ,, भाग.-१ |
| ,, | ६७. ,, ,, | ,, | २६८ | ,, भागः-२ |
| ,, | ६८. ,, ,, | ,, | २७५ | ,, भाग.-३ |
| ,, | ६९. ,, ,, | ,, | २६८ | ,, भागः-४ |
| ,, | ७०. ,, चतुर्थस्थितिप्रकरणम्, | | २३१ | ,, भागः-१ |
| ,, | ७१. ,, ,, | ,, | २३५ | ,, भागः-२ |
| ,, | ७२. ,, पञ्चममुपशमप्रकरणम्, | | २६२ | ,, भागः-१ |
| ,, | ७३. ,, ,, | ,, | — | भाग. २,३,४, |
| ,, | ७४. ,, पष्ठं प्रकरणम् | | — | ,, पूर्वोत्तरार्धयोश्चत्वारश्चत्वारो भाग : |
| ,, | ७५. ,, ,, | ,, | २३० | उत्तरार्धे पञ्चमो भागः |
| ,, | ७६. ,, ,, | ,, | ३६५ | ,, ,, पष्ठो भागः |
| ,, | ७७. योगवाशिष्ठसारः | रणवीरसिंहः | २६६ | देवनागरीलिपिलिखितो नवीनोऽसम्पूर्णः। |
| ,, | ७८. रामगीता | शिवः | २१ | देवनागरीलिपिलिखिता नवीना सम्पूर्णा |
| , | ७९. ,, | ,, | ३६ | ,, |
| ,, | ८०. ,, | ,, | ३४ | ,, |

| विषय | ग्रन्थ | कर्ता, सम्पादको वा | पृष्ठानि | विवरणम् |
|---|---|---|---|---|
| साख्य-योगौ | ८१ रामहृदयम् | शिव | ६३ | देवनागरीलिपिलिखितम्, सम्पूर्णम् |
| ,, | ८२ ,, (क) | ,, | ६५ | ,, |
| ,, | ८३ घटयोग | घेरण्ड | ६ | ,, असम्पूर्ण |
| ,, | ८४ पवनविजय (स्वरोदय) | शिव | १६ | ,, सम्पूर्ण |
| ,, | ८५ पातञ्जलभाष्यम् | पतञ्जलि | ४२ | भूर्जपत्रेषु शारदालिपिलिखित प्राचीनतमम् |
| ,, | ८६ शिवस्वरोदय (भाषाटीकोपेत) | शिव | ६५ | देवनागरीलिपिलिखितो नवीनोऽसम्पूर्ण । |
| ,, | ८७ साख्यविवृति | विग्रहराजभट्ट | २० | भूर्जपत्रेषु शारदालिपिलिखितोऽतिप्राचीनोऽसम्पूर्ण |
| ज्योतिषम् | ८८ आखेटप्रश्न | — | ४७ | देवनागरीलिपिलिखितो नवीनोऽसम्पूर्ण |
| ,, | ८९. काकशास्त्रम् | गर्गो गौतमश्च | ७२ | द्वौ भागौ प्रथम पूर्णोऽपरोऽपूर्ण |
| ,, | ९० नरपतिजयचर्या (टीकोपेता) | नरपतिविश्वेश्वरौ | ६३ | देवनागरीलिपिलिखिता नवीनाऽपूर्णा |
| ,, | ९१ ,, | | ८ | तालपत्रेषु लिखिता |
| ,, | ९२ मूहूर्तचन्द्रिका | — | १६२ | देवनागरीलिपिलिखिता प्राचीना सम्पूर्णा । |
| | ९३ मेघमाला (भाषा) | मेघराज | ५६ | ,, जीर्णा छिन्ना च । |
| ,, | ९४ रणवीरविजय (भाषाटीकोपेत) | विश्वेश्वर | ५८६ | नवीन सम्पूर्ण । |
| ,, | ९५ लीलावती | भास्कराचार्य | १७५ | ,, |
| ,, | ९६ वसन्तराजशाकुनम् (भाषाटीकोपेतम्) | वसन्तराज | २७० | ,, |

| विषयः | ग्रन्थः | कर्ता, सम्पादको वा. | पृष्ठानि | विवरणम् |
|---|---|---|---|---|
| ज्यौतिषम् | ९७. स्कन्धास्थिप्रश्नाः | विश्वेश्वरः | ६० | नवीनाः सम्पूर्णश्च |
| ,, | ९८. स्वप्नचिन्तामणिः | दुलर्भराजात्मजः श्रीमद्देवः | ४६ | ,, |
| वैद्यकम् | ९९. यवनचिकित्सा | — | ५०५ | जीर्णा छिन्ना च। |
| ,, | १००. रसकामधेनुः | चूडामणिः | ४०६ | ,, ,, |
| ,, | १०१. शालिहोत्रम् | गणकविः | ६५ | ,, असम्पूर्णम् |
| पुराणम् | १०२. नीलमतपुराणम् | नीलमुनिः | ११६ | प्राचीन सम्पूर्णम् |
| ,, | १०३. ,, | ,, | ५७ | ,, ,, |
| ,, | १०४. भागवतम् | महर्षिव्यासः | ६८० | ,, ,, |
| ,, | १०५. कथासरित्सागरः (भाषानुवादः) | भट्टसोमदेव. | २६५ | ,, असम्पूर्णो नवीनश्च कथामुखप्रलम्बकः |
| ,, | १०६. ,, | ,, | १२ | ,, कथापीठ-प्रलम्बकस्य प्रथमस्तरङ्गः |
| ,, | १०७. ,, (भाषानुवादसहितः) | ,, | १६ | ,, द्विर्गताक्षरेषु |
| ,, | १०८. महाभारतम् (भाषानुवादसहितम्) | व्यासः | २६३ | देवनागरीलिपिलिखितं नवीनम् शान्तिपर्वणः प्रथम भागः |
| | ११९. ,, | ,, | २४३ | ,, द्वितीयो भागः |
| ,, | १२०. ,, | ,, | २८४ | ,, तृतीयो भागः |
| ,, | १२१. ,, | ,, | २८६ | ,, चतुर्थो भागः |
| ,, | १२२. ,, (भाषानुवादः) | ,, ,, | ४३ | भूर्जपत्रेषु शारदालिपि-लिखितं प्राचीनतरं जीर्णं सम्पूर्णम्। |
| ,, | १२३. रामचरितमानसम् | तुलसीदासः | २३५ | देवनागरीलिपिलिखितं प्राचीनं जीर्णं सम्पूर्णम् |
| ,, | १२४. रामायणम् | ,, | १६३ | ,, बालकण्डम् |
| ,, | १२५. ,, | ,, | १४३ | अरण्यकिष्किन्धासुन्दर काण्डात्मकम्। |

| विषय | | ग्रन्थ | कर्ता, सम्पादको वा | पृष्ठानि | विवरणम् |
|---|---|---|---|---|---|
| पुराणम् | २२६ | रामायणम् | तुलसीदास | १६४ | अयोध्याकाण्डम् |
| ,, | १२७ | , | | ११६ | उत्तरकाण्डम् |
| ,, | १२८ | हरिवंशसंग्रह | महर्षिव्यास | १४३ | भूर्जपत्रपु शारदालिपिलिखितो जीर्णश्छिन्नश्च |
| संगीतादि | १२६ | दानलीला | राजेन्द्र | ३५ | देवनागरीलिपिलिखिता नवीना सम्पूर्णा |
| ,, | १३०. | भक्तविनोद | भीमसिंह | १३३ | ,, |
| ,, | १३१ | रणवीरसिंहचरितम् | ,, | ४० | ,, |
| ,, | १३२ | संगीतविधानम् | — | १३४ | ,, |
| तन्त्रम् | १३३ | इन्द्रजालम् | शिव | ६ | ,, |
| ,, | १३४ | उड्डामेश्वरतन्त्रम् | ,, | २६ | ,, |
| ,, | १३५ | उड्डीशतन्त्रम् | ईश्वर | ५६ | ,, |
| ,, | १३६ | कंकालमालिनीतन्त्रम् | भैरव | १६ | ,, |
| ,, | १२७ | कक्षपुट (रसरत्नाकर) | सिद्धनागार्जुन | ७८ | ,, |
| ,, | १३८ | कामधेनुतन्त्रम् | महादेव | २१ | ,, असम्पूर्णम् |
| ,, | १३६ | कामरत्नम् | नागभट्ट | ३३ | ,, ,, |
| ,, | १४० | कामाख्यातन्त्रम् | शिव | १६ | ,, ,, |
| ,, | १४१ | कुलार्णवतन्त्रम् | ईश्वर | २२३ | ,, सम्पूर्णम् |
| ,, | १४२ | ,, | ,, | ५७ | ,, |
| ,, | १४३ | कौलावलीनिर्णय | ज्ञानानन्द | ११६ | ,, |
| ,, | १४४ | क्रमदीपिका | केशवभट्ट | ३२ | ,, |
| ,, | १४५. | गन्धर्वतन्त्रम् | शिव | ११८ | ,, |
| ,, | १४६ | गायत्रीतन्त्रम् | ,, | २३ | ,, |
| ,, | १४७ | गुप्तसाधनतन्त्रम् | ,, | १० | ,, |
| ,, | १४८ | गौतमीयतन्त्रम् | नारद | ७४ | ,, |
| ,, | १४६ | चीनाचारक्रम | शिव | ७ | ,, |
| ,, | १५० | ज्ञानार्णवतन्त्रम् | ,, | १४१ | ,, |

| विषयः | ग्रन्थः | कर्ता, सम्पादको वा. | पृष्ठानि | विवरणम् |
|---|---|---|---|---|
| तन्त्रम् | १५१. तन्त्रसारः | कृष्णानन्दः | ३६४ | नवीनं सम्पूर्णम् |
| ,, | १५२. ,, | ,, | ६ | ,, असम्पूर्णम् |
| ,, | १५३. तारारहस्यम् | ब्रह्मानन्दगिरितीर्थः | ३२ | ,, सम्पूर्णम् |
| ,, | १५४. तोडलतन्त्रम् | शिवः | १२ | ,, |
| ,, | १५५. त्रिपुरासारसमुच्चयः (सटीकः) | नागभट्ट. | ४८ | ,, |
| ,, | १५६. दत्तात्रेयतन्त्रम् | ईश्वरः | — | ,, |
| ,, | १५७. देवीमाहात्म्यम् | महर्षिव्यासः | १४५ | ,, अन्तिमपृष्ठहीनम् |
| ,, | १५८ ,, | ,, | ११८ | ,, |
| ,, | १५९. देवीमाहात्म्यम् | महर्षिव्यासः | ७५ | देवनागरीलिपिलिखित नवीनं सम्पूर्णम् । |
| ,, | १६०. ,, | ,, | १२६ | ,, |
| ,, | १६१. ,, | नरसिंहात्मजो-नारायणः | ८० | भूर्जपत्रेषु शारदालिपिलिखितं जीर्णं सम्पूर्णम् । |
| ,, | १६२ देवीरहस्यम् | भैरवः | २१७ | देवनागरीलिपिलिखितं-प्राचीनमसम्पूर्णम् । |
| ,, | १६३. निरुत्तरतन्त्रम् | शिवः | ३ | ,, नवीनमसम्पूर्णम् |
| ,, | १६४. निर्वाणतन्त्रम् | ,, | १६ | ,, सम्पूर्णम् |
| ,, | १६५. प्रकीर्णाशतन्त्रम् | ईश्वरः | २४ | ,, ,, |
| ,, | १६६. फेत्कारिणीतन्त्रम् | ,, | ३४ | ,, ,, |
| ,, | १६७. बृहन्नीलतन्त्रम् | महाकालभैरवः | ४६ | ,, ,, |
| ,, | १६८. महानिर्वाणतन्त्रम् | सदाशिवः | ८२ | ,, ,, |
| ,, | १६९. मातृकाभेदतन्त्रम् | शिवः | १९ | ,, ,, |
| ,, | १७०. योगिनीतन्त्रम् | ईश्वरः | ८९ | ,, ,, |
| ,, | १७१. राधातन्त्रम् | ,, | ४२ | ,, ,, |
| ,, | १७२. रुद्रयामलम् | भैरवः | १९९ | ,, उत्तरकाण्डम् |
| ,, | १७३. विद्यार्णवतन्त्रम् | विद्यारण्ययतिः | ४०८ | ,, प्रथमोभागः |
| ,, | १७४. ,, | ,, | ६३३ | ,, द्वितीयोभागः |
| ,, | १७५. शक्तिसंगमतन्त्रम् | ,, | १९३ | ,, सम्पूर्णम् |
| ,, | १७६. शाक्तानन्दतरङ्गिणी | ब्रह्मानन्दगिरिः | ६५ | ,, ,, |

| विषय. | ग्रन्थः | कर्ता, सम्पादको वा. | पृष्ठानि | विवरणम् |
|---|---|---|---|---|
| तन्त्रम् | १७७. शारदातिलकम् | लक्ष्मणकृष्णात्मजः | ११५ | सम्पूर्णम् |
| ,, | १७८. शिवताण्डवम् (यन्त्रशास्त्रं सटीकम्) | दक्षिणामूर्ति नीलकण्ठः | ३१ | टीकालेखनकालः १६० शकाब्दम् |
| ,, | १७९. श्यामारहस्यम् | पूर्णानन्दगिरिः | १८५ | ,, |
| ,, | १८०. ,, | ,, | ६६ | प्राचीनम् असम्पूर्णम् |
| ,, | १८१. सनत्कुमारतन्त्रम् | शिवः | १२ | ,, सम्पूर्णम् |
| ,, | १८२. षट्कर्मदीपिका | कृष्णानन्द. | १५ | ,, असम्पूर्णा |
| स्तो-आदिः | १८३. अनुस्मृति. | कृष्णानन्दः | १६ | देवनागरीलिपिलिखिता नातिप्राचीना सम्पूर्णा |
| ,, | १८४. अपराजितविद्या | नारदः | ८ | |
| ,, | १८५. ,, | ,, | ११ | |
| ,, | १८६. अपामार्जनस्तोत्रम् | पुलस्त्यः | १४ | |
| ,, | १८७ आदित्यहृदयम् | महर्षिव्यासः | ५५ | सम्पूर्णम् |
| ,, | १८८. ,, | ,, | ,, | |
| ,, | १८९. इन्द्राक्षीस्तोत्रम् | इन्द्रः | ५ | |
| ,, | १९०. कृष्णाष्टोत्तरशतनाम | महर्षिव्यासः | ६ | |
| ,, | १९१. ,, | ,, | १५ | |
| ,, | १९२. ,, | ,, | १३ | |
| ,, | १९३ गजेन्द्रमोक्षणम् | ,, | ४५ | |
| ,, | १९४ गणपतिसहस्रनामावली | — | ५९ | |
| ,, | १९५ गणेशस्तोत्रम् | श्रीकृष्णः | ६ | |
| ,, | १९६. ,, | ,, | १० | |
| ,, | १९७ गदाधरनीराजनम् | चण्डीदासः | ११ | |
| ,, | १९८. गुरुगीता | महेश्वरः | ४० | |
| ,, | १९९. ,, | ,, | २८ | |
| ,, | २००. गुरुस्तोत्रम् | ,, | ७ | |
| ,, | २०१. ,, | ,, | ८ | |
| ,, | २०२. गोविन्दस्तोत्रम् | यमः | ५ | |
| ,, | २०३. ,, | ,, | ? | |

| विषयः | ग्रन्थः | कर्ता, सम्पादको वा. | पृष्ठानि | विवरणम् |
|---|---|---|---|---|
| स्तो-श्रादिः | २०४. जानकीशतनाम | श्रीरामः | ५ | देवनागरीलिपिलिखितम् नवीनम् सम्पूर्णम् |
| ,, | २०५. त्रिशती (ललितात्रिशती) | महर्षिव्यासः | ५६ | ,, |
| ,, | २०६. दुर्गास्तोत्रम् | व्यासः | १० | ,, |
| ,, | २०७. ,, | ,, | ६ | ,, |
| ,, | २२८. ,, | ,, | ८ | ,, |
| ,, | २०९. ,, | ,, | ६ | ,, |
| ,, | २१०. ,, | ,, | १० | ,, |
| ,, | २११. देवीकवचम् | ,, | १८ | ,, |
| ,, | २१२. नारायणहृदयम् | — | ६ | ,, |
| ,, | २१३. पादुकास्तोत्रम् | शिवः | ७ | ,, |
| ,, | २१४. ,, | ,, | ८ | ,, |
| ,, | २१५. भावनीसहस्र-नामावली | ,, | ५२ | ,, |
| ,, | २१६. भवानीस्तोत्रम् | ब्रह्मा | ६ | ,, |
| ,, | २१७. ,, | ,, | ८ | ,, |
| ,, | २१८. भीष्मस्तवराजः | महर्षिव्यासः | ३५ | ,, |
| ,, | २१९. मङ्गलस्तोत्रम् | शङ्करः | ८ | ,, |
| ,, | २२०. महालक्ष्मीकवचम् | विष्णुः | ३ | ,, |
| ,, | २२१. ,, | ,, | ४ | ,, |
| ,, | २२२. महालक्ष्मीस्तोत्रम् | इन्द्रः | ५ | ,, |
| ,, | २२३. ,, | ,, | ६ | ,, |
| ,, | २२४. महिम्नस्तोत्रम् | पुष्पदन्तः | २६ | ,, |
| ,, | २२५. ,, | ,, | २८ | ,, |
| ,, | २२६. ,, | ,, | १५ | ,, |
| ,, | २२७. मृत्यवष्टकम् | मार्कण्डेयः | ३ | ,, |
| ,, | २२८. ,, | ,, | ४ | ,, |
| ,, | २२९. ,, | विष्णुः | ३ | ,, |
| ,, | २३०. ,, | ,, | ३ | ,, |

| विषयः | ग्रन्थः | कर्ता, सम्पादको वा. | पृष्ठानि | विवरणम् |
|---|---|---|---|---|
| स्तो- आदिः | २३१. रामकवचम् | शिवः | — | एकस्मिन् विस्तृते पत्रे देवनागरीलिपिलिखित नवीनं सम्पूर्णम् |
| ,, | २३२. ,, | ,, | ८ | ,, |
| ,, | २३३. ,, | ,, | १४ | ,, |
| ,, | २३४. ,, | ,, | १२ | ,, |
| ,, | २३५. ,, | ,, | १७ | ,, |
| ,, | २३६. रामाक्षरस्तोत्रम् | ,, | २० | ,, |
| ,, | २३७. ,, | ,, | १३ | ,, |
| ,, | २३८. रामसहस्रनाम | शिवः | ३६ | ,, |
| ,, | २३९. रामस्तोत्रम् | ब्रह्मा | ४ | ,, |
| ,, | २४०. ,, | ,, | ५ | ,, |
| ,, | २४१. ,, | ,, | ४ | ,, |
| ,, | २४२. रामहृदयम् | शिवः | २५ | ,, |
| ,, | २४३. लक्ष्मीनृसिंहकवचम् | महर्षिव्यासः | ५ | ,, |
| ,, | २४४. ,, | ,, | ६ | ,, |
| ,, | २४५. लक्ष्मीहृदयम् | — | २३ | ,, |
| ,, | २४६. लघुचण्डी | — | १२ | ,, |
| ,, | २४७. ,, | — | ७ | ,, |
| ,, | २४८. ,, | — | × | ,, |
| ,, | २४९. लघुस्तव. | — | ६ | ,, |
| ,, | २५०. ललितासहस्रनामकम् (भाष्यसहितम्) | भारतीभास्करराय: | २६५ | ,, |
| ,, | २५१. ललितासहस्र नामावली | ,, | ५८ | ,, |
| ,, | २५२. वटुकभैरवकवचम् | शिवः | ६ | ,, |
| ,, | २५३. वटुकभैरवस्तोत्रम् | ,, | ४ | ,, |

| विषयः | ग्रन्थः | कर्ता, सम्पादको वा. | पृष्ठानि | विवरणम् |
|---|---|---|---|---|
| स्तोत्रादिः | २५४. विष्णुनामसहस्रम् | महर्षिव्यासः | ४६ | देवनागरीलिपिलिखित नवीनं सम्पूर्णम् |
| ,, | २५५. विष्णुसहस्रनामावली | ,, | ४२ | ,, |
| ,, | २५६. ,, | ,, | ७६ | ,, |
| ,, | २५७. ,, | ,, | ६५ | ,, |
| ,, | २५८. ,, | ,, | ५७ | ,, |
| ,, | २५९. ,, | ,, | ५३ | ,, |
| ,, | २६०. ,, | ,, | ९२ | ,, |
| ,, | २६१. ,, | ,, | ८४ | ,, |
| ,, | २६२. शिवसहस्रनामावलिः | व्यासः | ५१ | ,, |
| ,, | २६३. शिवस्तोत्रम् | — | ५ | ,, |
| ,, | २६४. ,, | — | ६ | ,, |
| ,, | २६५ शिवस्मरणम् | — | ३६ | ,, |
| ,, | २६६. शीतलास्तोत्रम् | ईश्वरः | ४ | ,, |
| ,, | २६७. ,, | ,, | ५ | ,, |
| ,, | २६८. संकटस्तोत्रम् | — | ८ | ,, |
| ,, | २६९. सूर्यकवचम् | शिवः | — | ,, |
| ,, | २७०. ,, | ,, | १० | ,, |
| ,, | २७१ ,, | ,, | ६ | ,, |
| ,, | २७२. हनुमत्कवचम् | विभीषणः | १० | ,, |
| ,, | २७३. ,, | ,, | १६ | ,, |
| ,, | २७४. हनुमत्स्तोत्रम् | ,, | ४ | ,, |
| ,, | २७५. ,, | ,, | ४ | ,, |

# काश्मीरानुसन्धानसंस्थाने सुरक्षितानां पालोभापामयीनां पाण्डुलिपीनां सूची



| ग्रन्थः | पृष्ठानि | विवरणम् |
|---|---|---|
| १. ईश:-नगीन | १४१ | प्रथमोभागः |
| २. " | १८८ | द्वितीयोभागः |
| ३. " | ४४२ | तृतीयोभागः |
| ४. " | २६ | चतुर्थोभागः |
| ५. जाङ्गीकण | २६२ | × |
| ६. लुमरुम | २३३ | × |
| ७. वन्सोजोगात | २८६ | × |
| ८. दुर्जेचुलः | ५३६ | × |
| ९. अङ्गणस्मापो | ५४६ | × |
| १०. " | ५१४ | द्वितीयोभागः |
| ११. यमनायापः | ५२७ | × |
| १२. युमतराङ्ग | ५१३ | × |
| १३. " | ५३८ | द्वितीयोभागः |
| १४. दोमाराण | ४६० | × |
| १५. काबून | ३५७ | × |
| १६. गोङ्ग | २१७ | × |
| १७. कुन्दराग | ३३८ | × |
| १८. डोल्वातापः | २८२ | × |
| १९. " | ५०० | द्वितीयोभागः |
| २०. " | ३३६ | तृतीयोभागः |
| २१. " | ४५२ | चतुर्थोभागः |
| २२. यमनापः | ५२४ | " |
| २३. " | ४२५ | द्वितीयोभागः |

# काश्मीरिकाणां संस्कृतकोविदानां सूची
## (अकारादिक्रमानुगता)



१. अमरनाथकाकः
२. ईश्वरकौलः
३. कृष्णदत्तशास्त्री
४. कृष्णपण्डितः (टपिलूः)
५. केशवभट्टो ज्योतिर्विद्
६. गुरुचरणदासः (स्वामी)
७. गोपालराजानकः
८. गोविन्दकौलः (स्वामी)
९. गोविन्दकौलः
१०. गोविन्दभट्टशास्त्री
११. गोविन्दयक्षः
१२. गोविन्दराजानकः
१३. जगदीशशास्त्री महामहोपाध्यायः
१४. जगद्धरजाडूः
१५. जनार्दनयक्षः
१६. जिन्दकौलः
१७. जियालालकौलः
१८. जियालालो धरः
१९. जियालालः प्राध्यापकः
२०. त्रिभुवननाथशास्त्री
२१. दयारामपण्डितः
२२. दामोदरपण्डितः
२३. दीनानाथयक्षः
२४. देवगिरिः
२५. नाथरामशास्त्री
२६. नित्यानन्दशास्त्री
२७. नीलकण्ठगुरुटूः
२८. परमानन्दपण्डितः
२९. पुष्करनाथशास्त्री
३०. पृथ्वीनाथपुष्पः
३१. प्रेमनाथनेहरूः
३२. बद्रीनाथनाजिरः
३३. बद्रीनाथशास्त्री
३४. बलजिन्नाथपण्डितः
३५. भद्रीनाथकल्ला
३६. भास्करराजानकः
३७. मधुसूदनकौलः
३८. महतावकाकः (स्वामी)
३९. महादेवत्रिकः
४०. महेश्वरराजानकः
४१. मुकुन्दत्रिकः
४२. मुकुन्दरामो महामहोपाध्यायः
४३. राधाकृष्णकावः
४४. रामकृष्णकविः

४५ रामचन्द्रकाक
४६ रामचन्द्रगाडरू
४७ रामचन्द्रभट्ट
४८ लक्ष्मणराजानक (स्वामी ईश्वरस्वरूपो वा)
४९ लसकाकराजानक
५० वामदेव
५१ वासुदेवगञ्जू
५२ विद्याधर (स्वामी)
५३ शिवनाथशास्त्री
५४ शिवोपाध्याय
५५ श्रीकण्ठकौल
५६ साहिबराम
५७ सुखानन्दजाडू
५८ सुदर्शनराजानक
५९ हरभट्टशास्त्री
६० हरिकृष्णमिर्जा
६१ हृदयनाथकौल



## श्रीअमरनाथकाक

विंशया शताब्द्या केचिद् विद्वासो राजनैतिकम् अपरे सामाजिकम्, इतरे च धार्मिकम् इत्येवमेकविधमेव क्षेत्र स्वीयकर्मकलापभूमित्वेन स्वीकृत्य काश्मीरमातृभूमिं निषेवितवन्त । परन्तु अमरनाथकाक सर्वाण्येव क्षेत्राणि प्रभाव्य समाज देश च सिषेवे । "द्वादशरूप्यकमितमासिकवेतन कश्चिदध्यापक समुन्नते शिखरमारोहन् काश्मीरराज्यस्य धारासभाया (Legislative Assembley) उपाध्यक्ष पर्यव्रियत' इत्येव तस्य सक्षिप्त परिचय ।

अमरनाथकाकस्य जन्म १९४७ विक्रमाब्दे श्रीनगरस्थे कृष्णयजुर्वदशाखाध्यायिनि धर्मनिष्ठे सारस्वतब्राह्मणकुले समभूत् । 'काक' इति तत्कुलोपनाम । असौ श्रीनगरस्थे आङ्गलविद्यालयेऽधीत्य प्रवेश(मैट्रिक्युलेशन)परीक्षामुत्तीर्य च श्रीनगरसनातनधर्महिन्दूस्कूलविद्यालये वैतनिकाध्यापनकार्यं कञ्चित्काल यावदकरोत् । तत काश्मीर राजकीयशिक्षाविभागे १२)रूप्यकमासिकवेतन लब्ध्वाऽध्यापकोऽभवत् । तत्र चाध्यापनेन सहैव स्वयमपि विद्यावृद्धिं कुर्वाण क्रमश एफ० ए०-बी० ए० परीक्षे समुदतरत् । ततो वाक्कीलपरीक्षाम् एल एल बी सज्ञामुत्तीर्य वाक्कीलत्व कर्तुमारेभे । एतदन्तया पाश्चात्यशिक्षया सहैवासौ सुप्रसिद्धात् श्रीहरभट्टशास्त्रिण सस्कृतभाषा मन्वादिधर्मशास्त्राणि चाधीत्य वाक्कीलवृत्तिमुपाजीवत्, कतिपयैरेव च वर्षैरुच्चन्यायालये श्रेष्ठ

अधिवक्ताऽमन्यत। सरसप्रू जिन्हाप्रभृतय प्राड्विवाका सरबरजोरदलालसदृशो न्याया-धीशश्चापि तमश्लाघत।

काश्मीरसनातनधर्मसभाया प्रधानामात्यतामध्यक्षता च वहताऽमुना चिर हिन्दूना धार्मिक सामाजिक च जीवनमुन्नमयितु भृश प्रायतत। पाठशाला-व्यायाम-शाला-वाचनालयादि-स्थापनेन गीताभवनादीनामुद्घाटनेन चासौ जनाना धार्मिकी, कायिकी, बौद्धिकी चाभ्युन्नतिमसाधयत्। परमवैष्णवोऽसौ देवालयाना सरक्षणे परायण सन् श्रीनगरे शिवालय नाम धार्मिक केन्द्रमस्थापयत्। १९३१ ख्रिष्टाब्दे हिन्दुषु समापतितानाम् आपदा निवारणे, राज्यकार्यपद्धतिपरिवर्तने च सदोद्युक्तेनाऽमुना प्रजासभाया सदस्यत्व, निर्वाचनान्तरे चोपप्रधानत्वमधिगतम्। अमुष्योपदेशेन दूषितधर्मा शतशो नराश्च नार्यश्च पुन स्व(हिन्दू)धर्ममङ्गीचक्रु। राष्ट्रियभावनाभि-र्भरितहृदयेनामुना हिन्दीसस्कृतभाषयोरपि भूयान् प्रचार कृत। श्रीनगरे हिन्दीसाहि-त्यपरिषद्, मातृभाषामन्दिरम्, महिलामहाविद्यालयश्चाद्य यद् रूप प्राप्तवन्त, तदपि खल्वमुष्यैव वैदुष्यनिधे प्रयासाना प्रसव। पुरा काश्मीरसर्वकारेण देवनागरीलिपेरपि पारसीकलिप्या समान सम्मान वितन्वताऽमुष्मादेव विदुष काचित्प्रेरणा समधिगताऽभूदिति प्रगीयते। तत्रत्येषु शिक्षणालयेषु छात्राणा धर्मशिक्षाप्रदानेऽपि विद्वद्वरोऽसावेव समुदयुङ्क्त। १९४७ ख्रिष्टाब्दे परिस्थितिवशात् सपरिवारोऽसौ मध्यप्रदेशे गोपाचल-मागत्याध्यवात्सीत्, अध्ययासीच्च महती प्रतिभाप्रभावविख्यातिम्। भारतीयसस्कृति-रक्षार्थमसौ मेखलासस्कारविषये गायत्र्यर्थोपबृहित ग्रन्थमलेखीत्, यदद्याप्यमुद्रित-मेव तिष्ठति। केनाप्यसाध्येन व्याधिनाऽभिभूतश्चासौ काश्यपभूमिसूनु १९६३ख्रिष्टाब्दे तु गोलोक प्रातिष्ठत।

---

## ईश्वरकौलमहोदय

तत्र भवान् ईश्वरकौल काश्मीरेषु श्रीनगरे ऋषिप्रवीराम्याशदेशे जनि लेभे। अमुष्य जन्मकालो नवत्युत्तराष्टदशशतकमितो (१९८०) वैक्रमाब्द आसीत्। सरजार्ज-ग्रियर्सननामकस्य पाश्चात्यविदुषो मतेन त्रयस्त्रिंशदुत्तरेऽष्टादशशततमे हायने एष महानु-भावो जनुरवापेति काश्मीरशब्दामृतभूमिकायामुट्टङ्कितमस्ति। अमुष्य तातपाद श्रीगणेशकौल आसीत्। असौ महानुभावस्त्रिषु सूनुष्वस्मिन्नेव कनीयसि सुते भव्यतावुद्धि कुशाग्रधिय च निश्चिकाय। एवमस्य भविष्यद्भाग्यर्द्धि च निरधारयत् भविष्यद्वाक्यमपि व्याजहार यत्-अय मे तृतीयस्तनुज स्वभाग्यसम्पत्त्या कविरवधिया च विश्वस्मिञ्जगति

निवृतो भविष्यतीति । ईश्वरकौले दशमे वत्सरे वर्तमाने सति तत्पिता श्रीगणेशकौलः स्वरयासीत्, माता त्वस्य तृतीयेऽब्दे शैशव एवामरलोकमगमत् । अतोऽस्य पालनपोषणात्मको भारोऽग्रजस्यैवोपरि समापतित । दयापरवशा ज्येष्ठा भ्रातृजाया चास्मै नितरामस्निह्यत् । बाल्यादेवासावेकाग्रधिया विद्याध्ययनेऽत्यन्त प्रायतत । विद्याभ्यासोपायास्तदानी सन्तोषप्रदा नाऽऽसन् । विद्यामभ्यस्यतोऽस्य महानन्तरायोऽजनिष्ट, यदस्याग्रज एतदुपजीव्याया भ्रातृजायाया सद्भावेऽप्यपरा पत्नी पर्यणैषीत् । स्वभ्रातुरस्माद् दुश्चरितादसौ नितरामखिद्यत । अायतिमपश्यन्नेवैष तस्मात्पृथग् भूत्वा तदीय गृहमुत्ससर्ज । जातुचिदप्यनेनैव हेतुना तेन सार्धं पुन सन्धानपरायणो न बभूव । यस्या कस्याञ्चिदपि समापन्नायामापदि स्वाध्यायक्रम च न चिच्छेद । न तदा कापि राजकीया पाठशाला नियमेन चलति स्म । छात्रा गुरूणा मौलवीपदाभिधेयाना पण्डिताना च गृहाण्येत्य तेभ्यो विनयातिशयेन विद्यामधीयते स्म । तेषु दिवसेषु मुद्रिता पाठ्यग्रन्था अपि नोपलभ्यन्ते स्म । विद्यार्थिनो हस्तलिखितेषु ग्रन्थेष्वेव स्वाध्यायमुपक्रमन्ते स्म, ग्रन्थास्ते वशपरम्परातो लभन्ते स्म । दुरदृष्टवशात् स्वभ्रातुरन्तरायेण तथा तदानी विद्याया कष्टसाध्यत्वेन च यथेच्छ विद्यामधिगन्तु स नाशक्नोत् । इतश्चास्य भ्राता मात्सर्यात्तदानीमध्यापनरतामुख्यानन्यानप्यान् पण्डितान् अस्याध्यापनाद्वारयामास । तथा तस्य विद्याप्राप्त्यै कस्यापि पण्डितस्य गृह प्रवेश च न्यषेधत् । कृच्छ्रेणापि चासौ न कमपि विद्योपाध्याय प्राप्नोत् । एव स्थिते स स्वार्थे सर्वाणि विद्यागमद्वाराणि निरुद्धानि पर्यचिनोत् । एवमपि स्वहृद कातर्यं तेन न प्रकटितम् । महाध्यवसायितया न प्रचुरानपि विघ्नानुपेक्ष्य स्वाध्यायविधि नोत्ससर्ज । अथ याथार्थ्येन विद्याधीत्यै निश्चित्य । स्वाभिलाषपूर्तये तदा नेदीयान ग्ईसपदाभिधेय श्रीतिलकचन्द्रमुन्शीतिनामान पण्डितप्रवरमुपासर्पत्, विज्ञवेदयच्च स्वेप्सितम् । श्रीतिलकचन्द्रोऽमुष्य विद्याध्ययनबुभुक्षितामनुरागिता स्थिर निश्चयञ्च विज्ञाय तदापन्निवृत्तये सुबहु प्रायतत । असौ स्वगुरुमगुरु श्रीकपिलभट्टपक्ष चामुमध्यापयितु सुतरामनुदत् । यद्यपि श्रीकपिलभट्टोऽपि स्वप्रतिष्ठितयजमानस्यान्ययर्थनामुररीचकार । अथ व्यवस्थाक्रम कथञ्चिदमुमाह्लादयामास, एराब्द यावत् सुधियमम् बाल पाठयित्वा कपिलभट्टः पञ्चत्वमुपययौ । अनया घटनयोद्विग्नचेता कश्चित् कालमसौ वाल्दिनीरो भूत्वा किङ्कर्त्व्यमूढ इवावतस्थे । अथामावचिन्तयद् यत्-श्रीनगरे तदध्ययनप्रबन्धो दुष्कर इति । तथाऽन्योऽप्यसौ जम्बूदेश गन्तु मनि चकार यत्र गत्वा सोऽद्दय निर्विघ्नमाप्नु शक्नुयात् । उद्यमो भैरव इति प्रसिद्ध निगमूत्रार्थमनुस्मरन् तनौद्यमसमन्त्य जम्बूदेशगमनाय निश्चयोऽकारि । तत्र च प्रस्थानसमागमनमम्नकन्नामुष्यावरजस्मौलवनमगत्नुमानेन दृष्टंदा भ्राता राजपुरुषेभ्यो विज्ञप्त मदीयवरकौला

यायावरो भूत्वा गृहात्पलायते इति । अथ रक्षापुरुषैस्तद्विदित्वा मध्येमार्गं राजपुरी-(राजौरी) निकटमसौ पुरतः प्रयाणाद्वारितो बलात् स्वगृहमानीतश्च । परं 'क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेद्' इति कालिदासोक्तिमनुसृत्य प्रतिबन्धोऽयं स्वेप्सितात्तं न न्यरुणत्, प्रत्युत तदीहितमुत्तरोत्तरं ववृध एव । फलतः प्रचुरेष्ववतरायेषु सत्स्वपि स्वोद्देश्याधिगतये जम्बूदेशं जगामैवासौ, यत्र न कोऽपि तस्य परिचितो बन्धुः, स्नेही सखा वाऽऽसीत् न चापि कोऽप्याश्रय आसीत्। 'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः' इत्याभाणकमनुसन्धाय स कमपि राजमान्यं पुरुषमुपागात्, यस्तत्समागमवेलायां सुप्रसन्नां मुखमुद्रामधृत, यतस्तेन सद्य एव पुत्रोत्पत्तेः सूचनाधिगताऽऽसीत् । प्रसन्नाकारेण प्रसन्नचेतसा च स तं पर्यपृच्छत् यदेकं प्रश्नं समाधेहीति । तदुत्तरं दातुं तेन कर्गलखण्डे किञ्चिद् गणयित्वा स प्रत्युक्तो यद्--'भावत्के गृहे पुत्ररत्नं समुदपादीति । अयमेवास्य भाग्योद्दीपकः कालः प्रमाणितोऽभवत्, यद्वशादसौ भद्रपुरुषस्तदीयज्योतिर्विज्ञानेन सहजपाण्डित्येन च प्रभावितो भूत्वा तं राज्ञोऽन्तिकमुपनिन्ये । ईश्वरकौलस्यार्थगृध्नुतया विरुदलिप्सया वा कस्यापि राजकीयस्यानुग्रहस्य वाऽपेक्षा नासीत्, केवलं ज्ञानपिपासैव दिनाद्दिनं तं प्रेरयति स्म, यत्पूर्तये योग्याद्योग्यतमं गुरुमन्वेषमाणोऽसौ न कमपि तादृशं देशिकं शिक्षकं गुरुं वाऽलभत, यस्तस्मै परां विद्यामुपदिशेत् । श्रीमतो रणवीरसिंहस्य पुरतो नम्रतया शालीनतया च स तथा स्वमनोऽभिलषितमाचख्यौ, यथा महाराजस्तदीयमीप्सितं हृदा प्राशसत् अन्वमोदत च । अन्वशाच्चास्य जिज्ञासोर्बालस्यान्तेवासिनः कृते कोऽपि सुयोग्यो देशिकोऽन्विष्यतामिति । अथ महता प्रयत्नेनैको भक्तः सुशिक्षितः ॐ पण्डितः पुरुषोऽस्याध्यापनाय समासादितोऽभवत् य एनं शिक्षयितुकामोऽपि समयाभावात् नाशक्नोच्छिक्षयितुम्, यतः स दिनस्य भूयांसं समयं स्वाध्याये हरेरचर्यया वा गमयति स्म, अवशिष्टं कालं त्वन्नपाकादिनाऽनयत् । इतश्च नृपस्याज्ञा शिरोधार्याऽऽसीत् इति कथञ्चित्तं स भोजनपाकवेलायामेव पाठयितुं सज्जोऽभवत् । एवमनुज्ञाय स्वयं स महानसे भोजनादिपाकपरो भूत्वा तस्माद्बहिरीश्वरकौलार्थमासनं निर्दिश्य तं पाठयितुमुपाक्रमत । स नक्तन्दिवं नितरां परिश्रम्य विद्यामेवाध्येतुं ततः प्रायतत । परिणामतः स कठिनपरिश्रमवशात् समग्रां ज्योतिर्विद्यां तथा गीर्वाणगिरो विशिष्टं ज्ञानं निरवशेषतया ततोऽधिजगाम । महाराजो रणवीरसिंहाऽध्ययनस्य पूर्णमवसरं न लेभे सुपठितो न बभूव । तेनाल्पीयस्येव शिक्षा स्वपितुर्गुलाबसिंहनृपवरादधिगताऽऽसीदतः एव स ज्ञानप्राप्तये बहून् उद्योगान्विदधे । एतदर्थमेवासौ बहुभ्यः पण्डितेभ्यो मौलवीपदवाच्येभ्या विद्वद्भ्यश्च समानमेव समाश्रयं ददौ । स्वज्ञानपिपासा-

---

ॐसम्भाव्यतेऽयं रायदेवकृष्णज्योतिर्विद्वाराणसेयो भवेत् ।

पनोदाय परमप्रख्याताना विदुषा मौलवीतिविश्रुताना यवनपण्डिताना च गोष्ठीश्चकार, यत्र धर्मदर्शनसाहित्यादिषु विविधेषु विषयेषु विवादा भवन्ति स्म। महाराजश्च योग्यतमेभ्यो वावदूकेभ्यस्तेषा वादानुपश्रुत्य पारितोषिकं प्रयच्छति स्मेति सुबहवो विद्वासस्तत्सभाया पुरस्कारविजेतार आसन्। प्रस्तुतचरितस्य नायक श्रीईश्वरकौलोऽपि योग्याद्योग्यतम पारितोषकविजेतृषु स्थान समवापेति सर्वत्र प्रसिद्धम्। वादसमितिषु ईश्वरकौलस्य श्रेयान् सस्कृतसलापाभ्यासस्तथा तदीय नैसर्गिक प्रत्युत्पन्नमतित्वमेव वागुच्चारणशक्तिश्चेति सर्वोत्कृष्टा गुणा आसन्, न केवलमीदृग्विधा विवादा राजाधिराजस्य श्रीरणवीरसिंहस्य मानसिकीमीप्सा ज्ञानपिपासा चापनेतुमलम्भूष्णवो नाभूवन्, अपितु पण्डिताना जीवनस्तर प्रोन्नमयितु तथा तेषा लौकिकीं स्थितिं जीविका च निर्वर्त्तयितुमेतादृशा विवादा न कल्पन्ते इत्यसौ मेने। एवमाकलय्यासौ अनुसन्धानात्मकस्यानुवादविभागस्य स्थापनाया निश्चयमकरोत्। फलतश्चाय विभाग प्रतिष्ठापितोऽभूत्। योजनाया अस्या सर्वत समादरात्मक स्वागत समजनि। स्वहृदोऽभिलापपूर्त्यै तत्र ईश्वरकौलमेवाध्यक्षमकरोत्, यस्याध्यक्षताया भूयासो महत्त्वपूर्णा वैशिष्ट्यशालिनो ग्रन्था एकस्या भाषाया भाषान्तरेणानूदिता अभवन्। येऽद्यत्वे श्रीनगरस्थे प्रत्नविद्याप्रकाशविभागे समुपलभ्यन्ते, येषा सख्यात्मिका तालिका लेखान्ते दीयते। उपरि तावदेतल्लिखितमेवास्ति यन्महाराज श्रीरणवीरसिंह स्वपितु श्रीगुलाबसिंहस्य सकाशादल्पीयसी शिक्षा लेभे। यतो गुलाबसिंहो मनुते स्म यन्महीयसी प्रोढा च शिक्षा रणोत्साहस्याऽऽवेग निहन्ति। पर श्रीरणवीरसिंहो नैतन्मतमनुसरति स्म। सोऽचिन्तयत् यच्छिक्षाभाव एव तदीयजीवनस्यापूर्णताया निदानमिति परस्ताच्च तमभावमसौ पूरयितु न प्रभुरभवत्। अस्मादेव हेतोरसौ स्वतनुजन्मन श्रीप्रतापसिंहस्यात्युच्चशिक्षार्थं सातिशय प्रायतत। पर सा तदाशा सहसा निराशताया परावृत्ताऽभूत्। यत प्रतापसिंह शिक्षाप्राप्तयेऽत्यल्पमपि परिश्रम नाकरोत्। फलतोऽस्य सुशिक्षार्थमेक वङ्गीयमध्यापक न्ययुङ्क्त। यस्य सुमहद्वेतन निश्चितमभूत्। एकदा स्वसूनो पठनावसरे श्रीरणवीरसिंहोऽध्ययनशाला (स्वाध्यायभवन) जगाम। तत्रासौ वङ्गीयेनाध्यापकेनाध्याप्यमान प्रतापसिंहमपश्यत्। त दृष्ट्वा श्रीरणवीरसिंह प्रश्नमेकमकरोत् य प्रतापसिंह समीचीनतयोत्तरयितु न शशाक। केवल मूक इवावतस्थे। नृपवर स्वात्मजस्यापात्रत्वादयोग्यतया च पर नैराश्यमगमद्दशादीच्च। यन्नून मम निधनानन्तर मदीयोऽयं सुत पण्डितानामाजीविकाप्रद ज्ञानकोषविवर्धक मया महता प्रयत्नेन प्रतिष्ठाप्यमानमनुसन्धानात्मकमनुवादविभाग विनय लोप च नेष्यति इति तस्यैव भविष्यवाणी कालेन सत्यमेव यथार्थाऽजनि। यतोऽसौ प्रतापसिंहो राज्याभिषेक प्राप्य पञ्चदशदिवसानन्तरमेवेममनुवादविभाग लोपयामास। इत्थमसौ पण्डितसमाज निवृत्तमकरोत्। एवमो-

## श्रीकृष्णपण्डित (टपिलू)

समुपासकवीरेयाऽय राजतरङ्गिणीवर्णितमहाराजजयापोडस्येष्टदेवताया श्रीमहा राज्ञ्या नाम देव्या परमप्रसिद्धस्य 'क्षीरभवानी'नामधेयस्य तीर्थस्य जलाप्लावनान्तर्गततया तदानी लुप्तप्रायस्य श्रीराज्ञीमाहात्म्यवर्णितदिशा स्वबुद्धिबलेनानुसन्धानात्मकमाविष्कार चकार पुष्टाङ्गाना (पठानाना) राज्ये। श्रीराज्याश्चमत्कारजनक कुण्डमुपलभ्यासौ ता श्रीमहाराज्ञी सरसेन सुमधुरेण 'या द्वादशार्कपरिमण्डलमण्डितस्ये'त्यादिपद्यस्य प्रत्यक्षरमनुसृत्य निर्मितेन श्लोकस्तोमेन तुष्टाव। या राज्ञीस्तुतिरिति नाम्ना काश्मीरिकेण ज्योतिर्विदा केशवभट्टेन सम्मुद्रणेन प्राकाश्य नीताऽस्ति। भक्तिरसपूर्णा प्रत्यहमुच्चार्यमाणेय स्तुतिः प्रत्येकस्य काश्मीरिकपण्डितगृहस्यान्तरे वर्तते। अस्या कतिपये आदर्शा काश्मीरिके शोधसस्थानेऽप्युपलभ्यन्ते।

---

## ज्योतिर्वित् केशवभट्टः

कर्मकाण्डविशारदाना सनातनधर्मरक्षणसक्षमाणा धर्मधारिधौरेयाणा श्रीकेशवभट्टाना जन्म १९३० वैक्रमेऽब्दे श्रीनगरस्थरैणावाटिकोपमण्डले बभूव। एषा पितृपादाना नामधेय सन्तरामज्योतिषी इत्यासीत्। स तु ज्योतिर्विज्ञाने धुरन्धर पण्डित आसीत्। अस्य प्रारम्भिकी शिक्षा गृहे एवाभूत्। तीक्ष्णबुद्धिरसौ स्वगृहे एव कर्मकाण्डविषयकाणि पुस्तकानि तथा ज्योतिषसम्बन्धीनि ग्रहलाघवलीलावतीप्रभृतीनि पुस्तकानि जनकस्य सकाशादधीत्य पश्चात् श्रीनगरस्थराजकीयसस्कृतपाठशालाया प्रविश्य क्रमश प्राज्ञविशारदपरीक्षे योग्यैरङ्कै पञ्चापविश्वविद्यालयादुत्तीर्णवान्। गार्हस्थ्यवातावरणेनासौ शास्त्रिपरीक्षा दातु नाशक्नोत्। दृढसकल्पस्यास्य शास्त्रविषयक ज्ञान स्वल्प नाऽऽसीत्। असौ तात्कालिकान् विदुष स्वप्रतिभया पराजिग्ये। कियत्कालानन्तरमसौ राजकीयाया सायकालिकपाठशालाया सस्कृताध्यापकता नूनरग्रामे अधिगतवान्। तत्र बी० ए० परीक्षाया विद्यार्थिन कर्मकाण्डातिरिक्तमसौ सस्कृतविषयान् नि शुल्कमध्यापयति स्म। अस्य प्रभावेण प्रभाविता नूनरग्रामस्था सर्वे काश्मीरिकपण्डिता राष्ट्रभाषा हिन्दीम् अस्य विदुष सकाशात् पेठु। बहूनि वर्षाणि यावदसौ तत्राध्यापनकार्य विधाय महती ख्याति लेभे। श्रूयते, अष्टक्रोशात्मिका पदयात्रा कृत्वासौ रैणावाटिकातो नूनरग्राम याति स्म। अथ शारीरिकसत्त्वावष्टम्भेन कार्यभारमवहत्।

अस्य समये कर्मकाण्डपुस्तकाना देवनागरीलिप्यामभाव आसीत्। यत. सर्वाणि हस्तलिखितसस्कृतपुस्तकानि शारदालिप्यामेवासन्, तेषु कानिचनामुद्रितानि पुस्तकानि

सर्वेषां पण्डिताना पार्श्वे नासन्। अस्या न्यूनताया दूरीकरणाय एभिः कर्मकाण्डपुस्तकाना सम्पादनं, मुद्रण, प्रकाशन च स्वयमेव विहितम्। एषा पुस्तकसूची अधस्तात् दीयते.—

१. भवानोसहस्रनाम।

२. विष्णुसहस्रनाम।

३. शिवपूजाविधिः।

४. नित्यकर्मविधिः।

५ वटुकपूजाविधि.।

६. पार्थिवेश्वरपूजाविधिः इत्यादीनि। एतदतिरिक्तमसौ प्रतिवर्षं पञ्चाङ्गं शुद्धरूपेण विगणय्य मुद्रापयति स्म, येनासौ ज्योतिर्विदा जनाना श्रममपहरति स्म। असौ नश्वरशरीर २००६ विक्रमाब्देऽत्यजत्। अस्य निधनेन प्रचलितकर्मकाण्डग्रन्थसाहित्यसम्पादने महतो क्षतिः सजाता।

---

## पण्डितकेशवभट्टः

असौ स्वर्गीय. पण्डितकेशवभट्टो महाराजरणवीरसिंहस्य सभापण्डित आसीत्। अस्य वशज पण्डित श्रीराधाकृष्णशास्त्री सम्प्रति काश्मीरानुसन्धानप्रतिष्ठानेऽनुसन्धानकार्यं करोति।

---

## गुरुचरणदास (स्वामी)

अय महात्मा काश्मीरमण्डलान्तर्गते लावण्यनगरे सारस्वतब्राह्मणकुले जनिमग्रहीत्। द्वादशवर्षपर्यन्तमक्षरग्रहणेऽपि न प्रवृत्तोऽय केनचिद् दैवज्ञेनास्य पितुः सकाशाद् याचितः, सुतस्नेहात्तु पिता नैच्छदेन तस्मै विप्राय प्रदातुम्। तदा गणितफलितसिद्धान्तेषु त्रिविधेष्वपि ज्योतिर्विभागेषु पारदृश्वना तेन दैवज्ञेनास्य पिता प्रतिबोधितः 'सखे, किमत्र बालके मोह धत्से, न खलु स्यास्यत्यय तव गेहे, ग्रामे, मण्डले, प्रदेशे वा। अय तु देशाद् देशान्तर पर्यटितु तत्र तत्र सभा. स्थापयितुम्, विद्यालयाश्चोद्घाटयितु तव गृहे जन्म लब्ध्वा त्वत्त. पोषण प्राप्तवानस्ति, न तवैकस्य अपितु त्वादृक्षाणा पुरुषलक्षाणामात्मोद्धार साधयितुम्, मोक्षपथ च प्रकाशयितुमुद्-

श्वरकौलोऽपि चिररात्राय निष्कर्मण्यता दधौ, निष्क्रियता चाश्रयत् । अथ बहुतिथे काले गते ईश्वरकौलो महाराजाधिराजस्य निजे कार्यालये वृत्तिमलब्ध । ईश्वरकौलस्य मेधा गणितेऽतिशयमभजत् । तदीय नाक्षत्र ज्ञान सर्वानतिशेते स्म । अत्र तावच्चिरस्मरणीय प्रसङ्गोऽयमुदाह्रियते यत् पण्डित ईश्वरप्रसाद एम्०ए० महोदयो नाम ईश्वरकौलस्य सम्बन्धी लवपुरीय स्वाधिकारिमहोदय पञ्चाम्बुशासक सम्मिलितु काश्मीरानागत स्वपरिचितस्य वन्धारावासे कतिपयान् दिवसानुवास । एकदैकस्मिन् कोष्ठके तौ समासीनौ परस्पर गोष्ठीसुखमनुभवन्तौ चिरायास्ताम् । अत्रान्तरे ईश्वरकौलो गाणितिकायास्मै ईश्वरप्रसादाय लघ्वीमेका गणितसमस्या साधयितु मनोविनोदार्थं प्रादात् । या चासावीश्वरप्रसाद पूर्वं बालकेलिमिव मन्वानो द्वित्रा होरा साधयन् व्यर्थं निनाय । लघुसमस्या त्वनिर्णीतप्रायैवातिष्ठत् । पर्यन्तत स्वस्यासामर्थ्यमावेदयन् व्रीडयाधोमुखस्तस्थौ । एतत्परिज्ञाय ईश्वरकौलोऽनायासेन क्षणादेव त दु साध्य प्रश्नमसाधयत् । इत्येवञ्जातीयका भूयास प्रश्ना अपि ईश्वरकौलेन तत्सविधे मनो विनोदयितु सन्निधापिता. । ईश्वरप्रसादश्चास्यामितगणितविज्ञानेन चकित सन् पर मुमुदे । ईश्वरकौल चाभ्यर्थयत् यत् मध्यमोऽस्य सूनुर्मया सह लवपुरे प्रेष्यताम् । येनासौ मन्निरीक्षाया तत्र विश्वविद्यालये सुचारुतया प्रोन्नता शिक्षा प्राप्तु शक्नुयात् । पर कतिपयहेतूना प्रतिबन्धकतया नाय प्रस्ताव: कार्यरूपेण पर्यणमत् । अमुना विदुषा पाणिने सूत्रप्रणालीमनुसृत्य काश्मीरशब्दामृत नाम काश्मीरीभाषाया. सुपरिष्कृत व्याकरण गीर्वाणगिरा व्यरचि । अत एवासौ काश्मीरी पाणिनिरिति नाम्ना प्रसिद्धि गत । भूयसा समयेनापि ग्रन्थोऽय समाप्ति नागमत् । यदा कापि युक्तिरेतत्सम्पादने सशोतिनिरासाय रजन्यामुदेति स्म, तामसौ तदा कृष्णाङ्गारेण भित्तावङ्कयतिस्म प्रभाते च त्रुटि निरस्यति स्म । इत्थ सुसंस्कृतानि सूत्राणि सवृत्तिकान्यारभमाणोऽपर नव काश्मीरीभाषाव्याकरण जग्रन्थ । श्रीनीलाम्बर-मुकर्जीमहोदयस्तदानी काश्मीरेषु प्रधानामात्यपद भूषयामास । समयोऽय श्रीरणवीरसिंहशासनस्य चरमो भाग आसीत् । तदानी पण्डितेषु मूर्द्धन्यतया ईश्वरकौलो बाबूनीलाम्बरमहोदयस्य सुपरिचितो बभूव । ईश्वरकौलस्तु तदानी सर्वोच्चाधिकारितयाऽस्मै नीलाम्बर-(मुकर्जी) मुखोपाध्यायाय स्वकीयामभिनवा कृतिमर्पयामास । यद्यप्यसौ तदा याथार्थ्यनार्पणविधि वर्तमानरीत्या न जानातिस्म ।

श्रीबाबूनीलाम्बरमहोदय. सुव्युत्पन्न प्रतिभाशाली महापण्डित आसीत् । असौ हसवत् क्षीरनीरविवेकशालिनी धिय धारयतिस्म । यया ग्रन्थस्य सारासारतां विवेक्तु समीचीनतयाऽर्हतिस्म । श्रीप्रतापसिंहस्य राज्याभिषेकानन्तर बाबूनीलाम्बर-

महोदय स्वपद परित्यज्य स्वनगर कालिकाता प्रतस्थे। तत्रासौ स्वजीविकोपार्जनाय स्वतन्त्र व्याकरणमारभमाणस्तस्थौ । अथ कदाचित्तदीयसभारभरित पोतो वात्याभिहत समुद्रे निममज्ज। येनासावपि पोतेन सार्धमव विपदम्बुधौ निमज्ज्य महद्दारिद्र्य भेजे। न किमपि द्रविणादिक तत्पार्श्वे तदानीमासीत्। अन्ते पर्याकुली-भूयानेनोक्त पुस्तक 'रायल एशियाटिक सोसाइटी' इत्यभिधायै प्राच्यविद्याशोध सस्थायै सम्मुद्रणाय वितीर्णम् । यद्विनिमये सस्कृताध्यक्षैर्भारतीयवृटिशसम्राज पुरत सानुरोध प्रशसित कालिकातानगरपालिकाया सर्वोच्च यावज्जीव मेयरपद मण्डया-मास। इत्यमसौ ग्रन्थस्यास्य समुचित मूल्यमुपलभ्य पुनरपि माननीया सत्प्रतिष्ठा प्रत्यापेदे। अथ जातुचिदीश्वरकौलस्य सूनुभि काश्मीरशब्दामृत मुद्रित वीक्ष्योक्त-चरसोसाइटीतो यथाचित मूल्य लब्धुकामै सस्थाया पुरतो न्यायाभियोग कृत । परमुक्तसस्थया सुस्पष्टमुद्घुष्ट यत्किञ्चन मूल्यमस्माभिर्देयमासीत् तदस्माभि पुस्तक-समर्पयित्रे श्रीबाबूनीलाम्बरमहोदयाय प्रत्तमेवास्ति। अथ तत्तनुजैर्बहु कृत्वोऽभ्यर्थना-पत्रै पूर्वोक्तससदुद्वेजिता, सा चापि उक्तचरी ससद् तान्येकत्रीकृत्य सानुरोध काश्मीर-राज्ये समुचितवृत्तिहेतवे प्रजिघाय। महाराजस्य श्रीरणवीरसिंहस्य राज्यसमये समापतितस्य दुर्भिक्षस्येतिवृत्तमप्यमुना विदुषाऽलेखि। यस्य नाम दुर्भिक्षतारोदयास्ते इति प्रसिद्धम् ।

श्रीमान् ईश्वरकौलस्तु चतुर्णवत्युत्तराष्टादशशततमे ख्रिष्टाब्दे पञ्चत्वमुपाययौ इति तदुत्तराधिकारिणा सम्मत मतम् । पर सरजार्जग्रियसनमहोदयस्त्विदधिकाष्टादशे शतके तदीय जन्म, निर्वाणञ्च त्रिणवत्यधिकाष्टदशशततमे वत्सरे एव मन्यते। अस्य चत्वार सूनव आनन्दकौल रामचन्द्र-ताराचन्द्र-हरिश्चन्द्राभिधाना आसन् येषा सन्तति-रेतर्हि श्रीनगरे इन्द्रप्रस्थे च सुख निवसति ।

---

## कृष्णदत्तशास्त्री

अथ श्रीकृष्णदत्तशास्त्री व्यासोपाधिकपरशुरामपण्डिततनूजो ग्रहशरविहगेन्दुमिते १९५९वैक्रमाब्दे रमहलपुरग्राम जनिमग्रहीत्। अथ जम्बूनगरस्थश्रीरघुनाथपाठशालात पञ्चनदविश्वविद्यालयीयशास्त्रिपरीक्षा समुदतरत् । अथ प्राय साहित्यव्याकरणचुञ्चु रपि व्याख्यानप्रवचनादावतीव प्रवीणो वर्तते। प्रथममय राजपूतस्कूलाध्यापकोऽभवत् । तदनन्तर श्रीरघुनाथमन्दिरस्य प्रबन्धकपदमलङ्कृत्य सदुपदेशादिभिर्भक्तानन्वग्रहीत् । इदानी लब्धवयस्कवृत्तिक पुराणोपनिषत्प्रवचनद्वारा लोकाननुगृह्णाति ।

भूतोऽस्ति । इति तद्वचनमाकर्ण्य दशरथ इवास्य पिता विश्वामित्रायेव तस्मै श्रीरामचन्द्रमिवैनं प्रत्यार्पिपत् ।

स तु दैवज्ञशिरोमणिरेनं रावलपिण्डीनगरमानीय सरदारसुजानसिंहसंस्कृतविद्यालये प्रावीविशत् । अथ गुरुजनानुग्रहपात्रतां गतमेनं विदित्वा स दैवज्ञो भौतिकं कलेवरमपहाय दिवं प्रातिष्ठत् । प्रधानाध्यापकः श्रीबालानन्दाभिधो विद्वद्वरिष्ठस्तु सुतनिर्विशेषमेनमपीपलत्, अध्यापिपच्च प्राज्ञपरीक्षानुकूलानि पुस्तकानि । ततोऽयं पेशावरनगरमागत्य प्राज्ञपरीक्षामुदतार्पात् ।

तदनन्तरं पिण्डदादलखाने, कटाक्षराजे, काश्यां च परिभ्रमन्नयं तेभ्यस्तेभ्यो विशिष्टेभ्यः शिष्टेभ्यो न्यायवेदान्तमीमांसादीनां प्रारम्भिकान् माध्यमिकांश्च ग्रन्थानधीत्य क्रमेण व्याकरणदर्शनकाव्यकोपसाहित्यादिषु प्राच्यनव्यभेदाद् सभिद्यमानेषु परं प्रावीण्यमशिश्रियत् । ततश्च तीर्थाटनसमुत्सुकः सन् चित्रकूट, नयपालांश्च गतः कौपीनखण्डमात्रपरिच्छदो भूत्वा विद्वज्जनसमागमेन नव्यप्राच्यन्यायेषु परं प्रावीण्यमध्यगच्छत् । हरिद्वारमागतस्तु गङ्गाकुल्याकूले विराजमानं, निरीकारिसम्प्रदायाधिष्ठानं, श्रीहीरादासश्रीब्रह्मदासमहात्मनोस्तपःप्रभावेण परिहृतनानाक्लमम्, अवधूतमण्डलाश्रमं प्राप्य तत्पीठाधीश्वराद् दीनदयातत्पराच् श्रीशिवरामदासमहन्तवरात्काषायाम्बरग्रहणपुरस्सरं दीक्षां गृहीत्वाऽस्मिन्नाश्रमे सुचिरमध्ययनाध्यापने कुर्वाणोऽद्वैतसिद्धिचित्सुखीप्रभृतिवेदान्तग्रन्थान् अभ्यस्यन् काञ्चित् परीक्षामदत्त्वापि सुयोग्यतया जनैर्वेदान्ताचार्य इति विरुदं प्रापितोऽभूत् । स्ववाग्मितया च विदुषामपि श्लाघनीयतमोऽभवत् ।

अथ देशस्वातन्त्र्यसिद्ध्यर्थं प्रवर्तमानानि नानाप्रयत्नानि पश्यतोऽस्य तरुणतपस्विनो मनस्यभूत्—अहो, एते गृहमेधिनोऽपि पुत्रकलत्रादिममतां परित्यज्य प्रयत्नप्राप्तामपि जीविकाञ्चावधूय मातृभूमेः पारतन्त्र्यशृङ्खलां खण्डयितुं सत्याग्रहान् कुर्वन्ति, कथं न नामास्माभिर्विरक्तैरपि तत्राऽऽत्मा नियोक्तव्यः ? इत्यादि विचिन्त्य गुर्जरप्रदेशं गत्वा तत्र सत्याग्रहेषु समभिलत् । राजपुरुषैः परिगृहीतस्तु, वर्षद्वयं कारागारमप्यशिश्रियत् । ततश्च 'प्राप्तेऽपि स्वातन्त्र्ये स्वकीयां संस्कृतिमपरिचिन्वन्, स्वधर्मञ्चाननुतिष्ठन्नयं देशः कथं श्रेयोऽवाप्स्यति ?' इति विचार्य देशसेवायाः प्रधानमङ्गं धर्मसंस्कृतिप्रचारप्रसारं साधयितुं प्रदेशात्प्रदेशान्तरं पर्याटत्, पञ्चनदप्रदेशं प्राप्य तत्र पञ्चपर्वाणि देशस्वातन्त्र्यसंरक्षणाय स्वसंस्कृतिपरिज्ञापनाय च प्रचारकार्यमकरोत् । परानुपदिशतोऽस्य मन एनमात्मानमपि तपःसाधनाय प्रैरयत्, अथासौ यत्र यत्र

कश्चन योगिराज विराजमानमश्रृणोत्तत्र तत्र गतस्तस्मात्तस्माच्च महात्मन प्राणायामादियोगक्रियाप्रक्रियामधिगत्य महाराष्ट्रे, सौराष्ट्रे, मरुदेशे च निगूढ वसन् योगमावनामन्वतिष्ठत् । ततश्च क्वचिद् विद्यालयान् क्वचिदौपधालयान्, क्वचिद् गोशाला, क्वचिच्च देवमन्दिराणि सस्थापयन् स्वप्रवचनप्रभावाद् गुर्जरप्रदेशे, उत्तरप्रदेशे, उत्कलप्रदेशे, विहारप्रदेशे च प्रभूता धर्मसस्कृतिसेवा समपीपदत् ।

ततश्च परशुपुर (पेशावर) गत । तत्र होतीमर्दान-नशहराऽकरपुरा-चारसद्दादिग्रामेपु धर्मप्रचारकार्यमकरोत् । काबुलेऽप्यपि कम्बोज-जलालाबादादिनगरेपु, सीमाप्रान्तेष्वपि हजरोक्नुकोहाटादिनगरेपु च देवमन्दिराणा हिन्दीसस्कृतविद्यालयादीना च स्थापनामचीकरत् स्वप्रवचनप्रभावकलया । पञ्चनदप्रदेशे तु खानेवाल-मूलस्थान-बहावलपुर-रावलपिण्डी-गुजरात- गुजरावाला- मियावाली--पीरमहल तान्दलियांवाला-जडांवाला-भगमध्याना टोबाटेकसिह-गोजरा शेखूपुरादिपु नगरेपु व्यापारिकेपु सनातनधर्मसभा , देवमन्दिराणि, सत्सङ्गभवनानि, विद्यालयान्, महाविद्यालयान्, गोशाला , धर्मशाला , अतिथिशाला , कन्यापाठशालाश्चातिष्ठिपत् । अथ दौर्भाग्यमये भारतविभाजनसमये पाकिस्ताने यवनैर्निरुद्धाना हिन्दूकन्यानामुद्धाराय, विधवानामनाथानाञ्चाश्रयदानाय भूयस सफलान् प्रयत्नानकरोदय महात्मा ।

अथात्र पश्चिमपञ्चनदात् पूर्वपञ्चनदमायातेपु तेपु भक्तवर्गेपु धार्मिकी जागर्तिमखण्डिता रक्षयितु तेषा पुनर्वासादिव्यवस्थास्वपि पूर्णं साहाय्य व्यतनोत् । सुस्थिरेपु च तेपु पुनरपि सनातनधर्मसभादिस्थापनासमुत्साहमुदजागरयत् । सोनीपत-पानीपत-घोरेण्डा-करनाल-रोहतक-कलानोर-हासी–हिसार बहादुरगढ–नजफगढ–गुरुग्राम-सोनापल्वल प्रभृतिपु ग्रामेपु नगरेपु वा विद्यालयौपधालयदेवमन्दिर-गीताभवन-सनातनधर्मसभादिसस्थापनया च तान् मुहुरपि धर्मकर्मसु बद्धपरिकरानकरोत् ।

खालसास्थानादिसाम्प्रदायिकान्दोलनेपु गुरुमुख्यादिभाषान्दोलनेष्वपि चाय भारतस्याखण्डता रक्षयितु प्रबल विरोधमकार्षीत्, प्रजाजनान् प्रशासनानि चेरुभयमपि प्रोदमाह्यदेवविधदुराग्रहनिरसनाय, भारतप्रधानमन्त्रिण श्रीजवाहरलालनेहरुमपि विपयेऽस्मिन् साक्षात्प्रत्यबोधयत् देशसुरक्षायै च पञ्च लक्षाणि रूप्यकाणा सगृह्य सनातनधर्मजगत्प्रतिनिधित्वेनाय श्रीजवाहरलालनेहरूकरयो समार्पिपत् । भारतराजधान्या दिल्ल्यामपि महात्मनाऽनेन महत्त्वपूर्णानि धर्मसस्कृतिप्रचारप्रसारकार्याण्यनुष्ठितानि । कमलानगरे गीताभवनस्य गीतामन्दिरधर्मशालायाश्च, दरियागञ्जे सनातनधर्मसभायास्तदीयस्य बृहतो मन्दिरस्य च, मालवीयनगर-मोतीनगर-तिलकनगर-पटेलनगर-

राजेन्द्रनगर तिहाडप्रभृतिषु सनातनधर्मसभानां तन्मन्दिराणां च स्थापनासु नूनमस्य महात्मनः प्रेरणात्मकः क्रियात्मकश्च सहयोगो जजागरीति ।

एतैरेव लोकोपकारपरायणैः कर्मभिर्भारतवर्षस्य प्रतिप्रदेशं प्रवेशं लब्धवती महात्मनोऽस्य विमला कीर्तिः । निखिलेष्वपि धार्मिकेषु सम्प्रदायेषु च समुचितोऽस्य सम्मानः । भारतसाधुसमाजेनामुम् उपाध्यक्षपदमारोप्य प्रवर्धितः स्वमहिमा । साम्प्रतमयं हरिद्वारे ऋषिकुलब्रह्मचर्याश्रमावधूतमण्डलाश्रमयोर्मध्ये दिल्लीस्थेन 'भगवानदासपब्लिकट्रस्ट' इति नाम्ना निधिना 'भगवानदाससंस्कृतमहाविद्यालय'-नामकं विद्यालयं स्थापयितुं कृतसंकल्पो विहितसफलप्रयत्नश्च वर्तते ।

——

### श्रीगोपालराजानकः

तत्रभवान् विविधविद्यावगाहनविशदीकृतचेताः, सुरभारत्याः समुपासनापरः कविताकामिनीकमनीयकामुकः श्रीराजानकगोपालः काश्मीरेषु पुष्टाङ्गानां (पठानानां) साम्राज्ये जन्म लेभे । महानुभावोऽयं निसर्गत एव गीर्वाणगिरोऽद्वितीयः पण्डितो बभूव । किञ्चायं स्वाद्भुतप्रतिभाप्रभावेण तदानीन्तनपण्डितसमाजस्य राजनैतिकधार्मिकसामाजिकादिविविधविषयेषु प्रातिनिध्यमलभत । पुष्टाङ्ग(पठान)शासनस्य नानाक्लेशैरुद्विज्यमानया काश्मीरिकपण्डितजनतया रणजिद्देवं प्रति यदभ्यर्थनापत्रम् लिख्यत, तस्य लेखकोऽप्ययमेव महानुभाव आसीत्, यत्रासौ मर्मभेदिभिः शब्दैः रणजिद्देवं काश्मीरस्य तदानीन्तनीमखिलां स्थितिमवगमयति स्म । तस्य प्रतिलिपिरेका श्रीदीनानाथयक्षस्य पार्श्वे सुरक्षिता वर्तते । पत्रमेतत्तदानीं 'बीरबलदर' इत्यभिधः काश्मीरिकपण्डितप्रवरः सुगुप्तं रणजिद्देवस्यास्थानीं कतिलवपुरे प्रापयामास, यदवीक्ष्यातीव विषण्णोऽसौ काश्मीराञ्जतुं निश्चिकायेति काश्मीरेष्वभिनवमिव तादात्विकं वृत्तं श्रूयते । किञ्चतदतिरिक्ता गोपालराजानककृता निम्नाङ्किताः प्रसिद्धाः कृतयोऽद्यावधि प्रसिद्धिं गताः सन्ति—

१ राज्ञीस्तुतिः २ दिनमाला

३ प्रकीर्णाः सुभाषितश्लोका अन्योक्तयश्च ।

हस्तलिखितामुद्रितपुस्तकगवेषणाव्यापारप्रसङ्गेनैतदपि विदितमभूत् यदनेन महाकविना काश्मीरिकाणां षण्णामृतूनां सुविशदं वर्णनं कृतम् यत्र शिशिरवर्णन-

मेव तावदासादितम् । दिलष्टैः श्लोकैरत्र शिशिरर्तोर्मार्मिक वर्णनं कृतमस्ति । एभ्योऽतिरिक्तमुपनयनमन्त्रभाष्यमप्यस्य श्रूयते ।

---

### गोविन्दकौल स्वामी

असौ स्वामिराममहाराजस्य प्रमुखशिष्येष्वन्यतम आसीत् । पञ्चाशद्वर्षपूर्वं दिवङ्गताना स्वगुरुचरणानामाश्रममय साधु प्राचालयत् । अथ श्रीनगरस्थ-अलीकदल-स्थाने निवसन् यद्यपि राजकीयजीविकामप्यग्रहीत् तथापि साय प्रात. शैवदर्शनमाश्रमे शिष्यानध्यापयत् । अस्मिन् दिवङ्गतेऽपि तदीया प्रमुखशिष्या –१. पण्डितश्रीश्यामलाल २ पण्डितश्रीत्रिलोकीनाथगञ्जू । ३ पण्डितश्रीप्रमनाथनेहरू । ४ पण्डितश्रीनाथदयालु । ५ पण्डितश्रीकाशीनाथकौल इति पञ्च महानुभावा स्वगुरोराश्रम साम्प्रतमपि सचालयन्ति ।

---

### गोविन्दकौल

खिष्टाब्दाष्टादशशतकस्य पूर्वार्धे लब्धजनुष श्रीगोविन्दकौलस्योदात्त वर्णनमपीह प्रस्तूयते । महाभागोऽसौ संस्कृतसाहित्यस्याद्वितीयो मनीषी बभूव । नैतेन सम काश्मीरेतिहासपारदृश्वा कोऽपि पण्डित आसीदिति श्रूयते । तदानीमयं स्वनिवासस्थित्या शफाकदलाख्य प्रदेशमलञ्चकार । अस्यैव साहाय्येन डा०स्टाइनमहोदयो 'राजतरङ्गिणी' सम्पादने तद्व्याख्याने च प्रभुता क्षमता चाललम्बे ।

---

### गोविन्दभट्टशास्त्री

गोविन्दभट्टस्य जन्म १८९५ खिष्टाब्दे श्रीनगरस्थरैणादित्यवाटिकोपमण्डलेऽभूत् । एतस्य पितृपादा पण्डितसुदर्शनभट्टाभिधा विप्रोत्तमा आसन् । अस्य प्रारम्भिकी शिक्षा स्वसद्मन्येवाभूत् । अष्टवर्षदेशीयोऽयं श्रीनगरस्थराजकीयसंस्कृत-पाठशाला प्रविवेश । तीक्ष्णबुद्धिरसौ सप्तदशवर्षवयसि एव शास्त्रिपरीक्षां योग्यं रङ्कै. सह पञ्चापविश्वविद्यालयात् १९१३ खिष्टाब्दे समुदतारीत् । पश्चाद् हिन्दी-भाषापठनायास्य मनसि रुचिरवर्धत । कियत्कालानन्तर स्वात्मान 'हिन्दीप्रभाकर' इत्युपाधिना संस्कर्तुमनेन १९२१ खिष्टाब्दे रावलपिण्डीत 'प्रभाकर' परीक्षा पारिता ।

प्रभाकरपरीक्षामुत्तीर्य अंग्रेजीभाषाध्ययनायास्य प्रवृत्तिरुद्भूता । फलस्वरूपेणानेन १६२८ वत्सरे मेट्रिकपरीक्षा उत्तीर्णा । पूर्वमसौ महानुभावः श्रीनगरस्थे सी० एम० एस० सैण्ट्रलविद्यालये १६१४ खिष्टाब्दपर्यन्त हिन्दीसंस्कृताध्यापकरूपेण नियुक्तोऽभूत् । पश्चात् १६४५ खिष्टाब्दात् १६४६ खिष्टाब्दपर्यन्त 'हिडोमेमोरियलइण्टरमीडियटकालेज' इत्याख्ये महाविद्यालये प्राध्यापकतापि सम्यक्तयानेन निभालिता । कालान्तरेणासौ श्रीनगरस्थे सत्थूप्रदेशस्थे 'महिलामहाविद्यालये' प्रभाकरश्रेणी यावत् कन्या. पाठयति स्म । अयं राष्ट्रभाषाप्रचार-समित्या प्रचारकत्वेन तत्र नियोजितः । इदानी प्रोक्तसमित्या. केन्द्रव्यवस्थापकरूपेण कार्यभार वहति । १६५६ खिष्टाब्दतोऽद्यावधि महानुभावोऽसौ रेणावाटिकास्थिते 'विश्वभारतीयकन्यामहाविद्यालये' वाइसप्रिंसिपल-रूपेण कार्यं कुर्वन्नास्ते । संस्कृतनिबन्धलेखने, पद्यरचनाया चासौ कुशल. । श्रीपत्रिकायामस्य सारगर्भिता बहवो लेखाः प्रकाशिताः सन्ति । अस्यालङ्कारशास्त्रे, ज्योतिश्शास्त्रे, व्याकरणशास्त्रे च विशिष्टा गतिरस्ति ।

एतल्लिखितसपादितप्रकाशिताप्रकाशितपुस्तकाना सूची इयमस्ति.—

१. शिवरात्रिनिर्णयः, एका लघ्वीय पुस्तिका शिवरात्रिनिणर्यविषये लिखिता ।

२. 'माइस्टेरियस केव आफ अमरनाथ' इति नाम्ना ससारचन्द्रलिखिते आङ्ग्ल-भाषायां प्रकाशिते ग्रन्थेऽनेन महत् साहाय्य दत्तम् ।

३ ज्योतिर्ग्रन्थस्य केशवीयजातकपद्धते. संस्कृतभाषाया सुसम्पादनद्वारा स्वज्योतिष्मत्तायाः परिचयो दत्तः । योऽस्त्यप्रकाशितः ।

४. हिन्दीभाषायामनेन स्त्रीधर्म-ब्रह्मचारिधर्मविषये बहवो निबन्धाः लिखिता, ये अप्रकाशिताः सन्ति ।

५. ज्योतिर्विद. केशवभट्टस्य जीवनचरित्रादिविषये संस्कृतभाषाया बहूनि संस्कृतपद्यानि लिखितानि, तदनुवादोऽपि हिन्दीपद्येषु तेनैव विहितः ।

अस्याधोनिर्दिष्टा विशिष्टशिष्याः—

१. श्रीजियालालकौलः भूतपूर्वोऽध्यक्षः एस० पी० कालेजस्य श्रीनगरस्थस्य ।

२. श्रीविश्वनाथशास्त्री गवर्नमैण्टओरियण्टलकालेजस्य श्रीनगरस्थस्य प्रधानपण्डितः ।

३. श्रीप्रेमनाथदरः भूतपूर्वः डी० आई० जो० ।

४. श्री जगनाथभट्टः बी० ए०, बी०टी, प्रभाकरः, प्रधानाध्यापकः—गवर्नमेण्ट-हाईस्कूलस्य तिस्सा एच०पी० स्थितस्य ।

---

## गोविन्दयक्षः

कर्मकाण्डविशारदस्य श्रीगोविन्दयक्षस्य जन्म श्रीनगरस्थे 'करफली' उपमण्डले अक्टूबरमासस्य चतुर्दश्यां १८६२ खिष्टाब्दे बभूव । अस्य पितृपादानां नामधेयं वासानन्दयक्ष इत्यासीत् । अनेन शैशवे कर्मकाण्डसम्बन्धीनि पुस्तकानि स्वपितुः सकाशात् अधीतानि । कालान्तरे जनकप्रेरणयानेन श्रीनगरस्थराजकीयसंस्कृतपाठशालातः प्राज्ञ-विशारदपरीक्षे पञ्जाबविश्वविद्यालयात् समुत्तीर्णे । यौवने रामायणमहाभारतादिमहा-ग्रन्थानामध्ययनाध्यापनयोरस्य विनोद आसीत् । षोडशवर्षादेवासौ स्वगृहे एव विद्यार्थिना धर्मशिक्षासम्बन्धीनि पुस्तकानि नित्यकर्मविधिः, भवानीसहस्रनामावलिः, महिम्नः स्तोत्रमित्यादीनि निःशुल्क पाठयति स्म । अस्यास्मिन् विषये उत्तरोत्तरां प्रगतिं विलोक्य तत्कालीनशिक्षाधिकारिभिः सायंकालिकपाठशालायाः संस्कृताध्यापक-रूपेणासौ नियुक्तः । त्रिंशद्वर्षाणि यावत् संस्कृताध्यापकरूपेणासौ सम्यक्तया कार्य-भारमवहत् । एकदा निरीक्षणकाले तात्कालिकाध्यक्षमहोदयेनास्य संस्कृतसेवां विलोक्य इदं विवरणमलेखि यत्-पण्डितमहोदयः सावधानतया छात्रान् पाठयति । विद्यार्थिनामुच्चारणं विलोक्य मे मनसि महान् हर्षः समजनि । सर्वैर्विद्यार्थिभिः सम्यक्तया मत्प्रश्ना उत्तरिताः । सत्यमेव ईदृशा एव कर्मठाः संस्कृतधुरीणाः संस्कृतस्य उद्धारकाः स्युः इति ।

एतदनूदितकर्मकाण्डपुस्तकानां सूची :—

१. पर्वतत्रयागः—अस्य टीकानेन संस्कृतभाषाया कृता (अप्रकाशिता) ।

२. भखला—अस्याः टीकापि संस्कृतभाषाया हिन्द्यामपि विहिता (अप्रकाशिता) अस्य ज्योतिश्शास्त्रे व्याकरणशास्त्रे च विशिष्टा गतिरासीत् ।

फरवरीमासस्य चतुर्विंशतितारिकायां १९५५ खिष्टाब्देऽसौ परलोकस्याध्वनीनः संवृत्तः ।

---

'गोविन्दराजानकः'

अमुष्य जन्म काश्मीरप्रदेशस्य राजधान्यां श्रीनगरे ४९६८सप्तर्षिसंवत्सरेऽभूत् । पूर्वममुना काश्मीरस्थमार्तण्डग्रामस्यैकस्मिन् विद्यालये अध्यापकपदमलङ्कृतम् । तदनन्तरं श्रीनगरस्थरघुनाथमन्दिरविद्यालयेऽपि वर्षपर्यन्तं प्रधानाध्यापकपदं स्वीकृतम् । तदनु संस्कृते एम्. ए. परीक्षामुत्तीर्य जम्बूनगरस्थ पी०डब्ल्यू० कालेजाख्ये महाविद्यालये संस्कृताचार्यपदं प्राप्तम् । ततश्च श्रीनगरस्थ 'एस्०पी०'महाविद्यालये कार्यं कृतम् ।

अमुना पण्डितमहानुभावेन 'राजतरङ्गिणी'नामकः कविताबद्धो मौलिकः इतिहासग्रन्थोऽपि लिखितः । यस्मिन् ग्रन्थे श्रीशुकाख्यपण्डितादनन्तरभूतं सर्वं काश्मीरप्रदेशस्येतिवृत्तमस्ति । 'श्री' पत्रिकायामपि श्रीगोविन्दराजानकस्य श्लोकाः परिदृश्यन्ते । अमुना गोविन्दराजानकमहानुभावेनापि 'श्री'पत्रिकासञ्चालनार्थं विशिष्टं साहाय्यं विहितम् । किञ्च स्वयमेवासौ तस्याः पत्रिकाया लेखानां संशोधनादिकमपि करोतिस्म ।

---

जगदीशशास्त्री महामहोपाध्यायः

असौ महानुभावो महामहोपाध्यायश्रीमुकुन्दरामशास्त्रिसमकालिकः पण्डितमण्डलीमण्डनायमानो महाराजश्रीप्रतापसिंहस्य कुलपुरोहितोऽभूत् । अमुनापि स्ववैदुष्यमहिम्ना भारतसर्वकारतो महामहोपाध्यायोपाधिस्तत्प्रयुक्ता वार्षिकी वृत्तिश्चालम्येताम् । कुलपुरोहिततया त्वमुष्य वैदुष्यं राजपरिवारसीमन्येव विश्रुतम् । श्रीमुकुन्दरामशास्त्रिवच्चासौ साहित्यनिर्माणानुसन्धानकार्येष्वपि विशेषान्न प्रावर्तिष्ट । अनुश्रूयते विदुषां वरेण्यस्यामुष्य योग्यतया महाराजप्रतापसिंहस्तथा प्रासीदत्, यथामुष्मै काञ्चिन्महतीमचलसम्पत्तिमपि दातुमैच्छत्, कारणविशेषात्तु तां दातुं न प्राभवदिति । संस्कृतं प्रति महाराजश्रीप्रतापसिंहस्य प्रेमाभिवृद्धौ श्रीजगदीशशास्त्रिणो महती प्रेरणा हेतुः स्यादित्यपि कैश्चिदनुमीयते ।

---

जगद्धरजाड्डः

श्रीजगद्धरजाड्डमहानुभावस्य जन्म १८९१ख्रिष्टाब्दे श्रीनगरे काश्मीरेषु अभूत् । अस्य पितुर्नामधेयं श्रीहरभट्टशास्त्री इत्यासीत् । यः किल शैवशास्त्रस्यान्तिमो देशिकः

परिचय — ३०८ पृष्ठे



प० श्रीकेशवभट्टज्योतिर्वित्



परिचय — २८७ पृष्ठे



प० श्रीगोविन्दयक्ष

परिचय — २८८ पृष्ठे



प० श्रीगोविन्दराजानक



काश्मीरेष्वासीत् । यावज्जीवमेभिर्विविधतन्त्रादिग्रन्थसम्पादनेन काश्मीरिकप्राच्य-प्रकाशविभागे स्वजीवन व्यापारितम् । श्रीजगद्धरजाडूमहोदयाना पितामह स्वर्गीय केशवभट्टो महापण्डित आसीत्, यो विश्रुते श्रीरणवीरसिंहराज्ये सभापण्डितपदवी-मध्यासीन आसीत् । अस्य वश सस्कृतपाण्डित्यस्य कृते प्रागव विख्यात आसीत् । बूलरसाह्वेन १८७५ख्रिष्टाब्दे एतद्गृहादेव दुर्लभाया शारदीलिपिलिखिताया अथर्व-वेदीयाया पैप्पलादशाखाया प्राचीन भूर्जपत्रपुस्तकमधिगतमासीत् । ईदृशेनैव सस्कृत वातावरणेन श्रीजगद्धरमहोदया प्रभाविता जाता । अस्य सस्कृतशिक्षा बाल्ये स्वगृहे सवृत्ता । सस्कृतमधीयानस्यास्य रुचिस्तदानीमाङ्गलभाषाशिक्षणेऽपि युगपदेव ववृधे । फलत श्रीनगरस्थाया राजकीयसस्कृतपाठशालाया विद्यार्थी सन्नय पञ्चापविश्वविद्या-लयस्य शास्त्रिपरीक्षामुत्तीर्य सममेव प्रादेशिकीमाङ्ग्लभाषापरीक्षामप्युदतारीत् । तत क्रमेण सनियममय एस्० पी० महाविद्यालये बी०ए० परीक्षा निर्वर्त्य एम्० ए० परीक्षाया प्रविष्टोऽभूत् । यामय योग्यैरङ्कैस्तीर्णवान् । पूर्वमेतदीया सुसूक्ष्मा तत्त्वविवे-चिनी मतिमनुसन्धायेम तदानीन्तना शिक्षामन्त्रिण 'काश्मीरिकरिसर्चविभागे' प्रधान-पण्डितरूपेण १९२१ख्रिष्टाब्दे नियोजितवन्त । ततोऽसौ उत्तरोत्तरमुन्नतिं कुर्वाणो 'एस्०पी० कालेज' इत्यास्ये महाविद्यालये सस्कृतप्राध्यापकरूपेण अध्यापनकार्यं चकार, यत्र बी०ए० परीक्षार्हास्तथा बी० ए० इत्युपाधिधारिणो विद्यार्थिन शिक्षा लभन्ते स्म । तत्रानेन स्वानुपमयोग्यतया सस्कृतहिन्दीविभागस्याध्यक्षताप्यधिगता । पश्चादसौ महानुभाव १९४६ख्रिष्टाब्दे प्रत्नविद्याविभागे 'डायरेक्टर' इति पदप्रदानेन सम्मानितोऽ-भूत् । तत्रासौ विद्वान् स्वाप्रतिमप्रतिभया आविश्रान्तिकाल कार्यभारमवहत् । फलतस्तत्र लुप्तप्रायाणा दुर्लभाना द्वादशग्रन्थाना सम्पादन प्रकाशन चानेन विहि-तम् । अस्मिन्नेव काले असौ जम्बूकाश्मीरसर्वकारद्वारा स्थापिताया सस्कृतप्रचार-समिते (सस्कृतबोर्डस्य) अपि कार्यं निरवहत् । अस्य कार्यं रात्रिपाठशालाना निरीक्षण तत्र सस्कृतपठनाय छात्राणामुत्साहसवर्धन चाभवत् । कियत्कालानन्तरमध्यक्षपदाद् एष १९४७ख्रिष्टाब्दे अवकाश प्राप्तवान् । सम्प्रति सस्कृतसेवाव्रतपारायणोऽसौ श्रीनगरस्थ सत्थूप्रदेशस्थे 'महिलामहाविद्यालये' आचार्यरूपेण चिराद् विराजते । अय सस्कृत-स्नेहनिघ्नहृदय 'काश्मीरसस्कृतसाहित्यसम्मेलनस्य' गतवर्षाद् अध्यक्षपदमपि अलङ्-करोति । सस्कृतसाहित्यप्रेम्णाय डा० राधाकृष्णकाव एम्०ए०पी-एच्०डी० द्वारा सस्थापिताया 'शारदापीठरिसर्च' इत्यस्या त्रैमासिकाङ्ग्लसस्कृतपत्रिकाया सस्कृत-विभागस्य सम्पादनमपि करोति ।

---

### जियालालो धर

अमुष्य महाभागस्य जन्म १६०१ खिष्टाब्दे मईमासस्य तृतीयाया तारिकाया 'श्रीनगरे'ऽभूत् । अमुष्य पितृपादा व्यापारेणाऽऽजीविका निर्वहन्ति स्म । श्रीजियालालस्य प्रारम्भिकी शिक्षाऽऽङ्ग्लभाषायामेवाजायत । युवावस्थायामसौ कदाचिद् वसाख्येन यानेन 'जम्बू'नगर गच्छन्नासीत्, मध्येमार्गं 'पाम्पोर'नाम्नि स्थानेऽतीव भयावहा वसयानदुर्घटना घटिता । अनयाऽसावपि प्रताडित । सेय दुर्घटनाऽमुष्य जीवनधारा भौतिकवादादध्यात्मवाद प्रति प्रावर्तयत् । सस्कृतभाषा प्रति प्रवृद्धश्रद्धेनामुना श्रीमत केशवभट्टात् सस्कृतभाषा शिक्षिता । १६६१ विक्रमाब्दाद् १६६७ विक्रमाब्दं यावदनेन सस्कृतभाषाया समीचीनतया परिचयमवाप्य वेदान्त शैवदर्शनभक्तिशास्त्राणा गहनमध्ययन कृतम् ।

अमुना श्रीनगरे प्रसिद्धस्य हारिपर्वतस्य निकटवर्तिनि पोखरीबलस्थाने भवान्याश्रमस्य स्थापना विहिता । अनेन सस्कृति सस्कृत चेति द्वयमपि रक्षणीयमित्य नया भावनया स्थापितेऽस्मिन्नाश्रमे भूयासो जनाश्चात्र सस्कृत पाठिता । श्रीजियालालेनाध्यापिता पञ्चविशतिविद्वास. सर्वासु दिक्षु सस्कृत प्राचीचरन् अनेकेषा शिष्याणामध्यापनेन । बहूना सस्कृतपुस्तकानामनुवाद विधाय विद्वदन्तरद्वारा विधाप्य चासौ तेषा विक्रयेण दश सहस्राणि रूप्यकाणा समगृह्णात् । तेन च धनराशिनाऽऽश्रमभवन निरमापयत् । अद्यत्वेऽमुष्याऽऽश्रमस्य शतसख्यका स्थायिसदस्या सन्ति । ते सर्वेऽप्याश्रमस्याभिवृद्धये यतमाना सन्ति । 'शफकदल'नाम्नि 'रैणावारी'नाम्नि च स्थाने 'भावानीमण्डली'ति नाम्नाऽमुष्याश्रमस्य शाखे अपि स्थापिते । श्रीनगरात् षष्टिमीलान्तरितस्य भद्रकालीमन्दिरस्य पुनरुद्धारेऽपि महाभागेनामुना मन्दिरसरक्षकस्य महत् साहाय्य सम्पादितम् । एवमसौ महानुभाव काश्मीरेषु सस्कृतिसस्कृतयो पोषणाय सर्वभावेन प्रयतमानो वरीवर्ति ।

——

### जियालाल प्राध्यापक

अमुना ब्रह्मचारिलक्ष्मणमहोदयसहयोगेन जम्बूकाश्मीरराज्यानुसन्धानविभागे हिन्दीभाषानुवादसहिताया साम्बपञ्चाशिकाया सम्पादन प्रकाशन च कृतम् ।

——

### त्रिभुवननाथशास्त्री

श्रीत्रिभुवननाथस्य जन्म श्रीनगरे १६३० ख्रिष्टाब्दे फरवरीमासस्य अष्टाविंश्या तारिकायामभवत् । स्थानीय ओरियण्टलमहाविद्यालयेऽधीत्यासौ प्राज्ञविशारदपरीक्षे उदतरत्, ततश्च क्रमेण प्रभाकरशास्त्रिपरीक्षे अप्युदतारीत् । दशवर्षदेशीय एवासौ संस्कृताध्ययने प्रावर्तत, धर्मशास्त्राणि चासौ विशेषेणाभिनिवेशेनाभ्यास्यत्, शास्त्रिपदवीप्राप्त्यनन्तरं तु स्थानीये रूपादेवीशारदापीठमहाविद्यालयेऽध्यापकत्वेन न्ययुज्यत । ततश्च क्रमेण खालसाविद्यालये, कन्यामहाविद्यालये च संस्कृतहिन्दीभाषे समध्यापिपत् । १६५६ ख्रिष्टाब्दे सर्वकारविद्यालये जीविकामलभत, साम्प्रतमपि विद्यालयेऽस्मिन्नेवाध्यापयति ।

१६८८ ख्रिष्टाब्दे जम्बूकाश्मीरप्रादेशिकसंस्कृतसाहित्यसम्मेलने स्थापितेऽसौ साहित्यमन्त्रीति पदे निरवाच्यत । एतेनैवाधिकारेण सम्मेलनस्य साप्ताहिकीषु गोष्ठीषु कवितालेखादिपाठस्याऽऽयोजनमसौ सम्पादयति, स्वकीयमपि काव्यादिकं प्रस्तौति ।

---

### दयारामपण्डित

प्रसिद्धकवीनां महापण्डितानां श्रीसाहिबरामाणां तनुजन्माऽस्य दयारामो महापण्डितो बभूव । काश्मीरनरेशस्याज्ञयाऽनेन महाविदुषा १८५६-५७ वत्सरासन्नकाले लिङ्गपुराणस्य भावार्थसङ्केतनाम्नी टीका कृताऽस्ति, याऽद्यत्वे श्रीरघुनाथहस्तलिखितसंस्कृतपुस्तकालये समुपलभ्यते । एतदतिरिक्ता नान्या काचनापि कृतिरस्योपलभ्यते ।

---

### दामोदरपण्डित

काश्मीरिकस्याप्यस्य विदुषः परिचयो डोगरिकेषु विद्वत्सु २११ पृष्ठे प्रकाशतां गतः ।

---

### श्रीदीनानाथयक्षशास्त्री

अमुना काश्मीरानुसन्धानविभागीय-हरभट्टशास्त्रिकृताया पञ्चस्तवीटीकाया प्रथमतृतीयभागयो प्रकाशनं १६६० खिष्टाब्दे हरिहरस्तोत्रस्य प्रकाशनं च १६६२

अस्य विशिष्टशिष्येषु निम्नाङ्किता महानुभावा उल्लेखनीयाः

१. श्रीपुष्पनाथपुष्पः, एम्०ए०, प्राचार्यः गवर्नमेण्टकालेजे पुञ्छस्थे ।

२. श्रीकाशीनाथदरः, एम्०ए०, प्राध्यापकः, एस०पी० कालेजे श्रीनगरस्थे ।

एतल्लिखितानूदितसम्पादितग्रन्थानां तालिका ।

१. 'डान क्यूक जोट' इति अंग्रेजीउपन्यासस्य संस्कृतानुवादः एभिः १९३५-३६ खिष्टाब्दे कृतः, यस्तु 'हारवर्डविश्वविद्यालयस्य' यू०एस्०ए०, इत्यस्य पुस्तकालये सुरक्षितो वर्तते ।

२. क्षेमेन्द्ररचितस्य लोकप्रकाशस्याङ्ग्लभाषायामनुवादः (अप्रकाशित.)

गवेषणाविभागे १९४७ खिष्टाब्दे

सम्पादितग्रन्थाः

३. उड्डामरेश्वरतन्त्रम्

४. प्रासादमण्डनम्

५. परात्रिंशिकाविवृतिः

६. परात्रिंशिकातात्पर्यदीपिका (अनुत्तरनिरूपणम्)

७. कर्मकाण्डक्रमावली सोमशम्भुकृता

८. बोधपंचदशिका

९. परमार्थचर्चा शैवदर्शनम्

१०. श्रीगुरुनाथपरामर्शः

११. क्षेमेन्द्रविरचितो लोकप्रकाशः

१२. नीलमतपुराणम् (१९२३ खिष्टाब्दे पञ्जाम्बुसंस्कृतपुस्तकमालायां संपादितं श्रीकांजीलालसाहाय्येन)

पण्डितोऽसौ श्रीजगद्गुरुश्रीशङ्कराचार्यश्रीमदभिनवसच्चिदानन्दतीर्थस्वामिभिः काश्मीरेषु समागतैः 'विद्यामार्तण्ड' इति सम्मानपदेन अलङ्कृतोऽभवत् १९५७ खिष्टाब्दे ।

— —

## जनार्दनयक्षः

ज्योतिर्विदा महामनीषिणाऽनेन राज्ञीशारिकाज्वालामुखीविष्णुशिवादीनां सुभक्तिमयी नवीना पञ्चस्तवी निरमायि । या श्रीनगरे सम्मुद्रय प्रकाशिताऽभूत् । तत्र प्रसिद्धसिद्धस्य श्रीऋषिप्रवीरस्य संक्षिप्त जीवनचरितमप्युट्टङ्कितमस्ति । लेखकमहोदय २००६ वैक्रमेऽब्दे स्वरयात् ।

---

## मास्टर जिन्दकौल

१८८४ खिष्टाब्दे अगस्तमासस्य चतुर्थतारिकायाम् असौ जिन्दकौल-महाशयो जनिमलभत । अमुष्य कवेर्नाम काश्मीरप्रदेशस्य कवीनां मध्ये तदानीं प्रथममासीत् । कवितासु चामुष्य विशेषतो वेदान्तदर्शनप्रभाव परिलक्ष्यते । भारत-प्रशासनसम्मानितोऽसौ पूर्वोक्तपत्रिकायाः साहाय्यं कृतवान् । तस्याः संचालने चामुनाऽन्येऽपि विद्वांसः प्रोत्साहिताः । कविता चामुष्य बालसङ्गिनीति श्रूयते ।

---

## जियालालकौल (जलाली)

अमुष्य महानुभावस्य जन्म १८९६ खिष्टाब्दीयनवम्बरमासस्य तृतीय-तारिकायामभूत् । काश्मीरमण्डले । १९१५ खिष्टाब्देऽसौ बी ए (आनर्स) परीक्षां १९१७ खिष्टाब्दे च एम.ए परीक्षां पञ्चनद (पञ्जाब) विश्वविद्यालयत समारितवान् । तदनु १९२० खिष्टाब्दे "यूनाइटेड इण्डिया" नामधेयस्य पत्रस्य प्रचारार्थं काश्मीर-प्रदेशेऽमुना महान् प्रयत्नः कृत । १९३१ खिष्टाब्दे 'एकनामिक्स आफ फूड ग्रेन इन् काश्मीर' नामकग्रन्थस्य रचना कृता । एवं १९३३ खिष्टाब्दे च 'हैण्डबुक आफ काश्मीर' नामकं पुस्तकमपि विरचितम् । तदनु १९५१ खिष्टाब्दे 'काश्मीरी प्राइ-मर' नामकं पुस्तकं निर्मितं स्वयमेव प्रकाशितं च ।

महानुभावोऽसौ राज्यशासनेन निर्वाचित, "पाठ्यपुस्तकपरामर्शसमितौ" लिपिसंस्थाया सदस्यपदमलङ्कृतवान् । साम्प्रतं च जम्बूस्थायां "काश्मीरिकपण्डित-सभा" इति नामिकायां संस्थायां आध्यक्ष्ये विराजते । गवेषणपत्रिकाया सम्पादन-कर्मणि साहाय्यं तु पूर्वं कृतवानेव, महानुभावोऽयं संस्कृतप्रचारार्थं सर्वथैव यतते । संस्कृतपत्रेषु निबन्धा महानुभावस्यामुष्याद्याप्युपलभ्यन्ते इति ।

---

खिष्टाब्दे कृतम् । अमुनैव प्राध्यापकनीलकण्ठगुर्टूसहयोगेन अमरनाथमाहात्म्यस्य हिन्दीभाषानुवादसहितस्य सम्पादनं प्रकाशनं च कृतम् ।

---

## महन्त श्रीदेवगिरिः

अमुष्य महानुभावस्य जन्मादिविषये न किमपि ज्ञायते, विरक्ता हि न पृच्छ्यन्ते, न चापि भाषन्ते स्वकुलगोत्रादिकम् । त्रिंशद्वर्षवयस्कोऽसौ काश्मीरानागतवान् । साम्प्रतमसौ 'ग्रावीगुजरा'ख्ये स्थाने शिवमन्दिरस्य पीठाधिपति (महन्त) रूपेण विराजते । संस्कृतभाषाध्ययनाध्यापनासक्तमनसः सुजनान् भोजनाच्छादनादिना चासौ सदा सत्कुरुते । शैवदर्शनप्रचाराय च स्वपुस्तकालयात् पुस्तकान्यपि वितरति । १९५० खिष्टाब्देऽमुना महन्तवर्येण श्रीरामेश्वरझाशास्त्रिणः शैवदर्शनानु- शीलनार्थं प्रार्थिताः, ते चात्र स्थित्वा शैवदर्शनसम्बद्धान् ग्रन्थानन्वशीलयन्, अध्यापिपश्चोपसन्नान् विद्यार्थिनः । इत्थमयमद्य सप्ततिवर्षदेशीयोऽपि शैवदर्शनस्य निष्ठापूर्वकमाराधनं कुर्वन्विराजते ।

---

## पण्डितनाथरामशास्त्री

संस्कृतसाहित्यक्षेत्रे जाज्वल्यमानस्य रत्नस्येव कल्लेतिजात्याङ्कितस्य पण्डितनाथरामस्य जन्म ८-६-१९३९ विक्रमाब्दे श्रीनगरस्थे गणपतयारोपमण्डलेऽभूत् । अस्य जनकस्य नामधेयं पण्डिततोताकाककल्ला इत्यासीत् । अस्य पितृपितामहादयः पूर्वजाः संस्कृतसाहित्यस्य विविधविषयेषु लब्धपाण्डित्याः प्रख्याता विद्वांस आसन् । अतोऽस्य प्रारम्भिकी शिक्षा स्वगृहे एवाभूत् । अल्पीयस्येव वयसि बागदिलाचरखानस्थराजकीयसंस्कृतपाठशालायां क्रमशः प्राज्ञविशारदपरीक्षे समुत्तीर्य पञ्जापविश्वविद्यालयस्य शास्त्रिपरीक्षायां पञ्चमं स्थानं प्राप्य प्राशस्त्येन शास्त्रीत्युपाधिमाप्तवानसौ । पश्चादसौ महानुभावः तृतीयप्रतरणस्य फतहकदलस्य पार्श्वे तदानीं संस्थापिते हिन्दूहाईस्कूल इत्याख्ये विद्यालये मुख्यसंस्कृताध्यापकरूपेण नियुक्तोऽभवत् । कालान्तरेण 'हिन्दूकालेज' इत्याख्ये काश्मीरेषु सर्वप्रथमे राजकीयभिन्ने महाविद्यालये संस्कृताध्यापकतामाप्नोत् । महाविद्यालयस्यास्य समीप एव 'हिन्दूकालेजियटस्कूले' इति विद्यालयेऽप्यसौ शिक्षक आसीत् उभयत्र चासौ संस्कृताध्यापकतायां गौरवं भेजे । अमुष्य मनो द्विगुणीभूतेनापि कर्मणा नोद्विविजे । तदनु स एव महाविद्यालयो राज्याधीनरूपेण

परिणतिमाप । तत्र कियन्तञ्चित् काल यावत् अमुना सस्कृताध्यापकता निर्व्यूढा । पश्चादसौ राजकीये 'सस्कृतमहापाठशाला इत्याख्ये सस्थाने मुख्याध्यापकरूपेण कार्यमकार्षीत् । तत्रैव विद्यार्थिन प्राज्ञविशारदशास्त्रीत्यादिसस्कृतपरीक्षार्हान् विधाय आविश्रान्तिकाल पाठयन्नास्त । असौ स्वाद्भुतप्रतिभया मुख्याध्यापकत्वेन च तत्र राजकीयसस्कृतपाठशालाया सप्तदश वर्षाणि यावत् स्वपद विभूषयामास । अस्य अध्यापनकाले बहवो विद्यार्थिनो विविधविषयेषु पटिमानमधिगतवन्त । असौ १९३७ ख्रिष्टाब्दे सितम्बरमासे विश्रमितुमवकाश प्राप्तवान् । न्यायशास्त्रे, कर्मकाण्डे, व्याकरणशास्त्रे चास्य वैशिष्ट्यमस्ति । अस्य विशिष्टशिष्येषु निम्नलिखिता महानुभावा उल्लेखनीया —

१ स्वर्गीयो मधुसूदनकौल अन्वेषणा (रिसर्च) आरकोलोजीविभागाध्यक्ष ।

२ श्रीजगद्धरो जाडू श्रीनगरस्थमहिलामहाविद्यालयाध्यक्ष ।

३ श्रीविश्वनाथशास्त्री श्रीनगरस्थगवर्नमेण्टओरियण्टलकालेजे भूतपूर्व प्रधानपण्डित ।

४ श्रीदीनानाथयक्ष शास्त्री श्रीनगरस्थ-अन्वेषणा(रिसर्च)विभागे प्रधानपण्डित ।

इमे महानुभावा कर्मकाण्डविभागे काश्मीरिकत्रैवर्ण्योपयोगाय 'विधिसार-सग्रह इत्याख्य पुस्तक १९९९ विक्रमाब्दे निर्माय तस्य प्रकाशन च विधाय विना मूल्य सस्कृतस्नेहिभ्यो वितीर्णवन्त । सटिप्पण्या पञ्चस्तव्या प्रकाशनसमकालमेव एभि द्वितीया स्वनिर्मिता पञ्चस्तवी प्रकाशिता । यस्या श्रीरामस्य, श्रीकृष्णस्य, ज्वालादेव्या, महाराज्ञ्या, शारिकायाश्च विषये पञ्च स्तोत्राणि सरल सुमधुर-सस्कृतेन गुम्फितानि सन्ति ।

२०१८ विक्रमाब्दे एभिर्विष्णुसहस्रनामविलासो लिखित, अत्र एकैक नामधेय मनुसृत्य सहस्रावधिकै स्वनिर्मितै श्लोकै एतेषा विद्वद्वर्याणामसाधारण वैदुष्य भक्तिगाम्भीर्यञ्च समनुमीयते । ग्रन्थोऽसौ अप्रकाशित ।

एतदतिरिक्तमेभि सस्कृत्य शोधितानि टिप्पण्यालङ्कृतानि निम्नलिखितानि पुस्तकानि प्रकाशितानि सन्ति —

१ पर्वतन्त्रविधि

२ यज्ञोपवीतसस्कार

३ स्वस्तिभद्रम्

४. बुधसूक्तम्

५. प्रायश्चित्तस्थानकम् ।

---

### श्रीनित्यानन्दशास्त्री

श्रीनित्यानन्दशास्त्रिणो जन्म काश्मीरमण्डले १८७० ख्रिष्टाब्दे समभूत् । १८९२ ख्रिष्टाब्देऽसौ पञ्चनदीयशास्त्रिपरीक्षामुत्तीर्णवान् । ततोऽसौ श्रीनगरस्थे राजकीयविद्यालये १९१६ ख्रिष्टाब्दपर्यन्तं संस्कृताध्यापकपदमलमकार्षीत् । तत एस्. पी कालेजनाम्नि महाविद्यालये प्राध्यापकपदमध्यतिष्ठत् । डाक्टरस्टाइन-ग्रियर्सन-बूलरप्रभृतीनां पाश्चात्यानां संस्कृतविदुषामसौ सम्मानपात्रमासीत् । डाक्टर-ग्रियर्सनमहोदयस्य कृतेऽमुना विद्वद्वरेण महानयप्रकाशाख्यस्य ग्रन्थस्य टीकापि रचिता । ग्रिअर्सनद्वितीयेन चामुना महानयप्रकाशभाषामाश्रित्य महानिबन्धोऽपि कश्चन अलेखि, योऽधुना सम्मुद्रित. समुपलभ्यते ।

---

### श्रीनीलकण्ठगुरुटू.

'गुरुटू' इतिजात्याङ्कितस्य श्रीनीलकण्ठस्य जन्म २-१-१९२५ ख्रिष्टाब्दे श्रीनगरे 'सत्थू' उपमण्डलेऽभूत् । अस्य तातपादानां नामधेयं श्रीताराचन्द्र इत्यासीत् । अस्य गृहे फारसी-अरबीभाषाया वातावरणमासीत् । अस्य जनकस्य मातृष्वस्रीयेण श्रीमहेश्वरनाथनेहरुणाऽयं बाल. संस्कृतपठनाय प्रेरित । ततस्तेषामाकस्मिको मृत्युर्जात । ततो जनकस्य कथनानुसारं श्रीनगरस्थार्यसमाजेऽसौ प्रेषित । अत्र श्रीजानकीनाथदर-(वानप्रस्थ)-महोदयात् प्रारम्भिकी. संस्कृतपाठमाला: पाणिनी-याष्टाध्यायी चासौ अपठत् । पश्चात् श्रीललकाकलङ्गूमहोदयेनासौ गृहे शैशवे एव निरुक्तमहाभाष्यादिकमध्यापित । अनेनास्य बौद्धिकी प्रगति कुण्ठिता संजाता । ततो धर्मार्थविभागस्य कर्मचारिण श्रीसर्वदानन्दहण्डूमहोदयात् हितोपदेशादिकमधीत्य तद्रसास्वादनमनुभूतवान् । पश्चादसौ श्रीनगरस्थराजकीयसंस्कृतपाठशालायां (वर्तमाने गवर्नमेण्टओरियण्टलकालेजे) संस्कृतमधीत्य क्रमश प्राज्ञ-विशारद-शास्त्रिपरीक्षा. समुदतारीत् । तदनु प्रभाकरपरीक्षामुत्तीर्य अंग्रेजीभाषाज्ञानार्थमस्य मनसि वाञ्छा समजनि । फलताऽनेन बी० ए० परीक्षापि पारिता । कालान्तरेणासौ प्रथममध्यर्धव

परिचय —४२० पृष्ठ



म, म, प० श्रीमुकुन्दरामशास्त्री





परिचय —१६६ पृष्ठ



प० श्रीनित्यानन्दशास्त्री

पंपर्यन्त ग्रालग्रामस्थिते 'गवर्नमेण्टहाईस्कूल' इत्याख्ये विद्यालये सस्कृताध्यापकरूपेण कार्यमकरोत् । तत्रैव सस्कृते एम० ए० परीक्षापि एतेन पारिता । ततो रिसर्चविभागे १६५५ ख्रिष्टाब्देऽसौ प्रधानपण्डितपद भूपयामास। पश्चात् १६५६ ख्रिष्टाब्देऽसौ 'गवर्नमेण्टसीयुरकालेज' इत्याख्ये महाविद्यालये सस्कृतप्राध्यापकपदमलञ्चकार। तत्रैव तेन राजकीयनियमानुरोधेन हिन्दीभाषायामपि एम० ए० परीक्षा उत्तीर्णा। १६५८ ख्रिष्टाब्दतोऽसौ अद्यावधि 'अमरसिहकालेज' इत्याख्ये महाविद्यालये अध्यापकपदमलङ्करोति ।

एतदनूदितलिखितपुस्तकसूची —

१ जोनराजकृतराजनरङ्गिण्या एकस्य भागस्य हिन्दीभाषायामनुवादो विहित । यत्प्रतिका रिसर्चविभागे अप्रकाशिता सुरक्षिता वर्तते ।

२ १५० परिमिताना सस्कृतपाण्डुलिपीना सूची निर्मिता या रिसर्चविभाग विद्यमानाऽस्ति ।

३ क्षेमराजकृतस्यालोचनात्मकसस्करणस्य प्रत्यभिज्ञाहृदयस्य हिन्दीभाषाया-मनुवादो विहित यत्र पारिभाषिकशब्दाना विशदीकरणमपि कृतम् । अस्मिन् कर्मणि श्रीमता बलजिन्नाथशास्त्रिणा श्रीलक्ष्मणजीब्रह्मचारिणा च दिङ्निर्देशोऽस्ति । इद पुस्तक लेखकमहोदयेन वाराणस्याम् स्थितस्य चौखम्बासस्कृतसीरिजपुस्तकविक्रेतु पार्श्वे प्रेषितमस्ति । अद्यावधि तन्न प्रकाशितम् ।

४ 'अमरनाथमाहात्म्यस्य' प्रकाशन हिन्दीटीकया समलङ्करण चापि श्रीनगरस्यरिसर्चविभागस्य प्रधानपण्डितश्रीदीनानाथशास्त्रिणा साहाय्येन कृतम् ।

५ *'शिवदृष्टि' इति प्रसिद्धस्य प्राचीनग्रन्थस्य लेखनमपि कृतम् ।*

---

## पण्डितपरमानन्द

अमुना महोदयेन स्वजन्मना श्रीनगराद् दशमीलदूरवर्ती 'रनहल'नामा ग्रामोऽलङ्कृत । १६५० विक्रमाब्द मार्गशीर्षस्य ११ तारिखाया पण्डितगणेशचन्द्र-भट्टमहोदयस्य गृहेऽय जनि लेभे । दशमकक्षाया आरभ्य गणितविषये एम ए कक्षा

यावत् सर्वासु परीक्षासु सर्वप्रथमं स्थानमवाप । लवपुरीये सर्वकारमहाविद्यालये चाधोयानेन अमुना महानुभावेन महामहोपाध्यायश्रीगणेशदत्तशास्त्रिणा प्रेरणया संस्कृतभाषाऽपि समधीता । एम. ए. परीक्षोत्तरणानन्तरमेव चासौ तत्रैव सनातनधर्ममहाविद्यालये गणितप्राध्यापकत्वेन न्ययुज्यत । वर्षद्वयानन्तरं चामुष्य जम्बूनगरस्थ 'प्रिन्स-आफ वेल्स' इत्याख्ये महाविद्यालये नियुक्तिरभूत् । तत्रायं दशवर्षाणि गणितशास्त्रमध्यापिपत् ।

अथ जम्बूकाश्मीरराज्यसर्वकारेणासौ 'अकाउण्ट्स'-विषयस्य प्रशिक्षणाय नागपुरं प्रैष्यत । तत्र निद्राभङ्गरोगेण पीडितोऽपि प्रजागरस्य सदुपयोगं कुर्वन्नसौ संस्कृतभाषाया अपि विशेषाध्ययनमारभत । 'आडिटअकाउण्ट' (गणनाप्रत्यवेक्षक) इत्याख्या परीक्षामुत्तीर्य १९३० ख्रिस्टाब्दे राज्यसर्वकारेण 'डिपुटी अकाउण्टेण्ट जनरल' इत्याख्ये पदाधिकारे नियुक्तः । सर्वकारकार्यं कुर्वताऽपि चामुना संस्कृतभाषाया अध्ययनं न परित्यक्तम् । एवमस्य गणितकोविदस्य संस्कृतेऽनुरागं दृष्ट्वा सर्वोऽपि जनो विस्मयते स्म । १९१९ ख्रिष्टाब्दे यदा लवपुरे आङ्ग्लप्रशासकैः आत्ययिकनिषेधनियम (कर्फ्यू) प्रवर्तितोऽभूत्, तदाऽप्यसौ पुस्तकालयं गत्वा संस्कृतपुस्तकान्यवेक्षते स्म । १९४२ ख्रिष्टाब्दे एकोनपञ्चाशद्वर्षदेशीयोऽपि चासौ गीतारामायणस्तोत्रसाहित्यानामध्ययनं संलग्नतया व्यधत्त । एतस्मिन्नेव काले पाणिनीयसिरीजप्रयागतः प्रकाशितस्य श्रीचन्द्रवासुदेवसम्पादितस्य पाणिनीयव्याकरणस्याध्ययनममुना विनैव शिक्षकं स्वयं प्रारब्धम् भूयसा चान्येषामपि पुराणेतिहासकथाकाव्यनाटकशक्तिसाहित्यशैवदर्शनसम्बद्धानां ग्रन्थानां संस्कृतव्याख्याश्रयेणामुना स्वाध्यायः सम्पादितः । १९५३ ख्रिष्टाब्दे संस्कृतप्रेमवशंवदेनामुनैव महानुभावेन श्रीनगरे रूपादेवीशारदापीठं स्थापितम्, षष्टिसहस्ररूप्यकाणां धनराशिश्चास्मै शारदापीठाय समर्पितः, शारदापीठभवनेऽस्मिन् त्रिंशत्प्रकोष्ठाश्चतस्रश्च भूमिका विराजन्ते । प्रथमकक्षाम् आरभ्य संस्कृते शास्त्रिपरीक्षा यावद् हिन्द्या च प्रभाकरपरीक्षा यावत् कक्षा इहाधीयते । आसु कक्षासु बह्व्यो यवनजातीया विद्यार्थिन्योऽपि संस्कृतहिन्दीभाषासाहित्यमधिगच्छन्ति । विद्यार्थिनीनां प्रोत्साहनायाभिरुचिविवर्धनाय च समये समये पारितोषिकाण्यपि वितीर्यन्ते । इत्थमसौ महानुभावोऽस्मिन् शतके काश्मीरप्रदेशे जातानां संस्कृतपोषकाणां मध्ये किमपि श्लाघनीयं स्थानं भजते । रूपादेवीशारदापीठपरिचयस्तु संस्कृतसंस्थापरिचयप्रकरणे १०८ पृष्ठे द्रष्टव्यः ।

---

## श्रीपुष्करनाथः शास्त्री

श्रीपुष्करनाथस्य जन्म १९३२ख्रिष्टाब्दे श्रीनगरेऽत्युच्चपण्डितकुलेऽभवत्। अमुना १९५२ख्रिष्टाब्दे शास्त्रिपरीक्षा, १९५३ख्रिष्टाब्दे च प्रभाकरपरीक्षा समुत्तीर्णा। असौ संस्कृतभाषायामनवद्यानि पद्यानि रचयति, अमुना स्वकीयानां पद्यानां 'वासन्ती'-त्याख्यः संग्रहः सम्पादितः, किन्तु सोऽद्यावधि अप्रकाशितस्तिष्ठतीति श्रूयते। १९५८ ख्रिष्टाब्दे जम्बूकाश्मीरप्रादेशिकसंस्कृतसाहित्यसम्मेलने स्थापितेऽसौ तस्य सम्मेलनस्य महामन्त्री निरवाच्यत। सम्मेलनस्य स्थापनायाममुना स्वसुहृद्गणेन साकं भूयान् परिश्रमः कृतोऽभूत्। संस्कृतस्य दिनानुदिनं जायमानेन ह्रासेन खिन्नमना असावद्यापि सम्मेलनमहामन्त्रिरूपेण संस्कृतभाषोद्धारप्रसारकार्यं कुर्वन्नास्ते। अमुना श्रीनगरे भारतीयविद्याभवनस्य (मोहमयीस्थस्य) परीक्षाणां प्रारम्भः कृतो येनानेके संस्कृतस्नेहिनो लाभान्विता अभूवन्।

---

## श्रीपृथ्वीनाथपुष्प:

प्राच्यपाश्चात्यभाषाविद् पुष्पवत् स्वप्रतिभासौरभेण विद्वन्मनःसमाकर्षकस्य श्रीनगरस्थस्य पृथ्वीनाथमहोदयस्य जन्म अक्टूबरमासस्य षोडशतारिकायां १९१७ ख्रिष्टाब्देऽभूत्। स्वल्पेनैव कालेन प्रारम्भिकशिक्षां समाप्य १९३८ ख्रिष्टाब्दे बी०ए० आनर्सपरीक्षामुत्तीर्य अनेन हिन्दीभाषायां 'प्रभाकर'परीक्षा १९३९ ख्रिष्टाब्दे प्रथमस्तरेण पारिता। पश्चात् १९४० ख्रिष्टाब्दे संस्कृते एम्०ए० परीक्षापि पञ्जाबविश्वविद्यालयात् प्रथमस्तरेण पारिता। तदीयं मनो नैतेनैव सन्तुष्टमभूत्। अतोऽप्यधिकज्ञानवृद्ध्यर्थमनेन १९४२ ख्रिष्टाब्दे शास्त्रिपरीक्षा द्वितीयस्तरेण पञ्जाबविश्वविद्यालयात् समुत्तीर्णा। अनन्तरमसौ कियत्कालपर्यन्तं श्रीनगरस्थे 'कानवेण्टकालेज' नाम्नि महाविद्यालये संस्कृतप्राध्यापकपदं समलञ्चकार। पश्चात् १९४२ ख्रिष्टाब्देऽसौ महानुभावो जम्बूपुर्यां स्थिते तदानीन्तने 'पी०डब्ल्यू० कालेज' इत्याख्ये महाविद्यालये (वर्तमाने गांधीमेमोरियलसाइन्सकालेजे) प्रवक्तृ(लेक्चरार)पदं समभूषयत्। अनन्तरमसौ श्रीनगरस्थे 'एस्०पी० कालेज' इत्याख्ये महाविद्यालये स्थानान्तरितो भूत्वा १९४४ ख्रिष्टाब्दतः १९४७ ख्रिष्टाब्दपर्यन्तं प्रवक्तृ(लेक्चरार)पदं न्यभालयत्। पश्चात् १९४७ ख्रिष्टाब्दपर्यन्तमनेन जम्बूस्थिते 'पी०डब्ल्यू०डी०कालेज' इत्याख्ये महाविद्यालये प्राध्यापक(प्रोफेसर) पदं समलङ्कृतम्। उत्तरोत्तरमुन्नतिमध्यारोहताऽनेन महानुभावेन श्रीनगरस्थे 'अमरसिंहकालेज' नाम्नि महाविद्यालये १९५४ ख्रिष्टा-

ब्दात् १९५८ ख्रिष्टाब्दपर्यन्त संस्कृतप्राध्यापकपद सम्यक्तया निभालितम् । अस्य विशिष्टा प्रतिभां विज्ञाय जम्बूकाश्मीरसर्वकारेण श्रीनगरस्थे 'जम्बूकाश्मीररिसर्च एण्ड पब्लिकेशन विभागे' १९५८ ख्रिष्टाब्दत १९६१ ख्रिष्टाब्दपर्यन्त सहायकसंचालक-(असिस्टेण्ट डायरेक्टर) पदे नियुक्ति कृता । तत्रानेन महानुभावेन महत् संशोधन कार्यं विहितम् तत्र 'गुरुनाथपरामर्श'नामकग्रन्थसम्पादनमपि जगद्धरजाडूसाहाय्येना ऽकारि । अस्य प्रयत्नेनैव तत्र हरभट्टशास्त्रिकृतपद्यस्तव्या मुद्रण प्रकाशन च दशवर्षा-नन्तर भागत्रये संजातम् । अस्मिन्नेव काले अखिलभारतीयप्राच्यविद्यापरिपद बृहद् अधिवशन १९६१ ख्रिष्टाब्दे श्रीनगरे संजातम् । स्वानुपमयाग्यतयानेनैन महानुभावन उक्तपरिपद स्थानीयमन्त्रिपद समलङ्कृतम् । असौ १९६१ ख्रिष्टाब्दत १९६५ ख्रिष्टा ब्दपर्यन्तमुक्तसम्मेलनस्य मन्त्रिपद नियतीकृत । अस्योत्साहेनैव इद सम्मेलन सफली-भूतम् । सम्प्रत्यसौ महानुभाव जम्बूपुर्या स्थिते पुञ्छनामकमण्डले 'गवर्नमेण्टकालेज इत्याख्ये महाविद्यालये १९६२ ख्रिष्टाब्दत प्राचार्यपद समलङ्करोति । साहित्यिकप्रेम्णा विशिष्टप्रतिभया चासौ भारतस्य विशिष्टसंस्थासु सदस्यपद प्राप्तवानस्ति । असौ महाशय 'एक्जेक्टिवलिङ्ग्विस्टिकसोसाइटी', लिङ्ग्विस्टिकएक्सपर्ट् सकमेटी, इत्यनयो समित्यो अखिलभारतीयप्राच्यविद्यापरिपदश्च सदस्यता विभूषयति । अस्य लेखा भारतस्य विभिन्नपत्रिकासु हिन्द्याम्, अग्रेजीभाषायां च समये समये प्रकाशिता भवन्ति । जम्बूकाश्मीरविश्वविद्यालयस्य अंग्रेजीपत्रिकायामस्य लेखा उल्लेखनीया । असौ महानुभाव काश्मीरिकविशिष्टपारिभाषिकशब्दाना निर्माणेन संस्कृतसाहित्यस्य महती सेवा करोति ।

---

### पण्डितप्रेमनाथनेहरू

असौ महानुभाव १९०६ ख्रिष्टाब्दे काश्मीरमण्डल स्वजन्मना भूषयामास । प्रारम्भादेवामुष्य मनसि शैवदर्शन प्रति जिज्ञासा आसीत्, अत श्रीरामत्रिकशैवाश्रमे महामाहेश्वराचार्यस्य श्रीरामस्यान्तेवासिन श्रीमतो गोविन्दकौलमहाभागस्य पादमूले नियसताऽमुना त्रिंशद्वर्षपर्यन्त शैवदर्शनमधीतम् । १९२५ ख्रिष्टाब्दे बी० ए० परीक्षा पारिता । १९४२ ख्रिष्टाब्दे बी०टी० प्रशिक्षण गृहीतम् । पूर्व तु राजकीयशिक्षाविभागे त्रयस्त्रिंशद् वर्षाणि यावत् कार्यं सम्पादितम् । इदानीं 'हिन्दूहाईस्कूल'नामके विद्यालये असावध्यापयति । महानुभावोऽसौ संस्कृतभाषया साकमाङ्ग्लभाषामपि जानाति । पराप्रवेशिकाया' हिन्दीभाषायामनुवादोऽप्यमुना कृत, स चास्यामेवान्वेषणपत्रिकाया प्रकाशितो जात ।

साम्प्रतन्तु श्रीरामत्रिकशैवाश्रमेऽसौ शतसंख्याकान् छात्रान् शैवशास्त्र मध्यापयति ।

---

### बद्रीनाथनाजिर

असौ नाजिरमहाशय १६११ खिष्टाब्दे काश्मीरमण्डले जनि लेभे । पूर्वं श्रीरामत्रिकशैवाश्रमे त्रिकदर्शनमधीत्य तदनु स्वामिश्रीताराचन्द-जगन्नाथ-प्रेमनाथा-ख्यमहानुभावाना सहायतया "पराप्रवेशिकाया" आङ्ग्लभाषायामनुवाद कृतवान् । अन्वेषण पत्रिकाया. साहाय्य तु विहितवानेव लेखसम्प्रदानेनेति प्रसिद्धम् ।

---

### श्रीबद्रीनाथशास्त्री

अमुष्य महानुभावस्य जन्म १६३१ खिष्टाब्दे मार्चमासस्य तृतीयाया तारिकाया-मभूत् । असौ स्थानीयसंस्कृतपाठशालायामधीत्य शीघ्रमेव प्राज्ञविशारदशास्त्रिपरीक्षा उत्तीर्य स्थानीय 'ओरियण्लकालेज'नाम्नि महाविद्यालये संस्कृताध्यापकपदमशोभयत् । ततश्च रूपादेवीशारदापीठमहाविद्यालये प्राज्ञविशारदशास्त्रिकक्षा वर्षमेकमध्यापयत् । तदनन्तर काश्मीरप्रान्तान्तर्गतत्रालाख्यस्थाने सर्वकारविद्यालये संस्कृताध्यापकत्वेन न्ययुज्यत । अथ तमपि विद्यालय विहाय पुनर् ओरिएण्टलमहाविद्यालय प्रत्यागच्छन्, संस्कृताध्यापन चाऽरब्धवान् । अधुनाऽसौ बी ए परीक्षामप्युत्तितीर्षति । संस्कृतपद्यरचनायाममुष्य विदुष साधीयसी रुचि प्रवृत्तिश्च वर्तते । नूनमदसीया रचनाश्चित्ताह्लादिन्यो भवन्ति । रचनासु जवाहरप्रशस्ति, कल्हणजीवनचरित च प्रशस्ततरे स्त । जवाहरप्रशस्तिमुपलभ्य (प्रधानमन्त्रिणा) निजसचिवो धन्यवादपत्रेऽभिप्रायमिममलेखीत् 'भवता श्रीजवाहरलालनेहरूजन्मदिवसोत्सवे प्रेषितेनाभिनन्दन-मयेन नम्रसन्देशेन, संस्कृतकवितात्मकेन च स्वसद्भावप्रकाशनेन स नितरा प्रासीदत्, कृतज्ञ. सन् भवन्त च धन्यमवदत्' इति ।

१६५६ खिष्टाब्दे 'शारदापीठरिसर्चसीरिज' इत्याख्यपत्रस्य संस्कृतविभाग सम्पाद्यासौ विदुषा प्रीतिभाजन यशस्वी चाभवत् । १६६१ खिष्टाब्दे चामुना 'काश्मीरिकशब्दाना संस्कृतशब्दा एव प्रभव' इत्याख्य शोधपूर्णो निबन्ध समलिखित । प्रादेशिकसंस्कृतसाहित्यसम्मेलनस्थापनया, तद्द्वारा संस्कृतपाण्डुलिपिगवेषणया,

भारतीयविद्याभवनप्रचालितपरीक्षाप्रचारणाया च भृशमुद्यमशालिनोऽमुष्य विदुषो जम्बूकाश्मीरविश्वविद्यालयीय 'बोर्ड आफ स्टडीज' इत्याख्याया समितौ, भारतीयशिक्षाविभागीयराष्ट्रियसंस्कृतपण्डितमण्डल्या च सदस्यता स्वरूपानुरूपैव।

---

### श्रीबलजिन्नाथपण्डितः

शैवदर्शनाब्धिमुक्तितार्पौस्तरुणलेखकस्य, न्यायसाहित्यादिविविधविषयाध्यापनलब्धप्रतिष्ठस्य, प्राच्यसभ्यताधारिधौरेयस्य, यौवनेऽपि अहङ्कारादिदोषगणानावृतचक्षुषोऽनवलिप्तस्य, महानुभावताया. साधारणजीवनस्य च मूर्तिमतो रूपधारिणः काश्मीरिकी प्राचीना संस्कृतिमक्षुण्णा निर्वहतः श्रीबलजिन्नाथस्य जन्म फाल्गुन कृष्णपक्षतृतीयस्यां द्वासप्तत्यधिकैकोनविंशे (१९७२) वैक्रमेब्दे कुलवागीश्वर्याः (वर्तमाने कुलग्रामाख्ये) पादमूले अभूत्। अस्य जनयितारौ सुगृहीतनामानौ अमरावती-आपतापरामाख्यौ सुतमिमं प्राप्य चिराय यशोभागिनौ सवृत्तौ। अस्य प्रारम्भिकी शिक्षा कुलग्रामस्थे प्रारम्भिकविद्यालयेऽभूत्। कुशाग्रबुद्धिरसौ स्वल्पेनैव कालेन प्राथमिकशिक्षा समाप्य उच्चशिक्षा प्रारेभे। संस्कृतशिक्षणेच्छास्य मनसि बाल्यादेवाङ्कुरिता, या समयान्तरे पुष्पिता फलिता चाऽभूत्। प्रादेशिकी परीक्षा समुत्तीर्य चिराभिलषितस्वोद्देश्यपूर्तये अनेन जम्बूनगरस्थे श्रीरघुनाथसंस्कृतमहाविद्यालये संस्कृतपठनमारब्धम्। अस्मिन्नेवाद्वितीया योग्यता विभाव्य छात्रसंघस्यायमेव मन्त्री निर्वाचितः। विवादे, तर्कवितर्कयोर्निबन्धप्रतियोगिताया चास्य योग्यता विलोक्य तत्रत्या संस्कृताध्यापकाः प्रसन्नचेतस सन्तश्चकिता भवन्तिस्म। तत्राय क्रमश प्राज्ञ विशारदशास्त्रिपरीक्षासु उत्तीर्णो भूत्वा पञ्चापविश्वविद्यालयद्वारा प्रथमश्रेण्या प्रथम उद्घोषितोऽभूत्। पश्चात् स्वयमधीत(प्राइवेट)रूपेण बी० ए० परीक्षामप्यसौ समुदतारीत्। किञ्चत्कालानन्तरमसौ प्रथम श्रीनगरस्थराजकीयसंस्कृतपाठशालाया (वर्तमान गवर्नमेण्ट ओरियण्टलकालेज इत्याख्ये महाविद्यालये) १९४१ खिष्टाब्दे मुख्याध्यापकरूपेण नियुक्तोऽभवत्। तत्र महतोत्साहेन नवीनशिक्षापद्धतिमनुसृत्य संस्कृतस्याध्यापनमारब्धम्। अस्य समये तत्र छात्राणामुत्तरोत्तर वृद्धिरभूत् अनेके विद्यार्थिन शास्त्रिपरीक्षायामसयोत्साहेन उत्तीर्णाः। अनेनैव महाभागेन शरीरमाद्य खलु धर्मसाधनमिति प्रसिद्धमाभाणकमाकलय्य संस्कृतछात्राणा कृते शारीरिकपुष्ट्यर्थ व्यायामस्यानिवार्यता उद्घोषिता प्रचालिता च। तेन तत्र संस्कृतवाग्वर्धिनी नाम एका छात्रसमितिरप्यायोजिता, यस्या प्रतिशनिवारं संस्कृतेनैव कार्यक्रमनिर्वाहाय गीर्वाणगिरं भाषितु छात्राः

प्रणोदिता । अनेनैव विद्यार्थिन संस्कृत भापितुमुत्साहिता अभवन् । इत्थमनेन च्छात्रेषु नवजीवन सचारितम् । १९४६ खिष्टाब्दे पञ्चापविश्वविद्यालयात् संस्कृते एम० ए० परीक्षाऽप्युत्तीर्णा । तत. श्रीनगरस्थे एस्०पी० कालेज' इतिनाम्नि महाविद्यालये संस्कृते प्राध्यापकपद लेभे । अवर्षानन्तर श्रीनगरतोऽनन्तनागस्थे राजकोयमहाविद्यालयेऽसौ महाभाग स्थानान्तरितोऽभवत् । पण्डितेनामुना शैवदर्शने स्वातन्त्र्यदर्पणनामको ग्रन्थः विरचित. । किञ्च विंशतिकाशास्त्रस्य महानुभवशक्तिस्तोत्रस्य च व्याख्याऽपि कृता । द्वादशवर्षेभ्यश्चासौ तत्र प्राध्यापकरूपेण कार्यं कुर्वन् विराजते ।

एतस्य विशिष्टशिष्टशिष्येषु निम्नाऽङ्किता महानुभावा उल्लेखनीया ।

१ प्रो० नीलकण्ठगुरुटु—शास्त्री, एम० ए० ।

२ प्रो० व्रजलालवली शास्त्री, एम० ए० ।

३ प्रो० धर्मपालशास्त्री एम० ए० ।

४ अध्यापक —त्रिलोकनाथभट्टशास्त्री, प्रभाकर, बी० एस-सी, बी० एड०

शैवदर्शनविषये एतल्लिखितानूदितपुस्तकाना सूची

१ स्वातन्त्र्यदर्पण अप्रकाशित ।

२ महानुभवशक्तिस्तोत्र सटीक प्रकाशितम् ।

३ विंशतिकाशास्त्रविमर्शिनी प्रकाशिता ।

४ काश्मीरशैवदर्शनम् (हिन्दीभाषायाम्) अप्रकाशितम् ।

एतस्य महानुभावस्य काश्मीरशैवशास्त्रे, साहित्यशास्त्रे च विशिष्ट पाण्डित्यमस्ति ।

---

श्रीभद्रीनाथकल्ला

श्रीनगरवास्तव्यस्य भद्रीनाथस्य जन्म मार्चमासस्य तृतीयतारिकाया १९३१ खिष्टाब्देऽभूत् । कर्मकाण्डविशारदस्यास्यस्य पितुर्नाम पण्डितविदलालकल्ला इति । मातृसुखवञ्चितोऽसौ भद्रीनाथ शैशवे पितृपादात् कर्मकाण्डपुस्तकान्यधीत्य पश्चात्

स्वर्गीयरामजोकोकिलस्थापितायां भानुमुहल्लास्थितायां पाठशालायां श्रीरघुनाथाचार्यादमरकोशादिग्रन्थान् अधीतवान्। तदनु राजकीयसंस्कृतपाठशालायां प्रविश्यासौ तत्र प्राज्ञविशारदशास्त्रिपरीक्षाः समुदतारीत्। कालान्तरेऽनेन एफ० ए०परीक्षापि पारिता। पूर्वं १९५२ ख्रिष्टाब्दे श्रीनगरस्थे 'श्रीरूपादेवीशारदापीठ'नामके संस्कृत-महाविद्यालये संस्कृताध्यापकपदमलञ्चकार। पश्चात् 'श्राल'नामकग्रामेऽसौ राजकीयहाईस्कूलाख्ये विद्यालये १९५३ ख्रिष्टाब्दे अध्यापकरूपेण नियोजितोऽभवत्। सम्प्रत्यसौ वर्षत्रयात् श्रीनगरस्थायां राजकीयसंस्कृतपाठशालायां (वर्तमाने 'गवर्नमेण्टओरियण्टलकालेजे') हिन्दीसंस्कृतविभागाध्यक्षपदं समलङ्कुर्वन्नास्ते। असौ महानुभावः जम्बूकाश्मीरविश्वविद्यालयस्य हिन्दीसंस्कृतबोर्डस्य सदस्यतामपि भजते। काश्मीरसंस्कृतसाहित्यसम्मेलनस्य संस्थापकसदस्येषु चायमन्यतमोऽस्ति। अनेन १९६२-ख्रिष्टाब्दे 'अखिलभारतीयप्राच्यविद्यापरिषदोऽधिवेशने 'काश्मीरिकशब्दानां प्रायः संस्कृतशब्दा एव प्रभवः' एतद्विषयको लेखः संस्कृतभाषायां पठितः। प्रकाशनाय चायं लेखो महामहोपाध्यायश्रीपरमेश्वरानन्दशास्त्रिभ्यो दत्तः। साहित्यप्रेम्णासौ डा० आर० के० कावस्थापितायां 'शारदापीठरिसर्चसिरीज' पत्रिकायां संस्कृतविभागे सम्पादनकार्यमपि विदधाति। अस्य संस्कृतपद्यानि, लेखाश्च संस्कृतरत्नाकर-शारदा-रिसर्चसिरीज-कश्यपप्रकाशादिप्रसिद्धपत्रिकासु प्रकाश्यन्ते। अस्य नाम भारत-संस्कृत-पण्डितराष्ट्रियनामावल्यां पञ्जीकृतमस्ति। अनेन शारदालिप्यां प्राइमरसंज्ञं पाठ्य-पुस्तकमपि लिखितम्। यदद्यावधि अप्रकाशितम्। अनेन 'प्यवलज आन दि शोर' नामकस्य अंग्रेजीपुस्तकस्यानुवादो हिन्द्यां कृतः। सम्प्रत्यसौ अधोनिर्दिष्टसंस्थासु सदस्यादिपदं विभूषयति—

१ मन्त्री, काश्मीरसंस्कृतसाहित्यसम्मेलनस्य।

२ सदस्यः विश्वसंस्कृतशताब्दीग्रन्थयोजनायाः जम्बूकाश्मीरयोः।

३ सदस्यः जम्बूकाश्मीर ओरियण्टल-राज्यसमिति-रिसर्चसमितेः।

४ सदस्यः, अखिलभारतीयप्राच्यविद्यापरिषदः।

५ सदस्यः, ब्राह्मणमहामण्डलस्य श्रीनगरस्थस्य।

६ अन्तरङ्गसदस्यः, अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य।

७ प्रचारकः, राष्ट्रभाषाप्रचारसमितेः वर्धास्थायाः काश्मीरशाखायाम्

——

## श्रीभास्कर राजानक

व्याकरणवेदान्तशैवशास्त्रादिनिष्णातस्य भास्कर राजानन्दराजदानस्य जन्म श्रीनगरस्थशिप्यारोपमण्डले ४८७३ सप्तर्षिसंवत्सरे बभूव । अस्य पितृनाम सन्तलसकाक राजानन्द इत्यासीत् । बाल्यादेव प्रकरणपण्डितस्य भास्करस्य स्वाभाविकी रुचि संस्कृतशिक्षणे आसीत् । सरलस्वभावो महानुभावोऽसौ काश्मीरिकप्राचीनपद्धतिमनुसृत्य काश्मीरस्य प्रसिद्ध कलापव्याकरणममरकोशादिकं वेदान्तशास्त्रविद पितु सकाशाद् अपठत् पितृपादाद् वेदान्तशास्त्रमभ्यस्य तद्रसास्वाद विधाय चास्य मनसि शैवशास्त्रमर्मज्ञानाय रुचिरुद्भूता । यथाऽसौ शैवशास्त्रेऽपि कुशाग्रबुद्धया स्वल्पेनैव कालेन निष्णातो बभूव । षोडशवर्षदेशीय एवासौ सकलविद्यापारगो भूत्वा विविधविद्यावगाहनेन सर्वतन्त्रस्वतन्त्रतामधिगतवान् । अस्य नैसर्गिकी प्रतिभा सर्वशास्त्रेषु विद्योतते स्म । कालान्तरेणासौ संस्कृतस्य प्रचारप्रसाराय स्वगृहे एव संस्कृतशिक्षार्थिनोऽन्तेवासिनो विविधान् विषयान् पाठयति स्म । तात्कालिका सुबहवोऽन्तेवासिनोऽस्मीया पादच्छायामुपाश्रित्य वेदान्तशास्त्रस्यान्त लेभिरे । किञ्च व्याकरणादीन् विषयानसौ सामस्त्येन विजानाति स्म । तत एव विविधव्याकरणप्रयोगा, साहित्यमर्मभणितयश्चैतद्रचनासु प्राचुर्येण समुपलभ्यन्ते । काश्मीरिकसर्वकारेण एतन्निर्मितस्य 'चित्तप्रदीपस्य' सम्पादनेन प्रकाशन वर्त्तुमिष्यते स्म । पर नाद्यावधि दृग्गोचरता यातोऽस्य ग्रन्थ प्रकाशनद्वारा । एषा शिष्यपरम्पराया निम्नलिखिता महानुभावा उल्लेखनीया ।

१ सौन्तपण्डित ।

२ प्रकाशजूपण्डित भैरवोपाह्व ।

३ गीरूमनवाक ।

४ तातपण्डित ।

५ गोपालजुवगोम्‌ ।

६ पण्डित महानन्दशङ्करभट्टादयश्च परेऽपि प्रसिद्धा आसन् । सत्यमेव एतस्य व्युत्पत्तिगौरवे पाण्डित्ये च न कोऽपि तुलामधिरोहति स्म । श्रूयते, काश्मीरिकप्रसिद्धशासकेन महाराजरणवीरसिंहेन राजसभाया विशिष्टोत्सवेषु प्रीत्याऽऽहूत सन्नसौ सारगर्भितैर्विविधै संस्कृतपद्यैस्त प्रमादयति स्म । मिते वर्षेऽसौ 'चित्तप्रदीप' नामक शैवशास्त्रविषयक ग्रन्थ निर्माय महाराजाय श्रीरणवीरसिंहाय पण्डितसभायामुपहार-

रूपेण ददौ, तत्प्रतिभया सन्तुष्टेनानेन तस्मै पञ्चशतरूप्यकाणि पारितोषिकरूपेण दत्तानि । अनेनास्य विद्वत्सु ख्यातिरवर्धत । अस्येमां मौलिकरचनामधीत्य निष्णाताः शास्त्रिणो विद्वांसोऽपि चकिता भवन्ति । अस्य ग्रन्थस्य पठनेनास्य व्याकरणे, वेदान्ते, शैवशास्त्रे च वैशिष्ट्यं स्वत एव ज्ञायते । असौ ४६४५ सप्तर्षिवर्षे परलोकस्याध्वनीनः सवृत्तः ।

अस्यामूल्या रचनाः—

१. चित्तप्रदीपः—अप्रकाशितः

२. ब्राह्मीविद्या—अस्याष्टीकाऽनेन संस्कृतभाषायां कृता । उभे प्रती रिसर्च-विभागे अमुद्रिते, अप्रकाशिते च स्तः ।

३. ताराचन्द्रप्रकाशः—अनुपलब्धा मौलिकी पुस्तिका ।

४. चित्तानुबोधः—योगवाशिष्ठसारात्मकः ।

---

### श्रीमधुसूदनकौलः

कौलजात्याङ्कितस्य श्रीमधुसूदनस्य जन्म श्रीनगरस्थे खरयारोपमण्डले १८८७ ख्रिष्टाब्दे बभूव । असौ परमशाक्तस्य स्वामिऋषिकौलस्य तृतीयपुत्रः, देवीनामविलास-कल्पवृक्षादिग्रन्थाना निर्मातुः स्वर्गीयस्वामिसाहिबकौलस्याष्टमो वंशधरश्चाऽऽसीत् । संस्कृतवातावरणप्रभावितोऽसौ श्रीनगरस्थहिन्दूस्कूलीयसंस्कृतपाठशालातः क्रमशः प्राज्ञविशारदशास्त्रिपरीक्षाः पञ्चापविश्वविद्यालयस्वीकृता उत्तीर्णवान् । पश्चाद् आङ्ग्लभाषाज्ञानेनापि तस्य ध्यानमाकृष्टम् । दश वर्षाणि यावत् निरन्तरपरिश्रमेणानेन एम्०ए० परीक्षापि १९१६ ख्रिष्टाब्दे निस्तीर्णा । विश्वविद्यालयस्य शिक्षां समाप्यासौ काश्मीरसर्वकारेण कलकत्तानगर्यामनुसन्धानविभागस्य प्रशिक्षणाय प्राच्यविद्याविदुषो महामहोपाध्यायहरप्रसादशास्त्रिणः सी०आई०ई० इत्यस्य पार्श्वे प्रेषित. असौ प्रशिक्षणं समाप्य श्रीनगरमागत्य प्रत्नविद्याप्रकाशविभागे १९१८ ख्रिष्टाब्दे अध्यक्षपदमलङ्कार । तत्राध्यक्षरूपेणासौ शैवशास्त्रविषयान् अनेकान् ग्रन्थान् संपाद्य तेषां मुद्रणादि-प्रबन्धमपि कारितवान् । यथा.—

१. स्पन्दकारिका । २. शैवसूत्रवृत्तिः । ३. तन्त्रसारः ।

४. ईश्वरप्रत्यभिज्ञाविमर्शिनी (१९२१ तः १९४३ ख्रिष्टाब्दं यावद् भिन्नेषु वर्षेषु क्रमशोऽस्या भागत्रयस्यापि सम्पादनं कृतम्)

५ तन्त्रालोक (द्वादशभागात्मक) १९२१ त १९३८ खिष्टाब्द यावत् ।

६ वातुलनाथसूत्राणि ।

७ देशोपदेश । ८ स्पन्दनिर्णय ।

९ देवीनामविलास । इत्यादय आसन्नपट्त्रिंशा ग्रन्था सम्पादिता अमुना विद्वद्वरेण ।

एतद्योग्यताप्रभाविता प्राच्यपाश्चात्योभयविद्वासोऽस्मै विदुषे बहूनि प्रशसापत्राणि अदु । येषा नामान्यध उट्टङ्कितानि —

१ फॅक्लिन एडगर्टन आफ यू०एम०ए० । २ ए० फाउचर आफ पेरिस ।

३ सर जार्ज ए० ग्रियमन ग्राफ इग्लैण्ड । ४ जो टक्की ग्राफ रोम ।

५ डा० एम० डब्ल्यू थामस । ६ डा०एम०जे० विलवालकर ।

७ प्रो० गार्वे । ८ डा० वारनेट ।

१९२४ खिष्टाब्देऽसौ भारतधर्ममहामण्डलेन 'विद्यावारिधि' इत्युपाधिप्रदानन सम्मानित । असौ 'रायल एशियाटिक सोसाइटी' इत्याख्याया प्राच्यविद्या शोधसमित्या प्राच्यविद्याचञ्चुताहेतो १९२५ खिष्टाब्दे सदस्योऽपि निर्वाचित । तत १९२९ खिष्टाब्देऽसौ जम्बूकाश्मीरराज्यद्वारा सयोजितस्य रिसर्चआरक्यालाजोम्यूजियमादिविभागस्य निदेशकपदमलञ्चकार । अस्य प्रावीण्यपरवशेन बीकानेरमहाराजेनापि असौ स्वराज्ये प्रत्नविद्याविभागाध्यक्षपद सशासयितु प्रार्थित पर मातृभूमिस्नेहपरवशतया तदीय निमन्त्रण नाङ्गीचकार । पुरातत्त्वविद्याविशारदोऽसौ गिलगित्तदेवसरस्नापर(प्रतापपुर)नवपारादीन् प्रदेशान् गत्वा ततो भूगर्भत पुरातत्त्वानि निष्कास्य प्रकाशितवान्, स्वयोग्यतायाश्चात्यद्भुत परिचय पुराविदा पुर प्रादीदृशत् । इत्यमसौ प्राचीनाना शिलालेखाना यथावदध्ययनेन ऐतिह्यामिकाना नयनवर्त्मानि विस्फारयामास । काश्मीरेतिवृत्त चिराद् वर्तमानामस्फुटोरपसारयामास । कालान्तरेणासौ १९४५ खिष्टाब्दे पञ्चापविश्वविद्यालयस्य परीक्षासमित्या मुख्यपरीक्षकरूपेण नियुक्त । १९४६ खिष्टाब्देऽसौ महानुभावो राजकीयपदाद् विरम्यावकाश प्राप्तवान् । असौ 'शानमोर' विषये प्रवर्तमाने विवादे १९५५ खिष्टाब्दे काश्मीरराज्यस्य प्रातिनिध्य भारतस्य साहित्यिक-अकादम्या चकार । जीवनस्यान्तिमक्षणे-

प्यपि असौ स्वसाहित्यकर्मणा न व्यरमत् । असौ कल्हणकृतराजतरङ्गिणीविषयिका समग्रा सामग्री मगृह्य ता नवटिप्पण्यादिना च सह मुद्रयितुकाम आसीत् । परिस्थितिवशात् तत्कर्तु नाशक्नोत् । परमस्मदीयदौर्भाग्येणासौ नश्वरशरीर १६५६ ख्रिष्टाब्देऽत्यजत् सत्यमेवास्य प्रतिभा विवेकशालिनी सूक्ष्मार्थावलापनपरा त्रुटितपदाना प्रपूरण कुर्वन्ती विश्वविदितैवाऽऽसीत् । महागौरवशालि पद लब्ध्वापि नैपदपि मानमेपोऽस्पृशत् ।

---

## महताबकाक (स्वामी)

असौ श्रीस्वामि महताबकाकमहानुभाव श्रीरामशैवाश्रमस्य सस्थापकाना श्रीरामस्वामि-महाराजाना प्रधानशिष्य शैवदर्शनज्ञाता श्रीनगरस्थफतेहकदलनामक स्थानस्य पार्श्वे स्वचनाश्रमे निवसन्नासीत् । अस्य बहव शिष्या अभूवन् । येपु श्रीमान् ब्रह्मचारी लक्ष्मण प्रमुखोऽज्ञायत । येन च "शैवशास्त्रे मासभक्षणस्य व्यवहृतत्वम्" इतिनामको लघुग्रन्थो व्यरच्यत ।

---

## महादेवत्रिक.

परमभागवतेनानेन त्रिकोपाह्वेन पण्डितमहादेवेन रामायणसारोऽलेखि । सारोऽयमतिसक्षिप्त सन् वर्ण्यविषय नैपदपि परिहरति । त्रिकवंशोद्भवोऽय श्रीरणवीरराज्ये काश्मीरान् स्वस्थित्या भूषयामास । विहाय रामायणसार नापरा कृतिरस्याद्यपर्यन्त गवेषणाविषयीभूता ।

---

## महेश्वरराजानक

श्रीनगरे ह्ब्बाकदलाभ्यन्तरे निवासतस्तत्रभवतो राजानकान्वयशेखरायमाणस्य श्रीमुकुन्दस्य सूनुरसौ श्रीराजानकमहेश्वर आसीत् । महानुभावोऽसौ शैवशास्त्रमर्मज्ञस्तस्मिन् समये महापण्डितो बभूव । निसर्गेणासौ सौम्यप्रकृति सहृदयहृदयाह्लादक कर्मकाण्डज्योतिश्शास्त्रादिनिपुणो महापण्डित आसीत् । वंशपारम्परिकी विप्रपण्डितोचिता पौरोहित्यप्रधाना वृत्ति विहायासौ प्रत्नतत्त्वविद्याप्रकाशविभागे (Research Archeology dptt ) श्रीनगरस्थेऽस्य हस्तलिखितामुद्रितपुस्तकाना सशोधनादिकर्मणि द्वितीयपण्डितरूपेण नियुक्तोऽभवत् । प्रत्नविद्याप्रकाशविभागोऽय पूर्व रणवीररिसर्चइन्स्टी

ट्यूट् (Ranbir Research Instt ) नाम्ना विख्यात आसीत् । यो वर्तमानवैज्ञानिक-पद्धत्याश्रयेण १६०२ तमे ख्रिष्टाब्दे पुनरुद्धाट्य सुप्रतिष्ठापितोऽभूत् । यत्र समये समय ईश्वरकौल-जी० सी० चटर्जी-हीरानन्दशास्त्रि-रामचन्द्रकाक मधुसूदनकौल जगद्धरजाडू-प्रभृतयोऽध्यक्षपदमलञ्चक्रु । एषु जी मी चटर्जीमहोदयानामाध्यक्ष्येऽस्मो द्वितीयपण्डित-पदवी लेभे । कार्यालयेऽस्मिन् महानुभावोऽसौ तन्त्रालोकप्रभृतीनामष्टचत्वारिंशत्सख्याना ग्रन्थाना कार्यालयाध्यक्षाणा सम्पादनकर्मणि मुख्यरूपेण साहाय्यकृदासीत् । चटर्जी-मुकुन्द-राम-कौलप्रभृतयोऽतीतकार्यालयाध्यक्षा अमीषा साहाय्येनैव तत्तत्पुस्तकसम्पादन-कौशलमधिजग्मुरिति तत्तत्पुस्तकप्राक्कथनत सुस्पष्ट ज्ञायते । महापण्डितोऽयमकाण्ड एव पञ्चाशत्तमे वर्षे प्रौढे वयसि चतुस्त्रिंशदधिकैकोनविंशतिशततमे ख्रिष्टाब्दे (१६३४) यमसदनातिथित्वमाप्यामरेष्वगण्यत । किञ्च शैवशास्त्राभ्यासेऽमुष्य के मी पाण्डेय-महोदया सुमहत् साहाय्यमधिगतवन्त इति । दाक्षिणात्येन गोडवलेमहोदयेन तदानीमस्य शिष्यताऽपि स्वीकृताऽऽसीत् ।

श्रीमदुत्पलदेवाचार्यकृताना शिवस्तोत्राणा 'श्रीशिवस्तोत्रावली'ति नाम्ना प्रसिद्धस्य सग्रहस्य श्रीक्षेमराजीयसस्कृतव्याख्याया श्रीलक्ष्मणराजानककृताया भाषा-टीकाया अन्ते लिखितेभ्य श्लोकेभ्योऽप्यवगम्यते यथाऽसौ श्रीमहेश्वरराजानको साख्य-शास्त्रे, शास्त्रान्तरेषु च सुनिष्णात, पाणिनीयव्याकरणे तु पतञ्जलिवद् भाष्य-कर्ताप्यभूत् । भगवत शिवस्य च सहजया भक्त्या सूर्यरश्मिसम्पातेनाम्बुजमिवास्य हृदय प्रोत्फुल्लति स्म । महामाहेश्वरोऽसौ लक्ष्मणराजानकस्यान्येषा च तादृशाना विदुषा शैवशास्त्रविषये गुरुरासीदिति । एतदर्थको तु श्लोकौ—

सांख्ययोगादिशास्त्रज्ञ पाणिनीये पतञ्जलि ।
शिवार्करश्मिसम्पातव्याकोशहृदयाम्बुज ॥
महामाहेश्वर श्रीमान् राजानकमहेश्वर ।
शैवशास्त्रगुरु सोऽयं वाक्पुष्पैरस्तु पूजित ॥ इति ।

तस्य सग्रहस्यान्ते दृश्येते ।

---

## मुकुन्दमिश्र (मुकुन्दजोतिषरू)

नौरग्रामाभिजनाना मिश्रवशावतमाना श्रीमुकुन्दमहोदयाना स्थितिकाल-श्चत्वारिंशदधिकविंशतिशततमे विक्रमाब्देऽवर्तत । महामहिमशाली महानुभावोऽयमपि काश्मीरनरेशश्रीरणवीरसिंहाश्रयेण (१८५६-१७८७) वर्षेषु जीवन्नासीत् । विषयेऽस्मिन्

किंवदन्तीयं जागरूकाऽद्यत्वेऽपि वर्तते, यदसौ जीवनावधि निरक्षरभट्टारक आसीत्। वार्धके चास्येशानुग्रहवशाद् भक्तिरसाप्लुता हृदयोद्गाराः प्रस्फुटिता अभूवन्। ये कवितारूपमाधाय स्वतन्त्रामेकां मुक्तावलिमिव शिवस्तोत्रावलिं जुगुम्फुः। तत्र नैकविधानि स्तोत्राणि शैवाभिमतसिद्धान्तधिया ग्रथितानि सन्ति। महाभागोऽयं साक्षाच्छिवसमावेशदशामनुभवन् सदाशिवतामाधत्त इति तद्वचनातो ज्ञायते। अस्य शिष्यप्रशिष्या अद्यापि काश्मीरे वसन्ति। एषु प्रमुखोऽन्तेवासी मुन्शीत्युपाह्वः आग्रहारिक ईश्वरजीवोऽप्यासीत्।

---

## श्रीमुकुन्दरामो महामहोपाध्यायः

असौ पण्डितग्वाशभट्टस्य पुत्रः पण्डितमुकुन्दरामः १९१७ वैक्रमाब्दीयसौरमार्गशीर्षमासस्य त्रयोविंशे दिने श्रीनगरस्य 'साथूसादीकाजीजादानामके शाखानगरे समजायत। अस्य पिता स्वल्पवेतनोपभोगितया स्वपुत्रायोच्चशिक्षां दातुं न प्राभवत्। बालकोऽयं मुकुन्दो निर्धनतां परिभाव्य प्रतिवेशिन्यामेकस्यां पाठशालायां प्रविष्टः प्रारम्भिकं संस्कृतमपठत्। १९३७ वैक्रमाब्दे यदा श्रीनगरस्य रणवीरगंजनामके स्थाने पण्डितरामजूधरस्य प्रबन्धेन सर्वेषां पारस्यारब्यग्रन्थानामनुवादायैका संस्था निरमीयत तदा तत्कार्यसम्पादकत्वेन निर्वाचितोऽयं २०) विंशतिमुद्राऽऽत्मके निर्धारितवेतनेऽनुवादकपण्डितपदकार्यभारमग्रहीत्। गृहीतकार्यभारोऽयं पाठशालायाः सर्वतो विशालप्रकोष्ठे दिनमभिव्याप्यानुवादकार्यं करोतिस्म। तदतिरिक्ते समयेऽवकाशदिनेषु च श्रीनगरस्यान्तर्वासिनां बहिर्वासिनां च पण्डितानां गृहमागत्य संस्कृतभाषां तत्साहित्यं चाधीते स्म। ते च विद्याचणाः पण्डिता मुकुन्दरामस्य संस्कृतभाषाधिकारप्राप्तये निरुपमेनोत्साहेनेच्छया च प्रभाविता भूत्वा रूप्यकैरावश्यकसामग्रीभिरुच्चपुस्तकैश्च तत्साहाय्यं कुर्वन्तिस्म इत्थमसौ पर्याप्तं ज्ञानमुपार्ज्य शास्त्रिपरीक्षामुदतरत्।

१९३८ वैक्रमाब्दे महाराजा विक्रमसिंहमहाभागा जम्बूतः काश्मीरमागताः। ते च चिरात् तिब्बतीभाषायां लिखितयोः १५०,००० सार्द्धलक्षश्लोकाऽऽत्मकयोः 'कञ्जूर' 'तञ्जूरे'तिनामकयोर्ग्रन्थयोः संस्कृतानुवादं कारयितुमिच्छुका आसन्। अनुवादकार्यस्य सौकर्याय जम्बूकाश्मीरसर्वकारेणैकस्य 'लामागुरोः' श्रीयामस तक्षलस्य सेवा प्राप्यत। यतः काश्मीरराज्ये कश्चिदपि तिब्बतीभाषां न जानातिस्म। प्रतियोगितापरीक्षया निर्वाचितोऽयं मुकुन्दरामोऽस्माल्लामागुरोस्तिब्बतीभाषामध्येतुं न्ययुज्यत। नियुक्तिकाले चास्मै १५ पञ्चदशरूप्यकाणि वेतनत्वेन प्रतिमासं दीय-

न्तोस्म । तिब्बतीभाषाया ज्ञान प्राप्यासौ पूर्वोल्लिखिततिब्बतीभाषाग्रन्थानुवादकार्य समपादयत् । अनेनानुवादकार्येण प्रसन्नस्तात्कालिकमहाराजोऽस्मै त्रिशतरूप्यकाऽऽत्मक पारितोषिक प्रादात्।

१९३८वैक्रमाब्दीयाश्विनमासि महाराजोऽस्य वेतने पञ्चरूप्यकाणा वृद्धि विधायास्मै लामागुरुणा साक 'किश्तवार-पड्डुर'नामकस्थानस्थितानां मणीना रत्नाना चानुसन्धानायाऽऽज्ञा प्रादात् । अमुना पण्डितेन किश्तवारगमनाऽऽज्ञा नाङ्गीकृता यतोऽस्य पितुस्तत्र तद्गमन सम्मत नासीत् । लामागुरौ पुनर्जम्बूमुपागते सति तदधीनतया पुनर्महाराजदेशेनानेन सेवा नारब्धेति जीविका नष्टा ।

अथ काश्मीरी-व्याकरणमधिकृत्य कांश्चन ग्रन्थान् प्रस्तोतुमुद्यतस्य श्रीपोपवेदस्य सम्पर्कमासाद्य तत्सहायकत्वेन स्वनियुक्ति कारयित्वा च तत्पुस्तकसामग्रीसङ्कलनकार्येण प्रभूत धनमसावर्जयत् । तदनु काश्मीरवासिनामाङ्गलभाषाशिक्षादानाय नवस्थापिते सी० एम्० एस्०उच्चविद्यालये संस्कृताध्यापकपदे नियुक्तोऽसौ जीवनयात्रामचालयत् ।

अथासौ १९४८वैक्रमाब्दे लाहौरस्थपञ्जाबविश्वविद्यालयस्य तात्कालिककुलसचिवस्य सरआरेलस्टेनमहोदयस्य प्रार्थनया तमुच्चविद्यालयं विहाय ७५ रूप्यकमासिकवेतनेन कल्हणकृतराजतरङ्गिण्या प्राचीनकाश्मीरेतिहासगतराजकथाना च प्रकाशनेतत्पाश्चात्यविदुष साहाय्यमकरोत् । तयो प्रकाशनकार्ये सम्पूर्णे तस्यैव पाश्चात्यविदुष प्रयासेन पाटलिपुत्रमागत्य सरग्रियर्सनमहोदयस्य तत्त्वावधाने १०० रूप्यकमासिकवेतने भाषासर्वेक्षणकार्यं १७ सप्तदश मासान् यावदयमकरोत् । तदनु पितुर्देहावसानमभूदिति पण्डितोऽयमष्टाना मासाना वेतनरहितमवकाश गृहीतवान् । पुन पाटलिपुत्रमागत्यासौ कानिचिदेव वर्षाणि भाषासर्वेक्षणकार्यं कृतवान् । श्रीनगरमागते चास्मिन् सरजार्जमहोदयेन काश्मीरभाषासाहित्ययोरनेकेषा ग्रन्थानां सग्रहकार्यभारो न्यासि ।

१९५८वैक्रमाब्दे लाहौरस्थपञ्जाबविश्वविद्यालयकुलसचिवस्य प्रेरणया १०० शतरूप्यकमासिकवेतने लाहौरीयोक्तविश्वविद्यालये काठकभाष्यसूत्रप्रभृतिग्रन्थसम्पादनकार्ये नियुक्तिमधिगत्यानेन ये ग्रन्था सम्पादिता अनूदिता, टिप्पण्या वा योजितास्तेषा सूची 'अ'विभागेऽत्र लिखिता ।

जम्बूकाश्मीरे सर्वकारेण यदा रणवीरशोधप्रतिष्ठानस्थापनाया निश्चयोऽकारि तदा स्टेनमहोदयेन निवेदितेनाऽपि यद्यपि नासौ मुक्तः, तथापि तस्य मृत्योः पश्चात् महाराजमन्त्रिणः पण्डितश्रीदयाकृष्णकौलस्य निर्बन्धेन पण्डितोऽसावनिच्छयापि भारतसर्वकारसेवा विहाय राज्यसेवा स्वीकृतवान् । प्रथमं संस्कृतस्य प्रधानपण्डितो भूत्वा पश्चात् कार्यकारिशोधपुरातत्त्वविभागाध्यक्षपदमलमकरोत् ।

१९६८वैक्रमाब्दे सम्राजः पञ्चमजार्जस्य राज्याभिषेकावसरे संस्कृतसेवा-वैशिष्ट्येनाकृष्टेन सर्वकारेणास्मै महामहोपाध्यायपदवी प्रादीयत । अथाऽस्य गृहं भस्मीभूतं दौर्भाग्याद्, दुःखावसरे चास्मिन् सहस्ररूप्यकाणि सकाष्ठानि गृहनिर्माणायास्मै सर्वकारेणोपायनीकृतानि ।

अमुना पण्डितेन काश्मीरराज्यशोधविभागस्य सहायकपदे मुख्यपदे च कार्यं कुर्वता भारतीयदर्शनावयवभूतशैवदर्शनसम्बन्धिन्योऽनेका रचनाः सम्पादिताः शोधिताः प्रकाशिताश्च । एभिः प्रकाशनैर्विदेशीयविद्वत्सु पण्डितमहोदयस्य यशः परिचयश्च समजायत । एतेषां प्रकाशनानां सूची 'आ' चिह्नितभागे विद्यते ।

अमुना १९७५वैक्रमाब्दे सौरमार्गशीर्षस्यैकविंशदिने स्वपदात्पूर्णावकाशो लब्धः सवृत्तिकः । भारतसर्वकारप्रयासेनास्यावकाशवृत्तौ वृद्धिरपि जाता ।

असौ पण्डितः सरस्वतीसेवया स्वकीया मेकषष्टिवर्षपरिमितामवस्थां व्यतियाप्य १९६८वैक्रमाब्दे (१९२१ ख्रिष्टाब्दे) कार्तिकमासे पत्नी पुत्रौ तिस्रः पुत्रीश्च विहाय दिवङ्गतः । दिवङ्गतस्य महामहोपाध्यायस्यास्य पत्नी स्वनाम्ना भारतसर्वकारात् पारिवारिकवृत्तिं १९४० ख्रिष्टाब्दं यावत् प्राप्नोत् ।

अमुष्य महामहोपाध्यायस्य प्रकाशनानां सूची—

भागः—'अ'

१. राजतरङ्गिणी (श्रीए० स्टेनेन प्रकाशितम्)
२. काश्मीरीभाषा-शब्दकोषः (श्रीसरजार्जग्रियर्सनेन प्रकाशितान्यतः परमष्टौ पुस्तकानि)..
३. शिवपरिणयः ४. रामावतारचित्रम्
५. कृष्णावतारलीला ६. सह्नवाक्यानि

| | |
|---|---|
| ७. ईश्वरशतकम् | ८. काश्मीरीलोकोक्तिपुस्तिका |
| ९. काश्मीर-शब्दामृतम् | |
| १०. संस्कार. | (ए० डब्ल्यूस्टेटनेन प्रकाशिते) |
| ११. काठकगृह्यसूत्रम् | |

भागः—'आ'

| | |
|---|---|
| १. शिवसूत्रविमर्शिनी | २. प्रत्यभिज्ञाहृदयम् |
| ३. शिवसूत्रवार्तिकम् | ४. शिवसूत्रवृत्तिः |
| ५. स्पन्दवृत्तिः | ६. स्पन्दविवृतिः |
| ७. परमार्थसार | ८. काश्मीरशैवमतम् |
| ९. हिन्दूयथार्थवाद. | १०. लल्लेश्वरीवाक्यानि |
| ११. विज्ञानभैरवः | १२. कामकलाविलासः |
| १३. शतत्रिंशतत्त्वसन्दोहः | १४. भावोपहारः |
| १५. बोधपञ्चदशिका | १६. अनुत्तरप्रकाशपञ्चाशिका |
| १७. परप्रवेशिका | १८. महार्थमञ्जरी |
| १९. जन्ममरणविचारः | २०. अमरौघशासनम् |
| २१. तन्त्रालोकः | २२. ईश्वरप्रत्यभिज्ञाविमर्शिनी |
| २३. तन्त्रसारः | २४. स्पन्दसन्दोहः |
| २५. स्तवचिन्तामणिः | २६. परात्रिंशिका |
| २७. महानयप्रकाशः | |

—

### डा० राधाकृष्णकावः

आङ्ग्लभाषामाध्यमद्वारा संस्कृतसेवारतस्य डा० राधाकृष्णकावमहोदयस्य जन्म श्रीनगरे अप्रेलमासे १९०५ खिष्टाब्देऽभूत् । फारसीभाषाविदोऽस्य जनकस्य नाम पण्डितमहादेवराम इत्यासीत् । प्रारम्भिकीं शिक्षामसौ समाप्य 'एस० पी० कालेज' इत्यस्मात् महाविद्यालयात् १९२७ खिष्टाब्दे बी० ए० परीक्षामुत्तीर्णवान् । वेदान्त-

शास्त्रपिपठिषयाऽनेन शैशवे एव तत्कालप्रसिद्धानां वेदान्ताचार्याणां श्रीमाधवानन्द-सरस्वतीमहोदयानां पादच्छायाया १९१६ ख्रिष्टाब्दतः १९२७ ख्रिष्टाब्दपर्यन्तमन्ते-वासित्वं स्वीकृतम्। पश्चात् १९३१ ख्रिष्टाब्दे एभि. काश्मीरसर्वकारात् इञ्जीनियरिंग-वृत्तिर्लब्धा। इञ्जीनियरिंगप्रशिक्षणं च त्रिभिर्वर्षैः समापितम्। कालान्तरेणैभिः १९३७ ख्रिष्टाब्दे लवपुरस्थविश्वविद्यालयतः संस्कृते एम० ए० परीक्षा पारिता। अनन्तर विश्वविद्यालयस्यावकाशेषु जम्बूपुर्यां स्थितस्य श्रीरघुनाथसंस्कृतमहाविद्यालयस्यो-पाध्यक्षाणां तत्रभवता गुरुवर्याणां श्रीचन्द्रशास्त्रिणा सकाशाद् एभिः केषाञ्चिज्-जटिलप्रश्नानां समाधानं विहितम्। अनेन संस्कृते एम० ए० परीक्षायां महानिबन्ध-रूपेण अश्वघोषविलिखितस्य पद्यचूडामणेरालोचनात्मको भूमिकासहितोऽनुवादः सम-र्पितः। तत. काश्मीरस्य प्रत्यभिज्ञादर्शने अनुसन्धानात्मकं महानिबन्धं जम्बूपुरी-स्थितस्य 'पी० डब्ल्यू० कालेज' इत्यस्य महाविद्यालयस्य संस्कृताध्यापकस्य डा० सिद्धेश्वरवर्म एम० ए० डी० लिट् महोदयस्य पथिप्रदर्शने पी० एच० डी० पदवी-प्राप्त्यै विरचयामास। अमुना उत्पलदेवस्य प्रत्यभिज्ञाकारिकाया आङ्ग्लभाषानु-वादोऽपि कृत.। फलतः 'ओरिजीन एण्ड डेवलिपमेंट आफ दि प्रत्यभिज्ञा स्कूल आफ काश्मीरशैविज्म एण्ड वेस्टर्न साइस्टेन्स आफ फिलोसोफी, एतच्छीर्षकान्तर्गत महालेखं १९४३ ख्रिष्टाब्दे पञ्जाबविश्वविद्यालये प्रेषितवान् येनासौ १९४६ ख्रिष्टाब्दे सफलो घोषितः। पश्चादसौ गवेषणयोजनायां भारतसर्वकारेण 'मोनोग्राम आन एग्रीकल्चर इन अनसा इण्डिया'इति लेखनाय इण्डियनकौन्सिल आफ एग्रीकल्चरल रिसर्च न्यूदेहली-द्वारा रिसर्चविद्वान् निर्वाचितः। तत्र दिल्लीस्थापितभारतीयकृषिगवेषणसंस्थायास्तत्त्वा-वधाने विविधविश्वविद्यालयानां पुस्तकालयेषु प्राच्यगवेषणसंस्थासु कृषिसम्बन्धिनां पाण्डुलिपीनां गवेषणात्मकं गम्भीरमध्ययनं विधाय कृषिशास्त्रमालोडितवान्। १९५१ ख्रिष्टाब्दपर्यन्तमुक्तविषये गवेषणं विधायानेन मोनोग्रामस्य चत्वारो भागाः प्रकाशनाय भारतीयकृषिगवेषणसंस्थायै दत्ताः। येषामधुना प्रकाशनकार्यं मुद्रणालये वर्तते। योजनासमाप्त्यनन्तरमसौ भारतीयकृषिविभागे एतत्सम्बन्धिनि विषये च भागत्रय-मलिखत। यत्तु सम्प्रति अस्य विदुषः पार्श्वे अप्रकाशितं वर्तते। गवेषणकार्यसंलग्नेना-नेन महानुभावेन 'शारदापीठरिसर्च'केन्द्रस्य स्थापना १९५८ ख्रिष्टाब्दे विहिता। सर्वत्र भारतीयविज्ञानस्य प्रचारः प्रसारश्च इति तावदस्योद्देश्यम्। आङ्ग्लमाध्यमेन संस्कृतेन चाद्यावधि उक्तकेन्द्रेण 'शारदापीठरिसर्चसिरीज' इत्याख्याया. पत्रिकायाश्चत्वारो भागाः प्रकाशिता.। अस्याः पत्रिकाया. मुख्यसम्पादकपदम् अध्यक्षपदं चायमेव समलङ्करोति। अयं विद्वान् होशियारपुरस्थ विश्वेश्वरानन्दवैदिकशोधसंस्थाया

स्नातकोत्तरसंस्कृतविभागे प्राध्यापकपदं निर्वहति। महाविदुषाऽनेनाऽनुसन्धानद्वारा कल्हणकृतराजतरङ्गिण्या आलोचनात्मकसंस्करणस्य सन्दिग्धप्रकरणानां स्पष्टीकरणं कृतम्। उपर्युक्तशोधसंस्थाने अनेन स्वनिर्मितस्य पी० एच० डी० महानिबन्धस्य प्रकाशनाय प्रबन्धः कृतः, भारतीयकृषिविभागस्यैकं पुस्तकं प्रकाशनाय तत्रैव प्रदत्तमनेन। तत्रैवानेन उत्पलकृतप्रत्यभिज्ञासूत्राणि टिप्पणीसहितानि अनूदितानि। महोद्यमशालिनानेन जम्बूकाश्मीरप्रान्तस्य प्रधानमन्त्रिणा श्रीबक्शीगुलाममुहम्मदमहोदयाना भूतपूर्वमन्त्रिणा श्रीश्यामलालसराफमहोदयाना च संरक्षकत्वे 'जम्बूकाश्मीर-ओरियण्टलरिसर्च'नाम्नी संस्था स्थापिता। असौ १९५९ खिष्टाब्दतः उक्तसंस्थायाः प्रधानमन्त्रिपदं विभूषयति।

१९६१ खिष्टाब्दे अखिलभारतीयप्राच्यविद्यापरिषदधिवेशने श्रीनगरे धर्म-दर्शनशास्त्रविभागस्य स्थानीयसहकारिमन्त्रिपदमलङ्कृत्य असौ गवेषणात्मकं लेखमलिखत्। साहित्यिकस्नेहेनानेन वृन्दावनस्यप्राच्यदर्शनसंस्थाने जनवरीमासे १९६२ खिष्टाब्दे एको विषयः प्राच्यविद्यामहासम्मेलनेऽधीत, इदं महासम्मेलनं 'जीवनस्य पूर्वीयपाश्चात्याध्यात्मिककमूल्याङ्कनम्' इतिविषयविचाराय संयोजितमासीत्। अद्यपर्यन्तमनेन मौलिकसंस्कृतस्याधारेण शतादधिका गवेषणात्मका लेखा लिखिताः, ये भारतस्य विविधपत्रिकासु प्रकाशिताः सन्ति।

---

### रामकृष्णकविः

असौ जम्बूकाश्मीरराज्यानुसन्धानविभागे कार्यं कुर्वन् 'भरतनाट्यशास्त्रम्' अभिनवभारतीसहितम्, अभिनवगुप्तनामकं ग्रन्थञ्च समपादयत्।

---

### रामचन्द्रकाकः

श्रीयुतः रामचन्द्रकाकमहोदयः काश्मीरे लब्धजन्मा तत्रत्यराजकीयानुसन्धानविभागस्याध्यक्ष आसीत्। भारतविभाजनकालेऽसौ जम्बूकाश्मीरराज्यस्य प्रधानमन्त्रिपदे नियुक्त आसीत्। अमुना 'गन्धर्वतन्त्र'नामकमागमशास्त्रं गवेषितं सम्पादितं च। तच्च काश्मीरराज्यस्यानुसन्धानविभागेन १९३४ खिष्टाब्दे प्रकाशितम्। काकमहोदयेन १९२९ खिष्टाब्दे 'क्रमदीपिका' नामकं पुस्तकमपि गवेषितम्। तेनैव गवेषितं 'बृहन्नीलतन्त्रं' राजकीयानुसन्धानविभागेन १९३८ खिष्टाब्दे प्रकाशितम्। अन्येऽपि

केचन ग्रन्था अमुना विद्वन्मूर्धन्येन सम्पादिता श्रीहरभट्टशास्त्रिसहयोगेन। तेषु तावदुल्लेखनीया अधो निर्दिश्यन्ते।

१ आह्निकपद्धति
२ मृगेन्द्रतन्त्रम्
३. देवीरहस्यम्
४ विद्यार्णवतन्त्रम्
५ शिशुपालवधम् वल्लभदेवकृतटीकोपेतम्।

---

## रामचन्द्रगाडरू

गारुडीविद्यासु निपुणोऽसौ श्रीरणवीरसिंहशासने काश्मीरेषु लब्धप्रतिष्ठ आसीत्। महानुभावोऽसो खानकाहिसोक्तानाम्नि प्रदेशे श्रीनगर उवास। तेन हि स्वोपज्ञव्याख्यायुता अनेके ग्रन्था विरचिता आसन्, येऽमुष्य भवनेन साधमेव भस्मीभूता। किञ्चामुष्याद्वितीयो हस्तलिखितपुस्तकालयोऽपि दाहेन विनष्टोऽभूत्, यत्र महाकवे रत्नाकरस्य पुराण काश्मीरेतिहासविषये, क्षेमेन्द्रस्य च नृपावल्यपि दग्धे अभूतामित्याकर्ण्यते। एतत्प्रणीता शिवसूत्रमङ्गलश्लोकव्याख्या काश्मीरसंस्कृतग्रन्थमालातो जगदीशचन्द्रचट्टोपाध्यायसंस्करणेन सार्धमेवाद्यत्वे मुद्रितोपलभ्यते। जगदीशचन्द्रेणासौ 'गदारि' इत्युपनाम्ना शिवसूत्रविमर्शिन्या प्रारम्भिके सङ्केतित। अस्य सुत श्रीधरगाडरूमहोदयोऽपि महापण्डित आसीत्।

---

## रामचन्द्रभट्ट काश्मीरिक

महापण्डितेनामुना महाराजकाश्मीरनरेशश्रीरणवीरसिंहाश्रितेन मार्कण्डेयपुराणस्य टीका चतुस्त्रिंशदधिकैकोनविंशतिशततमे वैक्रमे हायने लिखिता, याधुना रणवीरसंस्कृतानुसन्धानपुस्तकालयऽमुद्रितोपलभ्यते। टीकाया अभिधान भावप्रदीपक इत्यस्ति। तथा द्वात्रिंशदधिके एकोनविंशतिशततमेऽब्दे मत्स्यपुराणस्य अपि टीका भावप्रदीपनाम्नी कृता। अस्या अपि सद्भाव प्राङ्निर्दिष्टपुस्तकालय एवास्ति।

---

## लक्ष्मणराजानक (ब्रह्मचारी)

महामहिमशालिना विश्वविदितवैदुष्याणा शैवाम्नायदीक्षिताना प्रकाण्ड-

पण्डितानां ब्रह्मचारिश्रीराजानकलक्ष्मणमहोदयानां जन्म राजानकान्वये काश्मीरेषु समजनि। अत्र भवतां तातपादाः (काश्मीरिक)वैतस्तनौपोताध्यक्षाः 'नावनारायण' इति लोके ख्यातिं गताः। श्रीनारायणजीमहानुभावाः लक्षाधीशाः श्रेष्ठिनो बभूवुः। अमीषामेव कुलगुरवः (कुलपुरोहिताः) परमशैवाः शिवाध्यानपरायणाः परमपूज्याः समाधिषु कृतशिवसाक्षात्काराः श्रीरामभट्टारकाभिधा आसन्। यैर्वंशपरम्परागतां पुरोहितानुबन्धिनीं वृत्तिमुज्झित्वा संसाराद् विरतिरधिगत्ताऽऽसीत्। दूरतोऽथ वृत्तसंसृतिमार्गाणामेव परित्यक्ताणवादिमलत्रितयानां श्रीरामभट्टारकमहोदयानामावासः पूर्वोक्तेन श्रीनारायणेन स्ववासास्थ्याशे फतेहकदलाभ्यन्तरे उपकल्पित आसीत्। योऽद्यत्वे "श्रीरामशैवाश्रम" नाम्ना काश्मीरेषु प्रसिद्धिं गत्वाऽप्रथिष्ट। एषः सविस्तरः परिचयोऽन्यत्र लिपिबद्धोऽस्ति। एवमनुश्रूयते निरपत्यानां श्रीराजानकान्वयावतंसानां नावनारायणजीमहोदयानां सुविशाला समृद्धिः समुज्ज्वला नौव्यापारश्चास्ताम्। तयोः सद्भावेऽप्यनपत्यता सुमम्पन्नमेनं नैरन्तर्येण दुनोति स्म। यद्वशात् काप्यूय गतासीदेषां तनूरिति वीक्ष्यामीषां साध्वी सहधर्मचारिणी सततं श्रीरामभट्टारकमेवोपचचार। फलतः पुत्रार्थिन्याऽनया साध्व्या सनिर्बन्धं क्रियाममभिहारेण सन्ततिदानाय प्रार्थिता गुरुवराः। तद्वरिवस्यामुदितान्तरङ्गा अमी दत्तिवरास्तस्याः कामनां प्रपूरयामासुः। यदीयानुकम्पानुगृहीता प्रातःस्मरणीया सा दारिकातिरिक्तं सुतद्वयं सुषुवे। ययोः कनीयानेतच्चरितनायको राजानकलक्ष्मणोऽस्ति। योऽनुग्रहपरवशेन श्रीरामभट्टारकमहोदयेनैव प्रियतया लक्ष्मण इति कृतनामधेयः स्वगुरुपादानामनन्तरं गुरुकृत्यनिर्वोढाऽभवत्। अथ विक्रमे चतुःषष्ट्युत्तरनवशताधिकसहस्रतमे वत्सरे माधवमासस्यासितपक्षद्वादश्यां परतस्त्रयोदश्यां जीवे लब्धजन्माऽभूत्। दिवसोऽयं विश्वस्मिन्नपि विश्वे निरुपद्रवः प्रसन्नदिवसौम्यश्चासीत्। पित्रोर्वात्सल्येन लालितः पोषितोऽयं स्वगृहान्तिकवर्तिनि गवर्नमेण्टहाईस्कूलाख्ये प्रसिद्धविद्यालयेऽधिजगे। यत्रायं संस्कृतमाध्यमतः प्राथमिके स्तरे प्रावेशिकीं परीक्षामुदतारीत्। पितृभ्यां निरतिशयं परिपोषितोऽपि सन्नयं संसृतिमार्गादुद्विविजे। फलतश्चायं निर्वेदमाप्य राजानकमहेश्वराभिधाद् देशिकप्रवराच्छैवशास्त्राण्यध्यगीष्ट। यत्र परस्ताच्चायं मन्दं मन्दं कृताभ्यासः परिशीलनेन न केवलं शास्त्रेष्वेव परं प्रावीण्यमभजत् प्रत्युत चर्याक्रमे योगाभ्यासे चापि स्वानुभवनिघ्नमनुभूतिकौशलं समासमाद। परिणामतश्चायं तत्तद्योगिसकाशात् सचमत्कृतिं योगप्रक्रियामपि पारिपूर्ण्येनाप्तवान्। अथ मुक्तगृहभारोऽयमीशानग्रामाभ्यन्तरे स्वयं निर्मापिते परमपावन आश्रमे यमनियमपूतः सन् समध्युवास। यत्र परःशताः अन्तेवासिनः समागत्यास्मात् सरहस्यानि शैवशास्त्राणि नियमेनाधीयते स्म।

आत्यन्तिकञ्च श्रेयो लभन्ते स्म । एतर्ह्यप्ययं स्वकीयां स्थितिमक्षुण्णां तथैव प्रतिपालयन् नैष्ठिकं जीवनं धारयति । शैवशास्त्रप्रक्रियामधिजिगांसवो नैके विद्वांसस्तत्तद्देशात् समागत्यास्मात् साम्नायं शैवागमं परिशीलयन्त्येतन्महानुभावानाममगाधं प्रोद्भटं च पाण्डित्यमाशंसति । सर्वथाऽधुना सतीजननीगर्भशुक्तिमौक्तिकं शौद्धोदनिरिव विविक्तसेवी सन्न्यस्तससृतिपाथोधिरवधीरितसमस्तसमृद्धिसंभारो निखिलभुवनोपकरणीकृतकायः शैवाध्वरदीक्षितः स्वाध्यायमात्रपरायणः शैवे योगे परिनिष्ठितोऽयं महीयसा स्वात्ममहसा भ्राजते । स्वान्तेवासिनां परमभक्तानां चासौविध्यं विज्ञाय शिष्यकृपापरवशोऽयमीशाद्रिस्थमसुप्रापं दुरारोहं स्वाश्रमं परिहृत्यापरं सर्वसुलभं स्वाश्रमं सुप्रसिद्धमुगलोपवननिशातारामाभ्याशे उपपद्मसरोवरतीरं निर्ममौ । यत्र दर्शकपर्यटकवृन्दानां विकचकमलकमनीयं नयनाभिरामं पद्मसरोवरं (डल) दृश्यं चित्तं समाकर्षति । प्रतिरविवासरमत्र समागतो ब्रह्मचारिमहोदयानां शिष्यसमाजो नियमेन स्वाध्यायं करोति अविरतं चाश्रमेऽस्मिन् विविधानाध्यात्मिकविषयानवलम्ब्य सत्समागमपुरःसरं विद्वज्जनानां शास्त्रचर्चां शृणोति । सन्ति चैषां प्राच्याः पाश्चात्याश्च वरशिष्याः, येषु विशिष्टा 'मिस एल सिल बर्न' (Miss L. Sil Burn) नामिका फ्रांसदेशीया महिला, श्रीठाकुरजयदेवसिंहादयश्च भवन्ति । तत्र फ्रेंचमहिलयाऽनयाऽस्मादधीत्य 'परमार्थसार' 'विज्ञानभैरव' 'महार्थमञ्जरी' त्यादीनां शैवागमग्रन्थानां फ्रेञ्चानुवादः स्वपाठकानां पुरतः उपहारीकृतः । श्रीठाकुरजयदेवमहोदयानामाङ्ग्ल्या टीकया विभूषितं प्रत्यभिज्ञाहृदयमचिरेणैव मुद्राप्य प्रकाशयिष्यते । एते ग्रन्था प्रायशो ब्रह्मचारिमहोदयानां करकमलेभ्य एव समर्पिताः सन्ति । पी०एच०डी० इत्यादिमहोपाधिकामुकानां छात्राणां शैवमहानिबन्धविषयेऽयमेवात्र सहायको भवति डा० श्रीविष्णुदत्त नवजीवनरस्तोगी-विनोदप्रभृतयः एतद्विषयेऽस्मात्पर्याप्तं साहाय्यमाश्रितवन्तः ।

एतदीयं साहित्यम्—पूर्वं व्याख्याष्टकेनान्तरितं मुम्बापुरीमुद्रितमभिनवश्रीगीताव्याख्यानमसावजनोन सर्वसाधारणजनताया अनुपकरिष्णु विभाव्यैभिः सशुद्धमस्याभिनवगुप्तीयव्याख्यानस्य नूतनं संस्करणं सम्पाद्य मुद्रापयित्वा च प्रकाशितम् । अनन्तरं च स्वाभ्युदयनिःश्रेयसकामानां विषयवासनादूषितान्तःकरणानां कृते क्षेमराजीयटीकासवलिता स्वनिर्मितराष्ट्रभाषया भूषिता साम्बपञ्चाशिकापि महात्मभिरेभिः सुचारुतया सम्पाद्य मुद्रापयित्वा मुमुक्षुजनहिताय प्राकाश्यं नीता । किञ्च वाराणसीचौखम्बासंस्कृतसीरीज इति सुप्रसिद्धात् कार्यालयात् मुद्रिताऽशुद्धप्राया च्युताक्षरपादादिदूषिता शिवस्तोत्रावलिर्महात्मनामपामन्तःकरणं दुःखाकरोति स्मेति तदवस्थां वात्सल्यरसप्रपूर्णां तामवलोकयितुमप्यसहमानः प्राचीनतमान् कतिपयानादर्शस्तोत्रा-

वलीग्रन्थान् संगृह्य सुपरिष्कृत्य च तद्द्वारेणैव सुशुद्ध नूतनतमं सस्करणमचिरादेव पूर्वोक्तान्मुद्रणालयादेव प्राचीकटत्। एतदतिरिक्त क्रमनयदीपिका स्वकृतभाषानुवादसवलितैभि: सम्मुद्रच सम्पादनपुर:सर प्राकाशि। किञ्च सस्कृतप्रणयिनाऽनेन तत्रभवच्छास्त्रिनाथरामप्रणीतस्य विष्णुसहस्रनामोल्लासस्य स्वीयेनैव व्ययेन प्रकाशनमकारि, यत्र विष्णुसहस्रनामावल्या: प्रत्यभिधानमेकैक. श्लोक: अर्थस्फुटनपूर्वक विरचितोऽस्ति। इति सार्वात्म्येन गीर्वाणगिर: परिचर्यासलग्नो दृश्यतेऽयम्। किञ्चास्मान्नान्य: शैवागमग्रन्थग्रन्थिविभेदनक्षमो विद्वान् काश्मीरेषु अद्यत्वे दृग्गोचरीभवति। संन्यस्तस्य त्वस्य महात्मन: 'स्वामी ईश्वरदास' इत्येपा प्राप्तसमज्ञा सञ्जेति उत्पलदेवकृतशिवस्तोत्रावलीप्रभृतिभ्य एतत्प्रकाशितसम्पादितपुस्तकभूमिकाभ्योऽवगम्यते।

---

## लसकाकराजानक:

लक्ष्मीरामापरपर्याय. श्रीलसकाकराजानको मातु: श्रीमेरो: सकाशादुपात्तजनन स्तत्रभवत: श्रीगोपालराजानकस्यात्मज आसीत्। बाल्ये चासौ स्वपितुर्गोपालराजानकादेव सकलानि कोशव्याकरणकाव्यादीनि शास्त्राण्यध्यगीष्ट। महाभागोऽयं कुशाग्रबुद्धितया स्वजनकं महाविद्वासमतिशयानो विविधविषयावगाहिनी सर्वतन्त्रस्वतन्त्रा विवेकशालिनी च धियमुवाह। लेखनकलायामप्यस्य पाटवमवर्णनीयमासीत्। एवमनुश्रूयते यद्-अनेन महापण्डितेनाऽऽजीवमेकर्यवापरिवर्तितया लेखन्याऽनेके ग्रन्था: सुलिप्यां लिखिता आसन् इति। शैवशास्त्रमर्मज्ञोऽयं परात्रिंशिकाख्यमत्युद्भट शैवग्रन्थ सुसरलया साररूपया लघुविवृत्याख्यया व्याख्यया व्याख्यत्। शैवव्याकरणादिशास्त्रै: सह महापण्डितोऽयं चिकित्साशास्त्रमायुर्वेदमपि सुनिपुण जानातिस्म, तात्कालिकेषु सकलेषु भिषक्षु चापि मूर्धन्यो बभूव। कल्पकर्मण्यपि चातुरीमभजत्। गार्हस्थ्यजीवनोपयोगायामुना चिकित्साविषये साधारणो वैद्यसङ्ग्रहाख्य एको लघुकलेवरो ग्रन्थोऽपि निरमायि। महानुभावोऽसावनेकानन्तेवासिन: शैवमार्गं दीक्षयस्तथा अष्टाशीतिवर्षमित वय.काल यावत् स्वगेहे नानाविषयाधीत्यभिलाषुकान् स्वीयान् सच्छिष्यान् पाठयन्नास्त। प्रकीर्णान् सुभाषितश्लोकानतिरिच्य निम्नाङ्किता: कृतयोऽस्यैतर्हि समुपलभ्यन्ते।

१. श्रीमद्भगवद्गीता टीका (लासकी)
२. स्फोटपद्धति.
३. गीतासार:
४. व्याहारसमुच्चय:
५. धर्मसङ्ग्रह:
६. मीमांसासार:
७. शारीरकसारसङ्ग्रह:

'महाराज्ञीप्रादुर्भावः', शारिकामाहात्म्यम्' इत्यादयो ग्रन्था हिन्दीभाषायामनूदिताः। विश्वविख्यातानां गिलगित्तपाण्डुलिपीनां सहायकसम्पादकत्वेनापि तत्रभवता कीर्तिरासादिता।

अमुना काश्मीरसर्वकारनियुक्तेन डा० नलिनाक्षदत्तसहयोगेन निम्नलिखितवर्षेषु गिलगित्तपाण्डुलिपेर्निम्नलिखितभागाः सम्पादिताः। अन्यौ च द्वौ निम्नलिखितौ ग्रन्थौ सम्पादितौ।

१. प्रथमो भागः (१९३९) २. द्वितीयो भागः (१९४१)

३. तृतीयभागस्य तृतीयखण्डं (१९४१) ४. द्वितीयखण्डम् (१९४२)

५. तृतीयभागस्य प्रथमखण्डम् (१९४६)

६. चित्तसन्तोषत्रिंशिका ७. नागार्जुनस्य परमार्चनत्रिंशिका



## शिवोपाध्यायः

श्रीप्रकाशोपाध्यायानामात्मजोऽसौ उपाध्यायान्वये पुष्टाङ्गानां (पठानानां) शासनस्य चरमे समये काश्मीरेषु जनिं प्राप। पश्चात् शिष्याणां (सिक्खानां) साम्राज्येऽपि परां प्रतिष्ठामधिगतवान्। एतत्समये सुखजीवनाभिधः कश्चन लोकप्रियः शासकः पुष्टाङ्गानां (पठानानां) प्रातिनिध्येन काश्मीरान् शास्ति स्म। लेखस्यास्य चरितनायकः श्रीशिवोपाध्यायः सर्वतन्त्रस्वतन्त्रो मान्त्रिको बभूव। यतोऽसौ विज्ञानभैरवपुस्तकस्यान्तिमायां पुष्पिकायां सुखजीवनं सादरं स्मरति। अस्मिन् विषये किंवदन्त्येकात्र रूढिं गताद्याप्यभिनवैव लक्ष्यते। यदयमेकदा परमपूतत्वात् गोर्यमाय इतिप्रथिताभिख्येन केनापि मान्त्रिकवरेण देव्यै चण्डिकायै उपहारीकर्तुकामेन निमन्त्रितो रहःप्रदेशे स्वकर्मसाधनाय नीतश्च। परं तत्रामुष्य मन्त्रशक्तिः शिवोपाध्यायानां मन्त्रशक्तिप्राबल्याद्विनष्टाऽभूत्। न किञ्चिदपि साधयितुं प्रभुतामवहदसौ। येन लज्जावनतमुखो भूत्वा तं क्षमां ययाचे, असौ श्रीनगरे काष्ठीलप्रदेशे निवसतिस्म, यस्यैकतो वितस्ताऽपरतश्च दुग्धधारा नाम नदी प्रवहति स्म। तद्यथा—

यस्मिन्नेकत्र पार्श्वे वहति परनदी श्रीवितस्तेति गीता
पार्श्वेऽन्यस्मिन्नुमाचूचुकसरणिगलद्दुग्धधारा नदी च।

तस्मिन् काष्ठीलदेशे विरचितवसतिर्लब्धवर्णः शिवाख्यो
व्याख्यत् सौभाग्यविद्यामभिमतफलदां जात्युपाध्यायशब्दः ॥
इति श्रीविद्याविवरणान्तिमपुष्पिकायामुट्टङ्कितवानसौ ।

तस्य निम्ननिर्दिष्टा रचना गवेषणयैतर्हि समुपलभ्यन्ते ।

१. शिवरात्रिनिर्णयः २. गायत्रीमन्त्रार्थविवृतिः

३. श्रीविद्याविवरणम् ४. विज्ञानभैरवोद्योतसंग्रहः

आसु विज्ञानभैरवोद्योतं विहाय न कापि मुद्रितास्ति । पञ्चसप्तत्युत्तरैकोनविंशतिशततमे (१९७५) वैक्रमाब्दे तदनुसृत्या १९१८ खिष्टाब्दे महामहोपाध्यायः श्रीमुकुन्दरामशास्त्री प्रत्नविद्याप्रकाशविभागतः (श्रीनगरे) श्रीविज्ञानभैरवोद्योतविवृतिं प्राकाशयत् । ग्रन्थोऽयमागमप्रधानः भैरवभैरवीसंवादरूपो रुद्रयामलाख्यतन्त्रान्तर्गतान्यतमभागः, क्षेमराजशिवोपाध्यायाभ्यां विहितया भागशष्टीकया उद्योतितश्च । तत्र श्रीशिवोपाध्यायो भैरवादिदुरूहशब्दानां सुललितार्थप्रतिपादयिष्या सारगर्भितया वृत्त्या सुगूढमाशयं विशदीकृतवान् ।

---

### श्रीकण्ठकौलः

अमुना जोनराजस्य राजतरङ्गिण्या एकमालोचनात्मकं संस्करणं सम्पादितं यद् विश्वेश्वरानन्दवैदिकशोधसंस्थानेन प्रकाशितम् ।

---

### साहिबरामः

तत्रभवतां श्रीसाहिबरामवर्याणां जन्म श्रीनगरे एकोनविंशत्यधिकैकोनविंशतिशततमेऽब्दे समभूत् । एषां पूर्वजा अनन्तनागप्रदेशतः स्वां वृत्तिमन्वेषयितुं श्रीनगरे एव न्यूपुरिति श्रूयते । एतदनुमीयते यत्तेषां निवासस्थानपरिवर्तनमष्टादश्याः शताब्द्याः पूर्वार्धे समजनि । प्रस्तुतचरितस्य नायकानां श्रीसाहिबरामकौलमहोदयानां तातपादाः श्रीदिल्लाराममहोदया भैरवपुराङ्गणे (भीरवापरगनान्तरे)'कारदारपदवी' भूषयामासुः । तदानीं यातायातसाधनानां सौविध्याभावात् तदीयाधिकारस्यैकत्रानवस्थानशीलत्वाच्च स्वगृहे चिरं निवासाय समयस्तैर्न प्रापि । अतस्तदीयतनुजन्मनां शिक्षाभार-

प्रायेणासावपि रणवीरपरिषद मण्डयामास । अयमनपत्यतया स्वभगिनीसुत दत्तकपुत्रमकार्षीदिति श्लोकादस्मात्प्रतीयते—

वेदान्तामृतयानशोधितचिदादर्शोल्लसच्छुद्धदृक्
सद्दृष्टात्मिकतत्त्वनित्यमुदित काश्मीरवासी मुनि ।
आसीच्छ्रीलसकाकनामकबुधस्तेनास्मि नीतोऽन्वये
स्थित्यै कौलनिधानकात् स्वभगिनीसूना प्रशान्तात्मन ॥

---

### वामदेव

'मुनिमतमणिमाला'नामकस्तान्त्रिको ग्रन्थो विदुषाऽमुना लिखित ।

---

### वासुदेवगञ्जू

महामनीषी दार्शनिककविरसौ श्रीनगरे महाराजश्रीगुलाबसिंहसमये जनिमापेति श्रूयते । असावीश्वरकाकमहोदयाना दत्तक सूनुस्तथा लसकाकमहोदयाना पौत्र आसीत् । समाध्यवस्थाया साक्षात्कृतपरब्रह्माऽयं काश्मीरनरेश्वररणवीरसिंहमाश्रित १८५६-८७ वर्षेषु विख्यातो बभूव । अय हि श्रीलक्ष्मीनारायणभिधेन लसकाकेन वंशविस्ताराय स्वभगिनीसूनो प्रशान्तात्मनो निधानकौलाद्दत्तकत्वेनानीय धृत, पोषितश्चाभूत् । तेनानेन शैशव एव स्वपितामहाल्लसकाकमहोदयात्तथा स्वजन्मपितु कौलनिधानकाच्चानुपूर्व्या कोशव्याकरणकाव्यादीना परिशीलन कृतमासीत् । शैवशास्त्रस्यास्य देशिक श्रीविद्याधर आसीत् (सम्भाव्यतेऽयमेव कौलविद्याधरो भवेद् येनैका लघुशिवसूत्रवृत्तिर्विरचिताऽस्ति ।) श्रीचित्तप्रदीपाभिध वेदान्तशास्त्र स्वोपज्ञवृत्तियुतमसौ अष्टाशीत्यधिकसप्तदशशततमे (१७८८) शकाब्दे प्रणिनाय । ग्रन्थोऽयमेकादशसु प्रकरणेषु विविधवृत्तमय्या गीर्वाणगिरा महापण्डितेनानेन ग्रथितोऽस्ति । स्वकल्पितया वृत्त्या मूलार्थलापनक्षमता दधानो ग्रन्थोऽयमद्य तावदमुद्रितो वर्तते । अस्य वंशधरा एतर्हि श्रीनगरे हब्बाकदलाभ्याशे शशियारप्रदेशे निवसन्ति यत्रासौ महानुभाव स्वयमपि न्यवात्सीत् । अतोऽतिरिक्ता एतत्प्रणीताश्चतस्रोऽन्या रचना समासाद्यन्ते । ता यथा—

१. सटिप्पणा ब्राह्मीविद्या
२ हरिहरस्तोत्रम्
३. स्वात्मदेवस्तोत्रम्
४. ताराचन्द्रप्रकाश

---

## श्रीविद्याधर (स्वामी)

असौ श्रीनगरान्तर्गतकर्णनगरनिवासी काश्मीरिक सारस्वतब्राह्मण श्रीस्वाम्यमरनाथस्य कन्दराया तपस्यन् बहूनि ज्ञानानि समुपार्जयत् । अस्याऽऽश्रमे निवसन्तो बहवो जना विद्याध्ययनमकुर्वन् । अधुनापि श्रीनगरस्थकर्णनगरे तदीय आश्रमो विद्यते ।

---

## डा० शिवनाथशर्मा

श्रीनगरस्थ'नरवीर' इत्याख्योपमण्डले वास्तव्यस्य श्रीशिवनाथशर्मणो जन्म सप्तर्षिचारानुमतेन ४६७१ तमे हायनेऽभूत् । अस्य कर्मकाण्डविशारदा तातपादा पण्डितशुकदेव इत्यभिख्या आसन् । पूर्वं बाल्यकाले स्वगृहे एव पितृपादै सम्यक्तयाऽस्य कर्मकाण्डज्योतिर्विद्याया प्रावीण्य प्रापित । अनन्तरमाङ्ग्लविद्यापाठालये कतिचिद् वर्षपर्यन्तमाङ्ग्लविद्यामभ्यस्य त पाठालय परित्यक्तवान् । सस्कृतविद्यामध्येतुकामोऽय श्रीनगरस्थराजकीयसस्कृतपाठशाला प्राविशत् । तत पञ्चनदविश्वविद्यालयस्य क्रमश प्राज्ञ-विशारद शास्त्रिपरीक्षा समुत्तीर्णवान् । कालान्तरेणासौ वाराणसेयभारतधर्ममहामण्डलद्वारा साहित्याचार्य साहित्यभूषण डी० ओ० सी० इत्यादिविरुदावल्या विभूषितोऽभूत् । पूर्वमनेन शिक्षाविभागे सप्तवर्षाणि यावद् अध्यापनकार्यम् अङ्गीकृतम् । ततोऽय स्वर्गीयमहाराजहरिसिंहस्य निजपुस्तकालये द्वितीयपण्डितस्थाने कार्यमकरोत् । तत्रैतेन प्राचीनसाहित्यस्य पूर्णतयाध्ययन विहितम् । पश्चादेतेन कलकत्ताविश्वविद्यालयस्य प्राच्येतिहासप्राचार्याणा डा० नलिनाक्षदत्त एम्० ए० पी० एच० डी० डी० लिट् महोदयाना गिलगित्तपाण्डुलिप्या \ सम्पादने साहाय्यमपि कृतम् । पश्चादसौ काश्मीरिकशोधसस्थाने (रिसर्चविभागे) प्रधानपण्डितपदमलङ्कृतवान् । वर्षषट्क यावत् महोदयोऽय श्रीनगरस्थ गवर्नमेण्टओरियण्टलकालेज' इत्याख्ये महाविद्यालये प्रधानपण्डितपद समलङ्कृत्य १६५४ खिष्टाब्दे अवकाश प्राप्तवान् । असौ काश्मीरसस्कृतसाहित्यपरिषद 'श्री' पत्रिकाया उपमन्त्रिपदमुपसम्पादकपद चापि समभूषयत् । अस्या पत्रिकायामस्य लेखा प्रशसार्हा । साहित्यसेवासाधनतत्परोऽसौ काश्मीरब्राह्मणमहामण्डलस्थविद्वत्परिषदो मन्त्रिपदमवलम्बते । डा० राधाकृष्णकावद्वारा सस्थापिताया 'शारदापीठरिसर्चसिरीज' पत्रिकाया सस्कृतविभागस्य सम्पादनमपि करोति । काश्मीरसस्कृतसाहित्यसम्मेलने एभिर्निरीक्षकपदमपि समलङ्कृतम् । असौ महोद्यमी सम्प्रति एफ्० ए० बी० ए० एम ए० पर्यन्त बालिका सस्कृत स्वकुटीरके नि,शुल्क पाठयति । अमुना पण्डितवर्येण 'अमरनाथमाहात्म्यम्',

स्तत्पत्न्या स्वभर्तुरनुपस्थितिवेलाया निर्व्यूढ । शैशवे श्रीसाहिबरामवर्यं कुलक्रमागता पारस्यभाषा शिक्षितु परिस्थितिवशात् तत्तातमहोदयस्तदानी 'मकतव' इति ख्यात विद्यालय प्रति प्राहिणोत् । परमष्टादशवर्षदेशीय सन्नप्यमौ नेपदपि ता भापामशिक्षत, न चापि ता भाषामध्येतुमस्य मनसि रुचिरवर्धत । किञ्चासौ स्वस्मात् प्रदेशात् प्रदेशान्तर, खर्वटात् खर्वट, भ्रमन्निरवरतामयासीत् । अथ तदीया प्रसूस्तच्चेष्टितै पर निर्वेदमापत् । निर्विण्णा च सती सा स्वभ्रातुर्लक्ष्मीरामापरनामधेयस्य राजानक-लसकाकस्य शरणमयासीत् । तदानी लसकाको विद्वद्वरेण्य पण्डिताग्रणीश्चासीत् । तदासौ सर्वकारप्रेरणया तत्साहाय्याश्रयेण च एका स्वतन्त्रा गीर्वाणगिर पाठशाला-मुद्घाट्य प्रतिष्ठापयामास । स्वस्वसुराग्रहेणानुरोधेन च कथञ्चिदसौ चरितनायक साहिबराम गीर्वाणगिरमभ्यासयितु तत्र प्रवेशयामास । श्रीसाहिबरामस्य प्राक्तन-संस्कारवशात् इमामेव विद्या पठितु रुचिरत्यधिकमाकृष्टाभूत् । दिनाद्दिन क्षणात्क्ष णमेकतानचेतसा गीर्वाणगिर परिशीलनेनास्य प्रतिभा विस्फारमलभत । स्वमातुलात् सातत्येन विद्यामभ्यस्यताऽनेन तदीये नेत्रे विस्मयेन विस्फारिते । किञ्च सहाध्यायिना स्वमातुलेयाना मध्येऽसौ बुद्धेर्वैशिष्ट्यमभजत, येनासूयापरवशास्तदीया मातुलेयास्त-मुद्विग्नमकार्षु । कालेन चासौ व्याकरणकाव्यालङ्कारादीनि साकल्येनाधिजगे । वेदा-न्तशैवदर्शने अपि यथावदनेन परिशीलिते । किञ्च शिवदृष्टिरित्याख्यस्य शैवदर्शना-पराभिधस्य परिशीलनावसरे स्फोटवादादिसन्दिग्धान्विपयान् दृष्ट्वा महाभाष्यमीमा-सादिशास्त्राण्यध्येतुमस्य मनसि महती रुहरुहिका समजायत, या प्रपूरयितु स्वगुरुचरणानामन्तिकमुपाससाद । परमदसीयनिरर्गलसमुच्छलत्प्रतिभासम्पत्तेस्त्वस्मै तेऽप्यद्रुह्यन्, येन पर निर्वेदमाप्तोऽप्यसौ स्वेप्सितान्नोद्विविजे । अन्ते चासावुल्लिखित-विषयाणामर्थार्थं पदातिरेवाकिञ्चनो वाराणसी जगाम । तत्र विद्याभ्यासहेतोर्वर्षमेक स्थित्वा स्वेप्सितविषयानविकल समाप्य, तत्रत्यान् गुरूनपि स्वाद्भुतप्रतिभया तोप-यामास, विस्मयाम्बुधौ च निमज्जयामास । तत प्रतिनिवृत्य स्वनगर स्वीया ब्राह्म-णोचिता प्रत्नतमा सस्कृतिमाशिश्रिये । तदनुकूलया च वृत्त्या वर्तयन्नसौ काल निनाय । स्वतातपितामहादीना राज्यानुकूलपारस्यभाषामयवातावरणतया गृहे न किमपि सस्कृतपुस्तकादिकमासीत् । यत्किञ्चिद्वित्त कथोपदेशवाचनादिनाऽर्जतिस्म तत्सर्व पुस्तकाना सग्रह एव व्ययते स्म । फलतोऽय प्रत्नसस्कृतपुस्तकाना सग्रहाय मति चक्रे । नैकविधपुस्तकानि तदीय पुस्तकालय शोभयाञ्चक्रिरे यानि अन्वेषमन्वेष लिपिकर्तृभिश्च लेखयित्वा स्वय चापि विलिख्य स्वकीये पुस्तकालये तेन स्थापि-तानि । कदाचित्कोऽपि तदन्तेवासी माघमासे कस्यापि वणिजो गृहे तद्द्वाराऽनुवाच्य-

मानः श्रीमद्भागवतपारायणं द्वादशस्कन्धान्तं यावच्छ्रुत्वा नितरां मुमुदे । अथ जातु स्वमातुर्निधनावसरे सम्पद्यमाने सत्सङ्गे शिवपुराणं वाचयितुमतितरामभ्यर्थयदसौ परं तदृते विषमेव समस्यासीत् यतस्तत्सङ्गृहीतपुस्तकालये शिवपुराणस्य न काचन प्रतिर्वर्तते स्म । इतश्च कस्यापि पण्याजीवस्य किमपि ऋणमासीत् यच्च निर्यातयितव्यमासीत् 'शोभनोऽयमवसर ऋणनिर्यातनाय, परमादर्शरूपं पुस्तकं कुत आनेष्यामि' इति मन्वानश्चिन्तापरवशोऽभवत् साहिबरामः । अत्रान्तरे एकेन प्रातिवेशिकप्रवयसा सह उद्दिष्टविषये वार्तालापोऽभूत् । तेनासौ सान्त्वितोऽभूत् यन्मम पार्श्वे तत्पुस्तकं शिवपुराणं वर्तते परं पारस्यभाषायां लिखितमस्ति कथङ्कारं तद्द्वारा स्वाभीष्टं सम्पादयितुमलम्भूष्णुः स्यामित्यनया चिन्तया पर्याकुलीक्रियमाणोऽसौ नितरामखिद्यत । अथ चिरादेव उपायस्तस्य प्रत्यभात् यदसौ प्रवयसं पारस्यभाषामयं शिवपुराणमाकर्ण्य युगपदेव तच्छ्लोकबद्धेन संस्कृतेनानूद्य तत्त्वयोपदेशं श्रावयामास । अनया दिशा च नूतनमपरं शिवपुराणं श्लोकैरसौ जग्रन्थ । यच्चाधुनापि तद्वंशधराणां पार्श्वे सुरक्षितं वर्तते । मुद्रितशिवपुराणसंस्करणेन सार्धमस्य क्रियमाणायां तुलनायां भावतो नैवदप्यन्तरमुपालभ्यत इति श्रूयते । अथासौ बहूनन्तेवासिनोऽचिरेणैव कालेन नानाशास्त्रपारगान् कृत्वाऽतुलं यशः समाससाद । क्रमेण च विद्याव्यसनितया काश्मीरनरेशेन श्रीरणवीरसिंहेन तदीयमप्रतिहतं प्रतिभाचितं वैदुष्यमश्रावि । यत्कारणेन तेन स्वसभायामानीतोऽसौ प्रधानराजपण्डितपदवीमलञ्चकार । येन तद्यशः सर्वत्र काश्मीरेषु प्रससार । किं च कलाकोविदेन राज्ञाऽसौ तदानीं राजकीयपाठशालायां प्रधानाध्यापकपदवीमध्यारोपितः । कदाचित् कोऽपि काशिकः पण्डितो रणवीरसिंहस्यास्थानमुपाययौ, यस्मिन् समागते महाराजः कविसम्मेलनस्य व्यवस्थामकारयत्, यत्र काशिकवी राजकविं समागमाय समाह्वयत । समागते च तस्मिन् महाराजेन राजकविः साहिबरामस्तत्पुरः सविशेषं न सम्मानितोऽभूत् श्रीसाहिबरामस्याय स्वभावः आसीद् यदसौ स्वहृद्गिरमनुसृत्य सर्वं कार्यं करोति स्मेति । तत आत्मानमपमानितं मत्वा सपद्येव तां राजसमितिं जहौ । सर्वथा तेन न तदगाह्यत । पुनरागमनाय चासौ राजसभामुत्ससर्ज । तदेतेन जायमानं तदीयमनादरमाकर्ण्य महाराजः परं विस्मये महामन्त्रिद्वारा स तं क्षमां ययाचे । कथञ्चित् सन्तुष्टेन तेन षण्मासानन्तरं राजसभायाः कविपदवी पुनर्निरवाहि । तत्प्रणीतानां पुस्तकानां तालिकाऽधस्तान्नामनिर्देशपूर्वकं दीयते—

१ राजतरङ्गिणीसारः  २ तीर्थसारः

३. नीतिरत्नलता (भागद्वयात्मिका)  ४ [illegible]

५ गीताव्याख्या (साहिबी) ६ पञ्चसायकविवरणम्
७ संक्षिप्त शिवपुराणम् ।

साहिबरामस्यान्याः कृतयस्त्विमाः —

शिवसिद्धिनीति, गायत्रीमन्त्रभाषा, चित्स्फारसाराद्वयम्, सच्चिदानन्दकन्दली, शारिकास्तव, गुरुवृत्तिचिन्तामणि, सहजार्चनशिक्षिका, निजाल्पबोध, चन्द्रमौलिकस्तव, सुप्रभातस्तव, गीतासार, कल्पवृक्ष, देवीनामविलास (काव्यम्) चेत्यादयः ।

---

## श्रीसुखानन्दजाडूशास्त्री

प्रोद्भटनैयायिकवैयाकरणपण्डितोऽयं श्रीनगरे 'सत्यू' इति प्रथिते उपनगरे जनिं लेभे । अस्य तातपादानां नामधेयं श्रीलालजीजाडूमहोदय इत्यासीत् अयं तदानीं रणवीरसिंहाश्रितः पण्डितस्तदीयधर्मार्थट्रस्ट इत्याख्याया संस्थाया द्वारेण प्रतिष्ठापितस्यानुवादविभागस्यैकः पण्डितो बभूव । अस्याश्रयेऽधीतविद्योऽयं काश्मीरराजकीयपाठशालातः शास्त्रिपरीक्षां पारितवान् यत्र श्रीदामोदरराजारामादिविद्वद्भ्यो न्यायव्याकरणादीन् विषयानधीत्य ज्योतिःशास्त्रेऽपि परं प्रावीण्यमभजत् । नैतेन समं काश्मीरे नैयायिको वैयाकरणश्चान्य आसीत् । तदानीममौ मीमांसान्यायज्योतिःशास्त्राणां विशिष्टज्ञानाधिगमाय वाराणसीमगच्छत्, यत्र काशिकपण्डितेभ्यः प्रोद्दिष्टविषयान् यथावदधीत्य काश्मीरान् प्रत्यावर्तत । सिद्धान्तकौमुदीस्थफक्किकानां ज्ञानमस्य सर्वातिशायि विस्तृतं चासीत् । किञ्च महाभाष्यादिविषयानसौ मौखिकानेव पुस्तकदर्शनमन्तरेण पाठयति स्म । काश्मीरिकाणां ज्योतिर्विदां मुख्यं पदमधितिष्ठन्नसौ महामनस्वी पण्डितो ज्योतिर्विद्यामुपजीव्यैव कालं निनाय । असौ काश्मीराक्षाशानुसारिपञ्चाङ्गस्याविर्भावकोऽभवत् । काश्मीरे भारतविभाजनलब्धजन्मनः पाकस्थानस्य नानोत्पातान् दृष्ट्वा भूयो जीवितुं नोदसहत । साक्षान्महामना मालवीय इव पीडितानां भारतीयानामार्तनादं श्रावं श्रावं शरणार्थिनां काश्मीरिकाणां च दशां दर्शं दर्शमत्यन्तं खिन्नो भूत्वा एकोनपञ्चाशदुत्तरैकोनविंशतितमे खिष्टाब्देऽसौ प्राणान् जहौ ।

---

## सुदर्शनराजानक

महापण्डितोऽयं श्रीप्रतापप्रभूणां (१८८७-१९२५) समये राजगुरुरासीत्। अयं राजानकटीकारामस्य प्रपौत्रः राजानककवलरामस्य च सूनुस्तन्त्रशास्त्राब्धिपारगो बभूव। अयं मनस्वी श्रीनगरे रघुनाथमन्दिरोपान्ते उवास। अनेन सुप्रसिद्धानां काश्मीरिकतन्त्रग्रन्थानां सारा प्रणीता सन्ति। येऽद्य यावन्मुद्रणकाष्ठामनधिगता अप्रकाशिता एव सन्ति। तेषु देवीरहस्यसार, तन्त्रसारसार इत्यादयः सन्ति। अनेन तत्पूर्वजैश्च विविधानेकविषयकहस्तलिखितग्रन्थानां संग्रहोऽप्यकारि यस्त्वद्यापि एतदुत्तराधिकारिणां पार्श्वे सुरक्षितो वर्तते।

## श्रीहरभट्टशास्त्री

महामाहेश्वरो विश्वविदितवैदुष्य अशेषतन्त्रशास्त्रारण्यविहरणपञ्चाननः, शैवशास्त्रीयप्रक्रियाचणस्त्रिकशास्त्ररहस्यवेत्ता प्रत्यभिज्ञासिद्धान्तपाथोधिपारगस्तान्त्रिक-चक्रचूडामणिः श्रीहरभट्टशास्त्रिमहोदयः अहल्यामठे 'गुण्ड अन्दर' इत्याख्ये प्रदेशे चतुःसप्तत्यधिकेऽष्टादशशततमे खिष्टाब्दे जाडू इत्युपाह्वात् ज्योतिर्विदः केशवाज्जनिमाप। बाल्ये चायं स्वपितुः केशवादवाप्तोपक्रमशिक्षः समये दयाराम शास्त्रिमहोदयात् काव्यालङ्कारादिशास्त्राणि परिशीलयामास। अथ 'गजू' इत्युपाह्वयात् श्रीराजाराम (राजानक) शास्त्रिमहाभागादधीतन्यायव्याकरणमहाभाष्यादिविषयोऽयं प्रथमे स्तरे पञ्चापविश्वविद्यालयतः शास्त्रिपरीक्षामुदतारीत्। नैतावतैवास्य ज्ञानपिपासोपशा-मोऽभवत्, प्रत्युत विशिष्टज्ञानोपार्जनाय नितरामुदयुङ्क्त। फलतः श्रीमुकुन्दपण्डितादसौ शैवीदीक्षामप्याससाद शैवीदीक्षोपासनान्तर्गतान् सूक्ष्मसूक्ष्मान् निगूढतत्त्वान् विषयान् क्रियात्मकतयाऽनुभवितुं सामस्त्येन ज्ञातुं च तदानीं प्रख्यातस्य सक्रियस्य योगिनः शैवशास्त्रनिष्णातस्य, जम्मनगरनिवासिनः, परमसिद्धस्य आनन्दजीमहोदयस्य शरणमयासीत्। अथ तच्छक्तिपाताधिगतेप्सितः ईश्वरप्रत्यभिज्ञा-परात्रिंशिका, मालिनीविजयोत्तरादीनां सन्दिग्धदुरूहस्थलस्यार्थानि करामलकवत् प्रत्यक्षीचकार। गीर्वाणगिरि वक्तृत्वप्रतियोगितायाममौ सनातनधर्मपदकप्रदानेनसम्यजनसमक्षं पुरस्कृतो ऽभवत्। बहुशोऽयं सनातनधर्मद्रोहिणां वादे पराजित्य न्याय्यं मतं समर्थयामास। अथा-दसीयप्रतिभाप्रभावितः श्रीजगदीशचन्द्रचट्टोपाध्यायमहोदयः काश्मीरिकप्रत्नतत्त्व-विद्याप्रकाशविभागाध्यक्षः शैवसंस्कृतग्रन्थसम्पादनायामुं साग्रहं प्रार्थयाञ्चक्रे। परिणाम-तो द्वितीयसहकारिसम्पादकत्वेनोद्दिष्टकार्यान्नियममौ सिषेवे। प्रधानसहकारिसम्पादक-स्तदानीं म०म० मुकुन्दरामशास्त्रिमहोदय आसीत्। स्पन्दकारिका, महानयप्रकाश, स्तवचिन्तामणि, षट्त्रिंशत्तत्त्वसन्दोह, परात्रिंशिका चेत्यादीनां मुद्रणार्हाणि सस्व-

रणान्यपि प्रोद्भटपण्डितोऽयमेव व्यधादिति । अथायमेव सरमहाराजा–अमरसिंह सी० आई०ई० द्वारा संगृहीतस्य निजस्य हस्तलिखितपुस्तकालयस्य सविवरणं सवेदात्मकं सूचीपत्रं निर्मातुं प्रार्थितस्तदानीन्तनमुख्यमहामंत्रिणा श्रीरामचन्द्रकाकेन । तदनन्तरं परिवृत्यास्य नियुक्तिरुक्तपुस्तकालयेऽभवद्यत्रासौ अष्टाविंशत्युत्तरैकोनविंशतिशततमात् खिष्टाब्दादारभ्यैकचत्वारिंशत्तमाब्दं यावत् काकरामचन्द्रद्वितीयं सप्तसंख्याकान् ग्रन्थान् वर्तमानवैज्ञानिकपद्धत्या समपादयत् । येषु विद्यार्णवतन्त्राभिधो बृहद्ग्रन्थो भागद्वयविभक्त एभिः सुचारुतया सम्पादितः । स्खलितच्युतसंदिग्धस्थलानां प्रपूरणेऽपूर्वं पाटवमसौ धत्तेस्म । एकचत्वारिंशत्तमे खिष्टाब्दे पुनः प्रत्नविद्याप्रकाशविभाग-(रिसर्चडिपार्टमेण्टजम्बूकाश्मीरस्टेट) कार्यालयस्य प्रधानपण्डितकार्यधुरमुवाह । यत्र नैकविधहस्तलिखितपुस्तकानि शोधयन्नसौ तानि मुद्रणयोग्यतां निनाय । प्रोक्त-विद्याप्रकाशविभागकार्यालयस्य सर्वाणि प्रकाशनानि एतत्साहाय्येनैव सुसम्पादिता-न्यभूवन्निति यदुच्यते न तत्र काचनात्युक्तिः प्रतीयते । अभिनवगुप्तप्रणीतां बोधप-ञ्चदशिकां परमार्थचर्चां चोत्पलदेवकृतामीश्वरसिद्धिं चासौ प्राथम्येन समीचीनतया च व्याख्यातवान् । एतर्हीमाः पुस्तिकाः प्रोक्तकार्यालयतः प्राप्तमुद्रणप्रकाशना विक्रयाय प्रस्तुताः सन्ति । श्रीनगरे भारते भारतवर्षाद् बहिश्च बहवोऽन्तेवासिन एनमुपेत्य शैवतन्त्रशास्त्राण्यधीयते स्म । एषु वैदेशिकाभ्यां प्रो० एच्० बोडम श्री डी०बी० स्पूनर इत्येताभ्यां तन्त्रशास्त्रज्ञानमस्मादेव लब्धम् । किं च के० सी० पाण्डे महोदयोऽप्युक्तविषये भूरिसाहाय्यममुतो लब्धवान् । धर्माचार्यं कृतायाः पञ्च-स्तव्या विस्तृतं व्याख्यानमेभिर्व्योमनन्दनवेन्दुमिते वैक्रमीयवत्सरे विहितम्[१] । यस्याः पञ्चमस्तवरूपस्तृतीयो भागो मुद्रितो भूत्वा विक्रयाय प्रस्तुतो वर्तते । अवशिष्टं भागद्वयं स्तवचतुष्टयात्मकं चाचिरेणैव प्रकाशयिष्यते । एकस्य भागस्य काश्मीरीभाषाग्रथितस्यैकस्यामेव रजन्यां पद्यानुवादोऽपि महापण्डितैरेभिः कृतोऽस्ति । एतत्प्रणीता दशोपनिषदां शैवशास्त्रानुसारिणी व्याख्याऽपि कृतपूर्वाऽस्य (पुस्तकालये वर्तते याऽमुद्रितास्तीति श्रूयते । सप्तचत्वारिंशदधिकैकोनविंशतिशततमे खिष्टाब्दे प्रधान-

---

१ तथा चोक्तं तत्र—

विक्रमीये व्योमनन्दनवेन्दुमितवत्सरे ।
माहेश्वरो हरः शास्त्री भट्टोपाधिविभूषितः ॥१॥
पञ्चस्तव्या व्यधात् श्रीमद्धर्माचार्यकृताविमम् ।
व्याख्याग्रन्थं महादेवीप्रेरणापारवश्यतः ॥२॥ इति ।

पण्डितपदाद्विराम लेभे। अन्ते एकपन्चाशत्तमे ख्रिष्टाब्दे शरीरशैथिल्यहेतोरात्यन्तिक देहनिर्वाण समाससाद। महापण्डितस्यास्य शरीरविलयेन शैवागमज्ञानस्य सुमहती क्षति सजाता। एतद्विषये—

नून 'श्रीहरभट्टशास्त्रिविबुधादन्यो न शैवागम-
ग्रन्थग्रन्थिविभेदनऽच्य मतिमानित्युच्चकैर्ब्रूमहे।

इत्युक्तिरद्यावधि चरितार्थैवाभाति। एतत्सम्पादिता सप्त ग्रन्था अधो निर्दिश्यन्ते—

१. आह्निकपद्धति
२ क्रमदीपिका
३. विद्यार्णवतन्त्रम्
४. शिशुपालवधम्
५ गान्धर्वतन्त्रम्
६ बृहन्नीलतन्त्रम्
७ देवीरहस्यम्

---

## हरिकृष्णमिर्जा

अमुष्य श्रीहरिकृष्णमिर्जामहोदस्य जनि काश्मीरमण्डले १६१५ खिष्टाब्देऽभूत्। अन्वेषणपत्रिकाया सम्पादकेन श्रीमता हृदयनाथमहाभागेन सह शास्त्रार्थं विधाय त्रिकदर्शनमप्यसावुपलब्धवान्। व्यापार एवामुष्य जीविकाया आधार। उक्तपत्रिका-प्रकाशने च आर्थिकसाहाय्यमसौ कृतवान्। तदेव सस्कृतभाषानुरागी "मिर्जामहोदय" इति ज्ञायते।

---

## श्रीहृदनाथकौल

असौ महानुभाव १६२२ खिष्टाब्दे श्रीनगरे जन्म लेभे। बी० ए० परीक्षा-मुत्तीर्य षड्विंशतिवर्षवयस्कोऽसौ राजकीये वनविभागे कार्यमकरोत्। ततश्च न्यायालये गणकपदे न्ययुज्यत। अस्वास्थ्येन तु कार्यमत्याक्षीत्। श्रीहृदयनाथकौलमहोदयेनाङ्ग्ल-भाषामाध्यमेन वर्तमानवैज्ञानिकशब्देषु त्रिकदर्शनस्य सर्वाङ्गीण प्रकाश कृत। १६५८ खिष्टाब्देऽमुना विद्वद्वरेण रिसर्चनामिकाया पत्रिकाया स्थापनाऽक्रियत।

## अवशिष्टा विशिष्टा विद्वास

अधोनिर्दिष्टै सस्कृतस्नेहिभि पण्डितप्रवरै सस्कृतसाहित्यस्य भिन्नभिन्नविषयेषु काश्मीरप्रान्ते नि शुल्क सेवा विहिता। येन तेषु सम्प्रत्यपि सेवासमाना दृश्यन्ते—

१ आनन्दपण्डित भूतपूर्वोऽध्यापक, राजकीयसस्कृतपाठशा, श्रीनगरम्।
२. ईश्वरभट्टशास्त्री, भूतपूर्वो मुख्याध्यापक, ,,

३ श्रोङ्कारनाथशास्त्री । ४ काशीनाथदर । ५ काशीनाथशास्त्री ।

६ केशवनाथशास्त्री बी०ए०एड०, भूतपूर्वोऽध्यापक, गवर्नमेण्टश्रोरियण्टल-कालेज, श्रीनगरम् ।

७ गाहालालहण्डू । ८ गोपालजुवगीरू कर्मकाण्डविशारद ।

९ गोपीनाथगञ्जूशास्त्री भूतपूर्वोऽध्यापक, राजकीयसंस्कृतपाठशाला, श्रीनगरम् ।

१० गोविन्दराजदानशास्त्री प्रभाकर एम्०ए०एम्०श्रो०एल्०, संस्कृतप्राध्यापक, अमरसिंहकालेज, श्रीनगरम् ।

११ चन्द्रराजानक वैयाकरण । १२ जनार्दनभट्ट ज्यौतिषिक ।

१३ जगन्नाथशास्त्री । १४ जगन्नाथशास्त्री ।

१५ जियाललकौल । १६ जियाललशास्त्री ।

१७ टीकालालशास्त्री भूतपूर्वोऽध्यापक, राजकीयसंस्कृतपाठशाला, श्रीनगरम् ।

१८ त्रिभुवननाथशास्त्री ।

१९ त्रिलोकीनाथभट्ट शास्त्री प्रभाकर, बी०एस०बी०एड० ।

२० दयारामशास्त्री भूतपूर्वो मुख्याध्यापक, राजकीयसंस्कृतपाठशाला, श्रीनगरम् ।

२१ दामोदरपण्डित ।

२२ दीनानाथयक्ष शास्त्री प्रधानपण्डित, जम्बूकाश्मीररिसर्चविभाग, श्रीनगरम् ।

२३ पीताम्बरशास्त्री भूतपूर्वोऽध्यापक, गवर्नमेण्टश्रोरियण्टलकालेज, श्रीनगरम् ।

२४ प्रकाशचन्द्रपण्डित । २५ प्रकाशपण्डित । २६ बलकाकहण्डू ।

२७ बालकभट्ट रैणाधारी, वेदान्ताचार्य ।

२८ महानन्दपण्डित भूतपूर्वोऽध्यापक राजकीयसंस्कृतपाठशाला, श्रीनगरम् ।

२९ महेश्वरराजानक शैवाचार्य ।

३० माधवभट्ट । ३१ मोतीलालशास्त्री ।

३२ रघुनाथजाडूशास्त्री विद्यावाचस्पति, वैयाकरण, भूतपूर्वोऽध्यापक राजकीयसंस्कृतपाठशाला, श्रीनगरम् ।

३३. रांजकाकशास्त्री भूतपूर्वो मुख्याध्यापकः, राजकीयसंस्कृतपाठशाला, श्रीनगरम् ।

३४. राधाकृष्णशास्त्री । ३५. रामचन्द्रकोकिल., साहित्यकोविदः ।

३६. रामभट्टः, भूतपूर्वोऽध्यापकः, राजकीयसस्कृतपाठशाला, श्रीनगरम् ।

३७. लक्ष्मीचन्द्रशास्त्री, भूतपूर्वोऽध्यापकः, राजकीयसस्कृतपाठशाला श्रीनगरम् ।

३८. लक्ष्मीनारायणशास्त्री प्रभाकरः ।

३९. लक्ष्मीनारायणसप्रूः । ४०. वासुदेवशास्त्री ।

४१. विदलालशास्त्री, भूतपूर्वोऽध्यापकः, गवर्नमेण्ट मेमोरियल कालेज, श्रीनगरम् ।

४२. विश्वनाथशास्त्री, भूतपूर्वो मुख्याध्यापकः, गवर्नमेण्ट ओरियण्टल कालेज, श्रीनगरम् ।

४३. सर्वदानन्दशास्त्री, भूतपूर्वोऽध्यापकः, राजकीय संस्कृतपाठशाला, श्रीनगरम् ।

४४. सहजभट्टः । ४५. सुखानन्दशास्त्री ।

४६. सुदकाकशास्त्री, भूतपूर्वोऽध्यापकः, राजकीयसस्कृतपाठशाला, श्रीनगरम् ।

४७ सुनभट्टशास्त्रीजन्दा, भूतपूर्वोऽध्यापकः राजकीय सस्कृतपाठशाला, श्रीनगरम् । (अमुना विद्वद्वरेण जगद्गुरुश्रीशङ्कराचार्यप्रणीतायाः सौन्दर्यलहर्याष्टीका विरचिता)

४८. शिवभट्टः ।



अन्येऽपि केचन विद्वास. काश्मीरे कृतसंस्कृतसेवाः श्रूयन्ते तेषामपि यथोपलम्भ परिचयोऽत्र वितन्यते ।

| | | |
|---|---|---|
| १ | श्रीअनन्तरामशास्त्री | उत्तरवाहिनीगदाधरपाठशालाप्रधान पश्चात् श्रीरघुनाथसस्कृतपाठशालान्यायाध्यापक । |
| २ | श्रीगङ्गाधरशास्त्री | श्रीरघुनाथसस्कृतपाठशालाध्यापक पश्चात् उत्तरवाहिनीगदाधरपाठशालाध्यापक पुन सैनिकपण्डित । |
| ३ | श्रीगोपालशास्त्री | उत्तरवाहिनीगदाधरपाठशालाध्यक्ष सर्वतन्त्रस्वतन्त्र । |
| ४ | श्रीगौरीदत्तशास्त्री | उत्तरवाहिनीगदाधरपाठशालाद्वितीयाध्यापक पश्चात् प्रथमाध्यापक, पुन उ वा ग पाठशालाप्रथमाध्यापक तत श्रीरघुनाथसस्कृतपाठशालाध्यापक । |
| ५ | श्रीचन्द्रनाथझा | उत्तरवाहिनीगदाधरपाठशालाप्रधान । |
| ६ | श्रीजगन्नाथशास्त्री | उद्यमपुरवासी, उत्तरवाहिनीगदाधरपाठशालाप्रधान । |
| ७ | श्रीदामोदर | काश्मीरशैवशास्त्रवित् । |
| ८ | श्रीनिवासशास्त्री | उत्तरवाहिनीगदाधरपाठशालाप्रधान । |
| ९ | श्रीहेमराज | अमृतसरसवास्तव्यो विद्यालयस्नातक । |

अन्येऽपि केचिद् विद्वासोऽत्र प्रस्तोतव्या स्तोतव्याश्च सन्ति । तेपा परिचयस्तु विशेपान्न प्राप्त इति नाममात्रेण निर्देश क्रियते ।

| | |
|---|---|
| १ श्रीचुम्बनझा | २ श्रीजनार्दनभट्ट |
| ३ श्रीदिलारामायुर्वेदाचार्य | ४ श्रीदेवकृष्ण (तैलङ्ग) |
| ५ श्रीदेवकृष्णव्यास (वाराणसेय) | ६ श्रीभास्कराचार्य |
| ७ श्रीमहाडिम्ब | ८ श्रीरसमोहन |
| ९ श्रीलल्लपण्डित | १० श्रीवेंकटशास्त्री (कार्णाटक) |



## जम्बूकाश्मीरप्रदेशादन्यत्र जातानामपि काश्मीरे संस्कृत-
## सेवां कृतवतां भारतीयानां वैदेशिकानां च
## विदुषां सूची (चतुर्थी)



१. ई०बी० कौवेल्
२. ए० ट्रोयर:
३. ए०बी० 'प्यो' महाशय:
४. एम्०ए० स्टीन:
५. एल्०डी० वर्नेट:
६. डा० कर्ट एफ० लेडेकर:
७. डा० कान्तिचन्द्रपाण्डेय:
८. के०ए० अय्यर:
९. प्राध्यापको गौरीशङ्कर:
१०. डा० ग्रियर्सन:
११. डा० श्रीजगदीशचन्द्रचट्टोपाध्याय.
१२. जगद्धर:
१३. डा०जी० बुह्लर:
१४. श्रीजोगेशचन्द्रदत्त:
१५. डा० नलिनाक्षदत्त.
१६. पी० पीटर्सन:
१७. मोरक्राप्टस:
१८. श्रीयोगेन्द्रकुमार:
१९. श्रीरामेश्वरझा
२०. प्रो० रेनियोग्लोनी
२१. वेंकटरामशास्त्री



### ई० बी० कौवेल्

अमुना विद्वद्वरेण ए. वी. 'ग्यो' महाशयस्य सहयोगेन सर्वदर्शनसंग्रहे काश्मीरशैव-मतस्य प्रत्यभिज्ञादर्शनस्यैकस्य परिच्छेदस्यानुवादः कृतः । तस्य च प्रकाशनं १९०० ख्रिष्टाब्दात्पूर्वमेवाभवत् ।

### ए० ट्रोयरः

अमुना विद्वद्वरेण १९४० ख्रिष्टाब्दे पेरिसनगरे कह्लणकृताया राजतरङ्गिण्याः प्रकाशनं कृतम् ।

### ए० बी० ग्योमहाशयः

अमुना प्राज्ञवरेण ए०बी० कौवेलमहाशयसहयोगेन सर्वदर्शनसंग्रहे काश्मीरशैव-मतस्य प्रत्यभिज्ञादर्शनस्यैकस्य परिच्छेदस्यानुवादः कृतः । तस्य च प्रकाशनं १९०० ख्रिष्टाब्दात् पूर्वमेवाभवत् ।

### एम० ए० स्टीनः

पाश्चात्यविदुषाऽमुना १८९२ ख्रिष्टाब्दे कह्लणकृताया राजतरङ्गिण्या एकं संस्करणं शोधपूर्वकं परिष्कृत्य प्राकाश्यत । आङ्ग्लभाषायां च तस्याः पृथगनुवादोऽपि विलिख्यामुद्राप्यत ।

### एल्० डी० वर्नेटः

अमुना विद्वद्वरेण अभिनवगुप्ताचार्यरचितस्य परमार्थसारनामकग्रन्थस्यानुवादः कृतः, यस्य प्रकाशनं १८१० ख्रिष्टाब्दे 'रायलएशियाटिकसोसायटी'नामकसंस्थायाः पत्रिकायामभवत् ।

### डा० कर्ट एफ० लेडेकरः

अमुना पाश्चात्यविदुषा प्रत्यभिज्ञाहृदयस्यानुवादः कृतः, यस्य च प्रकाशनं १९३८ ख्रिष्टाब्दीयनवम्बरमासस्याष्टादशे दिने अय्यरग्रन्थमालायामभवत् ।

### डा० कान्तिचन्द्रपाण्डेयः

असौ महानुभावः प्रो०के०ए० अय्यरस्य साहाय्येन ईश्वरप्रत्यभिज्ञाविमर्शिन्याः प्रथमभागे भास्कराचार्यकृतभास्करनामकटीकाग्रन्थं सम्पाद्य प्रकाशितवान् । असावेव पण्डितवरोऽभिनवगुप्तनामकग्रन्थस्य रचयिता वर्तते । ग्रन्थेऽस्मिन्नैतिहासिकं दार्शनिकं

चाध्ययनममुना प्रस्तुतम्, यत्र श्रीमदभिनवगुप्तप्रतिपादितस्य शैवदर्शनस्य काव्यशास्त्र-सिद्धान्तस्य च समालोचना कृता ।

### के० ए० अय्यरः

अमुना विद्वद्वरेण डा०कान्तिचन्द्रपाण्डेयसहयोगेन ईश्वरप्रत्यभिज्ञाविमर्शिन्या. प्रथमभागस्य व्याख्याग्रन्थो भास्कराचार्यकृत'भास्कर' नामक सम्पाद्य प्रकाशितः।

### प्राध्यापको गौरीशकर.

अमुना विदुषा कप्फिणाभ्युदयनामकमहाकाव्यस्य सम्पादन कृत, यस्य च प्रकाशन पञ्चनदविश्वविद्यालयेन विहितम् ।

### डा० ग्रियर्सन

अमुना पाश्चात्यविदुषा काश्मीरप्रदेशे सुरक्षिताना काश्मीरिकभाषामयाना पाण्डुलिपिग्रन्थाना प्रगाढमध्ययन कृत्वा तुलनात्मिकया भाषाविज्ञानदृशा तदध्ययन-मार्ग प्रशस्तीकृत ।

### डा० श्रीजगदीशचन्द्रचट्टोपाध्याय

असौ (जे०सी० चटर्जी) चट्टोपाध्याय काश्मीरिकशैवदर्शनस्य प्रथमोऽध्येता। काश्मीरस्थानुसन्धानविभागस्य निदेशकश्चासीत् । १९०४ *ख्रिष्टाब्दीयानुसन्धानविभागस्य* प्रथमविवरणेऽसौ शैवदर्शनस्य वैज्ञानिकपक्षमपि प्रस्तुतवान् । ततश्च विदुषामभि-रुचिस्तत्राधिकमवर्धत । तेनोक्त यत् शैवदर्शनमिदमतीव मनोहर विज्ञानम्, यतो हि विज्ञानस्याऽऽधुनिकतमाना सिद्धान्ताना सकेतस्तत्रोपलभ्यते । विशेषतो दर्शनमिद द्रव्यस्यान्तिमरचनासिद्धान्तसम्बन्धे ऊर्जाया, बलस्य वा विज्ञान-सम्मत रूप स्वीकरोति । सहैवेदमप्युद्घोषित तेन यत् काश्मीरप्रदेशे शैवदर्शन-*सम्बन्धिनी भूयसी साहित्यसामग्री विद्यते, या बाह्या विद्वासो नैव जानन्ति । अतो यथा* दर्शनस्यास्य पाण्डुलिपिग्रन्था जनसाधारणसुलभा भवेयुस्तथा प्रयतनीयमिति मे विचार । अमुना विदुषा काश्मीरानुसन्धानविभागस्य प्रथमाधिकारिणा सता निम्न-लिखिता ग्रन्था निम्नलिखितवर्षेषु सम्पादिता —

१ शिवसूत्रविमर्शिनी १९११ ख्रिष्टाब्दे ।    २ स्पन्दकारिका १९१३ ख्रिष्टाब्दे।

३ शिवसूत्रवार्तिक च १९१६ ख्रिष्टाब्दे ।    ४ परमार्थसार ।

